श्रीकाशीजी में आदि विश्वेश्वर के पास महल्ला पुराना शामा की गली बाबू हरखचंदजी के बाड़े में दुर्गा प्रसाद क
टारे के गणेश यन्त्रालय में शब्दरत्न भैरवी टीका सहित छापा गया। लिखा विन्ध्येश्वरी मिश्र छापने वाला पु
रविन कारीगर जिस्को लेना होय उसे चांदनी चौक में दुर्गाप्रसाद कटारे के दूकान पर मिलैगा ॥ ❀ ॥

॥श्रीगणेशाय नमः॥ ध्यात्वादेवम्परम्ब्रह्मजानकीपतिमव्ययम् विदुषां प्रीतिदां लक्ष्मीसूक्ष्मैरत्नप्रकाशिकाम् १ नत्वा तातं जगद्वन्द्यं वैद्येवाभिधंगुरुम् सीतारव्या
जननीं डुंढिभैरवो गस्तसम्भवः २ ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलं कुर्यादिति शिष्टसमाचारानुमितस्मृत्या प्राप्तिसितग्रन्थसमाप्तिप्रतिबन्धकविघ्नविनाशस्यावश्यक
तया तत्समुचितेष्टदेवतास्मृतिरूपम्मङ्गलमाचरन् शिष्यशिक्षायै निबध्नाति शेषविभूषणमिति विशिष्टं भूषणं विभूषणं शेषो विभूषणं यस्य तं शिवमित्यर्थः यद्वा शेषस्य विष्णु
शेषवी भूषयति सः भूषणे यस्य तं विष्णुम् शेषशायिनं गरुडवाहनमिति फलितोऽर्थः कस्मै प्रयोजनाय शेषाशेषार्थलाभाय शेषस्य यो शेषोऽर्थस्तल्लाभाय भाष्यपस्य शेषस्य
कृतिवस्तुतः शिवस्य विशिष्टविभूषणयुक्तस्वरूपावस्थापन्नस्य स्मरणे भीप्सितार्थस्य सिद्धिर्भविष्यत्येव अनन्तशेषस्याशेषोऽर्थो महाभाष्यार्थस्तस्य यद्वा शेषस्याशेषस्येति
न्नूगर्भस्तत्पुरुषः तेन महाभाष्यार्थगरुडपुराणोक्तार्थस्य लाभः अशेषशब्दे च विरोधार्थकनञ्समासो बहुव्रीहिः सुरपदे यथा गरुडपुराणोक्तोऽर्थः सदसद्विवेकतत्फलानः
प्रथमवाक्येन मित्यस्याध्याहारः तेनकम् सकलपदार्थैः सकलमभीष्टम्फलन्दातुमीशे सर्वेनाम्नामुत्तमत्तः प्रधानपरामर्शकत्वाद्यच्छब्दः शिवस्य विष्णोर्वा बोधकः ईष्ट इत्य

श्रीगणेशाय नमः॥ शेषविभूषणमीडे शेषाशेषार्थलाभार्थं ह्यातुं सकलमभीष्टफलमीष्टे यत्पादृष्टिः १॥ ध्यायमिति ध्यात्वाध्या
त्वेत्यर्थः णमुलन्तमेतत् परं सर्वजगदुपादानम् कार्यं ब्रह्म हिरण्यगर्भं व्याप्तनयद्दृमम् ॥ (( तेनेश्वरत्वस्य लाभः तथा चेश्वरस्य भूपतेः प्रसादे

ततश्चैवं लौकिकसकलार्थलाभो यथा दृश्यते लोके तथा शिवस्य विष्णोर्वा कृपापूर्वकदृष्ट्या सकलार्थलाभो भवत्येवेति तदनन्तरं गतत्वेनमःरिप्सितग्रन्थस्य निर्विघ्नपरिसमाप्ति
रपि भविष्यत्येवेति ध्वनितम् १॥ ननु ध्यायमिति यदि द्वितीयान्तं तदा भ्यासानुपपत्तिरत आह ध्यात्वा ध्यात्वेति ध्यायशब्दो यदि घञन्तः स्यात् तदोक्तार्थालाभः तस्मादाह णमुलन्त
मिति एवं च स्थाणमुलोः समानार्थत्वेनोक्तार्थस्य लाभः सुकरश्चैवं सति तेन स्मारं स्मारमित्यपि व्याख्यातम् कार्यं ब्रह्म हिरण्यगर्भस्यापि यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तप
इत्यादेरत्र नामरूपमन्नञ्च जायत इति श्रुत्या नपुंसकलिङ्गब्रह्मशब्दवाच्यत्वात् द्व्यारंजनये परमिति एवं च हिरण्यगर्भस्यापि जगदन्तः पातित्वेन तदुपादानत्व
स्यानत्वाभावात् तद्व्यावृत्तिरिति भावः न च हिरण्यगर्भस्य चेतनरूपत्वात् तस्य च नित्यं विज्ञानमानन्दं ब्रह्मेति श्रुत्या नित्यत्वावगमेन कथं कार्यत्वमिति वाच्यम् अपञ्चीकृत
सकलभूतसमष्टिसूक्ष्मशरीरोपहितो हिरण्यगर्भस्तदुपाधिभूततादृशशरीरस्य जन्यत्वाद्धिरण्यगर्भस्य जन्यत्वव्यवहारः अत एव हिरण्यगर्भः समवर्तताग्रे भूतस्य

जातः पतिरेकश्चासीदितिश्रुतिः संगच्छते इदम् परमिति विशेषणम् ॥ ध्यैञ् धात्वर्थस्य चिन्तार्थकत्वस्य प्रसिद्धत्वादुभयोरुपादाने पौनरुक्त्यमत आह ध्यानमित्यादि।
व्यापाररूपमिति स्मृत्यनुकूलभावनाख्यसंस्काररूपमित्यर्थः तज्जन्यम् तादृशसंस्कारजन्यस्मरणरूपम् ननु गुरुशब्दार्थस्य पूज्यत्वेन गुरवः समागतादित्यादौ बहुव
चनवदत्रापि बहुवचनेनैवोपादानमुचितमत आह गुरोरित्येकेति एतेनैकस्मात्सर्वविद्यालाभस्तस्य सर्वविद्याश्रयतां विना नोपपद्यत इति तस्यैकस्य सर्वविद्याकुशल
त्वेनात्यधिकपूज्यत्वमीश्वरत्वं सर्वोत्कृष्टत्वस्य लाभ इति ध्वनितम् प्रौढानाम्मनांसि प्रौढमनांसि रमयति या सा प्रौढमनोरमा इत्यर्थे हेतुमदाकर्मण्यणि ल्युट् प्रत्यये।
टिड्ढेति ङीप् स्यादत आह प्रौढानामित्यादिना एवञ्चैवंविधस्य सफलितोऽर्थो विग्रहस्तु गङ्गाधर इत्यन्तेवरमयतेः पचादित्वस्य मूलविभूजादित्वस्य वाकल्पनेन रमयतीति र
मा प्रौढमनसां रमेतिकार्यमिति सूचितमिति केचित् वस्तुतस्तु यदि रमयतेः पचादित्वादिकल्पनं तदा प्राप्तस्यापि कर्मण्यणि यस्य पचादिभ्यो जित्यादिना वा धेडीव भावः सुक

ध्यानं चिन्तापरपर्यायं स्मृत्यनुकूलव्यापाररूपम् स्मरणं तु तज्जन्यमिति विशेषः गुरोरित्येकवचनेन सर्वविद्यालाभ एकस्मादेव।
गुरोरिति सूचितम् प्रौढानां मनो रमयतीत्यर्थिका मनोरमाम् प्रौढत्वं च सकलदर्शनार्थज्ञानपूर्वक महाभाष्यगूढार्थज्ञानवत्त्वम्
इणग्रहणे ष्विति नन्विदं न्यूनम् अमग्रहणेऽपि ग्रहणात् फलं तु बहुप्रमुक्तादित्यादौ पुमः खयीति रुत्वम् ॥ (( एवमेवेति प्रौढमनांसि रम

यतीत्येव विग्रह इति बोध्यम् प्रकृते प्रयोगे प्रौढपदार्थतावच्छेदकमाह प्रौढत्वमिति एतेन महाभाष्यगूढार्थज्ञानमितरसकलदर्शनार्थज्ञाने सत्येवेति सूचित
म् भाष्यकृता विचारसमये सकलदर्शनार्थस्य तत्र तत्र ध्वननादत एव गूढत्वविशेषणं सङ्गच्छते एवंविधप्रौढत्वोपपादनेन तादृशज्ञानवतामेव

निर्दुष्टत्वज्ञानेनेयम्मनो रमयति नान्येषामित्युक्तम्भवति इयवरडित्यत्र यः प्रथमो हकारस्तत्प्रयोजनावसरे प्रत्याहारचतुष्टयस्यैव प्रयोजनमुपा
त्तन्तत्र न्यूनत्वमाशङ्क्य निराचष्टे नन्वित्यादिना अमग्रहणेऽपीति अम् गृह्यते यस्मिंस्तस्मिन्पुमः खय्यम् परे इति सूत्रे ग्रहणादिति निमित्तत्वेन ग्रहणस्यापेक्ष
णीयत्वादित्यर्थः एतत्प्रयोजनमाह फलन्त्विति क्रमप्रयोजनाभावसूचनाय तु शब्दः बहुप्विति अत्र बहवः पुमांसो यस्येति बहुव्रीहौ शेषाद्विभाषेत्यत्र विभाषा
ग्रहणादुरः प्रभृतिष्वेकवचनान्तस्य पुमस्शब्दस्य पाठात्कप् सकारस्य तु संयोगान्तलोपः कृद्धृति प्रत्येकमनुकरणद्वयम् ॥

हकारपरेत्यत्रबहुव्रीहिः असम्भवश्चोक्तरीत्या बोध्यः उक्तार्थैकैयरोक्तिरपिसाधिकेत्याह हकारपरेति इतिचेतिचकारोवाक्यालङ्कारे ननुमूलेप्रथमहकारस्याशग्रहणेनग्रह
णरूपम्प्रयोजनमुक्तन्तन्नसङ्गच्छते भोभगोइतिसूत्रेऽशग्रहणेनयद्यपिदेवाः सन्तिछन्दःसुपयः स्थित्यादौ यथासंख्यप्राचीनरीत्यालोपोवार्यते इतिसम्भवति तथापिवक्ष्य
माणसिद्धान्तरीत्याऽशग्रहणस्यनप्रयोजनम् नचवृक्षवृ करोतीत्यस्यसाधुत्वायहलिसर्वेषामितिसूत्रेऽशग्रहणात् इत्यर्थमशग्रहणमस्त्विति वाच्यम् तादृशप्रयोगाणा
मनभिधानात् अन्यथाशित्यस्यतत्रसम्बन्धेपिवृक्षवृहसतीत्यत्र लोपापत्तिर्दुर्वारैव अतएवनपदान्ताः परेणः सन्नीतिलणसूत्रस्थभाष्यसङ्गतिः अतएवभाष्येऽशग्रहणे
नहकारस्यग्रहणमितिनोक्तमितिचेन्न प्रथमहकारस्याद्हशग्रहणेनग्रहणरूपप्रयोजनकथनपरभाष्यस्योपलक्षणत्वात् अतएवेणग्रहणेनग्रहणस्यालिलिहिढ्व इति
प्रयोजनम्भाष्यानुक्तमपिमूलेउपात्तम् अतएवभाष्यकृताद्वितीयहकारस्यप्रयोजनकथनावसरेविशिष्यतस्यप्रयोजनमुक्त्वायदिकिञ्चिदन्यत्राप्युपदेशेप्रयोजनमस्ति

हकारपरशकारासंभवेनशश्छोटीतिप्रसंगोच्चारितमितिचकैयटेनव्याख्यानम् अपिहकारप्रयोजनमितिचभाष्येनोक्तमितिदिक्
इदंसूत्रमिति वलादिप्रत्याहारान्त्यरेफेणैवसंतुहरंत्यमित्यत्रान्योन्याऽऽश्रयपरिहारस्कात्यहरि [ ] नित्यासेनआहत्याहप्रत्याहारबो
धकसूत्रसमुदायान्त्यमित्यर्थेनवासुकरइतिभावः ग्रहणार्थमिति ॥ (९ तत्राप्युपदेशः कर्तव्यइत्युक्त [ ] मित्याहुः वस्तुतो मूलोक्तम् प्राच मनुरो

धेन। यदिकिञ्चिदित्यादिनासंदिग्धार्थकथनानन्तरमुदाहरणाप्रदर्शनेनप्रयोजनान्तराभावएवानुमीयतेकैयटेनापितस्यप्रयोजनन्नोपन्यस्तमेवञ्चभाष्याविरुद्धम्प्रयो
जनमेवोचितमित्याशयेनाह दिमिति द्वितीयहकाराभावेलकारस्याप्यसत्त्वमित्याशयेनाह इदंसूत्रमिति लकारसाध्यप्रयोजनानामन्यथासिद्धिमाह वलादीति आदिना
हलादिसङ्ग्रहः रेफेणासकारोनरहितिरेफेण ननुहलितिसूत्रसत्वेहरन्त्यमित्यस्यावृत्त्यावक्ष्यमाणरीत्यान्योन्याश्रयपरिहारोभवति अधुनाकथमतआह अन्योन्याश्रयेति
रन्त्यंहरीतिन्यासेनेति अत्रवाक्यद्वयम् रन्त्यमित्येकम् हरितिद्वितीयम् द्वितीयेप्यन्त्यपदस्यसम्बन्धः ॥ अतएवमध्येपाठः रइतिपृथक्पदम् अन्त्यंरइतिस्वरूपमित् अन्यो
हवीइत् त्यामभेदेगौरवमित्याशयेनाह आहत्येति हरन्त्यमित्यस्याहत्येत्यर्थः तत्रप्रथमस्यार्थमाह हप्रत्याहारबोधकेति इदंस्वरूपकथनम् हकाररेफबोधकस्यहर
शब्दस्य स्वघटितत्वसम्बन्धेनहकारादिरेफान्तसूत्रसमुदायेलक्षणानाञ्जोदुर्ग्रहत्वन्दोषः द्वितीयस्यतुअन्योहर् हप्रत्याहारबोध्यइदित्यर्थएव

नन्विदं सूत्रमित्यादिना प्रयोजनम्मूले ऽभिहितन्नद्वितीयहकारमात्रस्यैव तथाच सहकारस्सकारानन्तरस्याऽस्तत्सूत्रानुनारव्यमत आह शषसेति विसर्गापत्ते॥
रिति नचभेष्यस्तुवोहे विषहत्यत्र हे परे विसर्गादर्शनेन हकारे परे विसर्गो नेतिवाच्यम् सुगणू हसतिप्रत्यङ् हसतीत्यत्रङ्णोः कुक्टुग्गित्यस्यापत्तेः अस्यापिसङ् हस्वा॥
स्मुडेरिति ज्ञापका हकारे परे ङः सुट् नेतिकल्पनआवारणम्भविष्यतीति चेदनेकस्य ज्ञाप्यस्य वचनस्य कल्पनापेक्षया हस्य परत्र पाठे एव लाघवमिति ज्ञापकानां सौ
त्वेनोपपत्तौ ज्ञापकत्वे मानाभावाच्च ननु सप्तमीति योगविभागात्समासः त्वनुपपन्नमधिकरणकारकस्य क्रियायामेवान्वयेनान्यपदार्थेना सामर्थ्यादत आह अधिक
रणेति आदिना कर्मपरिग्रहः यद्द्वारा यस्य क्रियाजनकत्वन्तद्द्वारा क्रियान्वयस्यौचित्यादिति भावः अस्य योगविभागस्य सप्तमीति योगविभागस्य अगतिकगतिकत्वादिति अ
गतिकप्रयोगसाधकत्वादित्यर्थः विग्रहः हलः अन्त्यमिति विग्रहः हलिति सूत्रस्येतिकथनन्तु फलितार्थसूचनाय ननु षष्ठीस्थाने योगेति परिभाषया हलः स्थाने यो॥

शषसहरित्येव तु नोक्तं खरि हकारग्रहणापत्तौ हरि हरे तौ त्यादौ विसर्गापत्तेः [illegible] अधिकरणकारकस्य कर्त्रा घन्व पद्द्वारा क्रिया।
न्वयाद स्ति सामर्थ्यमिति भावः अस्य योगविभागस्य भाष्ये अदर्शनादाह [illegible] अनेनापि साधनस्यागतिकगतिकत्वादाह यदेति
हलो हलिति सूत्रस्यान्त्यमिति विग्रह इति भावः षष्ठीस्थाने इत्यस्य चोदुपधाया गोह इत्यादाविव गुणानां च परार्थत्वादिति न्यायेन वाऽप्रवृत्ति

न्यः सद्दित्येव सूत्रार्थः किन्नस्यादुदाहरणञ्चैतस्य ङे प्रथमयोरमित्यनेन सुस्थाने जातो ऽम् भविष्यतीत्यत आह षष्ठीस्थान इत्यादि गोह इत्यादाविवेति तत्र ((रितिवोध्यम्॥
यथोपधापदसन्निधानेनावयवार्थकत्वं षष्ठ्या निर्णीतमिति षष्ठीस्थान इति परिभाषाया अप्रवृत्तिस्तथात्रान्यपदसन्निधानेन तदप्रवृत्तिरिति भावः इति न्यायेनेति गुणानाञ्च प॥
रार्थत्वादसम्बन्धः समत्वात्स्यादिति न्यायेनेत्यर्थः अत्र गुणानाम्परार्थत्वात्समत्वादसम्बन्ध इत्यन्वयः संज्ञासूत्रस्य परिभाषायाश्च विध्युपकारकत्वेन गुणत्वात्तयोः समत्वम॥
स्यतः परस्परमनयोरुपकार्योपकारकभावो न भवतीति भावः हलन्त्यमिति सपूर्णसूत्रावृत्त्यपेक्षयैकदेशस्यैवावृत्तिरस्त्विति शङ्कां नेमूले स्यादेतदित्यादिना एकस्य शब्दस्यानेका
र्थपरत्वेन व्यवहारः यथाऽस्यान्श्येत्यत्राश्वशब्दो देवनास्तरयोस्सविभीतकाश्वस्य बोधकस्तथात्रापि हलशब्द उभयपरोऽस्तु सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति न्यायस्य
गङ्गायां मीनघोषौ स्त इत्यादौ व्यभिचारस्य दर्शनादनाश्रयणमिति भावः इदमेकशेषस्य प्रत्याख्यानपक्षे ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

गुणानाञ्चेति न्यायस्यव्यभिचारमाशङ्क्य निराचष्टे नचेत्यादिना तच्छेषशब्देन तस्यशेषस्तच्छेषोयस्येति वेत्यर्थकतच्छेषशब्देन परिभाषयोः अलोन्त्यस्येकोगुणवृद्धीइत्यनयोः परिभाषयोः स्वसंस्कारकेति एतेनतेषां स्वस्वप्रदेशेपि वाक्यार्थबोधजनकत्वमस्त्येवेति ध्वनितम् गुणगुणिभावेन अङ्गाङ्गिभावेन परस्परापेक्षत्वेन परस्परनिमित्तनिमित्तिभावेन यथाच लिङ्गः स्यादित्यादेः षष्ठीस्थानइतिसूत्रपरामर्शं विनावाक्यार्थबोधजनकत्वन्नास्तीति तयोः परस्परनिमित्तनिमित्तिभावस्तथात्र नास्तीति भावः विशेष्यविशेषणभावमात्रेण तच्छेषत्वकल्पनमपिनयुक्तमित्याह एतन्मूलकतया उक्तन्यायमूलकतया तत्प्रसक्त्यसम्भवस्य परिभाषयोरेव तच्छेषत्वमिति प्रसक्त्यसम्भवस्य प्रतीतिवदिति यथात्र स्वस्वामिभावप्रतीतिर्भवतितथा अनन्तरादिशब्दप्रयोगं विनासामीप्यन्नप्रतीयत इति वैपरीत्येदृष्टान्तः षष्ठ्यर्थत्वाभावादिति तथाचसामीप्यस्यषष्ठ्यर्थत्वाभावेतस्मिन्नर्थे समासोपि नोपपद्यत इति भावः

नचेकोगुणवृद्धीतिसूत्रे तच्छेषशब्देन परिभाषयोरपि गुणगुणिभाव उक्त इति वाच्यम् सार्वधातुकार्धधातुकयोरलोन्त्यस्येकोगुणवृद्धीति सूत्रत्रयस्य तत्स्यसंस्कारकमहावाक्ये विशेष्यविशेषणभावमादायैव तच्छेषव्यवहारो न तु गुणगुणिभावेन परस्परापेक्षत्वेन वेति कैयटेन स्पष्टमुक्तेरेतन्मूलकतयेव तत्प्रसक्त्यसंभवस्य तेनोक्तत्वेति भावः लिङ्गत्वादिति ब्राह्मणस्य कम्बल इत्यादौ असत्यपि प्रकरणादौ स्वस्वामिभावादिप्रतीतिवत् अनन्तरसमीपादिशब्दप्रयोगमन्तरा सामीप्याद्यप्रतीतेस्तस्य षष्ठ्यर्थत्वाभावात् अप्रयोगेत्वसामर्थ्यात् षष्ठीसमासाप्राप्तिरिति मध्यमपदलोपिसमासे सैवेति वा तत्र समासस्त्विष्टत्वमिति भावः तदेतदाह नहीत्यादिना तत्रानिष्ट इत्यनेन चित्रगवीणामिति कुमतिचेतिणत्वम् इत्यपाठस्तु लेखकप्रमादात् ॥ ॥

ननु स्यात्तस्यार्थस्य प्रतीत्यर्थं वाक्ये ते शब्दा उपादेयास्तत्राह तदप्रयोगादिति लेखकप्रमादादिति अत्राहुः प्रमादोऽभिधानमनवधानेन तथाहि चित्रशब्दगोशब्दयोः कर्मधारय समासे गोरतद्धितलुकीति टच् अयमुत्तरपदस्यावयव इति नात्रैकोत्तरपदकसमासत्वम् समासान्तस्योत्तरपदावयवत्वादेव द्विपुरीत्यादावनेनोत्तरपदकद्विगुत्वसत्वात् स्त्रीत्वमिति ङीप्सिद्धिः उपशरदमित्यत्राव्ययीभावस्यादन्तत्वन्त्ववयवावयवस्य समुदायावयवत्वेनास्तीति नाव्ययीभावस्येति सूत्रप्रवृत्तिरिति तन्न समासान्ता इत्यत्र यस्तमासपदं तस्य समासार्थवाक्यलक्षणया अलौकिके प्रक्रियावाक्यस्थवन समुदायात् समासान्तस्य प्रवृत्तिरित्यस्य सिद्धान्तस्य वक्ष्यमाणत्वात् टचः समुदायावयवत्वेनैकोत्तरपदकसमासत्वमस्त्येवेत्याशयात् द्विपुरीत्यादौ समुदायस्य स्त्रीत्वन्तु लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति समासान्ता इति सूत्रभाष्योक्त्या लिङ्गानुशासनस्य लोकसिद्ध

लिङ्गानुवादकत्वेनप्रसक्ते लोकादेवसिद्धम्  अतएव परवल्लिङ्गमितिसूत्रसत्वेपि द्विनावमद्देखारमित्यत्रनपुंसकत्वस्यासिद्धिः समासान्तानांसमुदायावयवत्वादिवाका।
रान्तोत्तरपदोद्विगुः स्त्रियामिष्टइत्यत्रोत्तरपदग्रहणञ्चारितार्थम् यत्तुटचः समुदायावयवत्वेपिकुमतिचेतिसूत्रे उत्तरपदेनसमासस्याक्षेपोविभक्त्याच प्रकृतेरितिप्रत्यास
त्तोभयोरेकत्वाश्रयेणैकाद्युत्तरपदकसमासरूपप्रकृतिकविभक्तेर्ग्रहणमितिनात्रणत्वस्यप्राप्तिः  विभक्तिप्रकृतित्वंङीबन्तस्य समासत्वन्तुटजन्तस्येति भेदादिति तन्न
स्त्रीप्रत्ययइतिनिर्दिष्टानाम्प्रातिपदिकतद्व्याप्यधर्माणांलिङ्गबोधकप्रत्ययविशिष्टनिर्देशेनप्रातिपदिकग्रहणइतिपरिभाषयाङीबन्तेऽप्यकृतेःसमासत्वस्यप्रातिपदिक।
त्वव्याप्यसत्वेनोभयोर्भेदाभावात्  आक्षिप्तस्यार्थस्यशाब्दबोधेभानेमानाभावाच्च  नचैवंसतिकुमतिचेतिसूत्रभाष्येमाषकुम्भवापेनेत्यत्रषष्ठीतत्पुरुषोत्तरपदकसमासेनित्यण
त्वेननभवितव्यम्  षष्ठीतत्पुरुषेतुप्रातिपदिकान्तेतिविकल्पेनभवितव्यमिति  प्रतिपादितन्तच्च  प्रत्यासत्त्याश्रयणेनसङ्गच्छते  अन्यथावैकल्पिकणत्वापवादस्यकुम।
तिचेत्यस्योभयथापिप्राप्तिरितितदसङ्गतिः स्पष्टैवेतिवाच्यम्  एतस्यभाष्यस्ययथाकथञ्चिदत्रणत्वस्यप्राप्तिरित्यत्रतात्पर्यात्  णत्वन्तुतत्रपदव्यवायेपीति  निषेधान्नभ
वत्येव  किञ्चपूर्वोक्तप्रत्यासत्त्याश्रयणेवहुचतुरङ्गेणेत्यत्रविभाषास्तपोवहुच्चुरसादितिवहुचिविभक्तिप्रकृतित्वम्बहुज्विशिष्टस्यैकाद्युत्तरपदकसमासत्वञ्चतुरङ्ग
शब्दस्येतिभेदाण्णत्वन्नस्यात्  नन्वेवमप्यन्तर्वर्तिविभक्त्यागोशब्दस्यपदत्वात्पदव्यवायेपीति  निषेधःस्यात्  उत्तरपदत्वेचापदादिविधाविति  प्रत्ययलक्षणप्रतिषे
धस्तुवक्तुमशक्यः  अपदादिविधावितिपर्युदासबलेनपदान्तविधावेवतस्यनिषेधस्यप्रवृत्त्यङ्गीकारादितिचेन्न  अतद्धितइतिवक्तव्यमितिवार्तिकैकवाक्यतयाणत्वा
श्रयातिरिक्तोयस्तद्धितभिन्नस्तत्परकपदव्यवायेनिषेधस्यप्रवृत्त्यङ्गीकारात्  अतएवरस्यविणा  आर्द्रगोमयेण  चतुर्बहुङ्गेणेत्यत्रणत्वस्यसिद्धिः  आद्येआङोनभा
वेपूर्वस्यविशब्दस्यपदत्वमस्त्येवेतितद्धितभिन्नेतस्मिन्परेसतिनिषेधाभावायणत्वाश्रयातिरिक्तेति  द्वितीयेमयटोणत्वाश्रयातिरिक्तत्वात्तस्मिन्परेयत्पदङ्गोशब्दस्तेन
व्यवधानेपिणत्वसिद्धयेतद्धितभिन्नेति  तृतीयेवहुचोणत्वाश्रयातिरिक्तोयस्तद्धितभिन्नो ऽङ्गशब्दस्तत्परत्वाभावेनव्यवधानेपिणत्वसिद्धयेपरेति  एवञ्चचित्रयवी
णामित्यत्रगोशब्दस्यणत्वाश्रयातिरिक्ततद्धितभिन्नपरत्वाभावात्सत्वम्भवत्येव  नन्वेवमपिकुमतिचेतिणत्वमित्यनुपपन्नमस्यासिद्धत्वादेकाद्युत्तरपदेणत्वस्यप्रा
प्तिः कुमतिचेतिसूत्रस्यैकाद्युत्तरपदेणइतिसूत्रापवादत्वन्तुवक्तुमशक्यम्  चतुरङ्गेण माषकुम्भाणामित्यत्रैकाद्युत्तरपदकत्वाभावेपि कवर्गवदुत्तरपदकत्वस्यस।
त्वात्तस्यमातेरितियेनप्राप्तिन्यायस्यविषयाभावादितिचेन्न  असिद्धत्वस्यकार्यार्थत्वेनयत्रफलेविशेषस्तत्रैवतत्प्रवृत्तेः स्वीकारात्  किञ्चप्रातिपदविधित्वेन

कुमभिवेतिसूत्रस्यप्रवृत्तिर्न्यायात् प्रतिपदविधित्वन्निरवकाशत्वएववाधप्रयोजकमितितुनभ्रमितव्यम् अपर ... इत्यत्रदक्षिणपूर्वैत्यत्रचरितार्थस्यापिसर्वनाम्नोऽ
तिमात्रइत्यस्यभाष्यकृताप्रत्ययलोपसूत्रेप्रवृत्त्यङ्गीकारात् यदिनिरवकाशत्वएवेतिनियमस्तर्हिस्त्रियाःपुंवदित्यस्यसूत्रस्यैवप्रवृत्तिर्नस्यात्तथाचानुस्वीयेइतिरिति वीोत्रोय।
स्थितिकत्वेनप्रतिपदविधित्वस्यपूर्वप्रवृत्तौनियामकंभवत्येव ॥ ःः ॥ प्रकरणान्तस्थेति त्यदादीनीतिसूत्रस्थेत्यर्थः मूलेऽनन्तरादिष्विति आनन्तर्यादिष्वित्यर्थः ननुयथा
तन्त्रयेत्पष्ठ्यर्थेसदाऽसोर्भूरितिसूत्रेषष्ठीमात्रोच्चारणेसन्देहप्रतिपादनपरमसेरनंतरे समीपेवेतिभाष्यमनुपपन्नमतआह अतोरनन्तरइत्यादि तन्निरूपितेतिआ
नन्तर्येनिरूपितोयःसम्बन्धोनिरूपकत्वाश्रयत्वान्यतररूपस्तदर्थिका अध्याहारेणैवभाष्ययोजनाकार्येत्यत्रदृष्टान्तमाह स्थानपदेति नचस्थानपदंषष्ठ्यर्थएवेति स
न्त्वप्रतिपत्तयेऽध्याहारोनावश्यकइतिवाच्यम् स्थानेनयोगोयस्यादितिअधिकरणपदकबहुव्रीहिप्रदर्शनपरभाष्यात्स्थानरूपःसम्बन्धोनषष्ठ्यर्थोऽन्यथास्थानेयो

सर्वस्त्रीगवीणामित्येकशेषप्रकरणान्तस्थकैयटप्रयोगोपिबोध्यम् असेरनंतरे समीपेवेत्यादिभाष्यंत्वनंतरादिपदाध्याहारेणतन्निरूपितसंबं
धार्थिकास्थानपदाध्याहारेणतन्निरूपितसंबंधार्थिकावाषष्ठीत्यभिप्रायकम् अतएवमनुप्रवृत्तेकैयटेनगावोऽस्यसंत्यनन्तरादित्यर्थेमनुप्
शंकापरभाष्यव्याख्यावसरेआनन्तर्यमस्त्यर्थएवप्रकृत्यर्थोपाधिरित्युक्तम् ननुतस्यषष्ठ्यर्थत्वेनप्रत्ययार्थत्वमुचितम् भाष्यकृतावाासामर्थ्यात्तत्र

गोयस्यादित्येवंवदेदित्याशयात् निपातनात्साधुत्वमितितुभयत्यावक्तव्यमेव एवञ्चस्थाननिरूपितोयःसम्बन्धोनिवर्त्यनिवर्तकभावःसएवषष्ठ्यर्थःकै (( इत्यभावउक्तः॥
यदेनापिस्थाननिमित्तसम्बन्धइतिवदतास्थानरूपःसम्बन्धोनषष्ठ्यर्थइतिध्वनितमेव नन्वसदृष्टान्तपरतयायोजनायांवाशब्दप्रयोगासङ्गतिरितिवाच्यम् अत्रत्यवाशब्दस्येवार्थक
त्वात् वबावयथातथासाम्यइत्यमरात् एवञ्चषष्ठीस्थानइतिसूत्रपर्यालोचनाप्राप्यवाक्यार्थपर्यवसानायाध्याहारोऽवश्यंकार्यएवेतिध्वनितम् इत्यभिप्रायकमिति ननुसामीप्या
दिःसम्बन्धएवषष्ठ्यर्थइत्यभिप्रायकमितिशेषः यद्यपिषष्ठ्यर्थसम्बन्धावच्छेदकतयापिनिर्णयायषष्ठीस्थानइतिसूत्रमुक्तार्थेभाष्यान्तरमपिसाधकमित्याह अतएवेति सामीप्य
स्यषष्ठ्यर्थत्वाभावादेवेत्यर्थः अस्त्यर्थवदिति यथावर्तमानकालावच्छिन्नाऽस्त्यर्थस्यसोत्राक्षिप्तपदप्रतिपाद्यस्यषष्ठ्यर्थत्वाभावेनप्रकृत्यर्थोपाधित्वन्तथेत्यर्थः अत्रोपाधिशब्दोवि
शेषणपरःप्रकृत्यर्थस्यगोपदार्थस्यविशेषणम् नचवर्तमानकालावच्छिन्नाऽस्त्यर्थस्यप्रकृत्यर्थविशेषणत्वेगोमानासीदित्यादावनन्वयइतिवाच्यम् तादृशव्यवहारविषये

गोमानित्यत्र लक्षणाया अङ्गीकरात् तत्र गावोऽस्य सन्त्यनन्तरादित्यत्र ॥ ः६॥ षष्ठ्यर्थत्वेत्विति आनन्तर्यस्येत्यादिः अनन्तरादितिबहुवचनात्तोपादानेन प्रकृत्यर्थविशेषणत्वं स्पष्टमे
वं स्वन्त्र सापेक्षमसमर्थवदिति न्यायेन तत्रासामर्थ्यम् उपसंहरति तस्मादिति यत्र गुरुपुत्रो देवदत्त सकिञ्चित् इत्यत्र आनन्तर्यादिप्रतीतिः आनन्तर्यनिरूपितसम्बन्धप्र
तीतिः उक्तार्थे प्रमाणान्तरमपि दर्शयितुमनन्तरादिष्विति ग्रन्थमवतारयति तत्रेत्यादि तत्र मतुब्विधायकसूत्रे यथा बहुव्रीहिसमासे वर्तमानकालावच्छिन्नाऽस्त्यर्थानभी
वस्तथा शब्दशक्तिस्वभावान्मतुबन्तादपि भविष्यतीति नैतत्प्रयोजनमिति भावः नन्वनर्थकमेवास्त्वित्यत आह अन्यार्थकत्वेवेति सूत्रकारस्याज्ञानकल्पनापेक्षयाऽन्यफ
लकत्वकल्पनमेव वरमिति भावः अन्यत्फलम् अस्तिमानिति अत्र हि सत्ताकर्तृथनवाचकोऽस्तिशब्दोऽव्ययन्तस्यास्तिसामानाधिकरण्याभावान्मतुप्प्रत्ययो न प्राप्तस्तदर्थ

षष्ठ्यर्थत्वेतु प्रत्ययार्थत्वात्का सामर्थ्यम् तस्माद्यत्र षष्ठ्यन्तमात्रप्रयोगेऽप्यानन्तर्यादिप्रतीतिस्तत्र अनन्तरादिपदाध्याहार एव बोध्यः तत्रास्तिग्रह
णाभावे तस्यान्यफलकत्वे वा सूत्रानुपात्तास्त्यर्थान्तर्भावेण मत्वर्थीयवद्बहुव्रीहिवत्तथाभूतानन्तर्याद्यर्थान्तर्भावेण चित्रा गावोऽस्य सन्त्यनन्तराद्
त्याद्यर्थे बहुव्रीहिमत्वर्थीयौ न भवतोऽनभिधानादिति मतुप्सूत्रे भाष्ये स्पष्टम् अनन्तरादेरिदमर्थत्वेन तस्येदमिति शेषिकोऽप्यनभिधानान्नेति तस्येदा
मित्यत्र भाष्ये तदुक्तमनन्तरादिषु न समासोऽनभिधानादिति स्पष्टमाकरद्वृत्ति तत्र समासग्रहणं तद्धितवृत्तेरप्युपलक्षणं अनन्तरादिशब्दैः षष्ठी
तत्पुरुषादिस्तु भवत्येव ग्रामकूपो गङ्गातीरमित्यादौ समीपस्यावयवत्वारोपेण समासः स्पष्टं चेदं रीतिर्मपर्यन्तस्येति सूत्रे कैयटे किंच हस्तपल
इत्यर्थे हलविलेखने इति धातोर्लेस्येत्वापत्तिः न च फलाभावः देवदत्तहलित्यादौ डित्वसामर्थ्यादभस्यापि टेर्लोपवल्लित्वसामर्थ्यात्प्रत्ययात्पूर्वत्वा
भावेऽपि लित्स्वरस्यैव फलत्वं वक्तुं शक्यमित्यपि बोध्यम् ॥ ((मेतदस्तिग्रहणमिति भावः सूत्रानुपात्तेति यथाशब्दशक्तिस्वाभाव्यान्मत्वर्थीयो बहुव्रीहिश्च भवति त

थेति वैपरीत्ये दृष्टान्तः तथाभूतेति सूत्रानुपात्तेत्यर्थः उक्तार्थे प्रमाणान्तरमप्याह अनन्तरादेरिति तदुक्तमन्तदेतत्सर्वमनसि निधायोक्तम् नन्वेवमनन्तरशब्देन षष्ठीतत्पुरुषो
पिन स्यादत आह अनन्तरादिशब्दैरिति असामर्थ्यस्य वृत्त्यभावप्रयोजकस्यात्राभावादिति भावः नन्वेवं ग्रामकूप इत्यादिव्यवहारस्य कथमुपपत्तिरत आह [illegible] इति
त्यादि यदा ग्रामशब्दः शालासमुदाये वर्तते तदाप्ययं व्यवहार एवमेवोपपाद्यः आनन्तर्यस्य षष्ठ्यर्थत्वमभ्युपेत्याह [illegible] इति [illegible] रिति न नियमापत्तिर्हलन्त्य

मितिसूत्रारम्भावपि समानैवेति वाच्यम् धात्वव यवल्लकारस्योपदेशेऽन्यलाभावादिति भावः [illegible]मितिति तथा च लोपः [illegible]दिति भावः आत एव लोपस्य चल्लवत्तरइति भाष्येउ
क्तम् अणादिसंज्ञाशब्देषु लोपस्तु न आदिरन्त्येनेति सूत्रारम्भसामर्थ्यात् अन्त्येनेत्यस्येदन्त्यसदृशेनेत्यर्थस्य वक्ष्यमाणत्वाच्च नचेत्संज्ञाया लोपातिरिक्तमपि फलमनुबन्धास
नेकान्ता इति पक्षे अभ्रन्त्रा आदिनदृन्नेट्प्रतिषेधरूपन्दृष्टमिति वाच्यम् अनुबन्धानामेकान्तत्वपक्षस्यैव स्थापयिष्यमाणत्वात् लोपस्य फलत्वेपि तदतिरिक्तफलत्वाल्लोतिशा
ङ्कानिराकुरुते नचेत्यादिना [illegible] लोपातिरिक्तफलाभावः समाधौ [illegible] हलितिति क्षिवन्तम् देवदत्तेति सम्बोधनम् अस्तीति शेषः लिव सामर्थ्यादिति व्यञ्जनस्य
याद्दृस्तत्त्रानस्यालोपस्यैव फलमितितु न तथात्वेव्यञ्जनानुच्चारणस्यैव सुकरत्वात् किन्तु फलान्तरमपि तच्च फलं लितीत्येतत्प्रवृत्तिरूपमेव लकारस्य लेखो कार्यम् सर्वत्र प्र
कृतोदाहरणे अन्यथासूर्वत्वाभावान्न प्राप्नोतीति तत्सामर्थ्याद्भवतीति भावः ॥ ६ ॥ ननु हल्लसीमादिति निर्देशेन लकारस्य लोपाभावे इत्त्वमपि न भविष्यति प्रतियोगितासम्बन्धेन

यद्यपि हलसीरादिति निर्देशेन तस्य नेत्त्वमिति कल्पयितुं शक्यं तथापि ज्ञापकसीकारापेक्षया सूत्रावृत्तिरेव लघीयसीति दिक् मलो लोप इति सो
त्र्लोपाश्रयणे तु मूलोक्तमेव लघु असम्भवादिति न च्चाद्यन्तौ टकितावित्यादौ यथासंख्यमन्वये पि प्रथमतः साहित्यावच्छिन्नेन साहित्यावच्छिन्नान्वयमात्रेण स
हविवक्षामाश्रित्य यथा हदृसाधुत्वम् तथेहापि प्रथमतो लकारो हलपदवाच्यश्चेदिति सामान्यतो बोधं कल्पयित्वमादाय हृदृसाधुत्वम् ॥ ६ ॥

लोपस्येत्त्वव्यापकत्वया व्यापकाभावे व्याप्याभावस्य न्याय्यत्वादित्याशयेन शङ्कते यद्यपीति लघीयसीतिं कल्पतात्वादिव्यापारगौरवापेक्षया मलो व्यापारगौरवमधिकमिति
भावः मूलोक्तम् संपूर्णसूत्रावृत्तिरूपम् ननुकर्मवत्कर्मणेति सूत्रे व्यत्ययो बहुलम् लिङ्याशिष्यङिति संहितापाठे नहि लकारको निर्देशः एकस्य लकारस्य संयोगान्तलोप
इति प्रतिपादितमन्यत्र तदुपपत्तये संयोगान्तस्येति सूत्रे सम्बध्यमानमपि तल्लग्रहणवाक्यभेदेन सम्बध्यते तेनक्वचिदमलोपि लोपो भविष्यति अत एवामामशिति सू
त्रस्थशकारप्रत्याख्यानपरभाष्यस्याप्युपपत्तिः तत्र हि शकाराभावे मकारस्य मकारादेशप्रयोजनन्नास्तीति सवादेशो भविष्यतीति दूषणे दत्ते मकारस्य मकारादेशोऽ
नुस्वारबाधनार्थो भविष्यतीति दूषणपरेण दत्ते स्वतन्त्रदिति मकारको निर्देशः करिष्यत इत्युक्तम् अत्रहि मकारक इति प्रतीकमुपादायैकस्य मकारस्य संयोगान्तलोपः करि
ष्यत इति कैयटेनोक्तम् सर्वत्र न लकारस्य संयोगान्तलोपानुपपत्तिरित्यत आह मूलेष्विवेति अयंयत्न इति हलचल चेति द्वन्द्वकल्पनारूपो यत्न इत्यर्थः अ

स्यान्त्वावस्थायाम् हलपदार्थाज्ञानावस्थायाम् सह विवक्षाया असम्भवाभिधानमसङ्गतमित्याशयिकामाशङ्कां निरस्यति नचेत्यादिना यथासंख्यमन्वयेपीत्यस्यान्तस्य
संस्कारवेलायामित्यादिः साहित्यावच्छिन्नइति आद्यन्तसमूहे साहित्यावच्छिन्नस्य टित्किन्समूहस्य अन्वयः समानविभक्तिकत्त्वयान्वभेदान्वयः वक्ष्यमाणरीत्यादूत्तरत्र
योगेपि समूहस्य विशेष्यत्वमिति भावः हलपदवाच्यश्चेति यथा ज्ञम्प्रतिनागरस्भस्येत्युक्ते नागरपदवाच्यः कश्चन पदार्थः स्यादिति सामान्यतो बोधः प्रथमतो जायते ततो
नागरपदवाच्यः कइति विशेषजिज्ञासा भवति तथेति कल्पितमिति सूत्रप्रणयनान्यथानुपपत्त्या कल्पितमित्यर्थः एतेन सहविवक्षासम्भवो दर्शितः॥ ःः ॥ ततः
सामान्यतो बोधानन्तरम् विशेषजिज्ञासायामिति निर्विशेषस्य सामान्यस्याभावेन कारणस्य सामान्यज्ञानस्य सत्त्वाद्विशेषजिज्ञासा भवत्येवेति भावः ननु पदस्य वाक्यार्थबोधे किं साध
यकमत आह आदिरन्त्येनेति विशेषतः हलत्वादिना विशेषरूपेण वाक्यार्थः वाक्यार्थबोधः एतेन सूत्रस्य सार्थक्यं द्वन्द्वस्य चोपपत्तिः श्रोतुर्हल्पदार्थस्य ज्ञानाभावेपि वक्तुः पा

ततो विशेषजिज्ञासायां आदिरन्त्येनेत्येकवाक्यतया विशेषतो वाक्यार्थो लक्ष्यसंस्कारकः किंच स द्विविवक्षा सहवक्तुर्वक्तृविवक्षा साच सूत्रप्रणयनानुपप
त्त्या पाणिनेस्ततः पूर्वमपि हल्पदार्थज्ञानादस्त्येव बोध्यबोधस्तु क्रमेणैवेति वाच्यम् आद्यन्ताविव्याद्ये यथासंख्यसूत्रारम्भसामर्थ्यं न तथासाधु
त्वांगीकारेपि अन्यप्रकारेण तस्य साधुत्वकल्पने मानाभावात् ॥ (९ णिनेस्तज्ज्ञानमस्त्येव अन्यथा वाक्यप्रयोगमेव न कुर्यात् यत्तस्मादिह श्लाघाः कारणत्वा

त्ताद्दशी सहविवक्षा सम्भवति ततः पूर्वम् आदिरन्त्येनेत्येतत्सूत्रप्रणयनात्प्राक् हल्पदार्थज्ञानात् हकारादिलकारान्तस्य हल्पदार्थत्वेन ज्ञानात् क्रमेण प्रागलकारस्येत्वेन ज्ञान
न्ततो हल्पदार्थत्वेन ज्ञानं ततो हल्पदवाच्यद्वन्द्विविज्ञानमिति क्रमेण समाधत्ते आद्यन्ताविव्यादि सूत्रारम्भसामर्थ्येनेति यत्र न द्वन्द्वस्तत्र यथा लोके शत्रुमित्रं विपत्तिञ्च ज
यरक्षयभञ्जयेत्यत्रस्थानारव्य लौकिकप्रमाणेनान्वयबोधो भवति तथा शास्त्रेपि भविष्यतीति यथासङ्ख्यसूत्रं तदर्थं किन्तु द्वन्द्वार्थमेव लोके यथा द्वन्द्वनिर्देशे यथासङ्ख्य
लभ्यतीयते तथा शास्त्रेपि न स्यात् अतएवाजाविधनौ देवदत्तयज्ञदत्तावित्युक्ते न ह्यापत्तेकस्याजाधनञ्च स्यादयदृति भाष्ये उक्तम् अतस्तथान्वयबोधार्थं पूर्वोक्तरीत्या यथासङ्ख
्यसूत्रसहायेनास्य साधुत्वमिति भावः अन्यप्रकारेण श्रोतुर्वक्तुश्च प्रथमतः सामान्यतस्ततः श्रोतुः प्रथमतोलत्वेन ततो हल्पदवाच्यत्वेनेतियउक्तः प्रकारस्ततोन्यप्रकारे
ण अयम्भावः प्रकृते यथासंख्यसूत्रविषयतायाः अभावाच्छ्रोतुर्द्वन्द्वस्य साधुत्वज्ञानं ततः प्राथमिकोबोधश्चाऽन्याश्रयात्सम्भवतीति ॥

कदासम्भवनियदा श्रोतुः सद्बोधः स्यान्तथात्वेनसम्भ
पूर्वपक्षयुक्तसद्विवक्षापदार्थोऽसम्भवदुक्तिकत्वादाह किञ्चेत्यादिना श्रोतृसम्बन्धिसद्बोधकर्तृकसत्तेच्छासद्विव[illegible] कदासम्भवनियदाश्रोतुः सद्बोधः स्यान्तथात्वेनसम्भ
वत्यन्योन्याश्रयादितिसद्विवक्षैवनास्तीतिकल्पनीयम् ननुपाणिनेस्तादृशीदृच्छाकल्प्यतामतआह तादृशेच्छयेति भान्तस्येप्रतिरिति इच्छाभ्रमीष्टसाधनताज्ञानस्यकारणत्वाच्छ्रो
तृसमवेतसद्ज्ञानम्मदिष्टसाधनमितिज्ञानम्पूर्वम्पाणिनेः कल्पनीयम् श्रोतुस्तुसद्ज्ञानन्नभवतीति पाणिनिसमवेतस्यज्ञानस्यसद्बोधविशेष्यकत्वावच्छिन्नश्रोतृसमवेतत्व
प्रकारकस्यभ्रमात्मकत्वेनपाणिनेर्भ्रान्तत्वापत्तिरित्यर्थः तादृशेबोधाजनकेति सद्बोधाजनकेत्यर्थः ननुलोकेयःपुरुषोऽन्यतरविषयकज्ञानवान्नतूभयविषयकज्ञानवा
न्सम्प्रतिसुखनयनम्पश्येतिप्रयोगोदृश्यते नथाऽत्रापिभविष्यतीत्यतआह सुखनयनमिति पूर्वपक्षयुक्तसद्विवक्षापदार्थमभ्युपगम्यापिदूषणमाह किञ्चपाणिनेरिति हल
पदार्थज्ञानेपि आदिरन्त्येनेतिसूत्रप्रणयनान्यथानुपपत्त्याहल् पदार्थज्ञानेपि तदभिप्रायेण हलपदार्थज्ञानतात्पर्येण नप्रयोगः नहलितिप्रयोगः अन्यथा तादृशतात्प

किंचश्रोतृणांसद्बोधोभवत्वितिदृच्छ यासद्वक्तुमिच्छायाएवसद्विवक्षात्वेनश्रोतृणामपिसद्बोधसंबोचितः तादृशेच्छयातेषांतादृशबो।
धाजनकशब्दप्रयोगेतुपाणिनेर्भ्रान्तत्वापत्तिः सुखनयनपश्येत्यादौतुनदोषःउभयज्ञत्वेनज्ञानप्रत्येवतादृशशब्दप्रयोगात् तेनरूपेणज्ञानभ्र
मः प्रमावेत्यन्यदेतत् किंच पाणिनेः पूर्वंहल्पदार्थज्ञानेपितदभिप्रायेणनप्रयोगः अन्यथाव्याख्यातृपरंपरावगतवक्तृतात्पर्यानुपप
त्तालट्स्मेइतिसूत्रस्य —— कैयटोक्तरीत्यालक्षणयातेत्रातरीयप्रथमादिव्यवहारेणप्रथमादिपदानामिवशक्त्यनुमानाद्यतःश्रोतृणां

र्थकत्वेनव्याख्यातृति पाणिनिप्रभृतयोयेव्याख्यातारस्तेपाम्परम्परयाऽवगतंयत्तात्पर्यन्तदन्यथानुपपत्त्येतिसमुदितार्थः लट्स्मइत्यादि लक्षणयात्रानुमानस्यचहेतु।
सद्भावाल्लट्स्मइतिसूत्रेयथाकैयटेनलक्षणोक्तातथेहापिभविष्यति लट्स्मइतिसूत्रेवार्तिककृतास्मपुराभूतमात्रेनस्मपुराऽद्यतनइतिवार्तिकम्पठितन्तत्रस्मपुरेत्या
कारकसूत्राभावादन्यथानुपपत्त्याप्रथमवार्तिकेस्मपुराशब्दाभ्यामाद्यन्ताभ्यांलट्स्मे अपरोक्षेच ननौपृष्ठप्रतिवचनेनन्वोर्विभाषा पुरिलुङ् चास्मेइति पञ्चसूत्रीलक्ष्या
तद्भुक्तम् तत्रलक्षणायाम्मानन्तु यदिलक्षणानस्यात्तदाप्रथमवार्तिकेनलट्स्मे अपरोक्षेच पुरिलुङितिसूत्रत्रयस्यभूतमात्रेप्रवृत्तिर्बोधितातस्यैवाद्यतननिषेध
प्रतिपादनद्वाराऽनद्यतनेविधानप्रतिपादनेभूतविशेषेविधानमितिलभ्यते ततश्चभूतमात्रइत्यनेनसामान्येविधानेन विरोधःप्राप्नोतियदातुप्रथमवार्तिकेलक्ष

क्षणात्तदापत्त्रस्तन्माभूत्तन्मात्रे प्रवृत्तिर्बोधितान्तथा च लट् स्मे अपरोक्षे च पुरि लुङिति सूत्रत्रयस्याद्यतनभूतेपि प्रवृत्तिः आभासा द्वितीयवार्तिकेन प्रतिषिध्यते ननोष्टप्रतिवचनेनन्नो
र्विभाषेत्यनयोस्तु भूतमात्रे प्रवृत्तिरिति सिध्यति एवञ्च तत्रत्यभाष्यप्रघट्टकबलेन प्रथमवार्तिके लक्षणा यथाश्रितत्तथेहापि हकारादिलकारान्तसूत्रसमुदायघटकतत्तत्सूत्रान्त्ये
लक्षणाङ्गीकार्या अन्त्यपदस्वारस्यात् शेषात्पर्यग्राहकस्याभावात् गभीरायां नद्यां घोष इत्यत्र यथा नद्यामित्यस्य गभीरनदीतीराभिन्नाधिकरणप्रतिपादकत्वे गभीरायामिति तात्प
र्यग्राहकं तद्वत् लक्षणयेति तृतीयान्तस्य बोधसम्भवेनेत्यत्रान्वयः शक्यानिर्वाहे लक्षणाया औचित्यमित्यभिप्रायेणाह तल्लाक्षणिकेत्यादि यथा तन्त्रान्तरे स्वौजस् इति प्रथमा अमौ
ट् शसिति द्वितीयेत्याद्युक्तं नैवात्र शास्त्रे प्रथमाद्वितीयापदार्थग्रहस्तद्वत् अनुमानादिति हल्पदम् हकारादिषु शक्तम् हकारादिबोधतात्पर्येण पाणिन्युच्चरितत्वादित्य

बोधसंभवेनेतरेतराश्रयस्यैवाभावेत्त दोषकालस्य — नियन्तव्यमित्यादिसमाधानपरभाष्यासङ्गत्यापत्तेः नचैवमजादिव्यवहारस्यापि लक्ष
णादिनैवोपपत्तावदिरन्त्येनेति सूत्रवैयर्थ्यम् क्वचिल्लक्षणादिना बोध इति सर्वत्र लक्षणाद्याश्रयणमेवेति नियमाभावात् नासूयाकर्तव्याय
त्रानुगमः क्रियत इति पङ्क्तिः विंशतीति सूत्रभाष्योक्तेः तस्मात्करिष्यमाणशक्तिग्रहोपायकपदस्य तदभिप्रायेणाचार्यस्य पूर्वमप्रयोग इत्येव
कल्पना ज्यायसी ध्वनितश्चायमर्थो नाज्झलाविति सूत्रे अष्टादशानां ग्रहणाभावाय वर्णानामुपदेशस्तावत् उपदेशोत्तरकालेत्संज्ञा इत्
संज्ञोत्तरकालः प्रत्याहारः प्रत्याहारोत्तरकाला सवर्णसंज्ञा तदुत्तरकालमणुदिदिति सवर्णग्राहकमित्येतेन समुदितेनान्यत्र सवर्णा
नां ग्रहणं भवति तस्मिन्नपि प्रयोग इत्येवं वाक्यापरिसमाप्तिप्रतिपादकभाष्येणापि ॥ ((नुमानादित्यर्थः एवम् अनुपदोक्तरीत्या लक्षणायाः शक्त्या

नुमानस्य वाङ्गीकारे नियमाभावादिति व्याकरणस्य शक्तिग्राहकत्वसिद्धान्तस्यैवमेवोपपत्तिरिति भावः नासूयेति प्रकृतिप्रत्यययोरानन्त्येन शब्दानां साधुत्वज्ञानं न सम्भव
ति तत्र केषाञ्चिच्छब्दानां साधुत्वमाचार्येण प्रतिपादितम् यक्ति विंशत्यादिना शब्दानामानन्त्यात्सर्वेषां तन्न सम्भवतीति तथा नकारेणनत्वेनाचार्यस्य दोष इति उपसंह
रति तस्मादिति करिष्यमाणेति करिष्यमाणः शक्तिग्रहोपायो यस्य तादृशं यत्पदं तत्सम्पदस्य तदभिप्रायेण प्रागज्ञातार्थाभिप्रायेणाचार्यस्य पाणिनेः पूर्वम् शक्तिग्रहोपाया
त्पूर्वम् अस्मिन्नर्थे साधकान्तरमप्याह ध्वनित इत्यादिना अस्य भाष्येणापीत्यत्रान्वयः ग्रहणाभावायेति अच्च देशेत्यादि तस्मिन्नणग्रहणे तत्रापि नाज्झलावित्यत्र

वाक्यापरीति वाक्यस्यपरिष्कृतवाक्यार्थस्य अपरिसमाप्तिः आविस्त्रयः अन्यथा करिष्यमाणशक्तिग्रहोपायकस्यपदस्य॰अ स्वज्ञानसत्वात्तदभिप्रायेण प्रयोगाङ्गीकारे ॥ ःः ॥
आचार्येणपाणिनिना क्रमेणउपदेशादिक्रमेण तथाबोधे आचार्यज्ञानवद्बोधे असंगतंस्यादिति पाणिनेः पूर्वमपितावताज्ञानस्यसत्वेनतत्तत्सवर्णाभिप्रायेणप्रयोगेणाच्यरे
नसवर्णग्रहणन्दुर्वारमित्यर्थः विभाव्यतामिति द्वन्द्ववदिनेतिशेषः तदाह तदेतत्सर्वमनसिनिधायाह अवयवत्वेनेति अवयवस्यावयविनमप्रति नित्यसाकाङ्क्षत्वाद
सिपस्सम्भवः तृतीयार्थः प्रकारिता तयोः आद्यन्तयोः पारार्थ्येति संज्ञिबोधकत्वनिर्णयात् संज्ञादिसंज्ञिनम्बोधयतितनुसंज्ञास्वरूपमपि प्राचामनुरोधेनमूलकृतो

अन्यथातत्तच्छास्त्रप्रणयनानुपपत्त्यापाणिनेस्तस्याज्ञानस्यपूर्वमपिसत्वेनाचार्येणतथाप्रयोगेवोद्दृणामपिक्रमेणतथाबोधेउपपन्नेकिंतेनक्र।
तंस्यात् कथंवानाज्झलावित्यत्राष्टादशानांग्रहणवारणंभाष्योक्तंसंगतंस्यादितिविभाव्यतां तदाह तस्मादिति आद्यन्ताभ्यामिति अवयवत्वेन
बोधकाद्यन्तशब्दाभ्यामित्यर्थः तस्यसमुदायस्य तयोः पारार्थ्येति संज्ञास्वरूपबोधकतयाशक्तिग्रहकालसवृतयोः पारार्थ्यनिर्णयादित्यर्थः
परामर्शित्वादिति वस्तुतोज्ञापकादिना स्यापिनसंज्ञाकार्यम् आद्यन्तशब्दाभ्यामाद्यन्तघटितसमुदायस्याक्षेपेणान्येषामिवतयोः प्राप्ता।
याः संज्ञायाः प्रकारान्तरेणाशक्यवारणत्वात् स्वशब्दानुवृत्तेश्चनफलम् भाष्येपि तत्फलितार्थकथनमेवस्वस्यचरूपस्येतिसंज्ञास्वरूप
त्वविशिष्टस्यास्तुप्रत्येकस्वबोध्यत्वंचास्तुकोविरोधः यथांद्व घेरित्यादौगुणदर्शनेन घिशब्दस्यापिघिसंज्ञाबोध्यत्वंतद्वत् । एवमजादिसं।
ज्ञास्वपिसंज्ञिघटकेकारादिष्विवअकारचकारयोरपिप्राप्नोत्येव किंच स्वशब्देनकेवलात्मपरामर्शसंभवेपिविशिष्टपरामर्शेनवाधकम् तत्र
समुदायेफलाभावात् अवयवयोर्विश्रान्तिप्राप्स्यति तस्माज्ज्ञापकादिनैवात्यस्यतत्कार्यवारणीयमित्यलम् भाष्येति । तत्राद्युपदेशादित्तिकिम्

त्व्याख्याय सिद्धान्तमाह वस्तुतइति अस्यापि संज्ञास्वरूपघटकान्यस्यापित्रापिनासमुदायघटकेसंज्ञकवर्णपरिग्रहः प्रकारान्तरेण ज्ञापकादिभिन्नप्रकारेण अनु
वृत्तिपदोत्तरञ्चकारोभिन्नक्रमः फलपदोत्तरन्द्रष्टव्यः तेनतदनुवृत्तेः फलाभावश्चेत्यस्यलाभः नन्वेवमनुवृत्तिपरभाष्यकारीयव्याख्यानविरोधइत्यत आह भाष्येप्ये
तदिति कोविरोधइति यत्रोद्देश्यतावच्छेदकविधेययोरेकरूपेणोपस्थितिस्तत्रोद्देश्यविधेययोर्नान्वयबोधोदण्डवान्दण्डवानित्यत्र यथा न हितथाप्रकृतेऽस्ति अकारादि

चान्तसमुदायपर्याप्तसमुदायत्वमुद्देश्यतावच्छेदकमजित्यनुपूर्वीनुविधेयतावच्छेदिकेति भावः मात्रोत्येवेति एतेन भवदुक्तरीत्या आद्यन्तयोर्वारणाभावः स्वरूपमित्यनुवृत्तेवैय
र्थ्यं च ध्वनितम् यन्मूलेस्वरूपमित्यस्यानुवृत्तिरुक्ता त्वास्वपदेनान्यपरामर्शाभावउक्तस्तदैयर्थ्यमप्यस्तीत्याह किञ्चेतिविशिष्येति अजित्यादिविशिष्टेत्यर्थः तस्मात् उक्तप्रकार
द्व्यात् तत्रहीति उपदेशः जिनिसूत्रव्याख्यानपरभाष्येदीत्यर्थः प्रत्यक्षमिति अत्र प्रत्यक्षशब्दस्य प्रोक्ताद्यजन्तत्वेन प्रत्यक्षस्येन्द्रियग्राह्यस्याख्यानमित्यर्थोलभ्यते प्रत्यक्षमि
तिव्याख्यानक्रियाविशेषणम् गुणैः प्रापणम् साधारणधर्मोपादानेन कथनम् नासाविति अनुनासिकशब्देन आङोनुनासिकइतिसूत्रेणविधानमनुनासिकत्वन्तुसाधारणमि
तिभावः सङ्कीर्णत्वमिति प्रत्यक्षाख्यानेप्युद्देशप्रयोगप्रदर्शनेन सङ्कीर्णत्वम् यथाशिष्येणानुवाकमवानुदिशत्विस्युक्ते गुरुणाशन्नोदेवीयकमधीष्वेत्युक्ते शिष्य आह॥

अभक्ष्यो अपः प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देशइतितत्वासोउपदेशइत्युक्तोपदेशोद्देशयोर्लोकव्यवहारेणसंकीर्णत्वमाशंक्योपदेशनेजनु
नासिकइतिवार्तिकदर्शितन्यासस्यखण्डनायोपदेशइतिकरणेघञनुपदिश्यतेनेनेत्युक्तम् तच्चशास्त्रंशासनकरणं प्रत्यासत्त्यैतच्छास्त्रीयधात्वा
गमप्रातिपदिकप्रत्याहारसूत्रप्रत्ययादेशरूपम् ओदिवादमात्रमिति वार्तिककृदुक्तन्यासीयार्थस्यकथञ्चित्सूत्रेणापिलाभसम्भवान्न्यासान्तरप्र
दर्शितस्तवृथैवेति प्रौढ्याबोधयितुमेवंवादइतिभावः घञइति अकर्तरिचेत्यत्र संज्ञायामित्यस्यप्रायिकत्वात्तत्प्राप्तिरितिभावः बाधादिति वा
सरूपविधिस्तक्तात्युडनुमुनखलर्थेषुप्रतिषिद्धः नन्वतत्रसाहचर्येणभावल्युट एवग्रहणमितिवाच्यम् दूषस्यानः सोमोभवतेस्यत्रक्त
मेणिखल्लुनेतिभाष्यादिप्रामाण्येनात्रसाहचर्यनाश्रयणादितिभावः॥ ॥ उद्दिष्टोमेनुवाकइति इदञ्चसङ्कीर्णत्वंस्फुटः सद्धेतिसूत्रविद्भिःसंप्रदाय॥

वश्यकमितिभावः वार्तिकेति सिद्धन्तूपदेशनेऽजनुनासिकइतिवचनादितिवार्तिकेत्यर्थः इदञ्चवार्तिकमुच्चारितइत्यस्याध्याहारेणव्याख्येयम् प्रत्याहारसम्पादकसूत्र
मइउणित्यादिसूत्रमिति प्रत्यासत्त्येयस्योपस्थितत्वेनेत्यर्थः ओदिवादमात्रमित्यसमद्दत्वेनोक्तवक्तृत्वात्सङ्गतमित्यर्थः प्रतीयतेसत्तुनयुक्तः भाष्यकारोक्तावसङ्गतत्वकथ
नस्यायुक्तत्वादनतच्छ्यावचे वार्तिककृदिति कयन्चित् बाहुलकरूपागतिकगत्या प्रायिकत्वादिति अतएवकोभवतादायोलक्ष्यइत्यादिप्रयोगादितिभावः ननुवासरूप
विधिनाल्युड्विषयेघञपिभविष्यतीत्यतआह वासरूपेति प्रतिषिद्धइति अत्रज्ञायकमर्दहत्यत्रचश्चेति सूत्रेहत्यन्तजग्रहणन्तद्धिचकारसमुच्चयेलिङ्गात्यत्रचोबाधा॥

माभूदिति किं पक्षे यदि वासरूपविधिर्नित्यः स्यात्तदा तेन सिद्धेऽस्य ग्रहणमनर्थकं स्यात् साहचर्येण परानुमुन्साहचर्येण स्वल्वेनेति धिन्न्वात्तोयुजिनियुजेवेति शेषः यदि साहचर्याश्रय णमत्र स्यात्तदानुमुन्साहचर्येण भावार्थकस्य ल्युविषय एव वासरूपविधिनिषेधेन प्रसक्तनेकमोर्थकत्वेन निषेधाप्राप्त्या भाष्यासङ्गतिः स्पष्टैवेति भावः ॥ ॐ ॥ क्लिष्टत्वमुपपादय ति गुणेति विशेषणेइति निरूपितत्वसप्तम्यर्थः तस्याऽऽकाङ्क्षायामन्वयः सवक्त्वविशेषणनिरूपिताकाङ्क्षावत्त्वे सतीत्य र्थो लभ्यः इत्तरान्वयः इतिरस्मिन्प्रधानातिरि क्ते गुणे तस्य गुणस्य न युक्त इति किन्तु प्रधानान्वय एवन्याय्यः सत्ताने च विधेयतया प्रत्ययः प्रधानमूतद्विशेषणमेव प्रायेणेति नन्तु संज्ञायामित्यस्येति सर्वचोक्तन्यायत्यागस्य प्राये णसंज्ञायामित्यन्वय इति भावः भाष्यकृतावदेत्वना दिस्यत्र भाष्यकृच्छ्कुद्दालक तृकर्मणो रिति षष्ठी प्राप्नोतीति शंकावारणायाह अस्यार्थेति मूलेः तस्यैवेति तथा व्याख्यानस्य क्लिष्टत्वा

क्लिष्टत्वादिति गुणप्रधानसन्निधौ प्रधानस्य विशेषणे साकांक्षत्वे इतरेतरान्वयस्तस्यायुक्त इति क्लेश इति भावस्तदाह नदीत्यादिना भाष्यकृतेति अ स्यार्थस्येति शेषः सर्वचोभयप्राप्तौ कर्मणीति नियमात्त्वकर्तरि षष्ठीति बोध्यम् अवदेहलनाद्वितिचोदैनो यत्तो वदेहलनमतः क्लिष्टत्वमित्यर्थः घाप वाद इति ल्युडपवादश्चेत्यपि बोध्यम् तत्रापि संज्ञायामित्यनुवृत्तेरिति भावः अगणिकगतिरिति नच खनो घ च्चेति घविधानमन्यतोपीत्यर्थ इत्या करेस्पष्टम् तेनात्र घः सिध्यतीति वाच्यम् तस्याप्यगणिकगतिकत्वात् भगः पदमित्यादौ यत्र घित्वफलं तत्रैव तत्प्रवृत्तेश्च पदस्य घञर्थे केन सिद्धे ने तदेतदुदाहरणम् किन्तु क्वाचित्कं वाक्यं तत् किं चोच्चार्यवर्णा नाहोपदिष्टा इमे वर्णा इत्यादि भाष्यात् उपदेशशब्दस्योच्चारणार्थत्वनिर्णयेन संकीर्ण लोकव्यवहारस्य लक्षणयाप्युपपत्त्या भावघञि बाधकाभावः ॥ १९ देवेत्यर्थः ननु ल्युटो बाधकत्वशङ्कायां घापवादत्वकथनमनुपपन्नमेवेत्यत आह ल्युड पवाद इति तत्रापि हलश्चेति सूत्रेपि अगणिकगतिरित्यस्य न विद्यते गणिर्यस्य तस्य गणिरित्यर्थे अगणिकगतिरित्यनुपपन्न इत्याश्रयस्यैव सत्त्वादित्या शयेन शंकते न चेति अन्यतोपीति स्वनूभिन्नादपीत्यर्थः स्वनूधातो र्घित्वस्य फलाभावादिति भावः तत्रैवेति भावेन व घित्वस्य चारितार्थ्यादिति भावः २ ननु पदमित्यत्र न तदर्थे निकषं तत्र आद र्शनमित्यत आह पदस्येति घञर्थे केन सिद्धेरिति घञर्थे कविधानमिति वचनेनेत्यर्थः ननु स्त्री यत्रचूर्णराजभोजनाः शालय इत्यत्र यथा बाहुलकत्वेनार्थान्तरे प्रत्ययस्य स्वीकारस्तथा बाहुलकादुपदेशपदे पिकरणे घञ्कल्पने किम्बाधकमत आह किञ्चोच्चार्येति उच्चारणार्थत्वेति आयोच्चारणार्थत्वेत्यर्थः अत एवैकाचउपदेश इति

सूत्रेद संज्ञाविधावुच्चारणवचन उपदिशिर्गृह्यत इति कैयटः सङ्गच्छते ननु लोके चैत्रमग्निय[illegible]दत्तेनस्तुघ्नं [illegible] मिथ्यामिपन्थानम्भवाननुपदिशत्वित्युक्ते चैत्रेण सुघ्निन्त्व
काशेद्स्त दक्षिणोयाहि [illegible] सुघ्निन्त्वामद्रत्युक्ते यज्ञदत्तो वदति भवतो पदिष्टः पन्था इति तदनुपपन्नमत उच्चारणासम्भवादत आह सङ्कीर्णेति लक्षणयापीत्यपिना शक्ति
परिग्रहः एतेन पाणिन्यादिवाक्यादिव लौकिकव्यवहारादपि शक्तिसिद्धिर्भवतीति सूचितम् न च भावघञन्तेनोपदेशशब्दसमभिव्याहृतेनाद्योच्चारणक्रियोपस्थाप्यते तथा च तद
न्तत्वमनुबन्धत्वाभिमतस्य न सम्भवतीति वाक्यार्थानुपपत्तिरिति वाच्यम् उद्देशश्च प्रातिपदिकानान्नोपदेश इति भाष्याद्येषां स्वरूपज्ञापनायापूर्वमुच्चारणं तेषामेवोपदेश
इत्यादेस्च उपदेश इति सूत्रस्थकैयटाच्चोपदेशशब्दस्याद्योच्चारणपरत्वव्यवस्थितावन्त्यपदार्थान्वयायतस्य शब्दस्याद्योच्चारणविषये लक्षणया अङ्गीकारात् नन्वेवं लृटः
स्यइति निष्ठेति सूत्रविहितशत्राद्यवयवस्य राजसूयसूर्येत्यादिनिपातनात् भिन्नक्यबाद्यवयवस्य चेत्संज्ञानुपपत्तिः ॥ ॥ यथोक्तरीत्या लौकिकव्यवहारे णोपदेशशब्दस्यास

किं चोपदेशशब्दस्य प्रत्ययादिपरत्वे तस्यैव हलन्त्यमित्यत्रान्वयेन यत्किंचित्समुदायान्त्यस्य वारणसंभवेन तदर्थं अन्त्यग्रहणसामर्थ्यादि वर्णनं क्ले
शो भाष्यकृतो व्यर्थः स्यादिति वाच्यम् उद्देशश्च प्रातिपदिकानान्नोपदेश इति आदेचउपदेश इति सूत्रे भाष्ये भावघञन्तस्यैव तस्याङ्गीकाराच्चेति
दिक् धातुसूत्रेत्यादि धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम् आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिता इतीत्यर्थः ॥ ९ यार्थकस्येह ग्रहणमिति

सूत्रेतरा ङोनुनासिक इति सूत्रविहिते तिव्याप्तिरत आह किञ्चोपदेशेति प्रत्ययादिपरत्वे भाष्योक्तकरणव्युत्पत्त्या प्रत्ययाद्यर्थकत्वे यत्किंचिदिति धात्वादिभिन्नेत्यर्थः
तदर्थम् यत्किंचित्समुदायान्त्यवारणार्थम् सामर्थ्यादीति अन्त्यपदोपादानेत्यादिः आदिपदेन तस्य पदस्य व्यवसितान्त्यपरत्ववर्णनं स्यात् पुनर्व्यवसिता धातुप्रातिपदि
कप्रत्ययनिपातागमादेशा इति प्रदर्शनस्य च परिग्रहः न च भावघञन्तस्योपदेशशब्दस्य पूर्वोत्तरसूत्रयोराश्रयणे मनिनाद्यवयवेकारनकारयोरित्त्वानापत्तिरिकारस्याद्योच्चा
रणविषयान्त्यत्वाभावात् किञ्च णिनिप्रत्ययावयवनकारस्यात्तरसूत्रेण मनिनवयवनकारवदित्त्वापत्तिरिति वाच्यम् यस्योपदेशोक्तविशेषणेनान्वयस्तस्य तदुपदेशप्रयुक्ते
संज्ञादृत्यर्थे आश्रीयते णिनिप्रत्ययसमुदायोपदेशप्रयुक्तेवं मनिनादोत्त्ववयवोपदेशप्रयुक्तासेति व्याख्यानात् वचनप्रामाण्यादाश्रीयत इत्याशयात् व्याख्यानात् वच
नमप्रमाणमिति तु न भाष्योक्तरीत्या व्यवसितान्तस्यैव ग्रहणे सिद्धे भावघञन्तत्वपक्षे पि दोषपरिहारात् तथा वर्णनात् उपदेशशब्दस्य भावघञन्तत्वे भाष्यान्तर

इत्यत्र साहचर्येण सादृश्यात् सतस्य उक्तार्थे लक्षणाकल्पनस्याभावः तत्रोपदेशशब्दस्य सप्तम्यन्तस्याद्योच्चारणविषयाणामित्यर्थे लक्षणेति तात्पर्यम् कर्मकरणव्युत्पत्ति
कल्पनं साहचर्यकल्पनम् लक्षणाकल्पनञ्चानुचितमिति भावः इत एवाऽऽरुचेः उक्तरीत्योक्तदोषपरिहाररूपात् वेः अलोन्त्यात्सूत्रेतिशब्दात् तावन्मात्रसूत्रमिति प्रतीतावस
ङ्गतिरप्रसिद्धेरत आह उपधासंज्ञेति उपधासंज्ञाविधायकसूत्रेत्यर्थः विरोधमुपपादयति तत्रहीति भिन्नम्पदमिति एतेन शकारस्य संज्ञाशब्दावयवत्वेन समुदाया
द्विभक्त्युत्पत्तिः यथाकथञ्चिन्नतो विभक्त्युत्पत्तौ हल्ङ्यादिलोपः स्यादिति द्विशकारकोनिर्देश इत्यनुपपन्नमिति परास्तम् शाइतिचेति भिन्नम्पदमित्यनुषज्यते स्व
रूपेणार्थेन प्रातिपदिकत्वादेतस्मात्सुप् हल्ङ्यादिलोपः नचास्य शकारस्य लोपशब्दानवयवत्वेन कथन्तस्य शित्वमिति वाच्यम् अनेकान्ता अनुबन्धा इति पक्षेणास्य

उपदेशाभावादिति आदेशस्योपदेशाभावादित्यर्थः नतो धातुसंज्ञेति लूशब्दस्यैव धातुसंज्ञः केवलस्य सौत्रिकार्ये त्वभतइतिभावः नन्वत्र।
सूत्रसाहचर्याद्धात्वागमप्रत्ययादिशब्देन तद्बोधकपाणिन्यादिपठितानुपूर्वीकाणां ग्रहणं तेषां धात्वादिव्यवहारस्तु भाविसंज्ञाविषयघटितत्वेन
धातुपाठ इत्यादिव्यवहारवदिति चेन्न आद्योच्चारणविषयाणामित्येव सिद्धे समस्यानुपयोगात् इत एवाऽऽरुचेराह अपि चेति अलोन्त्यात्सूत्रे।
ति उपधासंज्ञासूत्रे इत्यर्थः विरुध्येतेति तत्रहि लोपशितिभिन्नं पदं शाइतिच पूर्वस्यश्रुत्वेन शः असंदेहायकल्पस्संयोगादिलेऽपि स्कोरि
त्यस्य प्रवृत्तिः कृत्वा जशित्यादौ जश्त्वस्यैव शकारस्य धात्वाद्यन्तत्वाभावः स्पष्ट एवेतिभावः किंचनमो वरिवश्चित्रङ —— इत्यस्यासंग्र।
होऽत्र पक्षे इत्यपि बोध्यम्॥ (( पक्षस्यसत्त्वात् तत्पक्षेहि समीपेऽवयवत्वारोपेण बहुव्रीहेः सौकारात् अनुबन्धा एकान्ता इति पक्षेतु नशाकारान्तरस्य प्रश्लेषः किं

न्तु लोपग्रहणानुवृत्त्यैव सिद्धे पुनर्लोपग्रहणात्सर्वादेशः असन्देहायेति द्विशकारकोयन्निर्देश इति भाष्याक्षरस्यान्यथानुपपत्त्या चेति शेषः एतज्ज्ञाप्याक्षरमूलकव्याख्या
नात्सन्देहनिवृत्तिकल्पनापेक्षया संयोगादिलोपस्य कसाहचर्येण सलोपविषये ऽस्वएडुपदस्यैव प्रवृत्तिकल्पनमुचितमिति भावः नचाद्यस्य सर्यादित्वेन भत्वादृष्टान्तेज
श्त्वाप्रवृत्तिर्न्यायैवेति वाच्यम् छन्दोवत्सूत्राणीत्यतिदेशस्य प्रवृत्तिं विनाभत्वस्यासम्भवइति तस्य प्रवृत्तिरवश्यं वाच्या तथा च तस्य वदृष्टान्तदार्ष्टान्तिकयोः सं स्को
रकशास्त्रस्याप्रवृत्तिः स्यादित्याशयात् ननूक्तपक्षस्यानेकान्तपक्षाभिप्रायकत्वेनैकदेशयुक्तित्वेनतादृशोर्थेपि नक्षतिरत आह किञ्चेति इत्यस्य इति सूत्रस्य।

चित्रङ्गुलस्य अत्र पक्षेऽपदेशपदस्य धातुसूत्रेत्यादिना पठितेषु योगरूढिरिति पक्षे भाष्यसम्मतकरणव्युत्पत्तिरिति पक्षे तु नासङ्ग्रहः त्वदुक्तरीत्या भाष्यकृता ऽपरिगण-
नात् पर्यवसितान्त्यस्य ग्रहणमिति व्याख्यानेपि नासङ्ग्रहः आनिपदिकान्त्यत्वादिरिति चेद्ध्वनितम् न तु मन्मतेपि परिगणनमेतन्नेत्याह एष्वेतस्येति अस्य धातुसूत्रेत्या-
दिना पठितस्य परिगणनस्यैवेत्यत्र पठिते वकारव्यवच्छेद्यमाह नत्वितिनन्वन्यत्र यथापि गणनं ङ्कार्येत्यमित्युच्यते तत्रात्र नोक्तमिति परिगणनमिति कथनन्तो-
क्तिमत आह धात्वादीति सूत्रेदुरूपादत्वादिरिति सङ्कुचद्ध्वनितस्य शब्दस्यैकव्युत्पत्त्यैवार्थबोधकत्वं न तु तत्रव्युत्पत्तिद्वयसम्भवः सकार्थबोधकतयाचारिता-
र्थ्यादप्रत्तौ मानाभावादितिभावः करणत्वेति प्रकृतिजन्यबोधप्रकारस्यैव भावप्रत्ययार्थत्वयोपदेशशब्दे यदि करणघञन्तस्तदा करणतायास्तु भावप्रत्ययार्थत्वमित्य-

एवं तस्य योगरूढिरित्युक्तेः—परिगणनतायास्त्वलाभात् योगस्यैवेति ननु रूढेरित्यर्थः परिगणनस्येति धात्वादिगणनस्येत्यर्थः वै-
पर्येति भाष्यरीत्याकरणव्युत्पत्त्यैव सर्वसंग्रहादितिभावः उपदेशताप्रयोजकत्वेति योगमात्रस्वीकारे उपदेशता उपदेशाकरणता नहित-
त्प्रयोजकं धातुत्वादि भवतीति तद्विरोधः संज्ञात्वेन तु उपदेशता उपदेशशब्दत्वम् उपदेशशब्दस्य शब्दपरत्वात्तदवच्छिन्नस्य प्रयोजकं तद्रू-
ढ्यर्थतावच्छेदकतया धातुत्वादि वक्तुं शक्यमितिभावः शकारस्येति नह्यनेन किञ्चिदुपदिश्यत इतिभावः ननूपदिश्यते ज्ञाप्यते ऽनेनेति
तदर्थः धात्वादिभिर्हि प्रयोगो ज्ञाप्यते तद्वदनेनापि शकारेण सर्वादेशत्वं ज्ञाप्यत इत्यत्र चेत्याह आदेश्च इति ॥ ((शंयः नहीत्यादि प्रयोज्यप्रयोजक-

भावस्यान्वयव्यतिरेककल्प्यत्वाद्यथा चैत्रे चैत्रत्वधर्मसत्त्वेपि पाचकत्वमन्यथा नैतिकस्यापि न सम्मतं ङ्किन्तु विक्लित्त्यनुकूलव्यापारसत्त्वमेव पाचकत्वप्रयोजकं तथा धा-
तुत्वादिकं नकरणताप्रयोजकम् पूर्वस्मिन्पक्षे तु नतद्ग्रन्थविरोध इत्याह संज्ञात्वेनेति उपदेशशब्दत्वमिति भावप्रत्ययप्रकृतिभूतउपदेशशब्दस्वरूपपरस्तत्र त्वलप्रत्ययं स्तद्द्व-
त्ति धर्मपर इतिभावः तदवच्छिन्नस्येति उपदेशतायाः प्रयोजकमिति विग्रहे याषष्ठी तस्यास्तदवच्छिन्नसम्बन्धित्वमर्थ इति कल्पनेन तदवच्छिन्नस्येत्यस्य लाभः प्रयोजकप-
दस्तु रूढ्यर्थतावच्छेदके लाक्षणिकमित्याशयेनाह तद्रूढ्यर्थतयेति यथाहर्यादिनानार्थपदस्य विष्णुत्वादि रूपानानाधर्माः शक्यतावच्छेदका भवन्ति तथेहापि धातुत्वा-
दिकं रूढ्यर्थतावच्छेदकं सम्भवतीत्याशयः नचास्मिन्पक्षे प्रयोजकपदस्य यदि लक्षणा तदा द्वितीयपक्षेपि प्रयोजकपदस्यावच्छेदके लक्षणास्तु तथा चोपदेशाकर-

पात्तावच्छेदकमित्यर्थो भविष्यतीति तत्पक्षेऽपि न स्वग्रन्थविरोध इति वाच्यम् अन्यूनानतिरिक्तवृत्तिधर्मस्यैवावच्छेदकतया धात्वादेर्न्यूनवृत्तितयाऽवच्छेदकत्वासम्भवादि
ति भावः केचित्तु उपदेशनेत्यत्रोपदेशशब्दस्य संज्ञाशब्दतया संज्ञाशब्दस्थले शब्दस्वरूपस्यैव संज्ञिपरशब्दप्रवृत्तिनिमित्तभावप्रत्ययार्थत्वमित्युपदेशनेत्यस्योपदेशशब्द
इत्यर्थः सर्वोचित इत्याहुः तन्न योगरूढस्य शब्दस्य शब्दस्वरूपप्रवृत्तिनिमित्तकत्वासम्भवात् मूले पक्षद्वयसाधारणं दूषणमाह लोपश्चेतीति आद्यपक्षे परिगणनेनास
ङ्ग्रहः स्पष्टः द्वितीये तमुपपादयति नह्यनेनेति तदर्थः उपदेशपदार्थः ॥ ९ ॥ सर्वसम्मतत्वेऽपि भाष्यानुसारिणां भाष्यसम्मतार्थस्यैवाग्रह इत्याशयेनाह भाष्यकारादी
ति ननु करणव्युत्पत्तिस्तर्हि प्रसिद्धार्थकैव स्यादत आह यत्र त्विति इत्यादाविति आदिना भाष्ये यस्य सन्न्यस्तरेखस्तत्परोपदेशश्चेत्तत्परोच्चारणमिति वाक्यस्य सङ्ग्रहः मू
ले दिगिति दिगर्थस्तु प्रागुक्तभाष्यवार्त्तिकस्वारस्येन त्रूटः सद्इत्यादिसङ्ग्रहानुरोधेन सकललक्ष्यसाधनानुरोधेन बाहुलकाश्रयणमेवोचितमिति नन्वनुनासि

सर्वेतिं भाष्यकारादीत्यर्थः यत्र तु करणव्युत्पत्त्यैवार्थसंगतिस्तत्रागत्या कृत्यल्युट इति बाहुलकाल्ल्युडिति भावः यथा यन्निमित्तत्वेकल्पप्र
युक्तोपदेशप्रसक्तावित्यादाविति दिक् नासिकामनुगत इति नासिकामभिहत्य वायुनाभिव्यंजित इत्यर्थः प्रातिशाख्यशिक्षादौ लोके च ।
तद्व्यवहारस्य तथैवोपपादनमावश्यकमिति तात्पर्यम् अतएव मुखग्रहणप्रत्याख्यानभाष्यध्वनितो यमानुस्वारयोरनुनासिकत्वव्यवहा

कपरादनुपश्चान्नासिकाङ्गगत इति नासिकापश्चाद्व्याप्रियते यस्मिन्निति वार्थः प्रतीयते तथा चानुनासिकाकारादीनामननुनासिकत्वगुणरहि (१०) सूत्रमते संगच्छन्ते
तानां स्वरूपोपलम्भात्तद्विषये मतभेदेन यद्यप्युक्तस्यार्थस्य सम्भव इति तेषां संग्रहो भवति तथापि त्वादीनां तद्गुणरहितानामनुपलम्भाद्युगपदेवोभयावच्छेदेनोत्प
त्त्याभ्यां वायुसंयोगाभ्यामुत्पत्तिरिति विनिगमनाविरहेणोभयोः स्थानत्वमतः कथं योगाश्रयणेन गतार्थता किञ्चानुस्वारयमानां च नासिकास्थानमिष्यत इति शिक्षोक्तेस्ते
षां चासङ्ग्रहोऽत आह नासिकामपीति तथा च नायमुक्तरीत्या यौगिकः किन्तु नासिकामनुगत इत्यत्र योऽनुशब्दस्तस्याभिहत्य निर्गत इत्यस्य चाभिव्यञ्जित इत्यर्थ इति सर्वेषां
सङ्ग्रह इति भावः उक्तयोगाश्रयणमावश्यकमित्याह प्रातिशाख्येति न केवलं प्रातिशाख्यादावेव तथा किन्तु प्रकृतशास्त्रेऽपीति सूचयन्नाह अतएवेति योगाश्रयणा
देवेत्यर्थः प्रत्याख्यानेति तत्रत्यादौ मुखग्रहणस्य मुखग्रहणं यमानुस्वाराणामेव मा भूदित्येवमर्थमिति प्रयोजनमुक्त्वा येऽभयवचनात्तेषां प्रासादवासिन्यायेन ।

सङ्केऽपि सुस्वग्रहणाभावेऽपि भविष्यतियमानुस्वाराणान्तु सङ्ग्रहेऽपि नैव दोषो न प्रयोजनमित्यनेनास्य भावस्तु स्वमुस्वग्रहणप्रत्याख्यानेत्यर्थः ध्वनितमिति अथेदुभयवचनानां सिद्ध मि
तिकथनेन ध्वनितमित्यर्थः उभयवचनमुभयावच्छिन्नवायुसंयोगप्रयोज्याभिव्यक्तिविषयत्वेनैवेति तथाकथनेनायमर्थो लभ्यते ॥ ॐ ॥ नन्विदसूत्रयत्यारभ्यतेनदा शब्दसंज्ञेतिनि
षेधाद्यरोऽनुनासिकइत्यादौ स्वरूपग्रहणाभावो भवति सूत्रानारम्भेऽनुस्वरूपग्रहणमप्राप्नोतीत्यत आह यरोऽनुनासिकइत्यादाविति इत्यादिवदिति आदिना देवनादिशब्दपरिग्रहः
तथा च स्वरूपमित्यत्र शः पश्चादिविषये व्यभिचरितइतितस्यानित्यत्वानुवादकमेवाशब्दसंज्ञेति नतु स्वात्मत्र्येण निषेधविधायकमितिपश्चादिशब्दोच्चारणस्थलवदत्रापि स्वरूपग्र
हणाभाव इति भावः अनुनासिकाकारादिविषये मतभेदश्च कैयटीये प्रसिद्धः अनुनासिकस्य पूर्वः परो वा भागो मुखेनोच्चार्यते भागो नासिकया नासिकावचन भागानुरागवशान्मु
खवचनोऽपि भागो नासिकावचनइव लक्ष्यते अत्र प्रासादवासिन्यायेनास्ति भागस्यैव मुखेन नासिकया चोच्चारणात् यत्रतु सर्वस्यैव वर्णो मुखेनोच्चार्यते नासिकया चात्र प्रासाद
वासिन्यायेन मुखग्रग्रहणं भाष्यकारः प्रत्याचष्टइति मन्दप्रयोजनशब्देन क्रियाविशेषण मन्दशब्दघटितः समानाधिकरणपदको बहुव्रीहिः

यरोऽनुनासिकइत्यादौ स्वरूपग्रहणाभावस्तु पश्चुरपत्यमित्यादिवदितिबोध्यम् मंदप्रयोजनमिति मंदेषु प्रयोजनमस्येति बहुव्रीहिः सर्वं विधलो
कमानि शास्त्रायनभिज्ञं प्रति स प्रयोजनमित्यर्थः अभ्रआँ अपइति अत्रेत्संज्ञाया लोपः स्यादिति भावः विधानेति इदितिवक्तव्ये अनुनासिकवि
धानसामर्थ्यादित्यर्थः नेत्यमिति तत्फललोपस्य सामर्थ्यादभावे इत्त्वमपि फलाभावान्नेत्यर्थः नन्व——भ्रआँ अटिनइत्यत्रानेकानाअनुबंधाइतिपक्षे आ
दितश्चेति इट्प्रतिषेधः फलम् नचलोपाभावेइदिति महासंज्ञाकरणात् संज्ञापिनेतिवाच्यम् महासंज्ञयैव लोपसिध्यानस्य लोपइत्यस्यवैयर्थ्यापत्तेः

——— उक्तरीत्या प्रयोजनालाभात् किन्तु सप्तमीविशेषणइतिज्ञापकात् अधिकरणपदकइत्याशयेनाह मन्देष्विति लोपः स्यादिति अत्र स्यादित्यनेन स
म्भावनामात्रन्तु प्रसक्तिर्वेदे आपाद्यमानरूपाभावात् यद्यप्यनेकान्ता अनुबन्धाइतिपक्षे अभ्रआँ अटिनइत्यत्र इट्प्रतिषेधः फलं सम्भवति तथाप्येकान्तपक्षे नदसम्भव एवेति
वस्यते आङ् इदितिवक्तव्यइति आङः इच्छन्दसीतिवक्तव्यइत्यर्थः यत्तु तस्य लोपइति सूत्रानन्तर माङ्श्छन्दसीतिलाघवाद्वक्तव्यमिति तन्न अचोऽपस्य कर्तव्यतापत्तेः स्वस्थानेत
थापाठेतु प्लुतप्रगृह्येति सूत्रादचीत्येतस्य सम्बन्धेनतदनावश्यकमेव ननु विधानसामर्थ्यादस्य लोपाभावेऽपि इत्संज्ञा तु स्यादेवेत्यत आह तत्फलेति तस्येत्वस्य फलं लोपः सप्रति
योगितासम्बन्धेन त्वस्य व्यापकोऽविधानसामर्थ्याद्व्यापकस्य तस्याभावे व्याप्यस्येत्त्वस्याप्यभावइत्यर्थः फलान्तरमाशङ्क्य निराचष्टे नन्वभ्रेति महासंज्ञेतिइदित्यस्य ज्ञानमात्रं

संज्ञाकरणे त्वानयाचलाघवम् इदिनित्वेनीनोदित्यर्थकमिति लोपो भविष्यतीत्याशयः ॥ ९ ॥ इक इत्यादाविति प्रत्याहारार्थमित्त्वं तस्यावश्यकमेव तथा च महासंज्ञायाननिवृत्तिः स्यादि
ति भावः ननु तत्सत्त्वे तत्रोच्चारणं ड्गुणसदृशस्यैव अन्तरवादिरत्येनेति सूत्रव्याख्यानावसरे इत्यादिना ससदृशेनेत्युक्तमतः सर्ववैयाकरण इत्यत्र चिन्त्यत्वरोनेत्यत आह आद्यविति तेनाइउ
णित्यादौ णादिश्रवणानापत्तिः समुच्चीयते सुस्थत्वं तस्योपपादयति तदाहेति सर्वंह लन्त्यमित्यादौ लक्षणायाश्च कल्पनेनापि लाघवम्बोध्यम् ननु दोषाभाव इति प्राग्लिखित
मेव पुनरिहेत्यदोषादित्युच्यते इति चेन्न तत्त्वमिति चेन्न पूर्वस्य दोषपदस्येह प्रतिषेधप्रसङ्ग रूपदोषपरत्वमस्य तु दोषसामान्यपरत्वमिति भेदात् प्रतिज्ञानुनासिक्या इत्यत्र प्र
तिज्ञाशब्दः कर्मबोधक इत्याशयेनाह प्रतिज्ञानेति लक्षणावादिमतमुपपादयति भावेति लक्षणेति क्लिष्टमित्यनेन लक्षणास्वीकारे सर्वक्लेश इति प्रतीयते स तु न युक्तः

इक इत्यादौ ककारादिश्रवणानापत्तेश्चेति चेन्न अनुबन्धानामेकान्तत्वमेवेति मुख्यपक्षे दोषाभाव इत्याशयात् तदाहि मुख्यैव यवित्यस्य पदार्थैव।
इत्यादिः न चायमाकारो ऽदर्शनेऽरवयव इत्यदोषात् प्रतिज्ञेति प्रतिज्ञानविषयमित्यर्थः प्रतिज्ञाशब्दस्येति भावाद न्तस्येत्यर्थः क्लिष्टेति शक्ति
ग्राहकव्याकरणसत्त्वाच्छक्त्यैव तदर्थबोधसंभवे लक्षणाश्रयणं क्लेश इति भावः लक्षणा विनैवेति अत्र लक्षणया व्याख्यानं कुर्वताऽपि तत्र लक्ष
णाविनाप्युदकारीत्येव व्याख्यानम् सर्वत्र पूर्वापरविरोधस्तस्येति भावः न चोभयोर्विधानेऽपि लाघवाद्भावे शक्तिः कर्मणि लक्षणा अनुशासनमपि लाक्षणि
कार्थानुशासनमेवेति वाच्यम् तं कर्मणीत्यादीनामपि तथात्वापत्तौ तिङां कर्त्रादौ शक्तिरिति सिद्धान्तासंगत्यापत्तेः व्याकरणस्याभियुक्तोक्तशक्ति
ग्राहकत्वस्य भंगापत्तेश्च इकारस्यापीति अत्र यद्वक्तव्यं तदन्यत्रोक्तम् ॥ ९ ॥ लक्षणया ऽच्छेदापत्ते रसौ भावार्थमाह ज्ञाकीति मूलेपाणिन्युपज्ञमिति आद्यर्थी
कोपशब्दपूर्वकाज्ज्ञाधातोः कर्मण्यङ् पाणिनेरुपज्ञेति कर्तृषष्ठ्यासमासः पाणिनिकर्तृकाद्यज्ञानविषयभूतमित्यर्थः तत्र दृष्टान्ते उभयोः भावकर्मणोः तथात्वापत्तौ लाक्षणिका
र्थबोधकत्वापत्तेरित्यर्थः अभियुक्तोक्तेति शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धा इति वृद्धोक्तेत्यर्थः
अत्र रप्रत्याहारविषये अन्यत्र लघुशब्देन्दुशेखरे लण्सूत्रस्थाकारो यद्यनुनासिकः स्यात्तदा ऽलोन्त्यस्येति सूत्रेऽपि निर्लकारलोच्चारयेत् रप्रत्याहारेणैव व्यवहरेत्
सर्वं यण्घटितसूत्रेषु लाघवाय प्रत्याहारनिर्देशमेव कुर्यात् तस्मादस्यानुनासिकत्वमप्रामाणिकमित्यादि तत्रोक्तम् वस्तुतस्तु लोत्यत्र रेफस्यैव सिद्धे लकारोच्चारणं ल

णसूत्रस्थाकारनिष्पाद्यप्रत्याहारनिर्देशस्यक्वचिदनाश्रयणमिति ज्ञापनाय तेनशुल्कमाचष्टे शुल्कयति शुल्कयतीतिशुल्दित्यत्रराल्लस्येतिनियमाप्रवृत्त्यासंयोगान्तलोपस्यप्र
वृत्तिसिद्धिः अतस्वरदाभ्यामित्यत्ररो ऽसुपिवनोरश्चेत्यनयोश्चनदोषः नचानयोरकारउच्चारणार्थोनत्वनुनासिकइतिभ्रमितव्यम् विधेयविषयेइत्संज्ञांविनानिवृत्त्यसिद्धेः रदा
भ्यामितिसूत्रेप्रत्याहारस्यग्रहणेप्रफुल्लत् इत्यत्रादितश्चेतीट्प्रतिषेधात्लकारात्परतस्यनत्वापत्तिः यदपियणघटितसूत्रेषुलाघवाययप्रत्याहारनिर्देशमेवकुर्यादितिन
स्यवीयःइग्योयण् इग्यणः सम्प्रसारणमित्यत्रलाघवाभावात् इकोयणचीत्यत्रमात्रालाघवसत्त्वेपियोचोयुक्तेप्रक्रियागौरवमस्त्येव किञ्चलणसूत्रस्थाकारनिष्पन्नयप्र
त्याहारनिर्देशस्यक्वाचित्कत्वंयप्रत्याहारेणैवनिर्दिष्टो दितिवादिनापिवाच्यमन्यथामहाशूद्रीत्यत्रायोपधादितिप्रतिषेधस्यप्राप्त्याजातेरितिसूत्रविहितङीषभावस्यङेः ये
इत्यनेनयकारादिचतुष्पादेशघटितानिष्टरूपाणामिष्टरूपाभावानाश्चापत्तेः नचास्यानुनासिकत्वेहल्प्रत्याहारेनुनासिकाकारस्यग्रहणापत्तिः हल्प्रत्याहारसि
द्धेः प्रागच्यद्रार्थेनिष्पत्त्यभावेनोपदेशेजित्यस्यार्थबोधाभावेनास्याकारस्येत्त्वानापत्तेः इष्टायनिस्तकतुमशक्या मामांस्त्रायस्वेत्यत्रान् धातोःक्विपिदीर्घेनस्यकनिकसम्बुद्धौ
नलोपाभावेनस्त्रुवीनिरुत्ते ऽत्रानुनासिकइत्यनुनासिकपक्षेऽनुस्वारापत्तेरितिवाच्यम् लणसूत्रस्थाकारेणानुनासिकत्वविशिष्टःश्रूयतेकिन्तुकार्यार्थंतथाप्रतिज्ञान
इतिवाच्यन्तत्कार्यस्यप्रत्याहारसिद्धिरूपन्तच्चेत्त्वंविना ऽनुपपन्नमितिहल्प्रत्याहारसिद्धिकालेनस्योक्तरीत्या इत्संज्ञायाःप्राप्त्यभावेपिमोनुस्वार इतिसूत्रजवाक्यार्थ
निष्पत्तिकालेलणसूत्रस्थाकारस्येत्त्वप्रवृत्तौप्रतिबन्धकाभावान्नतत्सलोपप्रवृत्तेर्दुर्वारत्वात्तावतापिमवदुक्तवत्लवत्तरलोपप्रतियोगित्वरूपहेतुसत्तायाः सत्वात
यप्रत्याहारेग्रहणाभावस्यसिद्धेः किञ्चयत्प्रत्याहारेजातिनिर्देशमाश्रित्यसोसीत्यत्रसुलोपापत्तिरिति नदितिस्यवीयः अरेङ्गुण इत्यादौसुलोपाकरणेनहलन्तात्परत्वा
देवसुलोपेसिद्धे एतत्तदोरितिसुलोपविधानंज्ञापकेनचलणसूत्राकारस्यप्रत्याहाराणितिकप्रत्याहारप्रयोजकत्वकल्पनात् यदपिलणसूत्रस्थाकारस्यानुबन्धत्वेतृ
तीयहेतोरव्यापकत्वापत्तिरूपदोषोद्भवनन्तदपिनमनोरमम् अश्रुउणित्यादौसन्धिकार्यस्याप्रसङ्गोनीति शङ्कायावर्णोपदेशकाले ऽजादिसंज्ञायाअनिष्पादात्सन्धिर्नेतिपूर
क्तसमाधानस्यस्वराद्वनावसरे वर्णोपदेशेइत्संज्ञायामच् प्रत्याहारेचनिष्पन्नेप्रवर्तमानानांयणादीनांसुध्युपास्यइत्यादौतटस्थइवोद्देश्यतावच्छेदकाक्रान्तेवर्णोप
देशेपिप्रसक्तेर्दुर्वारत्वादितियथाभिहितन्तथाहल् प्रत्याहारनिष्पत्युत्तरमच् प्रत्याहारेनिष्पन्नेभवतादिशब्दोकारेयशोपदेशइतिसूत्रस्यप्रवृत्तिर्भवतितत्रोद्देश्य
तावच्छेदकरूपाक्रान्तेलणसूत्रस्थाकारेपितस्यप्रवृत्तिर्दुर्वारेतिप्रत्याहारग्रहणाभावेसाध्येयपक्षस्तावच्छेदकमनुबन्धत्वन्तद्व्यापकत्वम्वलवत्तरलोपप्र॰

आदेनेति अस्य बहुव्रीहावित्यत्रान्वयः लक्षणयेति ऊपदस्येत्यादिः अभेदाध्यवसायः अभेदारोपः अतएव मृगचपलेत्यत्र पुंवद्भावः यथाश्रुतमेव सदृशे लक्षणां विनैव आ
द्युदात्त इत्यस्यानन्तरं फिट्स्वरेणेत्युपादाने आद्युदात्तः फिट्स्वरेणेत्यर्थः प्रतीयेत तथा चानुपपत्तिस्तस्यान्तोदात्तत्वविधायकत्वादत आह अन्तोदात्त इति अर्वाङ्शब्दाद्याकारस्या
नुदात्तत्वमुपपादयति फिडित्यादिना अव्युत्पन्नमिति फिट्स्वरप्रवृत्तये भिद्धितत्र किंस्मानमिति चेदाह भिसुखइति वक्ष्यमाणोक्तिरेव ह्रस्वग्रहणमतन्त्रमित्यनेन स्वरितादेस
त्स्याद्यस्योदात्तत्वविधायकमिति प्रतीयेत सवर्णासङ्गतिर्दीर्घादावप्यर्द्धमात्रायाउदात्तत्वस्य लोके दर्शनात् अस्य शास्त्रस्य सर्वशाखासाधारणत्वेन सर्वोपकारकव्याख्यान
ऊपदेन स्वोच्चारणकालसदृशलक्षणया कालशब्देन समानाधिकरणबहुव्रीहौ न तत्फलमीतिभावः वांकाल इति तु न विग्रहो व्यधिकरणत्वात्तदाह।
विग्रहस्त्विति काल इति जात्याख्यायामेकवचनम् स्वोच्चारणकाल इति स्वोच्चारणकालसदृश इत्यर्थः सादृश्यमूलके कालयोरभेदाध्यवसाये
तु यथाश्रुतमेव साधु फिट्स्वरेणेति अन्तोदात्त इत्यर्थः जसः सुप्त्वादनुदात्तत्वं शकारेशउदात्ते नेयेकार उदात्त इति भावः अनुदात्त इति फि
ट्स्वरेणान्तस्योदात्तत्वे शेषनिघातेनेति भावः अभिसुखवाच्यव्युत्पन्नप्रातिपदिकमर्वाङिति अविवक्षितमित्यर्थ इति इदं च वक्ष्यमाणप्रातिशा
ख्ययच्छाखायां तच्छाखास्थवैदिकोदाहरणविषयम् तनूनपाच्छचीपतिशब्दयोरिति अस्य यद्यपीत्यादिः शेषनिघात इति अस्यतस्यापीति
शेषः तेनेदीनौ अनुदात्तौ प्राप्नुत इति भावः जात्यवदिति पूर्वपदभूतयोस्तनूशचीशब्दयोरन्तौ जात्यवदिति अतोन्यस्वरितस्वारजात्य मा चस्य
ते पदे इति लक्षितो जात्यः॥ १८ स्वोचित्यात् अर्द्धह्रस्वशब्दोर्द्धमात्रायां रूढ इति भाष्य विरोधश्चेत्यत आह इदञ्चेति इदम् अविवक्षितमित्यादि कथनम् ल
क्ष्यदर्शनमित्यनेन बोधित लक्ष्यं दर्शितं येरादद्रत्यादि तत्र तनूनपाच्छचीपतिशब्दयोरित्यादिना शङ्कान्यथा इति प्रतीयते तदसङ्गतिः शङ्काबोधकशब्दानुपा
दानादत आह अस्येति अस्य ग्रन्थस्येत्यर्थः आद्युदात्तत्वे हेतुरिति वनस्पत्यादिगणस्थ ऊप्रत्ययान्तस्तनूशब्द आद्युदात्तो निपात्यते नभ्राडिति सूत्रे निपातितस्तत्पुरुषे तु
त्वेनाद्युदात्तो नपाच्छब्दः सतयोः समासे समासान्तोदात्तत्वे प्राप्ते उभेवनस्पत्यादिषु युगपदित्यनेन पूर्वोत्तरपदयोः प्रकृतिस्वरे सति द्वयोरप्याद्युदात्तत्वप्राप्तिरिति भावः स
वं शचीशब्दः शार्ङ्गरवादिङीनन्तत्वादाद्युदात्तः पतिश्च डतिप्रत्ययान्तत्वादाद्युदात्तः तेन शेषपूरणेन अनुदात्तावेव प्राप्नुत इत्यर्थो लभ्यते स्वरितत्वविधायकस्य प्रातिशाख्य

इत्युक्तेरितिनोदात्तस्वरितोदयमितिनिषेधस्तु उदात्तानुदात्तस्येत्यस्यैवानन्तरस्येतिन्यायादिति भावः । त्रुटि + ९ पंक्ति

स्वरितोदात्त्यामिति मूलेकस्यितमितिक्रियाविशेषणम् कस्योनिघातविशेषः ॥ ३ ॥ हरदत्तग्रन्थोभाष्यसम्मतार्थाभिधायकत्वेनयुक्तस्वेतिमूलमसङ्गतमिति ध्वनयितुन्तत्रा र्थेभाष्यसम्मतिमाह तदुक्तमिति अनुपात्तम् शब्दशक्त्याप्रतिपाद्यम् तस्य हरिग्रन्थस्य तथात्वनियमिद्धन्तदाह सवृत्त्वेति अर्द्धह्रस्वशब्दस्यार्द्धमात्राप्रतिपादकत्वमित्येते त्व अन्यशाखास्विति तदुक्तन्तैत्तिरीयप्रातिशाख्ये आदिरस्योदात्तसमः शेषोऽनुदात्तसमइत्याचार्याइति तत्रपूर्ववाक्याद्यावदर्द्धह्रस्वस्येति सम्बध्यते स्वरितस्यस्व रितस्यादितोवद्ध्रस्वस्यार्द्धह्रस्वार्द्धकालस्सउदात्तसमोभवति शेषस्त्वनुदात्तसमइत्याचार्याइति तदर्थम्भाष्यकारआह प्रातिशाख्योक्तेः पूर्वोक्तयादृक्प्रातिशाख्यमर्द्धमेवेतित दुक्तमतदित्यर्थः ननुयदिमात्रापरत्वार्द्धह्रस्वशब्दोवदुत्तम्नतदाकथंकथञ्चिदित्यस्योपपत्तिरत्तआह लक्षणेत्यंशेति वृत्तिभावइति वृत्तिमूलकृतोऽभिप्रायः मुखस्त्रनासिकाचे तितिअत्रनासिकाशब्दसमभिव्याहारान्मुखशब्दोमुखावयवतात्वादिस्थानपरः आस्येभवमिति यद्यप्यास्यशब्दस्यास्यन्दतेऽन्नमस्मिन्निति व्युत्पत्त्या द्रवोभवतीत्यर्थोऽन्येष्वपिद्दश्यतइति इत्य

तस्मादिमितदुक्तंभाष्ये अर्द्धह्रस्वशब्दोऽर्द्धमात्रायांरूढइति हरिरप्याह प्रमाणमेवह्रस्वादावनुपात्तंप्रतीयतइति अनुपात्तमपिमात्रारूपंप्रमाण मेवोपलक्ष्यतइत्यर्थस्तस्यदेलाराज आह रावचलोकेऽन्यशाखासुचदीर्घादिष्वपिअर्द्धमात्रैवोदात्तेति भावः मतान्तरेति प्रातिशाख्योक्तमतापेक्षयाइतरवे दलोकसाधारणमतान्तरेइत्यर्थः कथंचिदिति लक्षणेत्यंशयरमिदम् भाष्यमोरूढिशक्तेरेवप्रतीतेरितिभावः आस्यशब्देनकथंतदवयवतात्वादिग्र हणमतआह आस्येभवमिति मशाब्दवलादिति प्रकृष्टोयत्नः प्रयत्नः प्रकर्षश्चवर्णोत्पत्त्यव्यवहितप्राक्कालिकत्वरूपइतिभावः चकारेणेति ॥ ६ ॥

स्पृष्टेकर्तरिसतिमुखपरत्वमथवात्नेनद्रवीक्रियतइत्यत्नभावितएवर्थोऽस्यन्दधातोः परिखेत्यत्रैवकर्मणिङप्रत्ययेनमुखपरत्वन्त्वथापिसर्वेषान्तुल्यमितितदुपादानवैय र्थ्यमतआस्यभवतात्वादिस्थानपरत्वमित्याशयेनाह तात्वादीतीतिमूले प्राक्कालिकत्वरूपइति नाभिप्रदेशात्प्रयत्नप्रेरितोवायुः प्राणोनामऊर्द्धमाक्रामन्नुरःप्रभृतीनि स्थानान्याहन्ति ततोवर्णाभिव्यक्तिः तत्रोत्पत्तेः प्राग्यदातन्तस्थानानिजिह्वाग्रोपाग्रमध्यमूलानिसम्यक्स्पृशन्तितदास्पृष्टता जिह्वाग्रादीनांसम्यक्स्पर्शश्चनतन्स्थानेन सहबोध्यः ईषद्यदास्पृशन्तितदाईषत्स्पृष्टता समीपावस्थानमात्रेणसंवृतता वाह्यास्तुवर्णोत्पत्तेः पश्चान्मूर्द्ध्निप्रतिहतेनिवृत्तेप्राणाख्येवायौउत्पद्यन्ते गलविवरसङ्को चाम्नेवारः तस्यैवविकासाद्विवारइत्यादिरीत्याभवन्तीयेषान्तवर्णोत्पत्तेः प्राक्कालिकत्वम् उदात्तत्वादीनामेतेषुगणतन्तुसावर्ण्यानुपयुक्तत्वान्तरतम्यपरीक्षोपयुक्तत्वस्

पधर्मसादृश्यात् यद्यपिवर्ग्याणाङ्ख्वादीनामेकमेवस्थानन्ताल्विति भेदाभावात्तुल्यत्वन्नोपपद्यते तथापिकार्यभेदेनस्थानेषुभेदारोपेणभेदवृत्तितुल्यत्वस्योपपत्तिः यत्तुनासिक्
नस्थानङ्किन्तुकरणमितिमतन्तन्नयुक्तमस्यन्त्यनेनवर्णानिति भाष्यात्कण्ठादीनामपिकरणत्वप्रतीतेः स्थानत्वव्यवहारस्तुवर्णाभिव्यक्तिजनकवायुसंयोगाधार त्वाद्वर्णो
धारत्वारोपेण ॥ ः ॥ स्वच्छआदीनान्नासिक्यव्यवहारस्यप्रातिशाख्यशिक्षादौदर्शनेननासिकायाभ्भवाद्व्यर्थकरणेननासिक्याञमङणनमाइतिव्याख्यानृवच्चनेन चना
सिकापिस्थानमित्याशयेनाह अत्रयस्येति अनुस्वारोञमाअनुनासिकाइतितैत्तिरीयप्रातिशाख्यम् यमानुस्वारनासिक्यानान्नासिका अनुनासिकाञ्चोत्तमाइतिकात्यायनप्राति
शाख्यम् वर्गोत्तमाअनुनासिकाभवन्ति चशब्दात्स्वस्थानाद्यपरित्यागद्वारेणनासिकास्थानन्द्वितीयमेषामित्यर्थइतितद्भाष्यञ्च शिक्षापि यमेनुकएथ्यतालव्या ओऔकराउष्ठजोस्म्
नाविनिपाणिनीयशिक्षेत्यर्थः तत्रतपरत्वाभावेनप्लुतानामपिसङ्ग्रहादत्रतपर इतिसूत्रस्यप्रवृत्तावनुदात्तभङ्गापत्तिरतस्तदप्रवृत्तिः शिक्षाद्युक्तानुवदत्वेनेत्यत्रादि
पदेनलोकानुभवपरिग्रहः ३ त्रैपादिकस्यपरस्यपूर्वदृष्ट्याऽसिद्धत्वाभावेदोषमाह नतस्यैति घत्वेत्यादि अस्यसूत्रस्यविधित्वपक्षेत्रिपाद्यास्पूर्वस्यपाठितयच्छास्त्रन्त

अत्रयथानासिकायाःस्थानत्वंनत्थान्यत्रनिरूपितम् नतुनत्काल्तेति यथाशिक्षाद्युक्तार्थानुवादत्वेनात्रशास्त्रप्रवृत्त्यभावादितिभावः नासि
द्धत्वादिति मतस्यगोधुङ्मानित्यादौघत्वजश्त्वानुनासिकेषुक्तेषुभषभावोनस्यात् ॥ ९९ इष्यापरस्यासिद्धत्वबोधकत्वाभावेनगोदुह्मानितिस्थिते

घत्वजश्त्वयोःप्राप्तयोःपरत्वाद्घत्वस्यजश्त्वापवादत्वेनादौघत्वम् ततोजश्त्वानुनासिकत्वयोर्जश्त्वमन्तरङ्गम्नचानुनासिकत्वञ्जश्त्वापवादः सुगण्वानि
त्यादौपर्जन्यन्यायेनणकारादेणकाराद्यादेशविधायकत्वेनचारितार्थ्यसम्भवेनयेननाप्राप्तन्यायविषयाभावात् किन्तुविजातीयादेशाभावेननिरवकाशत्वेनतद्बाध्य
मितितत्रादावपवादविषयेप्युत्सर्गस्यप्रवृत्तेर्जश्त्वम् ततोऽनुनासिकः नन्वत्रघत्वात्तरकयइतिवत्वापत्तिःजश्त्वस्यपदसंज्ञासापेक्षत्वेनाधिकापेक्षत्वेनबहिरङ्गत्वात्
कत्वइत्यस्यतदनपेक्षत्वेनान्तरङ्गत्वम् नचास्यजश्त्वापवादत्वात्प्राक्प्रवृत्तिरिति उदश्वित्वानित्यादौतान्तात्परत्वेनतसौमत्वर्थइतिभसंज्ञाविषयेतस्यास्यापवादत्वा
सम्भवात् अतएवपरत्वादादौजश्त्वमितिन किञ्चाविरोधेनादृशस्थलेपरत्वन्ननियामकम्एवमेवबत्वस्यभषभावात्प्राक्प्राप्तिःततोजश्त्वभषभावानुनासिकत्वानाम्प्रा
प्त्यागोधुङ्वानितिस्यादितिचेन्न घत्वोत्तरंवत्वभषभावजश्त्वानाम्प्राप्तौपरत्वादन्तरङ्गत्वाच्चजश्त्वस्यैवप्राप्तेः नचजश्त्वाद्वत्वसुकरीत्यान्तरङ्गम् कयइति

इनन्तस्मिन्कृते रोपदर्शनमस्तीति हृशिचेत्तिन स्यात् आरोपेतिकथनं वस्तुतोऽभावो नास्तीति सूचनाय पूर्वत्वस्य सावधिकतया यदि परस्य सत्तैव न स्यात्तदा पूर्वत्वमपि न स्य
कुमशक्यमिति पूर्वत्रासिद्धमितिवाक्यस्य प्रवृत्तिर्न स्यादतोऽवस्तुत: परसत्ताऽपेक्षितैव तथा च तत्र न तात्कालिकाभावप्रतियोगित्वम् किन्तु शास्त्रबलादभावप्रतियोगित्वारोप एवे
तिभाव: स्थानिभूतेति उत्वलोपयोरित्यादि: एतेन पूर्वत्रेति सूत्रस्यैव वैयर्थ्यापत्तिर्ध्वनिता सिद्धान्तव्याकोपमुपपादयति शास्त्रेत्यादिना शास्त्रस्य त्रैपादिकशास्त्रस्य अधुना शा
स्त्रासिद्धत्वपक्षाभावेपि शास्त्रस्येत्यस्य कथनं दृष्टान्तार्थम् शास्त्रजज्ञानवेलायाम् त्रैपादिकशास्त्रजन्यवाक्यार्थज्ञानसमय इत्यर्थ: भवन्मते विप्रतिषेधशास्त्राप्रवृत्तौ त्रै
पादिकशास्त्रबोध्यकार्यस्य लक्ष्यप्रवृत्तिविधानो निमित्तमिति वक्तव्यं न त्वसम्भवति तस्याजातत्वादिति सिद्धान्तव्याकोप इति भाव: पूर्वादिपदे लक्षणा तथा च लक्ष्येका
र्यप्रवृत्तिर्नोपेक्षिता किन्तु तात्कालिकज्ञानविषयपूर्वशास्त्रजन्यज्ञानविषयकार्यज्ञानमात्रमपेक्षितं तत्त्वास्त्येवेति मनोरथस्य सिद्धि: स्यादेव अभावादुत्तरस्येत्यत्राप्युत्तर प

तथा चेति शास्त्रस्य तद्बोध्यकार्यस्य च शास्त्रजन्यज्ञानवेलायाम् सिद्धत्वाभावे रोरीत्यादे: प्रसंगे चेत्यर्थ: व्याकुप्येतेति त्वया विप्रतिषेधशास्त्रप्रवृत्तौ नि
मित्तस्य त्रैपादिकस्य शास्त्रजबोधविषयकार्यस्य शास्त्रस्य वाऽसिद्धतां वक्तुमशक्या किन्तु लक्ष्ये जातस्य तस्य प्रवर्तमानसपादसप्ताध्यायीस्थ।
कार्यदृष्ट्यात्र सिद्धत्वं वाच्यमेवं च विप्रतिषेधाभावोपपादकहेतोरसिद्धिरिति भाव: न च ममापि पूर्वपरपदयो: पूर्वपरशास्त्रजन्यबोधवि
षयकार्ये लक्षणया शास्त्रस्यैव कार्यासिद्धत्वमिति वाच्यम् लक्षणायां मानाभावात्फलाभावाद्गौरवाच्च नतु मनोरथे दर्शनाभावरूपे लोपेऽभावा
रोपस्य दर्शनारोपरूपत्वेन न दोषोऽभावाभावस्य प्रतियोगिरूपत्वादित्यत आह अमूद्रित्यादि ॥ ॥ ॥ ((इमुत्तरशास्त्रबोध्यकार्य

परमिति न सिद्धान्तव्याकोप इत्याशयक शङ्कां निराचष्टे नचेति ममापि कार्यासिद्धत्ववादिनो ममापीत्यर्थ: पूर्वपरपदयो: अत्र पूर्वपदमुपात्तम्परपदं त्वाक्षिप्तं बोध्यम्
शास्त्रस्यैव विषयता सम्बन्धेन शास्त्रजन्यज्ञानविशिष्टकार्यस्यैव एवकारेण लक्ष्यकार्यप्रवृत्ति व्यावृत्ति: ननु पूर्वत्रासिद्धमिति शास्त्रारम्भस्यैव मानमत आह फला।
भावादिति ननु फलमप्युक्तमेवात्यत आह गौरवादिति कार्यासिद्धत्वपक्षस्वीकारे त्यज्य शास्त्रासिद्धत्वपक्ष: स्वीकार्यस्तथा अमुक्तार्थे लक्षणां विनापि प्रयोजनानामुक्तसि
द्धान्तस्य च निर्वाहो भविष्यति यद्येवं क्रियते न किन्तु कार्यासिद्धत्वमेवाश्रीयते उक्त: प्रकारोऽप्याश्रीयते तदा गौरवं स्पष्टमेवेति भाव: कार्यासिद्धत्ववादी शङ्कते न

जातस्येति निरधिष्ठानारोपासम्भवेनारोपार्थे ज्ज्ञातस्येत्यर्थः पूर्वरीत्या देवदत्तहन्तृहतन्यायेन अकाराभावेन उकाराभावस्याकाररूपत्वाभावादिति भावः आदिपदेनऔकार स्थानिकस्योत्वस्यैकारस्थानिकेत्वस्य परिग्रहः ननु ताभावे कर्तव्ये सुत्वासिद्धत्वनिषेधएव सति व्यर्थः स्यात् आङोऽकारेण व्यवधानान्नाभावाप्राप्तेरिति देवदत्तहन्तृहत न्यायोत्र नाश्रयणीयस्तथा सत्यकारवृद्ध्या पररूपम्भविष्यतीत्याशयेन शङ्कते मुत्वस्येति युक्तमिति लाघवादिति शेषः एतच्चास्युपेत्यवादेन वस्तुतस्तुज्ञापकेना पित्वस्यस्य सिद्धिः उत्वे सिद्धत्वारोपेणाकारवृद्धौ प्रसक्तेनान्तो गुण इति शास्त्रेण पररूपे सत्यकारो भविष्यतीति तोरुद्धावप्युकारस्य लक्षणस्य श्रवणन्तस्मादेव पररूपे णतस्य निवर्तनात् नचोकारासिद्धत्ववन्मकारोप्यसिद्ध इतिदानीं परत्व वृद्ध्या पुनः सुत्वस्य प्रवृत्तिर्भविष्यतीति वाच्यम् लक्ष्ये लक्षणस्य पुनः प्रवृत्तेः शास्त्रविरुद्धत्वात् यदि

अदस्यौत्र अत्र सद्भावस्थायां जातस्योत्वस्य सपादसप्ताध्यायीस्थ कार्ये दृष्ट्याऽसिद्धत्वेपि पूर्वरीत्या अकाराभावेन पररूपाद्यनापत्तिः मुत्वस्यासिद्धत्वनिषेध सामर्थ्यादेतद्विषये उक्तन्यायाप्रवृत्तिरिति चेत्तेन शास्त्रासिद्धत्वमेव ज्ञापयितुमुक्तम् सर्वशीभावान्पूर्वमदसोसेरिति। मुत्वेदात्परेकाराभावे नेतइदिति सूत्रमपि व्यर्थं सदत्रैव ज्ञापकमस्तु नन्वनोसदित्यादिनिर्देशैर्देवदत्तहन्तृहतन्यायोऽनित्य इति वाच्यम् ह नेदेवदत्तेन हतारि च हतेपि नोन्मज्जनं हतत्वारोपेणस्तत्राहतुमुयतस्य हननेन तु उज्जीवनमस्त्येवेति न्यायशरीरम् तावित्यादौ हद्वि हृतः पूर्वसवर्णदीर्घस्य हननेऽयमसजातीयप्रसङ्गमात्रम् ननु हननस्थानीयात्लक्ष्य प्रवृत्तिरिति नित्यत्रास्य न्यायस्य विषय इति नेनास्यानित्यत्व बोधनासंभवात् स्पष्टं चेदं स्वादिष्वसर्वनामस्थानेति सूत्रे कैयटे मतमेतत्तु निरधिष्ठानारोपासंभवेन हननसजातीयप्रयोगे कार्यप्रवर्तनेन मावश्यकमेवेत्यन्यत्र विस्तरः॥ ॥पुनः प्रवृत्तिरपि नमुदादेश इति वार्तिकैकवाक्यतापन्नेन सुनेइतिशास्त्रारम्भ सामर्थ्याद्भविष्यतीति तत्त्वम् नेन हि कार्या सिद्धत्ववादिनो महान् क्लेशः एवम् नमुनेइति सूत्रवत् अत्रैव शास्त्रासिद्धत्वएव ननु देवदत्तहन्तृहतन्यायस्यानित्यत्वमन्यत्र दृष्टम्तद्रीत्याऽत्रापि नित्वोर्दे ज्ञाप कानुसरणं व्यर्थमित्याशङ्क्य कान्निराचष्टे नन्वित्यादिना नोसदित्यादिनिर्देशस्य न्यायानित्यत्वज्ञापकत्वं शिथिलयति इतइत्यादिना पुनरामित्यस्य नोन्मज्जनं देव दत्तस्येति शेषः तेनतोसदिति निर्देशेन ननु तावितिवदत्रापि न्यायाविषयत्वमस्त्वित्यत आह प्रकृतइति ननु कार्यासिद्धत्वपक्षेपि तत्कार्यमसिद्धमनिष्पन्नमिति

प्रकृतसूत्रेण प्रतिपाद्यते जाते कार्ये तन्निष्पत्त्यभावस्य वक्तुमशक्यत्वात् किन्तु पूर्वत्र कर्तव्ये परस्परं शास्त्रबोध्यं कार्यमसिद्धं तात्कालिकाभावप्रतियोगिप्रवृत्तिकर्तृत्वव
दित्यर्थोऽस्तु एतेन कार्ये स्वकर्तृकप्रवृत्त्यभावकत्वबोधनेन त्रैपादिकशास्त्रस्य पूर्वमप्रवृत्तिरेव कल्प्यते तेन याचनामूढ्‌त्यादि सिद्धिरिति चेन्न राजभ्यामित्यत्र राजन् भ्यामिति स्थि
त्यवस्थायाद्‌ कस्यापि सपादसप्ताध्यायीस्थ कार्यस्य प्राप्त्यभावेन त्रैपादिक नलोपस्य प्रवृत्त्यभावबोधनासम्भवेन नलोपे जाते ततो भवदुक्तकार्ये पक्षे दीर्घस्य प्रवृत्त्यापत्तेः
सर्वत्र सदृशे त्यादो यलोपे जाते गुणापत्तेः न चात्र सूत्रे सिद्धमिति न कार्यमविद्यमानवदित्यनुवर्तनीयं तावतैवेष्टसिद्धिर्भविष्यति पूर्वत्र कर्तव्ये परस्परं शास्त्रबोध्यमवि
द्यमानवदित्यर्थोऽस्त्वित्यर्थादिति वाच्यम् अप्रवृत्तस्याविद्यमानवद्भावविधानासम्भवेन पूर्वं प्रवृत्तेरावश्यकतया मूलोक्तदूषणापत्तेः न च शास्त्रासिद्धत्वस्वीकारे पि राज
भ्याम् इत्यत्र सन्देहे तस्यासिद्धिरेव शास्त्रस्यासिद्धत्वेऽपि कार्यस्य सिद्धतया दीर्घादेः प्रवृत्त्यापत्तेर्दुर्वारत्वादिति वाच्यम् शास्त्रस्यासिद्धत्वप्रतिपादनद्वारा कार्यासिद्धत्वस्य प्रति
पादनात् सर्वत्र यत्र सपादसप्ताध्यायीस्थशास्त्रस्य त्रैपादिकस्य युगपत्प्राप्तिस्तत्र परं शास्त्रमसिद्धमप्रवृत्तमित्यनेन बोधने सति परशास्त्रेण लक्ष्ये कार्यसंस्कार

घस्तत्वं इति विहितं कार्यमित्यध्याहारे गौरवाच्च किं च त्रिपादी शास्त्रं तद्विधानेकरणं तच्चाधिकरणं त्रिपाद्यां विद्यमानेन शास्त्रेण विहितं कार्यमि
त्यव्याख्याने त्वयं तु क्लिष्टत्वेत्यपि बोध्यम् लोकप्रसिद्धेति त्रिभिश्च मध्यमैर्वर्गैरिति भाष्यपर्यालोचनया कखगघङेत्यादीनामपि अनादित्व
मिति भावः उच्चारणेइति पादमात्रिकाविमाविति भावः लेखनेनेति अर्द्धचन्द्रद्वयात्मकलिपित्वादिति भावः ॥ वृद्धिर्नभवति यत्र तु तद्वयोर्युगप
त्प्राप्तिस्तत्र त्रैपादिके जातेऽपि शास्त्रे आचारोपेण निष्पाद्यकार्ये प्रकृतत्वज्ञानेन प्रसक्तं सपादसप्ताध्यायीस्थं कार्यं भवत्येव अग्नीइत्यत्र प्लुतस्यानिकप्रगृह्यत्व
न यत्र तु शास्त्रासिद्धत्वज्ञानद्वारा कार्यानिष्पन्नत्वज्ञानेन सपादसप्ताध्यायीस्थशास्त्रोद्देश्यतावच्छेदकाज्ञानं तत्र तस्याप्रवृत्तिरेव राजभ्यामित्यादौ यथा तथा च मूले
क्तप्रयोजनस्य प्रथमरीत्या सिद्धिः द्वितीयार्थेन नाद्व अन्यत्र विस्तरइति मूले सत्वेनेति उक्तरीत्या कार्यासिद्धत्वस्य प्रतिपादनासम्भवेनेत्यर्थः न च पूर्वोक्तप्रकारद्वयेऽपि ऊर्णुनवि
षतीत्यादौ सिद्धिः षत्वविधायकशास्त्रस्यानिष्पन्नत्वज्ञानद्वारा नकारबुद्ध्या द्विर्वचनेऽपि वस्तुतो णकारघटितस्यैव द्विर्वचनज्ञानमिति परभागेऽपि णकारः श्रूयेतेति वा
च्यम् स्यादिष्वभ्यासेन चाभ्यासस्येति ज्ञापकेन सपादसप्ताध्यायीस्थकार्ययोग्ये विषये त्रैपादिकशास्त्रस्य पूर्वमप्रवृत्तिकल्पनेनादोषात् ननु लोकप्रसिद्धपाठस्या
धुनिकत्वेन तदपेक्षा नोचितेत्यत आह त्रिभिश्चेति पादमात्रिकाविति विसर्गस्य व्यञ्जनरूपतया द्विमात्रिकत्वेन तदर्द्धस्यास्य पादमात्रिकत्वमत एतस्य तत्त्वे।

वोच्चारणइकार्यमिति भावः ॥ॐ॥ यत्तुऋऌ आविति स्थिते ऋत्यक इति प्रकृतिभावप्रवृत्तिपर्यवसेन ऋ अल्ला विति स्यादिति कस्यचिद्व किस्तान्दूषयितुमुपक्रम
ति ऋऌ आवित्यादिना नचगुणोत्परमपि यणादेशोऽस्त्वः परस्मिन्निति स्थानिवद्भावेन ऋत्यक इति प्रकृतिभावप्रवृत्त्यानस्यादिति वाच्यम् प्रत्यासत्या ऋकारऌकारप्रत्तिमित्त।
कार्यस्यैव प्रकृतिभावेन प्रतिबन्धात् इतिपाठइति एतेनतस्यासाम्प्रदायिकत्वन्ध्वनितम् आगन्तूनामन्तेसन्निवेशइतिन्यायविरोधात् ननुऋऌवर्णयोरित्यनुपपन्नम् ष
ष्ठीसमासस्यसमानाधिकरणेनषष्ठीनसमस्यतइतिनिषेधात् कर्मधारयइत्यपिनसम्भवति तस्यापिप्रवृत्तेषष्ठ्यन्तपदसम्बन्धितयातेनैवनिषेधस्यप्राप्तेरित्याशङ्कांनिराचष्टे
पूरणेतिनतुकर्मधारयस्येति अनन्तरस्येतिन्यायादितिशेषः ननुतस्यनिषेधस्यविषयेकर्मधारयाभावोप्यन्यत्रदृष्टइत्यतआह बहुलग्रहणेनेति भाष्योक्तेति यज्जुषःपी
यमानस्येत्यादौ नचसमानाधिकरणमसमर्थवदित्यतिदेशात्कथङ्कर्मधारयइतिवाच्यम् समानाधिकरणाधिकारेपूर्वकालैकेत्यादिवचनपाठेनतस्याप्रवृत्तेर्ज्ञापनात्

रऌाविति ऋऌऔइतिस्थितेऋत्यकइतिप्रकृतिभावेन दीर्घाभावेगुणेयणिरऌाविति सिद्धिः उश्चउऌञ्चऋऌोरितिपाठः रऌोरितिपाठेतुआगं
तुनाकारेणनिर्देशइतिबोध्यम् तयोर्वर्णयोरिति पूरणगुणेतिनिषेधस्तुषष्ठीसमासस्यनतुकर्मधारयस्यबहुलग्रहणेनतदभावस्तुभाष्यादौ।
इतविषयएवनान्यत्रेतिभावः प्रथमान्तेनेति प्रथमोपस्थितत्वादितिभावः अयंपक्षोऽनेकमन्यपदार्थइतिसूत्रेभाष्ये परिनिष्ठितेति अत्रचैक
विभक्तिश्चापूर्वनिपातइतिज्ञापकम् अन्यथामालामतिक्रान्तइतिविग्रहेऽतिशब्दस्यापिनियतविभक्त्यंतत्वेनैकविभक्तीत्यस्यव्यावर्त्यालाभः एक
स्यानियतविभक्तित्वेहितद्वारणायैकविभक्तीतिसार्थकम् परिनिष्ठितविभक्त्यासमासेत्वतिक्रान्तमतिक्रान्तेनेत्यादिक्रमेणतस्यानियतविभक्तित्व

नचासामर्थ्यादेवसमासाप्राप्तौसमानाधिकरणेनषष्ठीनसमस्यतइतिनिषेधवैयर्थ्यमितिशङ्क्यम् सर्पिःकालकमित्यादावित्यसोरितिषत्वाभावार्थम्। ((स्पष्टमेव॥
वश्यकस्यतस्यवचनस्यसर्पिष्योयत्रइत्यत्रापिप्रवृत्तिः स्यादितितद्वारणायाथ्याभिहितंसमानाधिकरणमसमर्थवद्भवतीति कल्प्यते एवञ्चयज्जुषःपीयमानस्येत्यत्रष
ष्ठीसमासवारणायसमानाधिकरणेतिनिषेधस्यावश्यकत्वात् नचैवंपूर्वैःपचन्तित्यादौपूर्वापरेत्यस्यसूत्रस्यचारितार्थ्येनान्यस्मिन्कर्मधारयेसमानाधिकरणमसमर्थव
दित्यस्यप्रवृत्तौ —— प्रकृतेकर्मधारयेनस्यादितिवाच्यम् पूर्वैःपचन्तित्यादौवचनप्रामाण्यादितिसमर्थसूत्रस्थभाष्यप्रामाण्यादनभिधानेनसमासाभावस्यसत्वात् ए

ननु ग्राहकशास्त्रस्य चोर्येण प्रतिज्ञात्वादनिष्पन्ने रित्ययुक्तमतो भावार्थमाह वर्णानामित्यादिना तावत् आदौ नन्वेतादृशक्रमेण वाक्यार्थनिश्चये तावत्पर्यन्तत्वाविरोधादौ सवर्णग्रहण
वत्वाज्झलाविति त्रापि ग्राहकशास्त्रप्रवृत्तिः कुतो नेत्यत आह अयम्भावइति एतत् नाज्झलावित्येतत् परिहारेणेति अपवादविषयपरिहारेणोत्सर्गप्रवृत्तेरङ्गीकारात् अ
न्यथा नाज्झलावित्येतद्वाक्यार्थपर्यालोचने अनापत्तिरिति अप्रामाण्यज्ञानानास्कन्दितशक्तिग्रहस्यैव शाब्दबुद्धिहेतुत्वादिति भावः न चेति नहीत्यर्थः एतद्वाक्यार्थबोधा
त् नाज्झलाविति वाक्यार्थबोधात् तन्निश्चयः सवर्णपदार्थनिश्चयः तथा च तुल्यास्यसूत्रार्थबोधो यद्यपि प्राग्भवति तथापि निश्चितो न सम्भवतीति तस्याप्रवृत्तिः बाधकाभा
वादिति प्रतिबन्धकबाधबुद्ध्यभावादित्यर्थः विध्यपेक्षत्वेनेति प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्याभावबुद्धिकारणताया प्रसिद्धत्वादिति भावः षत्वमितीति अ

अनिष्पन्ने रिति वर्णानामुपदेशस्तावत्तदुत्तरकालमित्संज्ञा तदुत्तरमादिरन्त्येनेति प्रत्याहारस्तदुत्तरकालासवर्णसंज्ञा तदुत्तरकालमणुदिदिति एतेन तस
मुदितेनान्यत्र सवर्णानां ग्रहणमिति वाक्यापरिसमाप्तिन्यायादित्यर्थः अयं भावः आदिरन्त्येनेति प्रत्याहारसिद्धौ नाज्झलावित्येतद्वाक्यार्थबोधे स
ति निर्णीते तद्विषयपरिहारेण सवर्णपदबोध्यत्वनिश्चये अणुदिदित्यनेन तावतां ग्रहणं बोधनीयमन्यथा बाधकसंभावनया तुल्यास्यसूत्रजशक्ति
ग्रहे प्रामाण्यसंदेहेन तच्छास्त्रजबोधानापत्तिः न चैतद्वाक्यार्थबोधतः प्राक् तन्निश्चय इति भावः यत्तु निषेधवाक्यार्थबोधात्पूर्वं विधेर्वाक्यार्थ
बोधसत्त्वेनेति तन्न पदार्थोपस्थितौ वाक्यार्थबोधे बाधकाभावात् निषेधस्य प्रतियोगिज्ञानोपपादकतया विध्यपेक्षत्वेऽपि विधेस्तदपेक्षत्वे मानाभा
वाच्च एतास्विति त्वत्पक्षेत्त्वमिति सर्वस्याप्येकवाक्यतयावारणेनापाद्यमानेऽप्यर्थे न्यायानादरादेवमुक्तम् भाष्ये स्थितमिति अनेनाकारप्रश्लेषमा
नं दर्शितम् साहश्यं चेति बाधातीवा सादृश्यं च प्रयोगभेदेन बोध्यम् आतो धातोरितिस्यादिति ॥ अथ त्वस्यासिद्धत्वादादौ ढत्वं ततः षढोः कः सीति क
त्वं ततः षत्वस्य प्राप्तिरिति बोध्यम् ननु ढत्वादीनामसिद्धत्वात्संयोगान्तलोपः प्राप्नोतीत्येव कुतो नोक्तमत आह सर्वस्येति सकलप्रयुक्त्या आकारप्रश्लेषरूपयायु
क्त्या न्यायानादरादिति न्यायस्य पूर्वत्रासिद्धमितियुक्तेः प्रवृत्तिविषये ऽनादरादित्यर्थः ननु सादृश्यभेदनिबन्धनत्वाद्धातौ धातुसंज्ञा न प्राप्नोतीत्यत आह

॥ बाधानाविति अत एव यातिवातीति निर्देशसङ्गतिः ॥

स्यार्थनिमित्तकेति बह्वपेक्षस्य बहिरङ्गत्वात् नत्वत्र नाजानन्तर्येपरिभाषाप्रवृत्तिः यत्राचः पञ्चम्यन्तशब्दबोध्यसान्यनिरूपितानन्तर्याश्रयणं तत्रैवतत्परिभाषायाः प्रवृत्तेः सम्प्रदायसिद्धत्वात् यत्रान्तरङ्गे बहिरङ्गे वाजानन्तर्यमित्यर्थस्तु नयुक्तः पचावेदमित्यादावसिद्धत्वाभावप्रसङ्गादत आह ततोपीति टापोपीत्यर्थः यद्यप्यर्थापेक्षत्वमुभयत्र तथापि लोपस्याधिकापेक्षत्वम् प्रकृतिप्रत्ययसमुदायापेक्षत्वात् किन्त्वटापो लिङ्गापेक्षात्तस्य लिङ्गं प्रथमत उपस्थितम्भवति सङ्ख्यातु तदनन्तरमिति तावता टापएवान्तरङ्गत्वमिति भावः ननु भत्वावच्छिन्नम्प्रति विभक्तित्वेन कारणतेयेवङ्कार्यकारणभावो न सम्भवति वृषणवसुः वृषणेश्व इत्यत्र व्यभिचारात्॥ यदि भसंज्ञासामान्यम्प्रति विभक्तेर्निमित्तत्वाभावेपि लोपविधायकशास्त्रप्रवृत्तिहेतुभसंज्ञा विभक्तिनिमित्तिकेवेति विभाव्यते तदायाः पश्यसीत्यादौ भसंज्ञानिमित्तविभक्तिनिमित्तकापूपररूपनिमित्तकत्वेन टापो लोपाद्बहिरङ्गत्वमपि सम्भाव्यत इत्यत आह अर्थनिमित्तकेति अभावादिति अयम्भावः शब्दशास्त्रे शब्दस्य प्राधान्यादसिद्धत्व

नत्वस्यार्थनिमित्तकटापो बहिरङ्गासिद्धत्वम् नाजानन्तर्य इति निषेधात् ततोपि बहिर्भूतसंख्यानिमित्तकविभक्तिनिमित्तकभसंज्ञानिमित्तकत्वेन लोपस्य बहिरङ्गत्वाच्च अर्थनिमित्तकबहिरङ्गत्वस्याभावाच्च नाप्यय लाक्षणिकः नकारजावनुस्वारपञ्चमौ झलि धातुषु॥ ६ ॥

हिरङ्ग इति परिभाषाघटकनिमित्तबोधकाङ्गशब्देन शब्दरूपं तद्गृह्यत इति नियमः अतएव त्रयादेशस्तन्नस्य प्रतिषेध इति वार्त्तिकं सङ्गच्छते अन्यथा त्रीत्वापेक्षत्वादेशापेक्षयात दनपेक्षत्रयादेशस्य पूर्वं प्रवृत्तौ नतत्तस्य स्थानिवद्भावेन त्रिशब्दत्वात् तत्स्थाने निस्वादेशो लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेः पुनस्त्रयादेशप्रवृत्तौ वार्त्तिकासङ्गतिः स्पष्टैव अतएव गोधेरः पचेतन्यस्य सिद्धिः अन्यथा तोपि यद्रूपस्याङ्गसंज्ञासापेक्षत्वेन बहिरङ्गतया वलिलोपो न स्यात् अर्थापेक्षबहिरङ्गत्वाभावेन लोपः सुविति सूत्रस्य ङकारानुग्रहणं ज्ञापकमिति अन्यथा त्वद्भ्यामित्यादौ पदसंज्ञासापेक्षनलोपस्य बहिरङ्गत्वादेव नुगभावस्य सिद्धौ तद्धैयर्थ्यं स्पष्टमेव नच भ्याम् निमित्तकत्वमेव नलोपस्य न तु पदसंज्ञासापेक्षत्वमिति शब्दस्वरूपस्याङ्गशब्देन ग्रहणेपि दोष एवेति वाच्यम् भ्यामः पदसंज्ञाम्प्रति निमित्तत्वेपि नलोपम्प्रत्यनिमित्तत्वात् परम्परयानिमित्तत्वाश्रयणे तु मानाभाव इति लाक्षणिक इति लक्षणशब्दोत्र भीमइतिवदेकदेशशक्त्या लक्षणप्रतिपदोक्तपरिभाषापरस्तेनोर्द्धतीत्यर्थे ठञ् लक्षण प्रतिपदोक्तपरिभाषाया अविषय इत्यर्थः तदविषयत्वे हेतुमाह नकारजाविति तद्विषये धातुसंज्ञाविषये दर्शनेनेति सर्वेषां च येषां लक्षणप्रवृत्तिज्ञानोत्तरकालिकज्ञा

नविषयस्वरूपकत्वन्तेषामपि धातुपाठे पाठसामर्थ्येन धातुसंज्ञाविधौ तस्याः परिभाषाया अप्रवृत्तिरिति भावः नन्वभूवादय इति सूत्रदृष्ट्या तेषामसिद्धत्वान्न लाक्षणिका
नां दर्शनमिति परिभाषाप्रवृत्तिः स्यादेवेति वाच्यम् यादृशानुपूर्वीकस्य धातुसंज्ञाभिप्रेता तादृशानुपूर्व्यवच्छिन्नस्य ज्ञानं धातुसंज्ञाप्रवृत्तिप्राक्कालिकं लक्षणज्ञानपूर्वे।
कालिकं भवति ततः सिद्धत्वारोपाधिष्ठानङ्कारणमस्ति अधिष्ठानस्य परस्य ज्ञानसत्त्वेदि परत्वज्ञानसापेक्ष पूर्वत्वज्ञानं धातुसंज्ञाविधायकसूत्रविशेष्यकं भव
ति ततः सिद्धत्वारोप इति नस्थानिवदित्यादिसूत्रज्ञानसापेक्षत्वमस्त्येवेत्याशयात् यत्तु वर्णग्रहणे आदेच उपदेश इति सूत्रस्योपदेशग्रहणाल्लक्षणप्रतिपदो
क्तपरिभाषा न प्रवर्तत इति तन्न ओत्सूत्रस्य भाष्यविरोधात् तत्र हि हे चित्रगो अग्रमित्यत्र ओदिति सूत्रप्रवृत्तिः परिभाषया साधिता तस्मादादेच इति सूत्रस्थमुपदेशग्र
हणं परिभाषाया अनित्यत्वस्य ज्ञापकम् वर्णग्रहणेपि तस्याः क्वचित्प्रवृत्तिस्वीकारादेव पथुषइत्यस्य चिकीर्षति जिहीर्षतीत्यस्य च सिद्धिः आद्ये पशुं सनोतीति विग्रहे

सकारजः शकारश्चेषोडवर्गस्तवर्गोज इत्यभियुक्तोक्तेर्भ्वादिषु लाक्षणिकानामपि दर्शनेन तद्विषये तत्परिभाषाया अप्रवृत्तेः आतो धातोरित्यत्र प्रति
पदोक्त आकारो गृह्यत इति तु वक्तुमप्यशक्यम् पथुष इत्यसिद्ध्यापत्तेः पशुं सनोतीति विट् विड्वनोरित्यात्वम् आतो नाप इति वार्तिकमते तु वि
कल्पार्थकनिपातवाशब्दस्य धातुत्वे प्रातिपदिकत्वाभावात् सुबभावे पदत्वानापत्तिर्दोषः क्रियात्वं च साध्यत्वेन प्रतीयमानत्वम् साध्यत्वं।
चोत्पाद्यमानत्वमित्यन्यत्र विस्तरः हिस्त गित्यादि ॥ ९ जनसनेति विट्प्रत्यये विड्वनोरित्यात्वे आकारस्य लोपो लाक्षणिकस्यापि भवति अन्त्ययोरज्झ

नगमा सनोतीति दीर्घेपि वृत्तो वेतीड्विकल्पेन ऋकारस्य लाक्षणिकत्वात् अनित्यत्वस्य फलान्तरं तु वापयति क्षापयतीत्यादौ पुक्सिद्धिरिति स्मर्तव्यम् आत इति
ननूक्तः ऋद्ध्यादिसिध्यर्थमातो नाप इति वार्तिकं कृतं तन्न हि रोधात् कथं यः पश्यसीत्यत्राकारलोपस्य प्राप्तिरत आह आतो नाप इति पदत्वापत्तिरिति तत
श्च देवदत्तः पचति वा गच्छति वेत्यत्र निघातापत्तिः स्वरतिसूतिसूयतिधूञूदितो वा प्रेषयिष्यतीत्यत्र वा भाविति सूत्रस्य प्रवृत्त्यनापत्तिः ननु सेत्ता यथा निर्देशाद्धा
तुसंज्ञा न भविष्यतीति चेन्न तस्यापाणिनीयत्वात् तस्य वसेधातेर्गत्ताविति सङ्गच्छते ननु क्रियावाचित्व इत्युक्तौ वपि वातीत्यत्र विकल्पयतीत्यत्रैव च निपात
वाशब्दादपि विकल्परूपा क्रिया प्रतीयत एवेत्यत आह क्रियात्वं चेति उत्पाद्यमानत्वमिति सा तत्प्रतीतिस्तु नात्र शब्दशक्तिस्वभावादतस्तव विकल्पो विक

स्याविष्यत्रैवनलिङ्‌ग्रासस्यान्वयः ॥ ॐ ॥ ननुदिक्‌गाद्यर्थस्योमरीत्याक्रियात्वाभावादेव धातुसंज्ञानभविष्यतीत्यतआह रपामिति नन्वेषान्धातुत्वेप्रातिपदिकत्वाभावादेवसु वभावेसिद्धे व्ययेषुपाठ वैयर्थ्यापत्तिरतआह रपामव्ययइति अभिमानपदेनसूचितामरुचिम्प्रकटयति नन्वेषामिति ननुशिश्यइतिनिङन्ताकालस्यापिप्रतीतिसत्वात्तस्य पिशादशासमुदायवाच्यत्व वाच्यन्नत्याचनक्रियामात्रवाचकत्वमिति कथन्धातुसंज्ञाप्रसक्तिरतआह कालोपीतिअपिशब्दः फलसङ्ग्रहार्थः पञ्चकन्थात्वर्थः लिङ्‌नुद्यो तको ऽतस्वनिङ्‌द्योत्यकालप्रकारकस्यवबोधः फलस्यापिक्रियात्वव्यवहारविषयत्वमिष्टमेव अतएवकर्मणः फलान्वयित्वेपिकारकाणाङ्‌क्रियान्वयित्वमितिव्यव हारस्यनक्षतिः क्रियावाचकत्वस्य क्रियामात्रवाचकत्वस्य ननुसमुदायस्य धातुत्वेपिनक्षतिः नचतिङापत्तिः उक्तत्वात् श्वाप्यापत्तिरपिन उपदेशाभावादतआह अत्र

रपांक्रियासमानाधिकरणत्वाल्लिंगाद्यनन्वयित्वाच्च तदर्थस्यक्रियात्वमित्यभिमानः रपामव्ययेषुपाठस्त्वप्रातिपदिकत्वेप्यकजर्थः स्या न् स तेननतेषुपाठसामर्थ्याद्धातुत्वाभावइत्यपास्तम् नन्वेषांक्रियाकांक्षादर्शनेनक्रियावाचकत्वमतआह शिश्येइति कालोपिधात्वर्थरू त्वेतिनक्रियावाचकत्वहानिस्तस्यच धातुत्वे आदेचउपदेशइत्यात्वस्यात्तद्धा नैमित्तिकं धातुत्वनिमित्तं चेतिस्पष्टमेव अत्रचप्रत्ययस्यैव धातु त्वापत्तिर्वाध्यातिङन्तस्यतूपदेशाभावान्नात्वप्रसक्तिरित्याहुः ननुषष्ठेतत्रसूत्रे धातुग्रहणासंबंधउक्तोभाष्ये इतितन्नद्धातुत्व निमित्त कम् किंच श्रिशितीतिप्रसज्यप्रतिषेधेपिशित् परत्वयोग्यस्यैवात्वविधानान्नात्वप्रसक्तिः श्रपिच्चवासादृश्यमन्यानभिहितक्रियावा

चेतितत्रसूत्रे आदेचउपदेशेइतिसूत्रे उक्तइति अतएवगोभ्यामित्यादावुपदेशपदव्यावृत्तिप्रदर्शनसङ्गतिः प्र((वाचकत्वेनेतित – दोषोऽतआह चेति ॥ ८ सज्यप्रतिषेधइति पर्युदासेतुप्रत्ययेशिङ्गिन्नसवात्वंस्यात्तथा चाकारान्ताद्विधीयमानःप्रत्ययसजन्तान्नस्यादतआह प्रसज्यप्रतिषेधेपीति शित्परत्वयोग्यस्यात्वे मिति स्त्रीकारान्तात्वाप्रसक्तिरितियदि स्त्रीक्रियतेतदानिङन्तघटकनिङ्‌मात्रस्यापिनप्रसक्तिरित्याह किञ्चेति उक्तार्थेप्रमाणन्तुविप्रयोगस्यापिसंयोगवत्ताद्दृशा र्थापस्थितिजनकत्वमेव उक्तार्थानङ्गीकारेप्याह अपिचेति यद्वाप्रसज्यप्रतिषेधपक्षेयोग्यतायदिनिमित्तन्तदाऽवसानेजायमानविसर्गादेर्दिक्त्वन्नस्यादतस्तथा स्त्रीकारेनयुक्तइतियदिस्त्रीक्रियतेतदाप्याह अपिचेति वासादृश्यमिति भ्वादावितिशेषः वाचकत्वेनेति स्त्रीक्रियतइतिशेषः ॥ ९ ॥ ९ ॥ ॐ ॥

आणवयतीति आज्ञापयतीत्यर्थः वर्द्दयति वर्णयतीत्यर्थः आदिपदेन वर्द्दयतीत्यस्यार्थे प्रयुज्यमानस्य वर्द्धयतीत्यस्य समुच्चयः अपभ्रंशानामर्थबोधकतासु प्रसिद्धैव साधु
त्वापत्तिरिति तथा च यागादिष्वपि तादृशप्रयोगापत्तिरिति शेषः नच साधुत्वनिश्चयस्य तादृशकर्मणि तत्तच्छब्दप्रयोगे कारणता सि स च निश्चयस्तादृशशब्दविशेष्यकसा
धुत्वनिश्चयेन प्रतिवध्यत इति नायं दोष इति वाच्यम् साधुत्वस्य व्याकरणव्यङ्ग्यजातिविशेषरूपतया यद्येतेषु शास्त्रप्रवृत्तिः स्यात्तदा अप्रामाण्यज्ञानानास्कन्दित
साधुत्वज्ञानं न स्यात् तथा च प्रतिवन्धकाभावात्तेषु एतेषां प्रयोगः स्यादेवेत्याशयात् ननु स्तम्भ्वादीनामुदित्करणं धातुत्वानुमापकमित्यसङ्गतम् तेषां धातुत्वाभावे
प्रातिपदिकसंज्ञायां ततः सर्वनामस्थाने उगिदचामित्यनेन नुम् स्यात् तत्कल्पे नोदित्करणस्य चारितार्थ्यादत आह इदमिति तत्प्रकृतिकेति स्तम्भ्वादिप्रकृतिकेत्यर्थः न
नु श्न्वनुवादेनाङ्विधानात् स्तम्भे धातुत्वमस्तु स्तुन्भुप्रभृतिषु कथं तदनुमानमत आह सार्वधातुक इति स्तुन्भुस्कुन्भुप्रभृतिधातुभ्यः कर्त्रर्थकसार्वधातुके परे श्ना
सूत्रशेषभाष्योक्तेष्वाणवयतिवर्द्दयत्यादिषु धातुत्वे शास्त्रविषयतया धातुत्वापत्तिरिति तद्व्यावृत्तये तदिति भावः उदित्करणेनेति इद
मुपलक्षणम् तत्प्रकृतिकश्न्वनुवादेनाङ्विधानेन सार्वधातुके परे विकरणविधानेन च धातुत्वं ज्ञाप्यते एते अत्र पठितजोः जपजभेत्य
त्रपठितपसः वेतिप्रभृतीनां च केषांचिद्धातुत्वाधिकारविहितकार्योद्देश्यत्वाद्बोध्यम् एतेष्वस्थितस्यैतेषां पाठस्य भ्रंशोऽनुमीयत इति भा
वः मैत्रेयाद्यन्यसंमतसमाधिमाह बहुलमिति सम्यगर्थ इति नन्वनुबन्धमृषिं नयतीति पशुं मन्यमानादिति निरुक्तेः पशुमिति सानुस्वारपाठात्त
मत्यर्थस्य शु प्रत्ययस्य च विधानात्तादृशधातुत्वानुमापकमप्यस्तीत्यर्थः धातुत्वमितिबोध्यमित्यस्यापि ( त्रपश्चितिलुप्तविभक्तिकसत्त्ववाचीति वाच्यम् ॥
कर्षः ननु जुप्रभृतीनामुक्तरीत्या धातुसंज्ञानुमानं न सम्भवतीत्यत आह जुचङ्क्रम्यइत्यादिना जुतिप्रभृतिग्रहणं कास्यनेकाज्ग्रहणं सुलुप्याद्यर्थमिति वार्त्तिकपठि
तानाङ्कण्ड्वादिपठितानां च सङ्ग्रहाय स्तम्भुप्रभृतीनां मूलोक्तप्रकारेण धातुत्वानुमानकरणे गौरवमनेकानुमानकल्पनाप्रयुक्तं स्यादतो लाघवायाह एतेष्विति ।
ननु बहुलमेतन्निदर्शनमित्यप्रामाणिकमतः स्वपाठेन धातुसंज्ञा क्रियते सा न प्राप्नोतीति भाष्यकारोक्तिः सङ्गच्छते व्याख्या च तस्य भाष्यस्य पाठेनोपलक्षणार्थः
पिशुद्वयताप्रतिपादनार्थ इति कैयटेन कृतेत्याशयेनाह मैत्रेयाद्यन्ये इति एतेन तदुक्तेः स्वीयभाष्यासम्मतत्वं ध्वनितम् सानुस्वारपाठादिति केषुचित्पुस्तकेष्वि

॥धा॥

शब्दव्यापारपरतया व्याख्यानस्य फलं न्यो रित्यादावतिव्याप्तिवारणरूपं दर्शितं यथा तथा सइत्यत्र न सम्भवतीति तदुपादानं निष्फलमित्याशङ्क्य तन्निरासायाह अत्र नैवेति तथा चातिव्याप्तिवदव्याप्तिनिरासोऽप्येवं व्याख्यानस्य तस्य फलमिति ध्वनितम् नन्विममित्यत्र पुनरतिव्याप्तिप्रदर्शनं सन्दर्भविरुद्धम् द्यौरित्यस्याति व्याप्त्यधिकरणस्याग्रे सतदुपन्यासस्योचितत्वादतो भावमाह अत्रेकारेति तथा चान्यादेशस्य विषये दोषमुद्भाव्यानन्यादेशस्य तत्त्यातिव्याप्तिप्रदर्शनाय पुनरे वलेख अतस्य वलुकः मस्तोरेव दीर्घ इति अतस्तन्नस्येति सूत्रविदितइत्यादिः ननु तत्रोपयेनेन सम्पूर्णसूत्रपरामर्शे ऽर्थासङ्गतिरत आह इक इति पदं चेति अनेन पदपदोपादा नेन ननु विधेयसमर्पकगुणवृद्धिपदोपादानयत्र तत्रास्योपस्थानं स्वेदचो ञ्णिति इति सूत्रे ओगुण इत्यत्र च तथा सत्वादत्रापीक इत्यस्योपस्थानं स्यात् तथा च सूत्रोपात्तयो वैयर्थ्यमत आह अच इति न च निर्दिष्टस्थानिकत्वमिक इत्यस्यानुपस्थाने नियामकं भविष्यतीति वाच्यम् अच इत्यस्य स्थानिबोधकत्वनिर्णयस्य वाक्यार्थबोधोत्तरकालिक

त्वात् अत्रैवेत्यादिनि भावः इममिति अत्रेकारस्यैव स्थानित्वं त्यस्येति भावः सोऽलुगिति अतस्य च दीर्घेणेति भावः तच्चेति इक इति पदं चेत्यर्थः अनेनात्र सूत्रे पदोपस्थितिप्रसङ्ग इति सूचयति अचो ञ्णिति ओर्गुण इत्यादौ तु नास्याः प्रवृत्तिः लिंगस्य श्रुत्यपेक्षया दुर्बलत्वेन प्रथमतः श्रौता । च्यपदार्थादिघटितवाक्यार्थबोधे वृत्तिनिर्दिष्टस्थानिकत्वेनोपस्थितस्यापीकृपदस्य वाक्यार्थानन्वयात् ॥ ((त्वात् लिङ्ग स्वच्छ्यादिपदनिष्ठस्य लिङ्ग

स्य इकूपदोपस्थितिद्वारा तदर्थप्रकाशनसामर्थ्यरूपस्य श्रुत्यपेक्षया अच इत्यादिश्रुत्यपेक्षया निरपेक्षो रवः श्रुतिः दुर्बलत्वेनेति श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्या नां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति सूत्रे मीमांसायां हि तथोक्तम् दुर्बलत्वमुपपादयति प्रथमत इति श्रौत इति श्रुतेरयं श्रौतः श्रुतिश्चाच्पदादिरूपा अत एवाह अ च्पदार्थादीति आदिना इच्छादिपदार्थपरिग्रहः वृत्तेनिष्पन्ने वाक्यार्थबोधस्य यायपदार्थोपस्थित्यादिसामग्रीतस्यात्तत्वादिति शेषः एतेन पदोपस्थितिप्रतिबन्धकसद्भावो ध्वनितः उपस्थितस्यापीत्यपिनाऽनुपस्थितौ सम्यक्त्वं सूचितम् लिङ्गस्य तु पदोपस्थापकत्वं तत्तस्य पदस्य शक्तिस्मरणं तत्तत्सदृशोपस्थितिस्तत्तस्यार्थस्य वाक्या र्थघटकत्वसम्भावनेति विलम्बः स्पष्ट इति भावः यथा इमामगृभ्णन् रशनामृतस्येति मन्त्रे रशनामात्रप्रकाशनसामर्थ्यरूपलिङ्गसत्त्वेन गर्दभरशनाग्रहणेऽपि प्रसक्तस्य तस्य मन्त्रस्याश्वाभिधानीमादत्त इति विधिबोधकलिङन्तश्रुत्योच्चारणे नाश्वरशनाग्रहणे श्रुत्या तस्य मन्त्रस्य विनियोगो बोध्यत इति निर्दिष्टस्थानिकत्वा

ग्रा. र.
टी. भे.
५५

नस्यैवकीप्रवृत्तिर्भविष्यतीतिभूषेणहोस्त्वादौलुक् तथापिप्रत्ययलक्षणेनलुगुत्तरमपिसाभविष्यतीत्यतआह लुकालुप्तइति अयम्भावः नलुमताङ्गस्येतिसूत्रेणलुमता
तस्मिन्निति न्यासोवार्तिककृतालुमतिप्रतिषेधेतन्निमित्तग्रहणमित्यनेनबोधितः लुमतालुप्तोयः प्रत्ययस्तस्मिन्परेयत्पूर्वंतदङ्गस्यकार्यनेत्यत्र तन्निमित्तप्रत्ययलक्षण
मितिगतदर्थः सचव्यत्वनद्यांतिकेकवाक्यतयासूत्रकारमतेपिफलभेदाभावायलुमतालुप्तेप्रत्ययेपरेयदङ्गंयत्पूर्वंतस्ययत्कार्यमाङ्गंमनाङ्गंवातस्मिन्कर्तव्येनिषेधइत्ये
वार्थोनतुलब्धाङ्गसंज्ञकत्वस्यापिनिवेशादितिनिषेधस्याङ्गसंज्ञायामपिप्रवृत्तिर्भविष्यतीति नचपञ्चभिः क्रोष्टीभिः क्रीतइकुलस्यच क्रोष्टुइत्यस्यसिद्धयेलब्धाङ्ग
संज्ञकत्वनिवेशआवश्यकोऽङ्गस्यक्रोष्टुस्तृज्वत्वमितिसूत्रार्थात् तत्रद्वितद्धितार्थेतिसमासेठकोलुकिलुक्तद्धितेति स्त्रीप्रत्ययस्यङीपोलुकिसोलुकितन्नेपितृज्वद्भाव
स्यासिद्धिः स्पष्टश्चेदमुभयोरनाकाविषयत्रभाष्यकैयटयोरितिवाच्यम् तस्यग्रन्थस्यनलुमतेत्यस्यानित्यत्वाभिप्रायकत्वात् अतएवप्रियतिसृकुलमितिप्रयोगोपपत्तिः

नलन्नत्वातः परस्यनिघातार्थमावश्यकम् प्रत्ययलक्षणेनसर्वत्वाच्चत्वमितिभावः सिद्धत्वाच्चेति अतएवात्रनुक्तं नचसर्वेसर्वपदादेशादित्याये
नप्रसुत्वाद्त्यस्यस्थानेप्रसुत्यइत्यादेशेतस्याव्ययत्वसिद्धिरितिवृत्त्याशयइतिवाच्यम् अर्थवत्येवस्थानिवत्त्वनात्पर्येणत्वोप्यर्थवत्त्वेनतादृशस्था
न्यादेशभावकल्पनेमानाभावादितिदिक् ४ अनन्त्विधाविति किमिति विधिग्रहणविशिष्टंकिमर्थमिति प्रश्नः॥ ९९ ततमात्याअङ्गसंज्ञायाअप्राप्त्या

तेनअङ्गशब्देन ननुसुपोलुकिपदसंज्ञायिकथमतआह तलश्चेति पदत्वश्चेत्यर्थः निघातार्थमिति प्रातर्भवतिप्रस्तुत्यभरतीत्यादौतिङ्ङतिङइतिनिघातार्थमित्यर्थः
एतेनफलसत्त्वमुक्तम् सुबन्तत्वाच्चेति एतेननलुमतेतिनिषेधाप्रवृत्तिंसूचयति पदसंज्ञायांलुप्तप्रत्ययेयः पूर्वस्तन्मात्रोद्देश्यकत्वाभावात् चरत्वर्थेनत्वम्पदत्वम्
कात्वस्यावश्यकतांध्वनयति अतएवेति कात्वस्यावश्यकत्वादेवेत्यर्थः अत्रप्रकृत्येत्यत्र ननुकात्वमात्रस्यानव्ययत्वेपितदन्तस्याव्ययत्वेनतदादेशस्यसमुदायस्या
व्ययत्वेनाव्ययोदाहरणम्मूलोक्तंसम्यगेवेत्यर्थंसोपपत्तिकमनूद्यदूषयति नचेति अर्थवत्त्वेन भावार्थाभिधायकत्वेनास्यतत्व[illegible]सर्वपदादेशादित्यत्रपदशब्दोह्यर्थव
त्परइत्याशयः त्वादीनाङ्क्वचिदनर्थकत्वेनव्यवहारसुप्रकृत्यर्थातिरिक्तार्थाभावेनबोध्यः तादृशेति समुदायेत्यर्थः मानाभावादिति अतस्यस्थान्यादेशभावस्ययत्रस्थानित्वआ
नर्थक्यन्तत्रसमुदायस्यस्थानित्वमितिअनर्थकमेवतादृक्कल्पनायामानन्तयात्रनास्तीतिभावः ननुजहत्स्वार्थावृत्तिमितिपक्षेसमुदायादेशत्वकल्पनमेवयुक्तमतआह इतिनिर

धुकामइत्यादिप्रयोगसिद्ध्यर्थमावश्यकमेवेति प्रश्नानुपपत्तिरत आह विधिग्रह[illegible]विशिष्टमिति धुकामइत्यादिसिध्यर्थमनलीत्येववाच्यमित्याशयः उत्तराशयस्तु षष्ठीसमासेना
लाश्रयेविधौनेत्यर्थेन सकलसूत्रोक्तप्रयोजनसिध्यर्थं तस्यावश्यकत्वमिति ननु तृतीयान्तार्थाभावेपि व्यूढोरस्केनेत्यस्य नासिद्धिः रषाभ्यामिति पञ्चमीनिर्देशेन तस्मादितिपरि
भाषायाः प्रवृत्तिसम्भवात् अतएवादर्शेनेत्यत्र नणत्वम् नचसोऽत्र व्यवायपदविरोध इतिवाच्यम् अड्डादिभिन्नव्यवधानेनेत्यर्थात् अ[illegible]आदिसूत्रस्थशब्दपाठस्य चारिता
र्थ्यम् भाष्यकारमतेपि योगविभागेनोक्तार्थलाभाच्च ॥ ॥ नन्वाड् भिन्नत्वे स्वतोऽस्त्येवेत्याशयिकामाशङ्कान्निराकरोति [illegible]नेति निषेधादिति नियमशास्त्राणां निषेधमुखे
नप्रवृत्तिरितिपक्षे निषेधः स्पष्ट एव विधिरूपेण प्रवृत्तिः सामान्यशास्त्रतात्पर्यसङ्कोच इति पक्षेपि फलितनिषेधमादायेत्यमभिधानम् अतिदिश्यमानेति अतिदिश्यमानोयो
सत्त्वविरुद्धोयः स्वाश्रयधर्मस्तत्प्रयुक्तकार्याभाव इत्यर्थः स्वाश्रयः आदेशनिष्ठः कार्येति कार्यातिदेशस्य प्राधान्याभिप्रायेण शास्त्रातिदेशेपि कार्यातिदेशाद्भिन्नस्यैवफलत्वादू

णत्वप्राप्तिमिति नचसकारे स्वतोऽड्भिन्नत्वसत्त्वात् अड्भिन्नव्यवायेनेति निषेधात्कथं णत्वप्राप्तिरितिवाच्यम् अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयु
क्तकार्याभावस्यातिदेशस्वभावसिद्धत्वात् इदं चासिद्धवत्सूत्रे कैयटे स्पष्टम् धुकामइति यद्यपि वत्वं हल्त्वाद्यपेक्षया विशेषधर्मस्तथाप्येतद्वाक्योपप्लुतेव
कारवदुकार इति वाक्ये उपात्तधर्मापेक्षया न तत्त्वम्। "त्वभिप्रायेणस्वभावेति यथासिद्धत्वासिद्धत्वयोर्विरोधेन जहीत्यत्रासिद्धवदत्रेत्यनेनासिद्धत्वातिदेशेपि स्वाश्रयो

हेर्लुङ् भवति असिद्धवत्सूत्रेऽनुशाधीत्यत्र स्थानिप्रयुक्तस्य धिभावस्य असत्त्वात्स्वबुध्या प्रवृत्तिसम्पादनेन चरितार्थम् इदम् स्वभावसिद्धं पूर्वोक्तम् नचब्राह्मणवदस्मिन्क्षत्रिये
वर्तितव्यमित्यत्रातिदिश्यमानो धर्मो ब्राह्मण्यतत्प्रयुक्तकार्यविरुद्धस्याध्यापनप्रतिग्रहनिवृत्तिरूपस्य क्षत्रियेदर्शनेन भवदुक्तः स्वभावो व्यभिचरित इतिवाच्यम् तत्रापि न ब्राह्म
ण्यस्यातिदेशः किन्तु अभ्युत्थानसत्कारादिरूपस्य गृहिरुद्धन्यूनत्वबुद्धिप्रयोज्याभ्युत्थानाभावाप्रवृत्तिसम्पादनेनातिदेशस्य चारितार्थ्यात् सामान्यातिदेशे विशेषानतिदेश इति
हि परिभाषा लोकप्रसिद्धा यथा ब्राह्मणवदस्मिन्क्षत्रिये वर्तितव्यमित्यनेन नाग्रासनाद्यतिदेशो दृश्यते ननु माठरकौण्डिन्यसम्बन्धिपरिवेषणादिधर्मस्य सर्वब्राह्मणवृत्तित्वस्य वलत्वस्य
वा हल्त्वापेक्षया विशेषधर्मत्वेन तदतिदेशो न भविष्यति किन्तु हल्त्वस्यैव तथा च कथमतिदेशेन धुकामइत्यत्र वलिककारे लोपस्य प्राप्तिरित्याशयेन शङ्कते यद्यपीति हल्त्व
स्यादिना वत्वपरिग्रहः न च वत्वस्य विशेषधर्मत्वेपि न तद्रूपेण निमित्तत्वं किन्तु वलत्वेनैवेति वत्वातिदेशापेक्षायास्वाभाव इति तस्याविशेषधर्मस्योपपादनपूर्विका कथमियमा
शङ्केतिवाच्यं दिवउदित्यत्र दिवइति षष्ठीनिर्देशादलोऽन्त्यपरिभाषाया उपस्थित्या दिवोऽन्त्यस्य वस्येत्यर्थस्य प्राप्तौ वत्वस्य स्थानितावच्छेदकत्वेन तस्योपस्थितौ तद्व्यापकवलत्वम्

उपस्थितं न भविष्यतीत्याशयात् परिभाषाघटकसामान्यविशेषशब्देन यत्कस्यचिद्ग्रहणे प्रमेयत्वादिकेवलान्वयिधर्मापेक्षया विशेषधर्मत्वं सर्वस्यापि धर्मस्यास्तीति कस्याप्यतिदेशो प्र
न स्यादतः सङ्ग्राहकवाक्यादुपस्थितलत्वस्य संस्कारकवाक्यघटकशब्दोपात्तधर्मापेक्षया विशेषधर्म एव विशेषशब्देन ग्राह्यः आशंसायां भूतवच्चेत्यत्र भूतत्वापेक्षयाऽनद्यतनत्व
विशिष्टभूतत्वं यथा स्वञ्च प्रकृते स्थानिवदादेश इति यदतिदेशसूचकं वाक्यं तत्र यत्स्थानिपदं तदुपात्तधर्मस्यैवातिदेशो न तु तद्व्यापकस्येत्यर्थो वाच्यस्तत्वनुपयुक्तः स्थानित्वा
देशस्य निष्फलत्वात्किन्तु तस्मादुपस्थितं यद्धकारवदकार इत्याकारकं वाक्यं तद्घटकशब्दोपात्तत्वापेक्षया विशेषधर्मत्वमेव वक्तव्यं तच्च वलत्वे नास्तीत्याशयेन समाधत्ते
तथापीति ॥ ॐ ॥ सत्तादृशवाक्योपप्लवे मानमाह इति अलोन्त्यपरिभाषैकवाक्यतया सूत्रकृतोऽयमर्थः स्थानिवद्भावाङ्गीकारेऽपि लत्वस्य सिद्धिरित्याशयेन शङ्कते अन्यथेति
ति पक्षे लोपाभावपक्षे यत्तु हलि सर्वेषामिति नित्यलोपस्य वैकल्पिकलोपापवादत्वात्क इत्येव स्यादिति तन्न हलीति सूत्रे वकारस्याप्यनुवृत्तिरिति स्वीकारेऽपि दृष्टवत् करोतीत्यत्र नि
त्यलोपस्य चरितार्थत्वेनयाऽपवादत्वासम्भवात् नित्यलोपविधायकेऽश्ग्रहणानुवृत्त्याऽश्रूप इत्येव प्रवृत्तिरिति स्वीकारेऽपि दृष्टवित्यत्र विज्ञिमि तत्र वलोपस्य प्राप्त्या दृष्टवादेरा

सूत्रकृतस्थान्यादेशभावमादायैवैतत्कृतवाक्योपप्लवादिति भावः कृदृष्ट इति यद्यपीदं रूपमुक्ते गुणेऽन्त्यादेशेपाक्षिकलोपेन सिध्यति तथापि पक्षे कविष्ट
इति स्यात् कथमिष्ट इति चेष्यत इति भावः स्थान्यवयवसवेति उपलक्षणमेतत्स्था निरूपोऽपीति बोध्यम् अत एवादेशिन्यल्याश्रीयमाणे प्रतिषेध इ

त्यभिधानाच्च नच लोपो व्योरिति वलोपेऽचः परस्मिन्निति दिलोपस्य स्थानिवद्भाव इति वाच्यम् न पदान्ताऽचेरेऽणः सन्निनत्वाय मस्तिकर्तुं हर्तिरिति भाष्याद्(( तिभाष्य उक्तम्॥
स्वादेरनभिधानेन नित्यलोपविधायके वग्रहणानुवृत्तेर्निष्फलत्वात् अत एव भोभगो इति सूत्रस्य मशग्रहणमनर्थकं मन्यत्राभावादिति भाष्यं सङ्गच्छते मूले स्थान्य
वयवसवेति अत्र सवकारो भिन्नक्रमः स्थानिपदोत्तरं द्रष्टव्यः अत एवादेशावयवाश्रयणेऽपि न निषेध इत्येतद्दर्शयति न तु स्थान्यवयवालोग्रहणे स्थान्यवयवात्त्वनिषेधाव
च्छिन्नस्याश्रयणे निषेध इत्यर्थलाभेन प्रपञ्चेन स्यावर्त्यस्य सिद्धावपि विधिग्रहणविशिष्टस्यानल्विधावित्यस्य यद्व्यावर्त्यं मूले दर्शितं तदनुपपत्तिः प्रकृतसूत्रे भोभगो इति
सूत्रस्य भाष्यविरोधापत्तिश्चेत्यत आह उपलक्षणमिति अत एव स्थानिरूपस्याप्याश्रयणादेव आदेशिन्यल्यि स्थानिन्यल्यि आदेशिन्यल्यीत्युभयसमानाधिकरणे सप्तम्यौ आदे
शिनीत्यत्र सम्बन्धिनस्त्वाधारत्वविवक्षया सप्तमी सम्बन्धश्चेतरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावोऽवयवावयविभावश्च तेनोभयोर्लाभः अत्र प्रपञ्चोऽन्यादुदाहरणप्रद
र्शनपराकरणमानम् अतः स्थानिस्थाल्वयवान्यतरालोग्रहणात् प्रत्ययत्वमिति प्रत्ययत्वस्य गुरुत्वव्यापकतया व्यापकसत्तायां व्याप्यसत्त्वमध्यवश्यं स्यादिति भावः सूचना

यत्वमभिहितम् तेनरामायेत्यस्यसिद्धिरन्यथाः प्रत्ययान्ततयासमुदायस्यप्रातिपदिकत्वापत्तौसुप्तामिदेशात्लोपापत्तिरपिवारिता ॥ ※ ॥ भाष्येऽप्याश्रीयमाणपदोपादानेनस्था
निबोधकशब्दजन्यप्राथमिकोपस्थितिविषयतापर्याप्त्यवच्छिन्नातत्रनिषेधइति ध्वनिततमित्याशयेनाह अग्रहीदित्यादावितिनन्वेवं सतिकइष्टइत्यत्रवचिस्वपीतिसम्प्रसारण
न्तत्रवाक्यार्थः संज्ञीतिपक्षे वच्यादीनांयणइक्सम्प्रसारणमित्तद्रूत्यर्थोभविष्यति स्वञ्चस्थानिबोधकःशब्दोयणइतितज्जन्योपस्थितिविषयतायणत्वावच्छिन्नानतुअल्त्वा
वच्छिन्नेतिकथमत्रविधावित्यस्यतदुदाहरणमितिवाच्यम् अल्त्वावच्छिन्नस्यालपर्याप्तधर्मावच्छिन्नत्वयर्थात् तथाचयण्शब्दजन्योपस्थितिविषयतायद्रूपावच्छि
न्नस्ययण्संज्ञातद्रूपावच्छिन्नेतियत्वरूपस्तादृशोधर्मः सचालपर्याप्तएवेतितदुदाहरणयुक्तमेव एवमेवप्रत्याहारनिर्देशेसर्वत्रबोध्यम् दिवऔदित्यादौचालोऽन्त्या
परिभाषैकवाक्यतयाऽल्पर्याप्तालत्वावच्छिन्नैवसेति तत्रापिनिषेधस्यप्रवृत्तिः यत्तुयन्निमित्तंवैकल्पप्रयुक्तोपदेशाप्रवृत्तावतिदेशोमयपतेतत्स्थानिभिन्नस्यस्थान्यलसाधा
रणधर्मत्वेनिषेधइत्यर्थआश्रयणीयस्तथाचसुत्वस्याभावात् समुदायेपिसत्त्वान्नाल्साधारण्यमितिनतत्रनिषेधइति तन्न तन्वन्तीत्यत्रोकारस्यापिधातुकत्वस्यतत्त्वा

ननुस्थान्यवयवइति अतः प्रत्ययत्वं स्थानिवत्वेनभवत्येवेतिभावः अग्रहीदित्यादौग्रहोलिटीत्यनेनेटएवदीर्घविधानान्नाल्त्वेनतस्यस्थानितेति।
तद्वृत्तीटस्ताश्रयस्यसिचोलोपस्यसिद्धिरितिबोध्यम् ॥ (( समुदायेपिसत्त्वेननाल्साधारण्यमितितत्स्थानिदेशेनेटस्यात् नचापरविधावितिकरणेनाचः परस्मिन्निति

सूत्रेणस्थानिवद्भावेनेट् तत्रभाष्यकृतैववारितइतिवाच्यम् तस्यभाष्यस्यैकदेशयुक्तित्वात् तस्यैकदेशयुक्तित्वसाधकत्वाभावान्नास्तित्वमिति तदुदाहरणप्रदर्शनमेव तस्योदाहर
णस्यासिद्धवत्सूत्रेणसिद्धेः नचकृन्मेजन्तसूत्रभाष्येआर्थयेचिकीर्षवइत्यत्रैकारौकारइतित्वस्यालपर्याप्ततयानिषेधयोग्यतायाःसत्वेनकथमव्ययसंज्ञाप्राप्तिरुक्तेतिवा
च्यम् तत्रस्थानिबोधकस्यधिशब्दस्यप्रथमतःसमुदायोपस्थापकतयास्थानिबोधकशब्दजन्यप्राथमिकोपस्थितिविषयतानालपर्याप्तधर्मावच्छिन्नेत्यदोषात् नचतथापि
कुम्भकारेभ्यइत्यत्रबहुवचनेझल्येदित्येत्वेकृतेस्थानिवद्भावेनकृतमाश्रित्याव्ययत्वप्राप्तिशङ्काकृतासाकथंसंगच्छताम् स्थानिबोधकादन्तइतिशब्दादलसएवप्रथममुप
स्थितिसत्वादितिवाच्यम् तत्रापिप्रथमतोऽल्त्वेनोपस्थितिनैतत्वेन अतस्तुसमुदायपर्याप्तमितिननिषेधविषयतेत्यदोषादित्थमेवान्यत्रापिबोध्यम् अस्याङ्कल्पनायांविशि
ष्टस्यैषाऽनलमाश्रयतेइत्यनामेति भाष्यमेवकृन्मेजन्तसूत्रस्थभाष्यञ्चसाधकमितिदिक् अत्रानल्विधावित्यत्रप्रसज्यप्रतिषेधएव नचासमर्थसमासापत्तिः बहुषुस्थले

पुनस्तदर्शनात् पर्युदासेहि स्थान्यल्भिन्नाश्रयकोविधौ सदृत्यर्थे व्यूढोरस्केनेत्यत्र णत्वापत्तेर्दुर्वारत्वात् स्थानिपदस्य स्थानिस्थान्य वयवान्यतरपरतया स्थानिस्थान्यवयवा
लाश्रितविधिभिन्नविधाविति व्याख्यानेन व्यूढोरस्केनेत्यस्य निर्वाहेपि वभूविवेत्यस्यानिर्वाह इत्यसमर्थसमासाश्रयणेन प्रसज्यप्रतिषेधस्य चाश्रितः नचान्यतरालवृत्ति धर्मस्य
वलन्तस्याश्रयणादेवमपि वभूविवेत्यस्यासिद्धिरिति वाच्यम् यद्धर्मवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तस्य धर्मस्यान्यतरालनिष्ठस्यातिदेशो कर्त्तव्ये निषेधस्य प्रवृत्त्यङ्गीकारात् यदि तु
इ॰ये इत्यादौ ङकारोच्चारणनङकारोपलक्षितस्थानित्वस्य बोधनेनाग्रह्णीदित्यत्रेट् इवसर्वत्र सूत्रोपात्तसमुदायस्थानित्वमिति ङि॰ शब्दनिष्ठस्थलेप्रत्ययत्वत्वाल् धर्मइति
यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशो मृग्यते सोत्र स्थान्यल्निष्ठधर्मावच्छिन्ननिमित्तकविधिभिन्नविधौ स्थानिवदित्यर्थ आश्रीयते तदाऽल्पर्युदासः सर्वसा
ति लाघवमपि भवति पर्युदासेप्यार्थिकनिषेधमादाय निषेधपरत्वेन व्याख्यानात् ग्रन्थानेयाः पर्युदासपरतया व्याख्यानञ्च विशिष्टस्यैवोऽनलमाश्रयते इटन्नामेति वदता भा
ष्यकृता ध्वनितमसङ्ग्राहकवाक्याल्लक्ष्यसाधकवाक्यभिन्नेर्दीर्घ इति ङि॰ वचइतिरीत्या कल्पनीयम् स्थानितावच्छेदकशास्त्रोपात्तमेव रूपम् ॥ः॥ व्याख्यानादिति

यथाकथंचिदिति व्याख्यानादितिभावः दूषयित्वेति अंगस्येति सूत्रे भाष्य इति शेषः स तद सिद्धैव दूषयित्वेत्यर्थः ॥ ७ ॥ ७ ॥

अनल्विति शब्दसंस्कारार्थं प्रथमोपादेयात्तत्तल्लक्ष्यापपत्त्यर्थं अविधिशब्दाध्याहारेण समासचतुष्टयफलानामुपपत्तिश्च कर्तव्येतिरीत्येष्टसिद्धौ विधिशब्दोपादानरूप
दधिकायत्नादित्यर्थः परममूले निषेधो न शङ्क्यो ऽनल्विधाविति तन्निषेधादिति ग्रन्थस्य नञ्छेदेन निषेधपरामर्शो ऽसङ्गतिरतस्त्वाह मूले स्थानिवद्भावे नेति तेन अनल्वि
ध्यर्थमस्य सूत्रस्यारम्भेण उरदिति सूत्रे उरित्यनेनालत्वस्य स्थानित्वबोधनादिति तात्पर्यम् अचः परस्मिन्निति सूत्राप्रवृत्तिशङ्कां वारयति नचोरदत्त्वमिति दूषयित्वेति
सामान्यत उपादानेन प्रकृतसूत्र इतिशेषोपि स्यादिति तन्निवारणायाह अङ्गस्येतीति अत्र दूषणे हेतोरनुक्तेः प्रसिद्धस्य हेतोरनुपलम्भाच्चाह सन्निदिति वव्रश्चेत्याद्यसिध्ये
त्यर्थः यदा नसंप्रसारणइति निषेधारम्भादन्यस्य यणः प्रथमतः सम्प्रसारणम्पूर्वस्य तु तन्निमित्तः प्रतिषेध इति स्वीक्रियते तदा वव्रश्चेत्याद्यसिद्धिरूपो दोषः प्रागभ्यासवि
कारेभ्यो ऽङ्गाधिकार इति पक्षे यदा तु न सम्प्रसारण इति सूत्रस्थसम्प्रसारणशब्दस्य सम्प्रसारणभाविनि लक्षणा आपत्ते सम्प्रसारणे प्रवृत्तिप्राक्काले सर्वप्रतिषेधः निषेध
सामर्थ्याच्च कृते परस्य सम्प्रसारणे पूर्वस्य सम्प्रसारणाप्रवृत्तिरित्याश्रीयते तदा नेदं प्रयोजनम् अचः परस्मिन्निति सूत्रारम्भस्येत्याशयेनाह मूले किन्त्विति नकेवलमल्वि

ष्यर्थमिदं सूत्रमित्येव किन्तु परोऽपि विशेष इति भावः अतएवाह विना परत्वमिति कैयटादिग्रन्थे इत्यर्थः ननु मूले ऽनेन नवार्यते इत्येवोक्तं हेतुस्तु नोक्त इति न्यूनतेति तल्लाभा याह स्थानिनीत्यादि उक्तार्थस्य वक्ष्यमाण ज्ञापकेन लाभे सति यथालक्ष्य सिद्धिः सम्पादकवचन निष्पत्तिस्तथाह अजादेशइति प्रयोगीयाचस्यादेश इत्यर्थः नन्वत्रापि सूत्रे पूर्वसू नवसौत्रस्थान्यादेशभावस्य ग्रहणे तेन णिलोपस्याजेन स्थानिवद्भावसिद्धिः अवधारणफलन्तु भक्तमाचष्ट मारयतीत्यादिसिद्धिः ननु सर्वत्र शब्दस्यैवाधिकारो दृष्ट इति शब्दाधिकार इत्यनर्थकम् अन्नार्थस्य त्यागेन शब्दमात्रस्यात्र सूत्रे सम्बन्धे च किस्मान मतन्त्राह पूर्वसूत्रेति इत्येतन्मात्रेति तेन नायकादिसिद्धिः उभयार्थकत्वेति भावाभाव भयार्थकत्वेऽर्थः अन्नार्थ परित्यागेन शब्दमात्रस्य सम्बन्धो यत्र तत्र शब्दाधिकार इति व्यवहारः यत्र तु अर्थसम्बद्धशब्दस्यान्यत्र सम्बन्धस्तत्रार्थाधिकार इति यद्यपि दी र्घशब्दस्याल्पाच्त्वं तथापि सूत्रे प्रागुपादानादिह यलोपदीर्घादीत्युक्तम् द्वन्द्वान्ते श्रूयमाणमिति न्यादेनाह यलोपादयइति वैचित्र्यायेति अल्पशब्दोपादानेन लभ्यो

विस्तरस्त्वन्यत्र द्रष्टव्यः अनेन तु वार्यते इति स्थानिनि सति यद्भवति तदादेशेऽपि भवति तत्र सति यन्न भवति तदादेशेऽपि न भवतीत्यर्थात् अजादेशोऽज्व त्कार्यं लभते न लभते चेति वाच्योऽर्थः तत्रोपपत्तिमाह शब्देति पूर्वसूत्रे स्थानिवत्पदस्य तद्धत्कार्यं लभते इत्येतन्मात्रार्थकस्येहोभयार्थकत्वात्तदाश्रयण मिति भावः यलोपदीर्घादीति यलोपदीर्घादीयेषामित्यर्थः यलोपादयो दीर्घादयश्च येषामिति यावत् तेन स्वरादीनामपि संग्रहः यलोपादीत्येव सि द्धे एवमुक्तिर्वैचित्र्याय नहि यलोपादिविषये भावातिदेशप्रशक्तिरिति भावः नवृद्धिरिति अतउपधाया इति वृद्धिर्नेत्यर्थः ॥ ९ ॥ ९ ॥

ष्यर्थः क्वचित्स्पष्टप्रतिपत्तये ऽधिकशब्दोपादानेन बोध्यते तथापि नाधिकोपादानप्रयुक्तदुष्टत्वमित्येतद्वैचित्र्यध्वननायेत्यर्थः लिङ्गत्वमुपपादयति नहीत्यादिना ननु यलोपादीत्युक्तौ न्यूनता यथा यलोपादिग्रहणस्य ज्ञापकता तथा द्विर्वचनग्रहणस्यापि ज्ञापकत्वसम्भवादिति चेन्न वाक्वाक्वति भाष्यीयोदाहरणस्योपपत्त्यर्थमनची ति सूत्रे ऽनचीत्यत्र प्रसज्यप्रतिषेधस्य सर्वैरङ्गीकृततया स्थानिनि सति भवतो निषेधस्यादेशे ऽतिदेशप्रशक्त्या ऽभावातिदेशमन्तरेणापि तस्य चारितार्थ्यसम्भवात् अभावातिदे शस्य फलमाह मूले अतएवेति अभावातिदेशादेवेत्यर्थः ननु गणयतीत्यादावचोञ्णितीति शास्त्रादग्लोपइत्यल्लोपविधायकशास्त्रस्य बलवत्त्वादकारस्य लोपस्य

॥ भविष्यतीति न वृद्धिरित्यसङ्गमनत आह अतउपेति ॥

त्यस्यतृतीयान्तादिति व्याख्यान दर्शनेन तत्तादृश्या प्रातिपदिकादित्यस्य प्रातिपदिक प्रकृतिक सुबन्तादित्यर्थ इति सद्भावात् ॥ ॥ अन्तर्वर्तिसुपापदत्वमीकाराद्यन्तेनानुवान्तइ।
त्याशङ्कायामाह अन्तर्वर्तीति सकदेशेति तस्य न्यायस्य लौकिकत्वादिति भावः मूलेन नेष्यदिति इदमपि परत्वात्क्विङन्तामित्यस्य बाधकमिति भावः ननु प्रत्ययलक्षणमित्या
शङ्क्य स्थानिवत्सूत्रे तस्यसूत्रस्य नियमार्थत्वसिद्धान्तादत आह स्थानिवत्त्वेनेति सवर्णस्थानिवत्सूत्रस्यैव प्रसक्तिशङ्केयमिति भावः अस्त्विधिना तस्याप्राप्तिमुपपाद
यति णाविष्ठवदित्यादिना वर्णाश्रयमिति यजादीत्यस्य स्वादीत्येतद्विशेषणत्वेपि प्रयत्नैव प्राधान्येनालाश्रयणेपि निषेधस्य प्रवृत्तेः स्त्रीकारादिति भावः ननु स्थानिवत्सूत्रे
णप्राधान्यात्कार्यातिदेशस्वक्रियत इति कथमतिदेशप्रवृत्तिरत आह कार्यातिदेशेपीति अङ्गीकारादिति अत एव सवर्णेस्मिन्नित्यत्र दीर्घेण अतिदिष्टकार्यस्यापि यत्रादित्व

अन्तर्वर्तिसुपनिमित्तकपदत्वस्यैकदेशविकृतन्यायेनवान्तेपि सत्त्वमिति भावः प्रत्ययलक्षणमिति स्थानिवत्त्वेन प्रत्ययनिमित्तकं कार्यमित्यर्थः व
र्णाश्रयत्वादिति णाविष्ठवदित्यनेनयचिभमिति शास्त्रस्याथातिदेशस्तत्त्ववर्णाश्रयस्य च स्थानिवत्त्वस्य प्रसक्तिः कार्यातिदेशेपि यन्निमित्तवैकल्यप्र
युक्तोपदेशाप्रसक्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तकत्वस्यातिदेशस्यार्थात्स्वीकाराद्वर्णाश्रयत्वाक्षतिः प्रत्ययलक्षणसूत्रे तु भाष्यकृता प्रत्ययस्य यत्रा
साधारणरूपमाश्रीयते तत्रैव प्रत्ययलक्षणमिति नियमार्थत्वेन स्थापितम् नत्वप्राधान्येनालाश्रयणे विध्यर्थमिति भावः नचाचः परस्मिन्निति णि
लोपस्य स्थानिवत्त्वेन भत्वस्य लभमिति वाच्यम् णिलोपस्येवटि लोपस्यापि स्थानिवत्त्वापत्तौ वातिभत्वस्य दुर्लभत्वेन तत्रपदत्वानिव
त्तेः प्रकल्प्यापवादविषयमिति न्यायेन निषेधविषयं तत्प्रतिबध्याय स्थानिवत्त्वाप्रवृत्तेश्च हरदत्तादिमते इत्यनेनास्तु विरोधित्वा तद्बीजं त्वयंप्र
कृतिसूत्रभाष्यवार्तिकसंमत इति प्रातिपदिकान्तस्यनोपदत्वाभावइति ॥ १ निमित्तकत्वात् ननु वर्णाश्रयेपि प्रत्ययनिमित्तककार्यार्थस्य प्रत्ययलक्षणसूत्रसत्त्वे
त्यत आह प्रत्ययेति स्थापितमिति नचात्तृणेडित्यत्र कथमिसागमस्तस्याद्रूलादौ पित्ति सार्वधातुके प्रवृत्तिस्त्रीकारादिति वाच्यम् हलीत्यस्यात्रसम्बन्धमङ्गीकृत्य चिन्तयस्य सम्बन्धात्
अनिवृत्ते रिति अभ्युपेत्यवादोयम् वस्तुतोऽचः परस्मिन्नित्यस्य प्रवृत्तिरेव न सम्भवतीत्याह प्रकृत्येति अयंपक्षः सुबन्ताधिजितिपक्षः सम्मत इति प्रातिपदिकादिति।
तात्करोतीत्यादिचटेरिति सूत्रस्य स्थणाविष्ठवत्प्रातिपदिकस्येत्यस्यानुवादः तन्त्रवार्तिके प्रातिपदिकादित्यस्य प्रातिपदिकप्रकृतिकसुबन्तादित्यर्थकरणे प्रातिपदिकपदोपाद

नसम्बन्धलोपमितिरितिभावः॥

मूलोक्तस्यभावसाधनविधिशब्दस्याश्रयणेनर्दिप्रयोजनाङ्गिमतत्र्याह चरमावयवइति नन्वेषोयन्निन्यत्रत्तद्धुत्वमपिनस्यादतआह उत्वेचेति मुस्यभावरूपत्वेनपदचर
मावयवत्वसम्भवात् कानिसन्नीत्यादौस्थानिवद्भावप्रवृत्तिनिमित्तभूतमनादिष्टादचःपूर्वत्वमुपपादयति वाक्येति तत्रपक्षे वाक्यसंस्कारपक्षे एतन्मूलकमेव नाद्द
शान्तरङ्गत्वमूलकमेव एतेनतस्यापूर्ववचनत्वन्निराकृतम् श्रुतवर्णक्रमेण यस्यप्रथमतःश्रवण न्निमित्तककार्यस्यान्तरङ्गत्वात्तस्यपूर्वम्प्रवृत्तिरितिक्रमेण ननु
जानिपक्षमुपादायाणग्रहणस्यप्रत्याख्यानवत्पदसंस्कारपक्षाश्रयणङ्कृत्वापदान्तग्रहणम्प्रत्याख्यायतामितिचेन्न अदद्रीचइत्याद्यर्थन्तस्यावश्यकत्वात् पदान्त
ग्रहणाभावेतत्राचइत्यल्लोपस्यस्थानिवत्वाद्यणस्यात् नचाद्र्यादेशस्योभयाश्रितत्वमचइत्यस्यानुनतदाश्रितत्वमित्यन्तरङ्गमितिनस्यादोषइतिवाच्यं तत्रान्तरङ्गत्वेपि भ
शास्येति नेकारस्यानादिष्टादचःपूर्वत्वमितिवाच्यम् भसंज्ञानिमित्तविभक्त्युत्पत्तिपर्यन्तन्तस्याद्र्यादेशस्यप्रवृत्तिप्रतिबन्धेमानाभावेनाल्लोपात्प्राक्प्रवृत्तेःद्युमा

चरमावयवेकार्येइतिव्याख्यानेफलन्तु एषोयन्दसन्नीत्यादौयणःस्थानिवत्वादेतत्तदोरितिसुलोपाभावःइणःशतरियन्नितिरूपम् उत्वेचन
स्थानिवत् अनेननिषेधादितितत्वम् कानिसन्तीतिवाक्यसंस्कारपक्षेएतत् तत्रपक्षेपूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वमादायान्तरङ्गा
णांपूर्वप्रवृत्तेरिकारादेःस्थानिभूतादचःपूर्वत्वंद्रष्टव्यम् एतन्मूलकमेववाक्यसंस्कारपक्षेश्रुतवर्णक्रमेणैवलक्ष्यसंस्कारइतिवदन्ति नस्था
निवदिति तेनातोलोपइतिभावः नचपूर्वमल्लोपस्ततोवलियल्लोपइतिक्रमसत्वादकारेणाद्धधातुकत्वाद्वलाभात्कथमतिदेशेनतल्लाभःसम्भा
वनामात्रेणापितल्लाभस्यवरेग्रहणेनज्ञापनात् अस्तिचात्रापियदिपूर्वयल्लोपस्तदाकारेणप्रत्ययत्वलक्ष्यस्यादितिसम्भावनाफलन्तु यातिरित्या

णपागुदक्प्रत्तीचोयदिति सूत्रेप्रतीचइत्यत्रयणादेशस्याकरणेनाचइत्यल्लोपस्य पूर्वस्यकार्येकर्तव्येनस्थानिवत्वमित्यर्थक((दिसिद्धिरितिदिक् किञ्चिति॥
त्वनायातु ज्ञानगौरवस्याप्यनुचितत्वमित्यर्थसाधकमेवपदान्तग्रहणमस्त्वित्याशयेनभाष्यकृतातस्यप्रत्याख्यानन्नकृतमिति तेनयायावरइत्यत्रयङ्चयवाकारलो
पस्यस्थानिवद्भावाभावेन तल्लाभः आर्द्धधातुकत्वाल्लाभः यद्यकारस्यार्द्धधातुकत्वस्यात्तदात्तदादेशस्यलोपस्यातिदेशेनार्द्धधातुकत्वस्यात्तदेवतुनसम्भवतीतिभावः
ननुसम्भावनामादायवरेग्रहणस्यचारितार्थ्येपिनापूर्वम्फलङ्किञ्चिल्लिख्यन्तमतआह फलन्त्विति ननुसूत्रेयलोपविधिंप्रतिनस्थानिवदित्यस्ययायावरइत्युदाहृ

रणमेवक्तुं तेनोक्तमिति चेन्न यातेरित्याद्यर्थं यलोपग्रहणस्यावश्यकत्वात्तेनैवात्रापि सिद्धेर्नानिनर्दंशेऽुदाहरणत्वमित्याशयात् इत्यादि सिद्धिरिति यदि सम्भा
वितमार्द्धधातुकत्वमाकारलोपनिमित्तं तस्यातदाया नित्यन्वय ङन्नाक्तिचिह्नतेऽकारयकारयोः क्रमेण लोपेऽकारस्यार्द्धधातुकत्वाभावेनाकारस्य लोपो न स्यादतः
सम्भावितमप्यार्द्धधातुकत्वमाकारलोपस्य निमित्तमित्याश्रयणीयम् अत्रादिना लोलुवः पोपुवइत्यस्य सङ्ग्रहः अत्राच प्रत्ययविषये यङ्वयवाकारस्य न धात्विति
सूत्रस्य प्रत्याख्यानपक्षेयस्येति योगविभागेनादौ लोपे यङो चिचेति यलोपे लोपस्य स्थानिवत्त्वेनाच्प्रत्ययनिमित्तको गुणो यशान भवति न तथा वङादेशोपि न तन्त्र
न्निमित्तकः किन्तु यङवयवाकारनिमित्तक एव वाच्यः स यदि सम्भावितम्प्रत्ययत्वं नाश्रीयेत कार्यप्रयोजकत्वेन तदा न स्यात्तन्नु मूले यातिरित्यस्य साधनावसरे नच पुनरालो
पः यङ्काः चिणो लुङ् न्यायेनातो लोपस्यासिद्धत्वात् स्थानिवद्भावाभावे इत्युक्तम् तत्र लक्ष्यभेदेन लक्षणभेदकल्पनया सिद्धत्वमाकारलोपविधायकशास्त्रस्येत्यस्तु स्थानि
वद्भावादिति तु न युक्तम् अभ्यासस्यासवर्णे इत्यनेनाभ्यासकार्ये तदुक्तरखण्डादेशस्याभ्यासकार्यप्रतिबन्धकीभूतं स्थानिवत्त्वन्नेति ज्ञापनेन यथा आरतीत्यस्य सिद्धि

किञ्च कौ च संज्ञायामित्यनेन क्निन्नतु न अप्रत्ययादित्यनेन वा थाप्त् न स्थानिवदिति स्थानिवत्त्वे हि स्वराप्रवृत्तिरेव स्यात् अकारस्य तु न स्व
विधौ स्थानिवत्त्वनिषेधात् लित्वतु कारक इत्यादौ सावकाशमिति भावः॥ (( भवति नयाप्रकृते नेपि स्थानिवद्भावस्य निषेधः स्यादिति चेन्न अभ्यासत्वप

र्याप्त्यधिकरणस्य स्थाने कार्ये कर्तव्ये तदुक्तरखण्डादेशस्य तत्प्रतिबन्धकीभूतमित्यर्थस्य तेन ज्ञापनात् नचैवं सति परिभाषेन्दुशेखरविरोधस्तत्र हि अरिरिष्यादि
त्यत्र स्थानिवत्त्वेनेयङ् भवत्येव तस्य स्थानिवत्त्वस्याभ्यासकार्यप्रतिबन्धकत्वाभावादित्युक्तम् अभ्यासत्वपर्याप्त्यधिकरणत्वस्य प्रवेशे तु तस्येयङोऽभ्यासत्वप
र्याप्त्यधिकरणस्थानित्वन्न त्वनेन निषेधाप्राप्तेः प्रतिबन्धकीभूतेत्यस्य तत्र प्रयोजनकथनासङ्गतेरिति वाच्यम् तस्य ग्रन्थस्य वस्तुतोऽभ्याससम्बन्धिकार्ये इत्य
र्थाभिप्रायकत्वात् अभ्यासावयवादेशस्याप्यभ्याससम्बन्धित्वमित्याशयात् वस्तुतस्तत्र प्रतिबन्धकत्वनिवेशो न कार्योऽभ्यासत्वपर्याप्त्यधिकरणत्वनिवेश एव कार्यो
लाघवायेतिदिक् अभ्रम्भिरेवेति चिर्कीर्षकइतीकारस्येति शेषः मूले सवर्णानुस्वारग्रहणस्य शिण्ढीत्युदाहरणं तत्र श्नेषेलोपे दृतस्य ह्रधिः अम् अल्लोपेऽनुस्वारे
ष्टुत्वजश्त्वपरसवर्णेषु मर्नारी नियाडकारलोपइति प्रक्रिया तत्र ङकारलोपपञ्चमीसमासेन स्थानिवत्त्वन्न आदिशादचः पूर्वत्वात् पूर्वत्रासिद्धीयत्वाच्च ॥ ६ ॥

शा. र.
शी. भे.
३९

नत्रशिष्टीसुदाहरणाइ खण्डयितुमाशङ्कते नन्वित्यादिना अप्रवृत्तिरिति अल्लोपस्य परसवर्णे कर्तव्ये स्थानिवत्वाप्रवृत्तिरित्यर्थः नकारनिष्ठमनादिष्टत्वं च पूर्वत्वं
स्थानिवदादेश इत्यनेनानुस्वारेऽतिदिष्टमस्ति यद्यप्यनादिष्टत्वं च पूर्वत्वमशास्त्रीयं तथापि सवर्णग्रहणाज्ज्ञापकात्तदतिदेशो भविष्यति सवर्णातिदिष्टत्वं देवादायप
रसवर्णे कर्तव्ये ऽचः परस्मिन्निति स्थानिवद्भावः स्यादित्याशङ्क्य कारिकाचष्टे नचेति फलाभावादिति पूर्वसूत्रेण स्थानिवत्वस्य फलाभावादित्यर्थः उत्तरसूत्रस्य प्रवृ
त्यर्थं पूर्वसूत्रस्य प्रवृत्तिकल्पनं इ कृत्वा सवर्णपरग्रहणकरणापेक्षया प्रक्षालनाद्धीति न्यायेन पूर्वसूत्राप्रवृत्तिरेवोचितेति भावः किञ्च यत्र ज्ञाप्यार्थस्यान्यत्र फलं त
देव ज्ञापकं भवति तथात्र वक्तुमशक्यम् नच समाश्रित्यस्य सिद्धिरेव फलम् अत्र समूर्ध्दूयदूति स्थिते पूर्वविप्रतिषेधेनोपधाह्रस्वः पूर्वं णिलोपे तत्तस्य स्थानि
वत्वेन णित्वबुद्ध्या वृद्धौ कृतायामेकदेशविकृतन्यायेनाद्ग्रहणेन ग्रहणाज्जग्ध्यादेशस्य प्राप्तावचः परस्मिन्निति स्थानिवत्वमिष्यते सच अनादिष्टत्वं च पूर्वत्व
स्यातिदेशस्य घटत इति वाच्यम् णिलोपादनन्तरं ह्रस्वोपधाह्रस्वः प्रवृत्तेरनादिष्टत्वं च पूर्वत्वस्य सुलभत्वात् सन्वल्लघुनीति सूत्रे प्रत्याहारे ग्रहणेन तद्धेलोपेव

सिद्धीति नन्वत्रानुस्वारस्यादिष्टत्वं च पूर्वत्वेन स्थानिवत्वाप्रवृत्तिः नचास्मादेव ज्ञापकात्तस्याशास्त्रीयत्वेऽपि स्थानिवत्वेन तत्त्वम् फ
लाभावात्तद्घटितसन्निवेशापेक्षस्य ततः पूर्वत्वं च स्थानिदेशसहस्रेणाप्यतिदेष्टुमशक्यत्वाच्च ओभगोदूतिसूत्रस्य भाष्यरीत्या तस्य स्थानि
भूतात्त्ववृत्तिधर्मत्वेनानल्विधावितिनिषेधाच्च विशेषणतयालाश्रयणाच्च ॥ ९ लीयानितिनुयत्रैकस्थानिकत्वं वृद्धिलोपयोस्तद्विषयम् नचलो

लुवृत्यन्तोवङि पुगन्तेति प्राप्तस्याज्निमित्तकगुणस्य तथानुलोपसूत्रप्रत्याख्यानपक्षे प्रतिबन्ध एव फलमस्तीति वाच्यम् तथानुलोप इति सूत्रप्रत्याख्या
नपक्षे फलसत्त्वेऽपि सूत्रकारमते फलाभावात् अत एव पूर्वत्रासिद्धे न स्थानिवदित्यवष्टभ्य सवर्णग्रहणप्रत्याख्यानपरभाष्यस्य सङ्गतिरन्यथा कार्थज्ञापकतयैव सव
र्णग्रहणस्यावश्यकतया वरेयलोपस्वरवर्जं द्विर्वचनादीनि नव वक्तव्यानीति भाष्यं न सङ्गच्छेत नानुपूर्वीति अकारयुक्तो नकार इत्येवमानुपूर्वी घटितेत्यर्थः अशक्यत्वा
दिति नचाविद्यमानस्यैव धर्मस्यातिदेशो भवतीति न स्यातिदेशो भविष्यतीति वाच्यम् तस्यानुपूर्वीरूपतयाकार्यातिदेशस्यास्य सूत्रेण करणेऽपि रूपानतिदेशात् स्थानिभूता
त्वृत्तीति नकारवृत्तीत्यर्थः नन्वसाधारण्यनिवेशवादिमूलकृन्मते नायमल्वृत्तिधर्मो ऽत आह विशेषणतयेति अजूरूपस्यालो विशेषणत्वादिति भावः पूर्वोक्तं सर्वमत्र ॥

राम.
३९

सवर्णादेशपक्षे ॥ ःः ॥ वस्तुतोऽत्र तस्याभावेन णकारोऽयुक्त इत्याशयेनाह भाष्य इति प्रतिप्रसवेनेति तस्य दोष इति वचनेनेति शेषः स्थानिवत्त्वेनेति स्थानिद्वारकमनादिष्टाद
चः पूर्वत्वमाश्रित्य भवन्तमन्तः स्थानिवत्त्वेनेत्यर्थः ननु प्रतिपदोक्तणत्वस्य प्रतिप्रसवसूचकवार्तिके ग्रहणमत आह णत्वग्रहणमिति उपपादयिष्यत इति अष्टन शब्द इति शे
षः णग्रहणस्यापदान्तस्य मूढ इत्यत्र तिसृणां मूढ इत्यपदान्तरनिवृत्त्या कृत्वा प्रत्याख्यानेन प्रतिपदोक्तस्य णत्वस्याभावेन लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिरेव सवर्णत्वशि
ण्ढीति न सवर्णानुस्वारयोरुदाहरणम् किन्त्वनुस्वारग्रहणस्यैव आद्यसूत्रेणाभ्युपेत्यानादिष्टादचः पूर्वत्वशिण्ढीत्येतत्परसवर्णग्रहणोदाहरणमनेन साधयति किञ्चेति
इदम्पाठव्यत्यासप्रदर्शनं ञ्जश्त्वस्यासिद्धत्वप्रदर्शनाय ननु लोपस्यासिद्धत्वप्रदर्शनाय व्यत्यासाभावेऽपि लोपस्यासिद्धत्वसम्भवात् पाठव्यत्यासपक्षे शिण्ढीत्यत्र प्रक्रि
भाष्यपूर्वेनासिद्ध इत्यवष्टम्भेन वेरयलोपस्य भिन्नानां द्विर्वचनादीनां ग्रहणस्यात्र प्रत्याख्यानेन तस्य च णत्वे प्रतिप्रसवेनात्र स्थानिवत्त्वेन परसवर्णाभाव
स्येवत्वाभादिदमुदाहरणं चिन्त्यम् णत्वग्रहणेन च प्रतिप्रसववार्तिके लक्षणप्रतिपदोक्तपरिभाषेनेत्युपपादयिष्यते किंच दीर्घादाचार्याणामित्य
त्र मनुस्वारस्य यथि वापदान्तस्य तोर्लि ढस्थानस्योऽसि शश्छोऽटीति षट्सूत्रीपाठात्तरफलं जश्कशि अभ्यासे चर्च खरि च वावसाने अणोऽप्रगृह्य
स्येति पञ्चसूत्र्याः पाठ इति भाष्यसंमतात् अष्टाध्यायीपक्षे परसवर्णे द्रष्टव्य फलं जश्कशीत्यस्य जरोजरीत्यस्य चासिद्धत्वेन ययपरत्वाभावात्तदप्राप्ते
रिति चेन्न सत्यम् पाद्यते क्विपि पातत्र सतीत्यादौ ऋयोरिति पूर्वसवर्णे पञ्चमीसमासेन प्राप्तस्यानिवृत्तावधारणार्थत्वात् हरितशब्दादाचक्षा
णण्यन्तात् क्विपि हरिद्रु सतीत्यादावुक्तरीत्या प्राप्तस्य तस्य वारणार्थत्वाच्च अत्र त्लोपस्यापि तत्प्राप्त्या कौलुप्तमित्यस्य विषयस्तत्र हरिन्नमती
त्यादावनुनासिके तद्वारणार्थत्वाच्च ॥ ९ यान्तिस्यन्तोऽथ्या शिनष्टि इत्यत्र त्लोपानुस्वारसुत्वानि अस्यामवस्थायामनुस्वारस्य ययपरत्वाभावादप्राप्ति
परसवर्णत्वस्य सर्वलोपस्यापि सवर्णपरत्वाभावादप्राप्तिः किन्तु जश्त्वम् तस्य जश्त्वस्यासिद्धत्वात्परसवर्णाप्राप्तिरिति भावः सवर्ण इति कर्तव्य इति शेषः प्राप्तस्या
निवृत्तावेति कौलुप्तत्वस्थानिवदिति तु कारिन्त्वमित्याशयः ननु कौलुप्तमित्यस्यासार्वत्रिकत्वेऽपि तेन निषेधेनास्य रूपस्य सिद्धेर्नैतत्साधारणसवर्णग्रहणोदाहरण
मत आह हरितेति हरिद्रुसतीत्यत्र ननु हरिद्रुसतीत्यपि पञ्चमीसमासस्यानाश्रयणपक्षे सुवचमत आह हरिन्नमतीति ॥ ९ ॥ ० ॥ ८

ग्रामस्य विशेषणेनेत्य॰ ६

आयामीति तत्रदिस्त्वनेयतिप्राननयतीत्यादौयरोऽनुनासिकइतिरेफस्यस्थानेऽनुनासिकादेशवारणायवार्तिककृतारेफस्यानुनासिकपरसवर्णेद्विर्वचनप्रतिषेधो
वक्तव्यइतिकथितन्तत्प्रत्याख्यानायपरेऽनुनासिकइतिसूत्रेऽनुस्वारस्ययपीति सूत्रात्सवर्णग्रहणस्यापकर्षोदर्शितः नचहरिन्नमतीत्येतदपिपदान्तविधित्वात्तन्न
स्थानिवदित्यनेनसिद्धमितिवाच्यम् पदत्वरमावयवेकर्त्तव्येपरपदस्याजादेशोनस्थानिवदितिसिद्धान्तेतस्याप्रवृत्तेः अन्यत्र चानुसंवद्वत्यस्यमाधनावसरे स्त्रीति
इदम्पूर्वोक्तपि नचैवंसतिमूलासङ्गतिरितिवाच्यम् वृत्त्यनुरोधेनैवकथनात् वसुमन्तुसमानाम्धि सन्धिरित्यत्रसहशब्दस्यैवसादेशः समानशब्दस्यविग्रहवाक्येप्रयो
गस्तुसहार्थस्यसम्प्रत्ययप्रदर्शनाय रूढश्चायंशब्दइतिसहस्यसः सञ्ज्ञायामितिसादेशः छान्दसइति नचैवंसत्यमरग्रन्थेकथमस्यप्रयोगइतिवाच्यम् अस्यछान्दसा
नुकरणत्वात् ग्रामविशेषणेनेतिअर्थः नन्वेकत्वसङ्ख्यायास्य द्विवचनान्तेनापिसमासेएकत्वमेवभासतइत्यर्थः उत्तरएकवचनान्तेनैवसमासः सङ्ख्यानुसैवभास

अत्रहयवरट्सूत्रभाष्यरीत्यातत्रसवर्णग्रहणापकर्षेणतस्यापिसवर्णविधित्वादित्यन्यत्रविस्तरः स्त्रेणसहइति सन्धिः स्त्रीसहभोजनमि।
समरात्सहस्यसादेशइतिप्रतीयते जलोकसीतिसिचसवलोपइतिपक्षेकादसावर्णलोपोबोध्यः स्पष्टंचेदंधिचेतिसूत्रेभाष्ये लोकेतुसन्धि
रित्यसाधुरेवेतिबोध्यम् विशेषणेनपदस्येत्यधिकारप्राप्तविशेषणेनसंयोगस्येत्यनेनएकत्वसंख्येति अभेदैकत्वसंख्येतितदर्थः संख्यासामा
न्याभावइतियावत्विग्रहेएकवचनन्तुऔत्सर्गिकंएकवचनत्वसंपत्तिमात्रफलकमितिसमर्थसूत्रेभाष्येस्पष्टम्॥ ((तइति अथवाकुस्फङादिभ्यइ।

औत्सर्गिकैकवचनान्तेनसाधुत्वार्थमुत्पन्नैकवचनान्तेनैवसमासइत्यर्थइति नाद्यः द्व्येकयोर्द्विवचनैकवचनइतिसूत्रेणद्वित्वविवक्षायामेवद्विवचनस्यविधानेनत
स्यविवक्षापितस्यानुमानमितितसम्भवतिवदतोव्याघातात् गौणीसुख्यावोतरासङ्ख्यापूर्वसङ्ख्यामाधनइतिसिद्धान्तविरोधापत्तेश्च अतएवैकस्याकारइतिपक्षे
पदैकस्यत्रद्वयजूलक्षणवत्स्यादितिशङ्कायामाहति एतादृज व्यपदेशादितिभाष्यक्तेतोक्तम् नद्वितीयः इदूदेदितिसूत्रभाष्येकुमार्योरगारमितिविग्रहस्य
कुमार्यगारमितिसमासप्रदर्शनविरोधापत्तेः अतएव नतृतीयः उदस्यत्वापत्तेश्चेत्यतआह अभेदैकत्वेति अभेदलक्षणाएकत्वसङ्ख्येतितदर्थः अभेदोभेदा
भावः उपसर्जनपदार्थतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावः एतेनयत्रभेदभानन्तत्रापिक्षात्रबुद्धिसत्वेननतस्मानाधिकरणद्वित्वादिभानम् एतेनतुत।

तिनादृशलस्यस्यसम्प्रतिपन्नस्याभावादित्यर्थः सरूपसूत्रस्यन्तज्ज्ञाप्यन्तुतादृशार्थकरणेनैकसकारस्यनिवृत्तावपिरक्षस इत्यस्यप्राप्त्यैकदेशयुक्तिरेवेतितादृशार्थकरणं व्यर्थमेव अतएवकैयटेनतादृशार्थस्यलस्यासाधकतयावसुनः संयोगान्तस्य लोपाद्दलङ्ग्यादिलोपादिनिव्याख्यातः ॥ ० ॥ अतएव तादृशार्थाभावादेव भाष्येऽक्तमि तियदिनादृशोऽर्थोऽभिप्रेतः स्यात्तदालुप्तनिर्दिष्टः शकारइतिवदेदितिभावः अपकर्षेति शुनिसम्मतएवायमपकर्षः यथापूर्वसूत्रकरणकालेस्मृतप्रयोजनक पदोपादानेपिलस्यानुरोधेनोत्तरत्रसम्बन्धोभवति तथापूर्वसूत्रकरणकालेविस्मृत्यानन्तरसंसक्तमनसाप्रयोजनास्मरणेनाकृतस्यशब्दस्योत्तरसूत्रकरणकालेस्मृतप्रयोजनकस्यपूर्वत्रसम्बन्धोपि सचक्वचित् विभागेनभाष्यकृताप्रदर्श्यतेक्वचित्वन्यथा यथाराद्योहलीत्यत्रहलीत्युभयोःशेषइत्युक्तम् अत्रतुसंयोगान्तस्यलोपेयणःप्रतिषेधः नवाऽन्तलोलोपाद्बहिरङ्गलक्षणत्वादितिवार्तिकवृत्तोक्तम् षष्ठ्येति उत्तरत्रपञ्चम्यन्तस्यतस्यस त्वात् वाक्यभेदेनेति संयोगान्तस्यलो

सात्पदस्येति सूत्रेद्विशकारकोनिर्देशइतिभाष्येऽक्तम् त्वद्रीत्यासंयोगान्तलोपस्यदुर्वारत्वेनशकारद्वयाभावात्तदसंगतिः स्पष्टैव अप कृष्येति तत्रषष्ठ्याविपरिणम्यवाक्यभेदेनसंवध्यते तेनपूर्ववाक्यस्यक्वचिदफलत्वपिप्रवृत्तिरुत्तरवाक्येनत्वतस्यक्वाचित्कत्वज्ञाप्यतेतेननातिप्रसंगः ध्वनितंचेदमसोमशित्यत्रभाष्ये तत्रहिमद्वयात्मकमादेशंविधायशित्वप्रत्याख्यातमेकस्यमस्यसंयोगान्तलोपइतिचकैयटेनव्याख्यातम् अनित्यत्वादिति अत्रचज्ञापकंकेणइतिनिर्देशः कइष्मणइतिस्थितेतस्यगतपरत्वमाश्रित्यप्राप्तइकारस्ययण् असिद्धपरिभाषयात्तत्व्यावर्त्यते अन्तरंगवत्तीयइतिपरिभाषान्तरंनास्त्येवेतिभावः वसुतत्रोमाङोश्चेत्याङ्ग्रहणादनित्यमिदम् ॥ (( पद्इत्येकंवाक्यम् एतदर्थःप्रसिद्

सवस्रलइतिद्वितीयन्तत्रसंयोगान्तस्यलोपइत्यनुवर्तते संयोगान्तस्यफलोलोपइत्यर्थः सवत्रपूर्ववाक्येनैवसिद्धावस्यवैयर्थ्यमतः पूर्ववाक्यस्यक्वाचित्कत्वज्ञापनमेवफलम् पूर्ववाक्यस्याफलिप्रवृत्तिस्वीकारादेवडेःप्रथमयोरमितिसूत्रेमकारान्तरप्रश्लेषपितस्यनिवृत्तिसिद्धिः नातिप्रसङ्गइति सुध्युपास्यइत्यादौयकारादिनिवृत्त्यापत्तिरूपोऽतिप्रसङ्गोनेत्यर्थः ध्वनितञ्चेदमिति अपकर्षकरणादिकमित्यर्थः पूर्ववाक्यस्यक्वचिदफलिप्रवृत्तेःफलान्तरमाह तत्रहीत्यादिना इर इतसम्मतार्थाभिप्रायेणनाजानन्तर्यपरिभाषायाः आतिंतारयतिप्रातङ्गेति तत्रच अनित्यत्वेच तत्तुपदसंस्कारपक्षमादायकेणइतिनिर्देशस्योपपत्तिर्भविष्य

नीतिकयत्नस्योक्तपरिभाषायाः अनित्यत्वे ज्ञापकत्वेनाशयेनाह पद्युगमित्यत्र अपि सवर्णेत्यनेन लब्धयगमपरत्वात्रा स्रयणेनाधुनासौकर्यमपीति ध्वनितम् ॥ ६ ॥ द
द्विबाधनार्थमिति अत्र नाजानन्तर्यपरिभाषाया यत्रान्तरङ्गे शास्त्रे ऽजानन्तर्यमत्र यणन्तत्र बहिरङ्गस्य मङ्क्तिर्नेति पक्षे पि प्रवृत्तिः प्रामावस्तुतो ऽ यमेवार्थः असिद्धस्व
हिरङ्गमन्तरङ्ग इत्युक्त्वा नाजानन्तर्य इति वक्ष्यामीत्युक्त्वा पूर्वे परिभाषास्थस्यान्तरङ्ग इत्यस्यानन्वानुवृत्तिसूचनात् यदि नाजानन्तर्यपरिभाषा नित्या स्यात्तदा ऽ नया ऽन्तरङ्गस्
णस्याप्रवृत्तिसम्पादनेन क्रमेपरत्वात् सवर्णदीर्घे गुणेन लसस्य सिद्धा वाङ्ग्रहणवैयर्थ्यस्पष्टमेवेति अस्याः नाजानन्तर्यपरिभाषायाः सवन्त्वोक्तज्ञापकेन सर्वथाना
जानन्तर्यपरिभाषानासीति न शङ्कनीयमिति ध्वनितम् परोपपादितो मतभेदो ऽ स्वरस्वारस्यविरुद्ध इत्येतदुपपादयति नवेतीत्यादिना सर्वमिति आरम्भप्रत्याख्यान

तद्दिशिव आइहीति स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्यत्वेनान्तरङ्गत्वाद्गुणे वृद्धिबाधनार्थम् अस्याउदाहरणानुअस्यूचुरि
ति अन्यथान्तरङ्गे परायूठ सिद्धः स्यात् मतभेद इति नवेति वाशब्दस्वारस्येन वचनारम्भवादिनस्एव प्रत्याख्यानप्रकारो भाष्यकृतानुमतो हि वक्त
व्यमवक्तव्यमित्यादिशब्दैरेवमत्याचष्ट इति सर्वं वार्तिककृतः सर्वेति भावः काविदित्यादि संयोगान्तलोपादिति भावः ननु पूर्वं पूर्वस्थानिकमन्तरङ्ग
मित्यर्थेन भाष्यसंमतः किन्तु पूर्वं निमित्तकमित्येव किन्त्वप्रातिपदिकासिज्युत्पत्तेरेव भाष्यसंमतत्वेनयावद्विभूतस्तप निमित्तकसंयोगान्तलोपे
पिवहिरङ्ग इत्यरुचेराह वार्तयोरिति काव्येयलोपस्थानिवत्वनिषेधात्लोपाव्योरितिकाले वातत्वमित्यूठुर्वार ॥ (( रूपम्वक्ष्यमाणदूषणसङ्
मनायाह संयोगान्तेति नभाष्यसम्मतइति अत एव प्रकृत्यैकाजिति सूत्रस्य प्रयोजनत्वस्यावसरेस्रजिष्ठ इत्यत्रस्रग्विन् शब्दादिष्ठनिकृते विन्मतोर्लुगिति विनोलुकि
प्रातस्यटिलोपस्यबाधनार्थम्प्रकृत्यैकाजित्यस्यारम्भइतिवाच्यं ज्ञातिपक्षाश्रयणेन टिलोपत्वावच्छिन्नस्य लोपो विन्मतोर्लुग्विषये ऽ वश्यम्भावइति विन्मतोर्लुग
पवादइति तद्विषये टिलोपस्याप्रवृत्तिरिति भाष्यकृता प्रतिपादितम् यदि पूर्वस्थानिकस्यान्तरङ्गत्वमपि भाष्यकारसम्मतं स्यात्तदान्तरङ्गत्वात्प्राप्तटिलोपापेक्षया
विनोलुको वहिरङ्गत्वेनासिद्धतयास्रजिष्ठ इत्यस्य सिद्धौ जातिपक्षाश्रयणप्रयासस्यनैष्फल्यापत्तिरिति परोक्तमभ्युपेत्याह किन्त्वेति वहिरङ्ग इति सवन्त्वयदुक्त
स्फूर्ते ऽ ल्लोपणिलोपयोरसिद्धत्वस्येति तदयुक्तमिति भावः वान्तयोरिति द्विवचनस्यसङ्गमनायाह काव्यइति इतिकृत इति संयोगान्तलोपस्यासिद्धत्वादित्यादिः ॥

अल्लोपशाल्वे दुर्वारइति एवञ्चल्लङुगरूपासिद्धिरितिशेषः ननुशाल्वेऽल्लोपस्य विच्यस्थानिवत्त्वेननवल्लोपस्यप्राप्तिरतआह काव्यशब्दइति नन्वेवमङुक्तौका
विनिरूपन्तुर्वारमेवेत्यतआह सवस्त्वेति ननुमूलोक्तविधिवैद्धिस्युक्तिनम् प्रत्याख्यानपक्षेतुमान्नमेवेतितदनुचितमारम्भप्रत्याख्यानयोः फलभेदस्यकाव्यदर्शनाद
तस्मादाह अस्येति तत्पक्षइति —— फलग्रहणापकर्षपक्षइत्यर्थः अन्यथा शेषपूरणेनव्याख्यानाभावेस्यादित्यर्थः दिक्शब्देभ्यारणेनस्थचितार्थः संयोगादिलोपविष
यकृतयेति स्कोरितिसूत्रेयणग्रहणमस्वन्धेनयणन्तसंयोगाद्योः सकारककारयोर्लोपोनेतितदर्थः तेनचाकत्र्थवास्यर्थमित्यत्रकसंयोगलोपोन यद्यप्यनयोःकसंयोलोपेकाः
तेभ्यः चः परस्मिन्निति स्थानिवद्भावोपिवक्तुं शक्यः पूर्वत्रासिद्धेनस्थानिवदितितु नस्यदोषइत्यनेननिषिद्धम् तथापिस्थानिवद्भावानाश्रयणे नोपायान्तरमेदितिबोध्य

अन्येचस्वतएवेतितत्रवलोपं बाधित्वोठ् दुर्वारइत्यर्थः विर्वीति काव्यशब्दइतिशेषः यलोपेस्थानिवत्त्वनिषेधादेवचप्राचीनोक्तसंयोगान्तलोपोदाह
रणत्वमयुक्तमितिभावः शाल्वेत्वल्लोपादेः स्थानिवत्त्वान्नतत्प्रसक्तिरितिबोध्यम् नानयेवेति अस्यप्राप्नोतीतिशेषः तस्मात्पक्षेपिवाक्यभे
देनव्याख्यापगिरिवेद्धिस्येव अन्यथाआरम्भप्रत्याख्यानयोः फलभेदः स्यादितिभावः द्विविनिदिगर्थस्तु संयोगान्तलोपसंयोगादिलोपविषयत्त
यारब्धस्ययणः प्रतिषेधइतिवचनस्यसंयोगान्तलोपविषयकस्यफलोल्लोपादितिप्रत्याख्यानम् अतएवतत्रसंयोगान्तलोपोफलोलोपइति
भाष्येव्याख्याकृतावहिरङ्गलक्षणत्वादित्यस्यानुवहिरंगोयणादेशः अन्तरंगोलोपइतिव्याख्यानेनवार्तिकस्वारस्यनचेदृशानांलक्ष्याणामनभिधा
नमेव वस्तुतस्तृतीयवार्तिकं विसर्जनीयसूत्रे भाष्येकार्यकालपक्षमुपक्रम्यायुक्तोयंपरिहारोबहिरंगलक्षणत्वादित्यनेनदूषितमित्यलम् ॥

म् सवक्त्रप्रकृतेसवङ्गुथनंयणः प्रतिषेधइतिसंयोगान्तलोपस्यैवनिषेधइतियाकस्यचिदुक्तिःसात्वखण्डनमात्रार्थिकेतिध्येयम् अतएव तस्यैवप्रत्याख्यानादेव त
त्ततत्र अतएवात्रमूलेसंयोगान्तलोपेयणः प्रतिषेधइतिव्याख्याकृता प्रकृतमाह वहिरङ्गेति स्वारस्येनेति अन्यथाऽन्तरङ्गोलोपः अन्तरङ्गलक्षणत्वादित्येवव
दत ईदृशानाम् अकृत्रिमयणघटितानाम् अनभिधानमेवेति अन्त्यपक्षरीत्यालोपप्राप्त्या आद्यपक्षेतस्याप्राप्त्याफलभेदापत्तेस्तादृशानामनभिधानमेवेत्यर्थः तृती
यसमाधानंत्रिपाद्यामप्यसिद्धत्वस्यप्रवृत्तिरितिमतेन वस्तुतस्तुत्रिपाद्यांबहिरङ्गपरिभाषायावक्ष्यमाणरीत्याप्रवृत्तिरेवेति बहिरङ्गपरिभाषयाप्रकृतेलक्ष्यस्य

साधनन्तयुक्तन्तत्समर्थनायपूर्वेपूर्वस्यानिकमन्तरङ्गमित्यस्यस्वीकारक्लेशस्यायुक्तत्वात् वक्ष्यतइति विसर्जनीयसूत्रे विसर्जनीयस्यसइति सूत्रे दूषितमिति
स्तत्रग्रेस्फुटीभविष्यति॥ ॥नतुयदिलोपस्यवैकल्पिकत्वेनतत्कृतोनविशेषस्तर्हितस्योपन्यासोव्यर्थ एवेत्यतआह सम्भवमात्रेणेति तदुक्तिः लोपविकल्पोक्तिः य
तुएकः पूर्वपरयोरितिसूत्रेयथान्याधानादिसंस्काराणांसकृदेवानुष्ठानन्तथागुणादीनामपिसकृदेवस्यात्तथाचप्रतिपुरुषमेकएवगुणघटितः साधुःस्यादन्येऽ
पशब्दाःस्युरित्याशङ्क्यज्योतिष्टोमादिशास्त्रदृष्टान्तेनप्रतिप्रयोगङ्गुणादिविधायकशास्त्राणामावृत्तिर्भविष्यतीत्यायुक्त्यालक्ष्यैकचक्षुष्कस्येतिन्यायस्याविषयोयमि
ति प्राचीनोक्तिखण्डनपरःपुनर्द्वित्वमित्यादिग्रन्थोनयुक्तइतिकेचित्तन्न भाष्याशयानवबोधादिति ध्वनयितुम्भाष्याशयम्प्रकटयतितत्रहीत्यादिना तत्रएकः पूर्वपर

उभयद्वित्वेइति द्विधं द्वियमेकम् पुनर्द्वित्वेत्रिधंत्रियम् अन्यतरेति एकधंद्वियंत्रियञ्च एकयंद्विधंत्रिधञ्च द्वयोरपिद्वित्वेअन्यतरस्यपुन
र्द्वित्वेद्विधंत्रियञ्च ७ त्रिधंत्रियञ्च ८ अनुभयद्वित्वेएकधमेकयम् ९ लोपविकल्पान्यतरद्वित्वयोः समफलतासंभवमात्रेणतुतदुक्तिः
एकः पूर्वपरयोरिति तत्रहियथानयोः पूलयोः कटंकुर्वित्यादौएकवाक्यतयैवबोधात् एकत्वविवक्षणेनोभयस्यैवैककटकरणप्रतीतिरु
पान्याधानेपिपूर्वपरयोर्गुणइत्यादावपिद्वन्द्वनिर्देशाद्विधेयगतसंख्याविवक्षणाच्चोभयोःस्थानेएकएवादेशोभविष्यतीत्येकग्रहणप्रत्याख्याय
शंकितशास्त्राधिकारिणःपुरुषान्प्रतिप्रवृत्तंसंस्कारकंतत्त्वशास्त्रंप्रतिपुरुषमेकवाक्यतयासकृदेवार्थबोधकं यथाधानेनाग्नीन् संस्कु
र्यादित्यर्थकंवसन्तेब्राह्मणोग्नीनादधीतेतिवाक्यंप्रतिब्राह्मणंसकृदेवार्थबोधकंसकृदेवस्वविषयेप्रवर्त्तकंचातएव पुनःपुनर्नाधानादि।

योरितिसूत्रभाष्येबोधादिति पूलयोरितिद्विवचनस्यारस्यैकवाक्यतया उचितत्वेत्यादि एतेनग्रहंसम्मार्ष्टीइत्यत्रोद्देश्यबोधकपदोत्तरैकवचन॥ ॥संस्कारः
स्ययथाऽविवक्षयाऽनेकग्रहाणांसम्मार्गस्तथाऽनयोः पूलयोरित्यत्रापिसम्भाव्यतेतथापिसम्भवत्येकवाक्यत्वेवाक्यभेदोनन्याय्यइतिन्यायस्यसञ्चारोध्वनितः एक
त्वविवक्षणेनकटमित्यस्यविधेयबोधकतयातत्रैकत्वस्याविवक्षणेन द्वन्द्वनिर्देशात् इतरेतरयोगेतस्यद्वन्द्वस्यविधानेनोद्भूतावयवसमुदायस्यान्यत्रान्वयात्।
शङ्कितमिति अस्यावश्यकमित्यत्रान्वयः दृष्टान्तप्रदर्शनेनशङ्कां योजयति यथेति स्वविषये आधानाख्यसंस्कारे ॥ ॥ ७ ॥ ॥

व्यापारादिति प्रतिपुरुषमेकवाक्यतयाबोधकत्वादिति शेषः वाक्यभेदोऽवश्यमिति पुरुषैकेऽपीति शेषः तत्र पूर्वोपवर्णितवाक्यार्थेऽन्वयमध्ये पुरुषसंस्कारकः पुरुषस्य धर्मजनकक्रियाप्रवृत्तिसम्पादकः एकः शब्दः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवतीति भाष्यात् नित्यत्वम् यस्याकरणे प्रत्यवायस्तत्त्वम् अहरहः सन्ध्यामुपासीतेति यथा निषेधविधिरपि नित्यः न ब्राह्मणं हन्यादिति नैमित्तिकम् निमित्तसद्भावे सर्वोद्यार्थत्वेनावश्यक प्रवृत्तिसम्पादकम् यथा पूर्ववया ब्राह्मणः प्रसुप्तस्येयद्गति काम्यम् तत्फलेच्छाधीनतद्विषयप्रवृत्तिसम्पादकशाब्दबोधजनकम् यथा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादि तत्र नित्यविधिस्थले श्रुति तत्कालजीवित्वस्याधिका

तथा व्याकरणशास्त्रस्यावर्णोदचि पूर्वपरयोर्गुणो भवति गुणवान् शब्दश्च साधुर्भवति स च प्रयोक्तव्य इत्येतावत्पर्यन्तं व्यापारान्तसंस्कृतस्यैकस्यावदेन्द्रस्य प्रयोगेण शास्त्रार्थस्यकरणात् मालेन्द्रादिप्रयोगो न स्यात् अतस्तत्तल्लक्ष्यविषयवाक्योपप्लवेन वाक्यभेदोऽवश्यं वाच्यस्तद्वत्पूर्वपरविषयेऽपि स्यादिति तत्रैकग्रहणमावश्यकमिति तत्र गुणो भवतीत्याद्यशीलक्ष्यसंस्कारफलकमेव यथाधानमग्निसंस्कारकं शास्त्रतात्पर्यविषयप्रयोगविधिश्च पुरुषसंस्कारकरएवेति तदाशयः ननु सिद्धान्तिनम् यथा नित्यनैमित्तिककाम्यविधीनां तदकरणजन्यप्रत्यवायपरिहाराय फलाय च वाक्यभेदेन तद्विषयकशास्त्रोपप्लवास्तु नः पुनः प्रवर्तकत्वम् तथामम्माप्यसाधुप्रयोगे प्रत्यवायश्रवणान्नित्यसमत्वं प्रयोगविधेरेकः शब्दः सम्यग्ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुक् भवतीत्यनेन काम्यत्वं चेति तद्विषयकतया नानावाक्योपप्लवेन भवत्येव मालेन्द्रादिप्रयोग इति ॥ ० ॥

(१) रसम्पादकतया यावज्जीवनत्वरूपसद्भावे सर्वोद्या क्रियाप्रवृत्तिसम्पादकत्वेन तस्याकरणे प्रत्यवायः कल्प्यते नैमित्तिकस्थलेऽपि निमित्तप्राप्तेः क्रियाप्रवृत्तिसम्पादकतया यदा यदा तस्य प्राप्तिस्तदा तदा प्रवृत्तिरन्यथात्वनिष्टं स्यात् यथा वृद्धे समागते तस्योर्ध्वं प्राणा उत्क्रामन्ति प्रत्युत्थानाभिवादाभ्या पुनस्तान्प्रतिपद्यत इति दोषप्रतिपादकवाक्यात्तथा कल्पनात् एवं राहूपरागे स्नायादित्यादावपि बोध्यम् एवं काम्येषु कामानामानन्त्यात्तत्सद्भावे ज्योतिष्टोमादौ त्रैवर्णिकानामप्यधिकारात्प्रवृत्तिः सा च यदा २ तदेति न सकृदेवानुष्ठानम् तत्राऽपरो विशेषः नित्यस्यानुष्ठाने प्रत्यवायानुत्पत्तिरेव फलम् नैमित्तिकमस्याः फलत्वम् नैमित्तिके दोषपरिहारः काम्यफलञ्च भवति काम्यस्थले कामनाविषयसिद्धिरेवेति तत्तद्विषयकेति तत्तत्क्रियाविषयकेत्यर्थः प्रत्यवायश्रवणादिति तेऽसुरा हेलयो

हि त्वयद्विति कुर्वन्तः परावभूवुस्तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै इति म्लेच्छत्यादोषश्रवणादित्यर्थः नित्यसमत्वमिति शास्त्रसंस्कारविरुद्धोच्चारणे प्रत्य
वायश्रवणेन नित्यत्वमर्थबोधनार्थम्प्रवृत्तेरर्थस्य बोधो भवतीति फलसम्बन्धेन काम्यत्वमपि अतःसमशब्दस्यप्रयोगः यथा काम्ये दर्शादियागे पुनःपुनः प्रवृत्तिस्तथात्रापि
ततस्तु स्वरूप स्वर्गकामनया स्व इन्द्र मा लेन्द्र रमे शादिसाधनायने षांसु प्रयुक्तत्व शास्त्रान्वितत्वसम्पत्तये पुनःपुनः प्रवृत्तिः॥ः॥एवमुक्तप्रकारेण एवं शब्दस्य शुद्धसंस्कारार्थत्वे च उक्तार्थ
भाष्यान्तरमपि साधकमित्याह सम्प्रसारणाच्चेतीति तत्र हि शकद्रुर्थमित्यत्र सम्प्रसारणपूर्वत्वमाशङ्क्य वाक्यस्य सम्प्रसारणासंज्ञापक्षमादाय पूर्वरूपनिष्पन्नस्य न स
म्प्रसारणत्वमिति समाधानोत्तरसमाधानान्तरङ्गः कृतम् कार्यकृतत्वादिति शास्त्रस्यास्मिन्विषये प्रवृत्तत्वात्पुनः प्रवृत्तिर्न भविष्यतीति तदर्थः तत्र दृष्टान्ततया
त्यभाष्यकृता भिहितम् तद्यथा वसन्ते ब्राह्मणोऽग्नीनादधीतेति सकृदाधायकृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति विषमउपन्यासः उक्तमक्तस्यैव

एवं प्रयोगविध्यंशस्य नित्यकाम्यत्वव्यवस्थापनेन गुणविध्यंशस्य शुद्धसंस्कारार्थत्वमेवोक्तं एवं च तस्याधानादिवद्देवाग्निस्थानीयत्वल्लक्ष्येषु
सर्वेषु प्रवृत्तावपि सकाम्नाविवेकलस्येनावृत्तिरितिपूर्वपरयोर्नादेश इत्यसङ्गतिरिति नान्ययेम् एवं च स्यष्टमेव पूर्वपक्षसिद्धान्तयोरर्थत्या
यः संस्कारकविधिविषये सिद्धान्तितदिति भावः सम्प्रसारणाच्चेति सूत्रे भाष्येपि स्फुटोयम् वैकल्पिकत्वादिति एवं च पक्षे द्वित्वानामानन्त्या
पत्त्यापत्ति निष्ठितत्वाभावापत्तिः॥ ९ पुनः प्रवृत्तिर्न भवति तत्र कैयटः पराङ्मग्न्याधानम् यज्ञमुखप्रतिपत्त्यर्थमिति पुनः क्रियमाणस्फलभेदाभावा

त्नानुष्ठीयमेदिति ततः यत्तु तदाश्रयमप्राप्नोति निनतच्छकयम्बाधितुम् तद्यथा वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेतेति अग्न्याधाननिमित्तं वसन्ते इज्यत इत्यभिहितम्
यत्तु तदाश्रयमिति यस्मात्फलावाप्तिस्तत्फलभेदाद्विद्यमानमसकृदनुष्ठीयत इति कैयटः एवञ्च कार्यकृतत्वादित्यपरिहार इति तेनोप संहृतम् अस्ति चात्र फलम् शास्त्री
यप्रक्रियापूर्वकप्रयोगाद्धर्मोत्पत्तेः शास्त्रान्वितद्व्यनेन बोधनाच्छकद्रुर्थमित्यादौ सम्प्रसारणाच्चेति सूत्रस्य पुनः समुदायोच्चारणात्मकस्मरणे धिकस्य धर्मस्य लाभ
भएवेति भावः एवम्प्रतिपादनेन लक्ष्यभेदेन पुनः प्रवृत्तिर्भवति यत्र तु न तथा लक्ष्यभेदस्तत्रा प्रवृत्तिरेवेति न्यायो ध्वनितः लोपस्य वैकल्पिकत्वे जातेपि द्वित्वभावका
॥ यत्तु स्थानात्पुनः प्रवृत्तावपीष्टापत्तिरितिमाशङ्क्याह्याह एवञ्चेति लोपस्य वैकल्पिकत्वेचेत्यर्थः ॥

परोक्तं दूषयितुं तदुक्तिमनुवदति त्वदुक्तमित्यादिना नचेत्यस्य वाच्यमिति परेणान्वयः त्वदुक्तरीत्या लोपस्य वैकल्पिकत्वरूपोक्तरीत्या सम्भवादिति स्तनावत्तैव शा
स्त्रस्य कृतार्थत्वादिति शेषः परिनिष्ठितत्वस्य स्वरूपमाविनियोगिज्ञानसम्पादनायाह अन्तरङ्गेत्यादि हिर्हेतौ अस्ति चेह शाम्यारिनिष्ठितत्वं यणादेशप्रवृत्तेन रसुद्युपास्यद
त्यादौ अन्तरणादेशविधायकशास्त्रस्य प्रवृत्तत्वेनाप्रवृत्तो नित्यविधिरेव तो यवायावदिति तदुद्देश्यतावच्छेदकानाक्रान्तत्वन्नस्येति रीत्या सर्वेत्रोहनीयम् नचन्मनोद्द
नीत्यासाव प्रवृत्तो नित्यविधिः सवर्णदीर्घस्तदुद्देश्यतावच्छेदकाक्रान्तत्वसत्त्वेनापरिनिष्ठितत्वापत्तिरिति वाच्यम् सगुप्रगृह्यत्वप्रयुक्तप्रकृतिभावस्य प्रवृत्त्याऽलुप्तप्र
गृह्यभिन्नत्वविशिष्टसवर्णाच्परत्वविशिष्टाकृत्वस्योद्देश्यतावच्छेदकत्तयानदनाक्रान्तत्वस्य सत्त्वात् प्रवृत्तत्वप्राप्तत्वज्ञानत्वं वा वैकल्पिकेऽडादिविषये सिद्धा।

नच त्वदुक्तरीत्यानन्त्यापत्तिप्रयुक्तमपरिनिष्ठितत्वमसकृत्प्रवृत्तौ बाधकमिति लभ्यते तच्च नात्रद्वित्वस्य वैकल्पिकत्वेन यावच्छक्तिद्वित्वसहित
प्रयोगस्य परिनिष्ठितत्वसंभवात् अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वरूपपरिनिष्ठितत्वमिति वाच्यम् आनन्त्यापत्तेरित्यस्य चतुः प
चादि धकारयकाराणामापत्त्या त्रिधमित्यादि त्वदुक्तमर्यादाभङ्गापत्तेरित्यर्थात् तदुक्तयन्त्रस्यापि नवलौकिकसंगतैवेति आनन्त्यापत्तिरे
वतन्त्यायबीजमिति तु नयुक्तं उदवोढामित्यादौ उदवहस्तमित्यवस्थायां झलोपादेरसिद्धत्वात् सिचि वृद्धावोकारे लक्ष्ये लक्षणस्येति न्याये
न पुनर्वृद्धिर्नेति सिचिवृद्धिरिति सूत्रस्य भाष्यविरोधात् आनन्त्यापत्तेस्तत्राभावात् एतद्भाष्यप्रामाण्येन विकारकृतभेदेन नलक्ष्यभेदाश्रयण
म् समः सुटि इति सूत्रं चास्यामानम् अन्यथा समो वा लोपमित्यनेनान्त्यलोपे पुनर्द्वित्वेन त्रिसकारकस्यापि सिद्धौ तद्वैयर्थ्यं स्पष्टमेव ॥ ॥

दोषपरिनिष्ठितत्वसिद्धये नित्येति तद्बीत्याससमाधत्ते आनन्त्यापत्तेरिति पञ्चादीत्यादिना यावच्छक्तिद्वित्वपरिग्रहः त्रिध मित्यादीति अत्रादिना त्रियमित्यस्य परिग्रहः
असकृत्प्रवृत्तेनीति यद्यप्युक्तरीत्या परिनिष्ठितत्वस्योपपत्तिर्भवति तथापि नवलौकिकसङ्गतिरेव दूषणमिति भावः खण्डनकृदादिमतं दूषयति आनन्त्यापत्तिरेवेति
तन्न्यायेति लक्ष्ये लक्षणस्कृदेव प्रवर्तेत इति न्यायेनेत्यर्थः सिचिवृद्धाविति सिचि परे वदव्रजेति वृद्धावित्यर्थः सा च वृद्धिराकाररूपा जाता ओकारे सति वहोरोदिति
वर्णस्यौकारे जात इति शेषः पुनर्वृद्धिर्न ओकारस्य पुनर्वृद्धिर्न विकारकृतभेदेनेति विकारकृतो यो व्यक्तिभेदस्तेनेत्यर्थः तस्य न्यायस्य समूलतामाह समः सुटी

अन्यथा तन्न्यायानङ्गीकारे सिद्धाविति लोपस्य प्रकरणस्थत्वेनैव सिद्धाविति अर्थः तद्वैयर्थ्यमिति समः सुटीति सूत्रस्थसकारकरूपसिद्ध्यर्थं तच्चाधुनापि सिद्धमिति भावः
लोपः पाणिनिसम्मतो नेति तु न शङ्कनीयम् अप्रतिषिद्धमनुमतं भवतीति न्यायेन तस्य पाणिनिसम्मतत्वात् शास्त्रान्तरप्रसिद्धानामिदानामाश्रयणस्य भाष्यकारसम्मत
त्वमपि अत एव मृजन्ति मार्जन्ति अमृजन्तु अमार्जन्तु इत्यादिरूपाणामिष्टान्यवैयाकरणानां मृजेरजादौ सङ्क्रमे विभाषा वृद्धिमारभन्त इति भाष्यकृतोक्तम् ॥ ॐ ॥ अ
त्योक्तं तन्न्यायबीजं इ खण्डयति इरयोरिति तद्धि सूत्रमदधमन्दध आपदत्वस्य साधनायारब्धम् तत्र धाञो लिटि तस्य कादेशे लिटस्तझयोरिति सूत्रेण रेजादेशे
तस्यानेन रे आदेशे कृते तस्येडागमे पुनरनेन रेभावो भवति रेभावविधानसामर्थ्येन तस्येडागमो नेति तु न वाच्यम् चकृद्रस्याद्यविट्प्रतिषेधविषयेन तस्य चरितार्थ
त्वात् स्वविधेयस्य रेभावस्येडागमेऽपि यदागमा इति न्यायेन रेशब्दत्वात् पुनस्तस्योद्देश्यत्वाप्राप्त्या रेभावो न स्यादिति द्विवचनं सफलमिति भावः उदवोढामित्यत्रे

इरयोरे इति सूत्रे इरयोरिति द्विवचनं तु स्वविधेयस्य स्वस्मिन्नुद्देश्यत्वाप्राप्त्यात्वा प्राप्त्ये इति न तदस्यां मानम् न च तत्र सहिवहोरोदिति तपरत्व
सामर्थ्यान्न वृद्धिरिति वाच्यम् अशब्दत्वादनन्तकालव्यापृतेरेवं तेन शब्दमर्यादयालाभात् एतेन सध्युपास्ये पूर्वं धस्य द्वित्वे जश्त्वे लक्ष्यभे
दात् पुनर्द्वित्वमित्यपास्तम् पूर्वमकारस्येदानीमोकारस्येति लक्ष्यभेदस्योदवोढामित्यादावपि सत्त्वेनोक्तभाष्यविरोधात् विकारान्यानु
पूर्व्यैकेन लक्ष्यैक्यानुमभाष्यस्यैवेति दिक् ॥ ९ सहिवहोरोदिति सूत्रे तकारोच्चारणेन पुनर्वृद्ध्याप्राप्तिरिति कस्यचिदुक्तिं खण्डयति न च तत्रेति अशब्द
त्वादिति ओदित्यत्र तपरकरणेन वृद्धिप्राप्तेः शब्दमर्यादयालाभादित्यर्थः तदुपपादयति अनन्तकालेति एतेन वक्ष्यमाणदूषणेन ननु सध्युपास्य इत्यत्र जश्त्वरू
पविकारानिरिक्तवर्णकृतानुपूर्वीकृतलक्ष्यैक्यसत्त्वात् पुनर्द्वित्वं न भविष्यतीत्याशङ्कां वारयति विकारेति समापि उदवोढामित्यत्र लक्ष्यैक्यवादिनो मतमापि सा
वच्छतपरत्वसामर्थ्यादित्यत्र दुक्तिव्यर्थेति भावः दिगिति दिगर्थस्तु स्वविधेयस्य स्वस्मिन्नुद्देश्यत्वासम्भवे बीजमुद्देश्यत्वं सिद्धस्य स्वविधेयस्य त्वसिद्धं तथा च तस्योद्देश्यत्वा
सम्भव इति तथा इरयोरे इति सूत्रसाध्ये दध्र इति प्रयोगे नास्ति रेभावे कृते तस्येडागमे कृते कालविलम्बेनोद्देश्यस्य सिद्धतया द्विवचननिर्देशाभावेऽपि रेभावस्य पुनर्वि
धानं न्वीरितार्थमिति द्विवचननिर्देशस्य लक्ष्यलक्षणस्येति न्यायबीजत्वमेव यत्रोद्देश्यतावच्छेदकविधेयतावच्छेदकधर्मैक्यं तत्र विधेयस्योद्देश्यत्वासम्भवो यथा

घटो घटइत्यादौ अवच्छेदकभेदेन तत्सम्भवस्तु घटो नीलइत्यादौ प्रसिद्ध इति केचित्तुः तन्न यत्रोद्देश्यविधेययोः सामान्यविशेषभावस्तत्रोद्देश्यविधेयभावइति नियमः घटो
घटइत्यादौ च तथात्वाभावेन तस्याभावः घटो नीलइत्यादौ तु घटः सामान्यतो नीलो विशेषइति विवक्षास्तीति सम्भवत्युद्देश्यविधेयभावः एवञ्च प्रकृते रेभावेऽकृते इडागमे तस्ये
रेत्वप्रकारकज्ञानविशेष्यत्वेपि सामान्यविशेषभावाभावेन तस्यासम्भवइत्याशयात् यदि चेडागमविशिष्टस्य रशब्देन ग्रहणम् यस्तु इष्यागमो विहितस्तद्बोधकेन शब्देनाग
मविशिष्टस्य ग्रहणमिति तदर्थात् तथा चरेत्वरेत्वयोः सामान्यविशेषभावसत्त्वेन ताभ्यां तन्धर्माभ्यामाश्रययोरुद्देश्यविधेयभावसम्भवइति ब्रूषे तर्हि कृतेपीडागमे तस्यादेशो न
प्राप्नोतीति इरेत्वस्यैव स्थानितावच्छेदकत्वेन शास्त्रघटकशब्देनोपस्थितत्वात् सवच्छेडागमे कृते यो धर्मः स्थानितावच्छेदकत्वेनाश्रितस्तत्प्रकारिका प्रतीतिरस्त्येवेति भवति श
त्वस्य प्रवृत्तिरिति वक्तव्यं तथा चेरेत्वेन विधेयस्यैवोद्देश्यत्वं वक्तव्यं तच्च न सम्भवतीत्याशयः यदपि रेभावोत्तरमिडागमेपि तस्ये रेशब्दस्य लाक्षणिकत्वादादेशो न स्यादतो द्विवच
ननिर्देशइति तदपि न कृतेपि द्विवचननिर्देशे प्रकृते लाक्षणिकत्वन्तापगतमिति लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वज्ञापनेनैव तस्य चारितार्थ्यस्य वक्तव्यत्वादिति न

**नुनिर्द्वित्वमचीति यत्तेनाष्टमिकवर्णद्वित्वस्थाने द्वित्वमिति तस्य भेदोस्तीति पराक्तम् पदद्वित्वस्याप्याप्त्यापत्तेः वस्तुतस्तत्राष्टद्वित्वकल्पस्थाने द्विर्व
चनमित्यन्यत्र निरूपितम् प्रत्याख्यातमिति अभ्यासप्रतिषेधोऽनर्थकश्छुरसिवावचनात् नोनूयतेनौनावेत्यादौ न दोषइति भाष्यम् ॥ ७ ॥**

नुद्वित्वमित्यादिना धकारस्य द्वित्वमादाय यन्मूले चतुष्टमुक्तन्तच्छुक्तं दकारस्य द्वित्वमादाय रूपाधिक्यस्य सम्भवादिति चेन्न द्वित्वे कर्तव्ये जश्त्वस्यासिद्धत्वात् न च पूर्वे
त्रासिद्धीयमद्वित्वइत्यसिद्धत्वस्य प्रतिषेधो भविष्यतीति वाच्यम् तस्याः परिभाषात्वेन सिद्धत्वासिद्धत्वयोः फलविशेषाय तत्रतत्रैव प्रवृत्तेः लस्य भेदसम्पादनाय खण्डनकारो
त्तामन्यायुक्तिङ्-खण्डयति सन्नेनेति वक्ष्यमाणप्रकारेण तमेव दर्शयति यदेति तथा च क्रियासमभिहारे लुनीहि लुनीहीत्येवायं लुनातीत्यादौ पुनर्द्वित्वापत्तिः क्रियासम
भिहारे द्वित्ववदीप्सायामपि पुनर्द्वित्वापत्तेश्च क्रियासमभिव्याहारवत्तस्या अप्यनेकव्यङ्ग्यत्वसम्भवादिति भावः परोक्तमभ्युपेत्य प्रतिबन्द्युत्तरमिदम् वस्तुतः पुनर्द्वित्वस्य
प्रवृत्तौ मानाभावइत्याशयेनाह वक्तव्यइति तत् आष्टमिकं वर्णद्वित्वम् अयं भावः षाष्ठद्वित्वस्थले सकाच इति षष्ठीस्थानपदार्थनिरूपितसम्बन्धार्थिकाद्व इतिशब्दस्वरूपा
त्मकसङ्ख्येयपरमिति स्थाने द्विर्वचनस्य लाभः यदा तूच्चारणेइत्यस्याध्याहारः उच्चारणक्रियायाः कर्मसाकाङ्क्षत्वादुपस्थितस्य द्वेइत्यस्यैव कर्मसमर्पकत्वं तदा द्विः प्र

योगो द्विर्वचनमिति पक्षस्य लाभः तत्र कारकविभक्तेर्न्याय्यत्वाद्द्वितीयपक्ष एव युक्तः अधिकमन्यत्रोक्तम् यत्तु षाष्ठाष्टमिकपदद्वित्वयोर्नित्यतया क्वचित्तस्य विश्रामो ऽवश्यंवा
च्यः एवञ्च लाघवेन प्रथमप्रवृत्तावेव विश्रामः कल्प्यते अन्यथा रूपानन्त्यापत्तिरिति तन्न उक्तरीत्या आनन्त्यापत्तेरभावात् सकृत्प्रवृत्त्यैव वीप्सादिद्योतनसम्भवाच्च अन्यथा
परे र्वर्जनमिति द्वित्वस्यैव कल्पिकतया तस्य पुनः प्रवृत्त्यापत्तेः केचित्तु लिटि धातोरिति सूत्रे ऽनभ्यासग्रहणाल्लक्ष्ये लक्षणस्येति न्यायो ऽनित्य इति पुनर्द्वित्वस्य प्रवृत्तिसम्भव
इति वदन्ति तन्न भाष्यविरोधात्तमेवाह अनभ्यासेति अनर्थकत्वस्य लक्षणस्य सकृत्प्रवृत्ते रिति शेषः तथा च तन्न्यायमाश्रित्याभ्यासप्रतिषेधो व्यर्थ एव स्यादिति पुनर्द्विव
वारको न कार्य इति कल्पनेन लाघवस्य सम्भवे तन्न्यायानित्यत्वे ऽभ्यासप्रतिषेधस्य ज्ञापकत्वकल्पनमपि भाष्यविरुद्धमिति भावः ननु नोनावेत्यत्र सन्यङोरिति द्वित्वेन रुपेि

एकस्यैकाचो द्वित्वे कृते एकाच्त्वव्यपदेशहेतोरचो द्विरुक्तत्वादनेन न्यायेनाचः पुनः पुनर्द्वित्वाप्राप्तावपि व्यवधानरस्यैकाच्त्वाभावेन तदप्रवृत्तौ तद्व्या
र्थमिति तदाशयः कैयटेनोक्तः कैयटादिभिरिति अत्राकृचिवीजं तु भाष्यप्रामाण्येन तेषामनभिधानं स्तोतिण्योरिति सूत्रस्थः सोषुप्यतेः सन् सोषु
पिषत इति भाष्यप्रयोगोपि छान्दसत्वात् रूपाणामानन्त्यमिति रूपाधिक्यमित्यर्थः तदाह नवत्वोक्तिरसंगतैवेति सकारद्वित्व इति अच्यरपर्यवच्छि
न्नह्रस्यलक्ष्यतत्रैकस्मिन्नकारे प्रवृत्तावपि ताद्दृशे सकारे लक्ष्यभेदात्पुनः प्रवृत्तिर्भवत्येवेति भावः एवं संप्रसारणादिविधौ यणत्वावच्छिन्नमुद्दे
श्यमिति लक्ष्यभेदाद्यावदुद्देश्यं पुनः प्रवृत्तिर्भवत्येवेति ननु संप्रसारणेऽत्यादेर्वैयर्थ्यमिति बोध्यम् तदपीति यथोद्देशपक्ष इत्यनुक्त्वा सामान्येन
यदुक्तं तदपीत्यर्थः तस्मादिति यणो मय इत्यत्रेत्यर्थः॥ एतेनेति द्वित्वापत्ति रतो ऽनभ्यासप्रतिषेध आवश्यकोऽतआह छन्दसीति न दोषः न पुनर्द्वित्वापत्तिः पु
नर्द्वित्वाप्रवृत्तौ कैयटोक्तिमप्रमाणयति एकस्यैकाच इति एतेन जुगुप्सिषत इत्यादौ पुनर्द्वित्ववारणायोनरार्थमनभ्यासस्येति कथितमिति परास्तम् उक्तरीतेः अरुचिवीज
म् कैयटादिभिरित्युक्त्या सूचितं तद्वीजमित्यर्थः भाष्यप्रामाण्येन अभ्यासप्रतिषेधो ऽनर्थक इति भाष्यप्रामाण्येन तेषाम् सन्ततादित्यादिना मूले प्रदर्शितानाम् अ
नभिधानमिति लोकइति शेषः अत एवाह सोतीत्यादि इत्याहुरिति भाष्यानुसारिण इति शेषः रूपानन्त्यस्य खण्डितत्वादाह रूपाधिक्यमिति ननु कथमुपास्यइत्यस्य लक्ष्य
स्यैकत्वात्सकारस्यापि तेन शास्त्रेण द्वित्वं स्यादत आह अच्यपीति ननूक्तन्यायाङ्गीकारेण सम्प्रसारणे सम्प्रसारणमिति सूत्रस्य वैयर्थ्यापत्तिरत आह एवमिति अत्र

सुध्युपास्य इत्यादौ बहिरङ्गलक्षणत्वादित्यनेन संयोगान्तलोपप्रवृत्तिसम्पादनमसङ्गतं तन्त्रैपादिके तत्रङ्गे त्रिपाद्यामसिद्धे तत्राप्रवृत्तेर्न्याय्यत्वादिति तदपि नेत्यादिनोक्त
मसङ्गतमतो मूलाशयमाह यथोद्देशइत्यादिना मूलेतस्मादित्यत्र यदि हेतिनिरर्थमाह यणो मयइति ॥ ॐ ॥ भाष्यकारोक्तसिद्धान्तमाह विसर्जनीयेति तत्र हिनाकुर्वे
नापीत्यादौ रेफस्य विसर्गवारणाय विसर्जनीयो ऽनुत्तरपद इति वार्त्तिककृतोक्तं तत्प्रत्याख्यानपरान्तरङ्गपरिभाषाप्रवृत्तिस्तु न युक्ता पूर्वत्रासिद्धमिति प्रत्यक्षसिद्धमित्य
तद्विरोधादतस्तद्वोक्तन्तत्र न बहिरङ्गलक्षणत्वादिति तेनोभयपक्षेपि त्रिपाद्यां बहिरङ्गपरिभाषायाः प्रवृत्तिरेव नन्वेवं सति मूलविरोधोऽत आह मूलन्त्विति परे
भाष्यतत्त्वविदः मूले समानाङ्गग्रहणमितीति अत्र समानपदमेकपरम् एवञ्च यत्र सम्प्रसारणस्याचश्चैकाङ्गावयवत्वन्तत्र पूर्वरूपमित्यर्थाश्रयणे सुध्युपास्य इत्यत्र पू
र्वरूपापत्तिर्दुर्वारैव समासोत्तरोत्पन्नसुनिमित्ताङ्गसंज्ञायाः समुदायनिष्ठतया सम्प्रसारणाचोरेकाङ्गावयवत्वस्य सत्त्वात् यदि तु सम्प्रसारणनिमित्तप्रत्ययनिमित्तैकाङ्ग
संज्ञाविशिष्टावयवत्वमित्यर्थस्तदा कारीषगन्धीपुत्र इत्यादि सिद्धिस्तत्र सम्प्रसारणस्य प्रत्ययनिमित्तकत्वाभावादङ्गशब्दस्य सम्प्रसारणनिमित्ताव्यवहितपूर्ववर्ति

विसर्जनीयसूत्रभाष्यात्तु कार्यकालपक्षेपि त्रिपाद्यां तदप्रवृत्तिरिति लभ्यते मूलन्तु कैयटानुसारेणेति परे सम्प्रसारणस्थानिकस्येति स्थानेऽज्ञा
तस्येति शेषः साक्षात्सं प्रसारणस्थानिकपूर्वरूपादेर्हल इत्यारम्भसामर्थ्याद् द्विधोः स्थानिवत्त्वाङ्गीकारेपि पूर्वरूपोत्तरं प्रवृत्तस्य हल इति दीर्घस्य
स्थानिवद्भावेन संप्रसारणत्वेमानाभाव इति भावः द्विधेति ॥ १ समुदायपरत्वमेव वक्तव्यम् नन्वेवमपि हूतो जीन इत्यादौ पूर्वोत्तरं दीर्घो न भविष्यति सं

सारणत्वस्य स्थान्यलूधर्मतया तदादेशे पूर्वरूपनिष्पन्नेऽतिदेशेन वक्तुमशक्यत्वादिति वाच्यम् हल इति सूत्रारम्भसामर्थ्यात्तत्रानल्विधाविति निषेधाप्रवृत्तेः न चैव
मपि शकहूयमित्यादौ पुनः पूर्वरूपापत्तिवारणाय समानाङ्गग्रहणमिति वार्त्तिकवैयर्थ्यमेव पूर्वरूपनिष्पन्ननिष्ठस्यातिदेशालभ्यं सम्प्रसारणत्वस्यालधर्मतया त
दादेशे दीर्घे अतिदेशेन तस्य वक्तुमशक्यत्वादिति वाच्यम् अनयैव रीत्या वार्त्तिकानारम्भस्य भाष्यकाराभिप्रेतत्वाद तत्राह सम्प्रसारणस्थानिकस्येति ननु सम्प्रसा
रणस्थानिकस्य तत्त्वं हल इति सूत्रेण ज्ञापितमेवेत्यत आह स्थानेऽज्ञातस्येति ननु हल इति सूत्रस्य सम्प्रसारणत्वस्यालधर्मत्वेपि तदतिदेशकत्वे ऽनल्विधाविति निषे
धेन प्रवृत्तेरित्यर्थे ज्ञापकत्वमेवास्त्वित्यत आह साक्षादिति अल्विधाविति दीर्घ इत्यर्थः कर्त्तव्य इति शेषः एतावतैव हल इति सूत्रस्य चारितार्थ्यमिति भावः नन्वेवं

सति सुध्युपास्य इत्यादौ सुधिन्त्यादि इति स्थिते ऽपवादत्वाद् हल इति दीर्घे पूर्वरूपं न स्यात् हल इति सूत्रस्य कृतार्थत्वेन यापि ल्विधावपि स्थानित्वद्भावेन सम्प्रसारणादेशस्य स
म्प्रसारणत्वमित्यर्थज्ञापकत्वासम्भवात् सम्प्रसारणाच्चेत्यस्य विध्याधेयत्र चारितार्थ्यादिति चेन्न निरूतम् इत्युत्तमित्यस्य सुप्रमित्यादौ सिद्धये ऽङ्गस्येत्यस्यावृत्त्या ऽङ्गा
वयवाद् हलः परं यत्सम्प्रसारणं तदन्तस्याङ्गस्य दीर्घ इत्यर्थे स्वाश्रयेण दीर्घस्य पूर्वरूपात्प्राक् प्रवृत्त्यसम्भवात् ननु धात्वेशा इत्यत्र रेफस्यानचीति सूत्रेण द्वित्वाप्राप्त्या
द्वित्वमित्यसङ्गतमत आह ॥ ॐ ॥ यणो मय इति मय इति पञ्चमीति पक्ष इति शेषः नन्वेवमपि यत्र रेफस्य द्वित्वनिमित्तत्वप्रसक्तिस्तु भय इत्यादौ यथा तत्रास्तु।
स्थानि त्वबाधो धात्वेशा इत्यादौ च न तथेति कथम्बाध इत्यत आह तथा चेति अस्मिन्प्रकरणे स्थानित्वबाधे च भाष्यमिति हयवरट्सूत्रस्थमित्यादिः आद्यदोषवा
णायाह रेफोष्मणामिति एतेन यरोऽनुनासिक इति सूत्रे ऽनुस्वारस्य ययीति सूत्रात्सवर्णयदापकर्षो ध्वनितः तथा च सवर्णो ऽनुनासिको नास्तीत्यर्थः यथाश्रुते रे

यणो मय इति भाष्ये त्यर्थः द्वित्वप्रकरणे इति तथा च भाष्ये रेफस्यानुनासिकपरसवर्णद्विर्वचनप्रतिषेधो वक्तव्यः स्वर्नयति कुण्डं रथेन भद्रहृदः
न वक्तव्यः रेफोष्मणां सवर्णा न सन्तीति नैमित्तिको कार्यिणो किं तर्हि निमित्तं द्विर्वचनस्येति अन्यथा वचनारम्भे द्विर्वचनमात्रस्य निषेधेन फलभेदेप्रया
ख्यानानापत्तेः साक्षाच्छ्रुतेन विशेषशब्दबोधितेन यत्र यत्र द्वित्वनिमित्तत्वं तत्र सर्वत्र वाक्यान्तरेणानचीत्यनेन कार्यित्वप्रसक्तेरनवकाशेन तेन
भाष्यप्रामाण्यात्सामान्यतः सर्वद्वित्वकार्यित्वं बाध्यत इति भावः न चाज्झल इति ॥ ९ फस्य रेफस्य सवर्ण इति रेफस्य सवर्णो नास्तीत्यसङ्गतमेव स्यात् अतः सव

म द्विष्मानित्यत्र षस्य नानुनासिकः एतेनानुस्वारस्य ययीति सूत्रे यरोऽनुनासिक इति सूत्रादनुनासिक इत्यस्य सम्बन्धश्च ध्वनितो ऽत एव द्वितीयातिप्रसङ्गवारणप्रकारो वि।
शिष्यात्रानोपपादितः तृतीयातिप्रसङ्गवारणायाह नेमाविति रहाविति अत्र हकारोपादानं दृष्टान्तत्वप्रदर्शनाय यथा हस्य कार्यित्वं न तथा रेफस्यापि कार्यित्वं नेति तात्प
र्यम् अन्यथा एतत्प्रकरणस्थवचनसामान्यप्राप्तद्विर्वचनस्य बाधानङ्गीकारे ननु कार्यित्वमपि यण् यर् शब्दाभ्यां साक्षाच्छ्रुतमेवेत्यत आह विशेषेति अनचीत्यनेन
अन चि चेति सूत्रेण एतेनानचीत्यस्य निषेधबोधकतया ऽनचीत्यसङ्गतमिति परास्तम् अनवकाशेनेत्यनेन निमित्तत्वस्यापवादत्वात्कार्यित्वबाधकतावोधिता न चानची
त्यस्याचो रहाभ्यामित्यत्र चरितार्थ्यात्कथम्बाधकतेति वाच्यम् तावतापि तत्प्राप्तियोग्ये विषये ऽचारितार्थ्यस्यापवादत्वबीजस्यानपायात् अनचीत्यस्यैकान्विकतया।

दित्वाभावपक्षे चारितार्थ्यात्कथं इक्पयित्वस्य निमित्तत्वेन बाध इति शङ्काया नावकाशः इदम् ज्ञापकाश्रयणम् व्यक्तिपक्षेऽप्यावश्यकमिति अपिना जातिपक्षसमुच्चयः अय
म्भावः व्यक्तिपक्षे प्रतिलक्ष्यं लक्षणानां भेदेन यणादिकार्यविधायकशास्त्रस्थले सर्वलक्ष्यसङ्ग्रहाय तत्त्वेनोच्चारणमित्यावश्यकमेवं च श्री श इत्यादिविषयकमपि यण्
विधायकशास्त्रं स्यादित्यनिष्टापत्तिरतोऽपवादशास्त्रविषयतालिङ्गविषयकबाध्यशास्त्रस्याकल्पनमेवेति यथा तथा यणादेशस्यानित्वमिको विशेषणतः क्ङिन्निमित्तस्य निमि
त्तत्वाकल्पनमपि स्यात्तथा च सुध्युपास्य इत्यादिलक्ष्याणामसिद्ध्यापत्तिः तद्काममपि निमित्तत्वं यणादेशे ऽस्तीत्यत्र तस्मादित्युत्तरस्येत्यादीनां ज्ञापकत्वमेव तथा जातिपक्षेऽपि
लक्षणस्य सर्वविषयकत्वमतएव भाष्ये तानन्नाक्षणं इत्यादित्यत्र सर्वं ब्राह्मणविषयकत्वसिद्धये जातिपक्षाश्रयणमेव दर्शितमेवं च श्री श विषयकत्वं यणादेशविधा
यकशास्त्रे नास्तीति कल्पनीयमन्यथा तत्र विकल्पापत्तिः एवमिकां निमित्तत्वाकल्पनमपि स्यादतो ज्ञापकत्वमावश्यकमिति एतदेव दर्शयति अन्यथेति अन्य॥

इदं च व्यक्तिपक्षेऽप्यावश्यकम् अन्यथाऽकः सवर्णे इत्येतस्य पर्यालोचनया श्रीशइत्यादिविषयकयण् शास्त्राभावकल्पनवत् संग्राहकवाक्ये इकः स्था
नित्वश्रवणात्तद्विषयकलक्षणाभावस्यैव कल्पनं स्यादिति स्पष्टमिको यण चीत्यत्र कैयटे कैयट इति अत्रारुचिवीजं तु अत्र स्थानित्वस्यानवकाश
त्वम् मध्वत्रेत्यत्र निमित्तत्वाप्राप्त्या तत्र स्थानित्वस्य चारितार्थ्यात्तक्रकौण्डिन्यन्यायोऽप्यनवकाशविषय एवेति स्पष्टं तद्धि तेषु चामादेरिति सूत्रे
भाष्ये मदप्राप्तियोग्यविषयाभावरूपं चानवकाशत्वमेतद्विषये ॥ ((याज्ञापकानाश्रयणे तद्विषयकेति इको निमित्तत्वविषयकेत्यर्थः अन्तरयण विषयेत्

त्र इकि चारितार्थ्यादिति एतेन विषयेयेन नाप्राप्तिन्यायविषयतायाः अभावेनेकां निमित्तत्वबाधप्रसक्त्यापक्षद्वयेऽपि ज्ञापकानुपयोग एवेति ध्वनितम् नन्वत्र
येन नाप्राप्तिन्यायस्य सञ्चारो मया न क्रियते किन्तु तक्रकौण्डिन्यन्यायविषयतायाः सत्वेन तेन न्यायेन बाध उच्यत इत्यत आह तक्रेति स्पष्टमिति तत्र हि कौण्डिन्यो जा
गत इत्यादावन्योपस्थित्या निषेधमुक्तोक्तन्यायेन तयोर्बाधमाशङ्क्य सोऽप्रत्ययं इत्यत्रादिदृष्टे चारितार्थ्ये तन्न्यायेन तयोरादिवृद्ध्या बाधस्याप्राप्तिमुपन्यस्यानुशति
कादिगणे पुष्करसच्छब्दपाठस्यादिवृद्धिविषये तयोरप्रवृत्तौ ज्ञापकतोक्ता एतेन तत्र यथोक्तन्यायेन नास्ति बाधस्तत्रैव ह्यैकतयोः सामान्यविशेषभावसत्त्वेऽपि निमि
त्तत्वस्थानित्वयोरुक्तन्यायेन बाध्यबाधकभावाभाव इति भावः एतद्विषये तक्रकौण्डिन्यन्यायविषये तथा च तक्रकौण्डिन्यन्यायमूलकस्यैव येन नाप्राप्तिन्याय

परोक्तमुपन्यस्य खण्डयति नचेति विधेयविषय एवेति तथा चोभयोरविधेयत्वान्न तक्रकौण्डिन्यन्यायसञ्चारः व्यवहारादिति तद्धितेष्वनामादेरिति भाष्यमूलकादि
त्यादिः अपूर्वबोध्यत्वेन अज्ञातज्ञाप्यत्वेनत्वापि नाकाङ्क्षितस्य सङ्ग्रहः तत्त्वम् निमित्तत्वङ्कार्यित्वञ्च अत्र केचित् सर्वं सति मन्निवृद्धीति सूत्रे राजपूजित इत्यत्र भूते क्तो
न्तेन तृतीयान्तस्य समास इत्युक्तम् सा चोक्तिर्भूतवर्तमानकालयोर्भेदं हृदि निधाय तत्र मत्यादिबोधकधातुविहितक्तयोर्न्यवर्तमानकालस्य विशेषत उक्तत्वेन सामा
न्यत उक्तस्य भूतकालस्य बाधः सम्भाव्यते तेनेत्यधिकारे उपज्ञात इति निर्देशेन कालयोर्बाध्यबाधकभावाभाव इत्युक्तं तत्स्थानेन निर्देशः ..... विषय एव विशेषत उ
क्तस्य सामान्यतो विधित बाधकत्वेति लौकिकन्यायस्य सञ्चार इति सामान्यतो ज्ञाप्यत इति तात्पर्यम् तत्र परे त्वाहुः लौकिकेन तेन न्यायेन बाध इति वक्तुमप्यशक्यम् यु
गपद्विवक्षायां लौकिकन्यायसञ्चारः सा चेह विरुद्धत्वान्नास्ति यथा इन्द्रापवादस्यैकशेष इति व्यवहारो यदीदन्तस्यान्तदाचार्य इति सूत्रस्थ वर्तते इति रीत्या साध्यते

न च तक्रकौण्डिन्यन्यायो विधेयविषय एव विशेषविहितेन सामान्यविहितं बाध्यत इत्यभियुक्तव्यवहारादिति वाच्यम् अपूर्वबोध्यत्वेन निमित्त
त्वादेरपि विधेयत्वात् न हि निमित्तत्वमपि मानान्तरसिद्धमिति दिक् एकमेवेति यण्तन्त्रावर्तिपरो हि तत्र प्रयुक्तरूपभेदाभावादिति भावः
वकारस्तु नात्र अन्यूनानतिरिक्तस्थानिकादेशलाभेनाधिकस्थानकस्याप्रवृत्तेः लण्सूत्रस्थभाष्यविरोधेन इदानामनभिधानमिति तत्त्वम्॥

या कालयोर्वक्तुमशक्य इत्युक्तं तदेतेन बोध्यते तत्रापि मत्यादिसम्बन्धित्वेन वर्तमानकालस्यापूर्वबोध्यत्वेन तत्त्वस्य सत्त्वेन तस्य बाधकत्वसम्भवादिति तन्न कालाना
मन्यतरयोरत्यतया विधेयत्वात् न च तत्र क्तप्रत्ययवत्कालस्याप्यपूर्वबोध्यत्वेन तत्त्वम् तस्य सामान्यतो विशेषतश्च लोकसिद्धत्वस्य कालोपसर्जने चतुर्थ्यमित्यनेन
प्रतिपादितत्वात् कालयोर्युगपद्विवक्षायाः कर्तुमशक्यत्वेन बाध्यबाधकभावाप्रसक्त्यादि इति दिगिति ननु विसर्गस्य हित्वेनाधिक्याल्लाकृतिरिति चेन्न एकमेवेति मूला
सङ्गतिरत आह यणित्यादि तथा च यथासुध्युपास्य इत्यादौ यण् तत्राप्यावर्तियरो हि तत्कृताधिक्यं तत्रात्र नास्तीति प्रतिपादने तात्पर्यमिति बोध्यम् वकारस्य दन्त्योष्ठ
त्वात् स्थानकृतसादृश्यमादाय तस्यापि शङ्कां वारयति वकारस्त्विति समपदोपादानेनातिशयितमान्तर्यं यत्र तस्य प्रवृत्तिर्भवेदिति तात्पर्यम् सर्वस्थानेन्तरतम इति सू
त्रभाष्ये किमुदाहरणमिको यणचि दध्यत्र मध्वत्र यथासङ्ख्येनाप्येतत्सिद्धमिति उक्तम् तेनाप्यत्र वकाराभावो बोध्यः इदानास्तु स्थानिकलादेशयुक्ता

स्नार्षप्रयोगाणाम् तत्र भाष्येन पदान्ताः परेण सन्नीत्युक्तम् आर्षप्रयोगमादाय कोयणचीति सूत्रे यथासङ्ख्यनिर्वाहः ॥ ः ॥ आर्त्तीं इति प्रयोगे आर्त्तीं इमे दीर्घ इति
वैदिकप्रयोगानुकरणम् तत्र निप्रत्ययो बाहुलकात् दन्तान्कादिकारादिति ङीषू द्विवचनम् काद् सत्त्वात् पूर्वसवर्णदीर्घत्वम् उच्यत इति तद्भाष्येन तथा व्याख्यानात् लौकि
कप्रयोगेत्वाह आर्तिरिति वाचनिकत्वम् वार्तिककृता वचनरूपेण पठितत्वम् यत्तु येन विधिरिति सूत्रे आदिरन्त्येनेति सूत्रादादिरित्यस्येत्यस्य चानुवृत्तिः इत्यस्य इत्या
लिला क्षणिकम् सप्तम्यन्तत्वेन तस्य विपरिणामः एवं येनेत्यस्यापि सप्तम्या विपरिणामः वाक्यभेदश्चाश्रयणीयः विधिरित्यस्यावृत्तिश्चेति यस्मिन् विधिस्तदादि
विधिर्बोध्य इत्यस्य लाभ इति तन्न भाष्यानुक्तत्वात् किन्त्वक्लेशेन तादृशार्थकल्पनापेक्षया वाचनिकत्वकल्पने लाघवमिति भावः इति भाव इति प्राचीनानुसारिणां सू
लकारस्येत्यादिः एतेन पूर्वसूत्रपर्यालोचनस्यावश्यकत्वेपि तज्जन्यवाक्यार्थबोधस्यातेनोपजुतस्य लक्ष्यसंस्कारकवाक्यान्तरस्य पर्यालोचनन्नावश्यकमित्यादी

आर्त्नीति आङ्पूर्वादृतेर्बाहुलकान्निप्रत्ययः धनुषः कोटी उच्येते आर्त्तिः पीडा धनुःकोट्योरित्यमरे तकाररहितः पाठो दृश्यते आर्तिरितितत्र पाठा
न्तरम् वार्तिकेत्यनेन तस्य वाचनिकत्वसूचितम् पूर्वसूत्रेऽपि वा तज्ज्ञानाय तत्पर्यालोचनस्यावश्यकत्वादिति भावः अर्धेस्येति न च द्वित्वभि
न्ने पूर्वत्र कर्तव्ये परमसिद्धमित्यर्थकेन पूर्वत्रासिद्धमद्वित्वे इत्यनेन धातुथकारस्य जश्त्वं दस्येति वक्तुमुचितमिति वाच्यम् फले विशेषाभावेन
तदुदाहरणात् न ह्यत्र जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषोस्ति तदनन्तरजश्त्वप्रवृत्तेः सत्त्वात् यत्र पूर्वत्रासिद्धप्रवृत्तौ तन्निषेधे वा फले विशेषः
तोरिति वक्तव्यमिति वार्तिकमूलकाद्व्याख्यानादेतादृशार्थलाभ इति ग्रन्थेनास्य विरोध इति परास्तम् अत्र ((सन्नैवास्याः परिभाषात्वेन प्रवृत्तिरित्यन्यत्र विस्तरः य
स्याः पूर्वत्रासिद्धीयमद्वित्व इत्यस्याः यत्तु द्वित्वे परसवर्णत्वं सिद्धवक्तव्यम् सय्यन्नेत्यादौ त्रियकारकत्वार्थमिति भाष्यवार्तिकप्रामाण्ये वर्णद्वित्वेऽस्याः प्रवृत्तिर्ने अ
तस्सवर्णत्वं द्वित्वस्वतुर्णामिति परममूलसङ्गतिरिति तन्न वाक् वाक्कु इति भाष्यीयप्रयोगासङ्गतेः अत्र चस्य कुत्वे जश्त्वे द्वित्वे च [illegible] चर्त्वस्यासिद्धत्वेन द्वित्वे
परस्य गस्य चर्त्वे तस्यासिद्धत्वेन स्वपरत्वाभावेन पूर्वगकारस्य चर्त्वोपप्राप्तौ गस्यैव श्रवणापत्तेः न चावसाने चर्त्वस्य जश्त्वापवादतया कस्यैव द्वित्वमिति वाच्यम् अपवा
दप्रवृत्तिबाधकद्वित्वविषयता सत्त्वेन चर्त्वोपप्रवृत्तेः रामावित्यादौ वृद्ध्यपवादपूर्वसवर्णदीर्घविषयतायाः सत्त्वेन निषेधात्मावृद्धेरप्रवृत्तिवत् पूर्वत्रासिद्धीयमद्वित्वे इति

शा. र.
टी. भै.
४९

रत्नाकरोक्ङिः स्वएडयिमुंतन्मतमनुवदन्नाह नचेति औरिति गोनोणिदिति सिद्धस्य रूपस्यायं लेशः प्रातिपदिकस्वरूपन्तु ओइति गुणेइति तदा सवर्णपरत्वाभावेन वृद्धेर
प्राप्तेः तद्व्याख्येनेत्यो माङोश्चेति पररूपस्याप्यनङिति भावः अनभिधानादिति सिचिवृद्धिरिति सूत्रस्थकैयटोक्तिरत्र मानम् अनभिधाने भाष्यसम्मत्यभावादाह किन्त्विति
सामर्थ्येन एचीत्यस्य ऊङ्शोपि सम्बन्धे नैजादावेवोठि वृद्धिरिति वाक्यार्थसामर्थ्येन लक्ष्यानुरोधेनेति ऊङ् शोप्येचीत्यस्य सम्बन्धे नैजादावेवोठि वृद्धिर्वाकारेयेन नाप्राप्तन्याय
येनओमाङोश्चेत्येतद्बाधेनात्रैव स्यान्नतु विम्बोष्ठ इत्यादाविति तादृशलक्ष्यसिद्ध्यनुरोधेनेत्यर्थः असम्बन्धेति ऊङ्शाद्युत्यादि वार्णेति वाक्यसंस्कारपक्षे इदम् मूलेएक

असंभवादिति नच आत्रवृत्तीति औञ्जनस्य ओञ्जेनोरित्यादावेवैः कावृत्त्या उणेपरादिवत्त्वे नोठ त्वात्संभवोस्ति नच वृद्धिरेचीति सिद्धिरोमाङोश्च
त्वेनवाधादेनन्तु सामर्थ्यान्तद्वाध्यतइति वाच्यम् तस्यानभिधानादित्याशयात् किन्त्व ओमाङोरित्येतद्बाधकल्पनापेक्षया सामर्थ्येन लक्ष्यानुरो
धेनचैचीत्यस्यासंबंधकल्पनैवोचिता इत्यन्तेइति वृद्धेः पूर्वमित्यादिः वार्णपरिभाषयेति भावः अनन्यत्वादिति नचाचः परस्मिन्निति स्थानिवत्त्वेनेजा
दित्वमपिसुलभम् पूर्वपरविधित्वात् पूर्वस्यैव विधौहिसः मध्येपवादन्यायेनाक्रुणंवाधित्वैवस्यात् उपेधन इत्यादौगुणपरत्वात्पररूपमेवस्यादि
तिभावः संयोगइति एधतेरादेशाभावेन स्थानिवत्त्वेन तत्त्वम् नस्यादिति नच णेरनिटीत्यस्य ण्यन्तस्याङ्गस्यलोपे इत्यर्थः सचालोन्त्यपरिभाष
यान्त्यस्य सवंच प्रकृतेनदोषः सर्वे सर्वपदादेशादिति न्यायेनैधीत्यस्यैधिधि इत्यादेशसत्वेन स्थानिनोण्यन्ततया ऽऽदेशेपिस्थानिवद्भावेन ण्यन्त
त्वस्य सुलभत्वादिति वाच्यम् अलोन्त्यपरिभाषयानिर्दिश्यमानपरिभाषया च णेरनिटीत्यस्य ण्यन्तस्याङ्गस्यान्त्योपो निर्दिश्यमानोणिस्तस्य लोपइ
त्यर्थे नदोषात्॥
देशविकृतस्येति एकदेशेन विकृतस्येत्यर्थः अनन्यत्वादिति स्थानिवद्भावेनेत्यादिः नन्वत्रैकदेशविकृतमनन्यवदिति परिभाषा[illegible]
धिकविकारसत्वात् राजादित्वन्तु नस्थानिवद्भावेन अल्विधित्वादिति भावः एचीत्यस्यैधत्यंशोसम्बन्धेपि स्थानिवद्भावेन माभवान्[illegible] दिधर्दि यत्र वृद्धिवारणासम्भवइत्या
शङ्कावारयति नचेत्यादिना पररूपमेवेति तथाचेष्टानिष्टव्यवस्थायाअसिद्धिरिति भावः ननु दृष्टान्ते प्रकृतिप्रत्ययसमुदायस्यादेशो दार्ष्टान्तिके तु न तथेति वैषम्यम्
किन्त्वस्थानिवद्भावे नैधतित्वमपि वक्तुं शक्यमत आह एधतेरिति तत्त्वम् एधमित्यम् दृष्टान्ते प्रकृतिप्रत्ययसमुदायस्यादेश इहतु प्रकृत्यवयवधकारप्रत्ययघटितस

न्त्वन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इति न्यायविरोधादिति विग्रह इत्यसङ्गतमत आह समस्यमानेति वाप्यामश्वो वाप्यश्व इत्यादौ यथास्वार्थमाह अन्तइतीति ना
त्वसिद्धपरिभाषया जातस्य तत्कालप्रासिकस्य चासिद्धत्वप्रतिपादनेनान्तरङ्गेणेत्ययुक्तमत आह प्रथमेति समासे संहिताया नित्यत्वेन द्वन्त्रत्ययोरुत्पत्तिपर्यन्तमविलम्बात्
त्मवादिति भावः नन्वकृतव्यूहपरिभाषया प्रथमतो गुणो न भविष्यतीत्यत आह समर्थग्रहणेनेति इदमकृतव्यूहपरिभाषायाः सत्ववादिमतेनैव स्तुतः सा नास्तीत्याशये
नाह तस्याइति तद्घटकेति प्रातिपदिकादित्यर्थः समुदायस्तद्घटकेत्यर्थः कल्पितेनापीति समासे समुदायस्यैवार्थवत्त्वम् अवयवस्य कल्पितमन्तत्वमत्र नास्तीत्यर्थः

विग्रहइति समस्यमानपदस्वरूपबोधकमित्यर्थः तत्तद्नाविति अन्तरनिठनाविति विहितेइत्यर्थः अंतरंगेणेति प्रथमप्रवृत्तिकेनेत्यर्थः समर्थग्र
हणेनकृतसंधिकार्यादेवतद्धितोत्पत्त्यातद्विषये कृतव्यूहपरिभाषायाअप्रवृत्तेस्तस्याअसत्त्वाच्चेतिभावः चरितार्थत्वादिति तद्वद्रकोहिनीशब्दस्यक
ल्पितार्थेनाप्यर्थवत्त्वाभावेनतत्रैतत्सूत्राप्रवृत्तेरेत्यपिबोध्यम् ज्ञापकमितीति आजोराजेरपिसत्त्वेनराजिग्रहणेनैवसिद्धेस्तदर्थंसज्ज्ञापकमिति
भावः तथाभूतस्यैवेति फणादेरेवेत्यर्थः राजृइतिपठित्वेति नचैवमनुबंधनिर्देशाद्राराशीत्यादौ यङ्लुकिषत्वंनस्यादितिवाच्यम् यङ्लुकश्छा
दसत्वात् श्तिपाशपेत्यस्यानित्यत्वाच्च भाष्येतस्या नुक्तत्वाच्च एतेनफणादित्वेनग्रहणे गणेनग्रहणाद्यङ्लुकिनस्यादित्यपास्तम् गणेननिर्देशा
भावाच्च राड्विभ्राडित्यादौराजृत्वंतु भूतपूर्वगत्या राशब्दपूर्वकजृधातोः क्विपिनिष्पन्नराजृशब्देनप्रसक्तेनषत्वम् सूत्रेराजृइत्यनुना
सिकस्यपाठात् रूपठत्वाच्चेति एवंचभ्राजभासेतिसूत्रेभ्राजिग्रहणमपिनकर्तव्यम् सौरदेवोक्तमिति ॥ (८ इत्यन्ययस्यसमासादन्यत्रेतिभावः एतत्सूत्रे

नचास्मादहित्यामितिवार्तिकन्तुसूत्रमित्येतत्सूत्रमित्यसङ्गतमितिवाच्यम् तद्धितप्रकरणारम्भेशब्दरत्नेराबोपपादयिष्यमाणत्वात् अश्नोतेरपीति अत्रापिशब्दो
भ्राजादिविषयस्यानन्तरंद्रष्टव्यः परोक्तन्दूषणमुद्धर्तुमाह नचैवमिति छान्दसत्वादिति एतेनश्तिपाशयेतिपरिभाषासर्वैच्छन्दसिसंबोधयतीत्(व्याप्तिकत्वेनतदप्रवृत्तिरि
तिध्वनितम् अनित्यत्वात् गुणोयङ्लुकोरितिसूत्रेणयङ्लुकिगुणविधानेनानित्यत्वात् सिद्धान्तरीत्याह भाष्येति एतेनतस्याअसत्त्वेनयङ्लुकिराराशीत्यादौ निर्दे
शाभावादितियत्रगणबोधकशब्दस्यसाक्षादुच्चारणन्तत्रैवगणेननिर्दिष्टमिति व्यवहारादित्याशयः अत्रहिफणादित्वङ्ग्राह्यतावच्छेदकन्नतुग्राहकतावच्छेदकम् न
टुभ्राजृ भ्राजइतिधातुद्वयेनसिद्धत्वात् ५ नु-मूल ॥

यराजत्वमेव भूतपूर्वगत्येति अनुबन्धसहितस्यानिर्देशे
सर्वत्र भूतपूर्वस्यगतिरेवसुप्रसिद्धेति भावः साम्याति

कस्य सत्वे भूतपूर्वगत्याश्रयणमशक्यमित्याशयेनाह स्वामन्यकतांवारयति राशब्दपूर्वकेति राजीतिरा: तन्त्रणातीत्यर्थः क्विपीति अत्रक्विप्शब्दः क्विविवाचरतीत्यर्थपर
त्वेन विवृपरः तेनैतत्तु कोनतु किंवद्धि रङ्‌ स्यद्रस्तत्वेस्यासिद्धत्वमपिबोध्यम् पाठादिति लाक्षणिकत्वाच्चेत्यपि बोध्यम् आवश्यकश्चानुनासिकपाठः अन्यथाराजइति
सूत्रे पाठसामर्थ्यादिहैव लाक्षणिकत्वापत्त्यात् ननुराडित्यादौ राजइति स्वरूपानुपलम्भात् अत्र सोरदेवात् मिति विशेषोपादानस्थले आवश्यकमिति भ्राजन्तगत राजेर
थानुत्वात्तस्य ग्रहणसम्भवादितिभावः नकारानुबन्धत्वमिति तेन राजग्रहणेन तद्ग्रहणासम्भवइति शेषः यत्र भाष्यकारपठितवचनमिति रुद्धार्थस्य प्रसक्तिस्तत्रैव भाष्य
विरुद्धमिति व्यवहारस्तथात्वत्र नास्तीत्याशयेनाह तदनुक्तेति नन्वोदूगुणइत्यादौ स्थानिषष्ठ्यानिर्देशात्कथङ्कतार्थतेत्यतआह पूर्वपरयोरिति अपिशब्दः प्रत्येकपरः

अत्रारुचिबीजन्तु अश्वादि साहचर्येण धातुसंज्ञक राजेर्ग्रहणंस्यादिति भ्राजिग्रहणस्यावश्यकत्वमिति किञ्च भ्राजं तर्गतराजेर्नकारानुबन्ध
त्वन्नस्य समुदायानुबन्धत्वात् भाष्यादिविरुद्धमिति तदनुक्तत्वादितिभावः गतार्थमिदमिति पूर्वपरयोरिति द्विवचननिर्देशेनोभयोरपि प्रत्येकं स्थानि
त्वादितिभावः एवञ्च प्राच्छेतीत्यादौ विसर्गवारणाय ज्ञापकाश्रयणमपि न कार्यम् यतस्तत्र स्थानिवत्वेन रेफान्ते पदत्वं दुर्लभं तस्य तत्स्थानिध
र्मत्वाभावात् आनुमानिकवचनकल्पनया प्रश्नच्छेत्यस्य प्राक्ष्यादेशोनुसमुदाये प्रशब्दधर्माणां स्थानिवत्वेन लाभेपि प्रारित्यत्र मद्लाभेन रेफे पदां
तत्वस्य दुर्लभत्वादिति बोध्यम् नवेति वर्णाश्रयेविधावन्तादिवद्भावप्रतिषेधो वाच्य इत्यस्य प्रत्याख्यानमेतत् न वा वक्तव्यस्यादृष्यस्य वर्णमात्र इतिध
र्मस्यानेनातिदेशाभावादितितदर्थः पूर्वस्य परस्य च समुदायस्यांतादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां येव्यवहाराः प्रातिपदिकत्वसुबन्तत्वप्रत्ययत्वाद
(( यस्यैकान्तैकादेशस्यापि भवन्तीत्यर्थात्
योजनीयः समुदायस्यैव स्थानित्वाभिमतत्वे समादारद्वन्द्वेनैव निर्दिशेदिति भावः अतएवक्त्रन्द्विरित्यादौ रपरत्वसिद्धिः उभ
योः पूर्वपरयोः इति भावइति मूलकारस्येति शेषः एवञ्च स्थानिवद्भावाश्रयणेच ज्ञापकाश्रयणमिति उभयथापीति निर्देशस्य ज्ञापकत्वाश्रयणप्रकारश्चकारादिकृत
त्वकार्यमित्यर्थः तत्स्थानिधर्मत्वाभावात् एकादेशस्य स्थानिधर्मत्वाभावात् समुदायस्य प्रत्येकञ्च स्थानित्वं न दिनतत्र पदत्वमस्तीति भावः नन्वानुमानिकवचनकल्प
नया भविष्यतीत्यत आह आनुमानिकेति मूले अन्तादिवच्चेत्यनेन वर्णमात्रइति धर्मस्यातिदेशो नास्तीत्यर्थो वार्तिकन्त्वेवा अतादृश्यातिदेशादित्युक्तन्त्विवृणोति

अनल्स्वेति वर्णमात्रवृत्तिधर्मानतिदेशादेव+१

वर्णमात्रवृत्तिधर्मोनतिदेशसाधकमाह, अनल्स्वेति उक्तोर्थः सत्तफलम् तुक्यसिद्धवचनेन ज्ञापकेनान्त्रादिशब्दौ सौत्रावुपस्थितैकादेशस्थानिपरौ पूर्वपरयोरित्यस्य चा मवृत्तिः नैवमहृ इति समुदायपरो यथा सङ्‌ग्रहस्त्वन्तेनोक्तार्थलाभः दिग्गिति दिगर्थस्तु यन्मूले ऽभिहितं स्थानिवद्भावेन गतार्थमिति तदभिप्रायवर्णनमेवैतत् तथाहि स्थानिवत्सूत्रमप्राधान्येनालाश्रयणेपि न प्रवर्तते प्रपठ्येत्यादौ यथा इदन्त्वसूत्रमप्राधान्येनालाश्रयणे षत्वतुकोरसिद्ध इति सूत्रेणुग्रहणाज्ज्ञापकाद्यद्यपि न प्रवर्तते तथापि यत्राप्राधान्येनालाश्रयणं तत्र प्रवर्तत एव अनल्स्वक्षीरपेणित्यादौ पेद्धस्यैकाच्त्वविशिष्टोत्तरपदत्वातिदेशात्तत्वस्यप्रवृत्तिः स्थानिवत्सूत्रेणानुमतस्य नातिदेशो ऽप्राधान्येनालाश्रयणात् किन्त्वनेन स्थानिनिष्ठधर्मस्यैवातिदेशो भवतीति भीइभिपइत्यादौ वर्णयोरेव स्थानिवत्त्वेन भीइतिसमुदाये धातुत्वानापत्तिरितीयङ्‌ न स्यात् आनुमानिकस्यान्यादेशभावे भीइ इति समुदायस्य भीइत्यादेशस्थानिनि समुदाये धातुत्वस्याभावत्वेन भीइत्यस्य धातुत्वमलभ्यम् आनुमानिकस्यान्यादेशभावकल्पने

अनल्स्ववतुक्यसिद्धवचनं चरितार्थम् अन्यथाधीत्येत्यादौ ह्रस्वस्य तुक्तुकसिद्धेरसिद्धवचनवैयर्थ्यस्पष्टमेव अनल्स्ववद्वाभिरित्यत्रैसूनेतिदि कृत्वेति सुखार्त इत्यत्र प्राच्छीत्यत्र चेत्यर्थः आद्येविशिष्यन्नन्तशब्दतृतीयासमाससापेक्षत्वेनान्त्ये उपसर्गत्वधातुत्वादिसापेक्षत्वेन वृद्धेर्बहिरङ्गत्वादिति भावः अचोऽनन्तर्यमिति अचोऽन्यानन्तर्यनिमित्तमित्यर्थः पश्चात्प्रवर्तमानेति अन्तरंगइत्यर्थः॥ (१) पिभीई इत्येतद्‌ घटकयोः

प्रत्येकस्थानित्वमित्यत्र मानाभावः प्रत्येकमपि स्थानित्वकल्पने तु स्वशब्दाऽस्वशब्दयोरकादेशे स्वाऽस्वशब्दे स्वत्वस्यातिदेशोपि स्यादित्यतदेरित् शब्दे स्वास्वरीत्यत्र द्धापत्तिः अस्य सूत्रस्याप्राधान्येनाश्रयणेपि प्रवृत्त्यर्थमावश्यकत्वादेव भाष्यकृता सप्रत्याख्यानमिति सन्निहितस्त्वान्तशब्दमात्रविषयकत्वन्त्वस्येत्याशयेनाह सुत्वेति धातुत्वादीत्यादिना ऽवर्णान्तरत्वस्य परिग्रहः हरदत्तसम्मतपरिभाषार्थपक्षे ऽजूहयस्यान्यानन्तर्यमिति उत्तान्तरङ्गे बहिरङ्गे चेत्यत्र वाशब्दस्य चार्थकत्वेनान्तरङ्गे बहिरङ्गत्वाचोऽनाश्रयणमित्यर्थो वाभिमतः नाद्यः अक्षद्यूरित्यत्र यणादेशे कर्तव्ये बहिरङ्गस्योठोऽसिद्धत्वनिषेधानापत्त्यादृष्टप्रयोजनासिद्धिः नान्त्यः वाशब्दोपादानस्वारस्यविरोधात् अक्षद्यूरित्यस्यासिद्धिश्चेत्यत आह अचोऽनानन्तर्यमिति सूत्रे हरदत्तपक्ष इत्यनेनारुचिः सूचिता तद्बीजन्तु पचावेदमित्यत्राप्यसिद्धमिति। परिभाषाया निषेधापत्त्येष्टार्थासिद्धिः तुक्यसिद्धत्वविधायकवचनस्यावश्यकतया ज्ञापकस्योपपन्नत्वेपि भाष्ये ऽसिद्धं बहिरङ्गमन्तरङ्गे इत्युक्तानाजानन्तर्यमि

ति वक्ष्यामीत्युक्त्वाऽन्तरङ्ग इत्यस्यानुवृत्तिसूचकास्तरास्वारस्यमिति स्तनञ्चपश्चात्प्रवर्तमान इत्युक्त्या मूलकारेणापि ध्वनितम् ॥ ॐ ॥ अत्र च परिभाषायाञ्च न
हि यथ्यर्थम् तुग्ग्रहणवैयर्थ्यम् षत्वग्रहणन्तु नज्ञापकम् कोसिचदित्यत्रेण: पूर्वपदसम्बन्धित्वेन षत्वस्याष्टुभयापेक्षत्वेनोभयोः समत्वादित्यन्यत्र स्पष्टम् अ
जानन्तर्यमित्यत्र न द्विवचनान्तेनाच्छेदन — समासः किन्त्वेकवचनान्ते नैवेत्याशयेनाह अचोऽन्यानन्तर्यमिति यत्क्रियायुक्ता इति वचने यस्य क्रियेति
समास इत्याशयेन व्याचष्टे यदर्थेति अस्यार्थस्य सप्रमाणत्वमाह भाष्यकारादिभिरिति क्रियायोगस्यैवोपसर्गसंज्ञायां गतिसंज्ञायाश्च विधानेन प्रत्यासत्त्या ।

अत्र च षत्वतुकोरसिद्ध इति सूत्रस्थं तुग्ग्रहणं ज्ञापकम् अन्यथाधीत्येत्यादौ ल्यप् प्रवृत्तये पूर्वं समासे जाते तत्र संहिताया नित्यत्वात् ल्यबु
त्पत्तिपर्यन्तमप्यसंहितावस्थाना संभवेन सकृदेशेऽत्यपि तुगपेक्षया पदद्वयसंबन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गतयाऽसिद्धत्वेन तत्ते
यर्थ्यस्पष्टमेव तत्र पश्चात्प्रवर्तमाने तु क्वचोन्यानन्तर्यनिमित्तककार्यत्वान्न दोषः अजानन्तर्यमिति अचोऽन्यानन्तर्यमित्यर्थः यत्क्रियेति यदर्थक्रि
यायुक्ता इत्यर्थः इत्युक्तत्वादिति भाष्यकारादिभिरितिशेषः उत्तरार्थमिति तेनाध्यैषीत्तमिन्दुः पचेतामित्यादिसिद्धिः अतो गुण इत्युत्तरार्थमिति क्वा॥
चित्कोऽपपाठः चिन्त्यप्रयोजनमिति न च शिवायेत्यत्राणोऽप्रगृह्यस्येत्यनुनासिकत्वेन तदनुकरणेन तः परमोमित्यस्याः माङ्क्ष्वेति पररूपेऽनुनासि॥
काभावार्थं परस्यपाद्दर्शात्तरूपंतादृशं यथा स्यादिति रूपग्रहणस्य फलं चेदमेवौत्तिन्यत्र भाष्ये कैयटे चदर्शितवानस्य तृज्वत्क्रोष्टुरिति सूत्रभाष्योक्तरीत्या गुण
स्य शब्दत्वादिवद्रूपत्वाभावेन रूपग्रहणेनाव्यावृत्तेः रूपशब्देन च श्रावणज्ञानविषयोऽवयवसंस्थानवान् अतएव तृज्वत्सूत्रेण हि स्वरो रूपवा

सार्थेस्य लाभः मेनुप्रभूतेरहः मईइत्यत्र रहितेनेन उत्तरार्थस्य परग्रहणस्य करणेन अवर्णादिति अन्य्ष्वाकस्यादिनिर्देशः अङ्ग योगात्पञ्चमीवेक ((त इत्युक्तम्॥
त्वि कत्वादाह मयाद्य भिविङ्क्षोरित्युसमासः अश्योमूगः ओमाङोश्चेति पररूपम् ततो गुणः भिन्द्युरित्यत्र ओस्य पदान्तादिति पचन्तीत्यत्राणो गुण इति पररूपम् अपपाठ इति
उक्तप्रयोगाणामसिद्धेरिति शेषः परोक्तन्दूषणमुपन्यस्य दूषयति न चेति पररूप इति भाष्य इति शेषः अनुनासिकाभावार्थमिति पूर्वसादृश्यात्प्राप्तस्यानुनासिकस्याभावा
र्थमित्यर्थः कैयटे इकोगुणेतिसूत्रस्य इति शेषः भाष्योक्तरीत्येति तत्र यथा स्वरस्य रूपत्वमेवमुक्तत्त्याऽनुनासिकत्वस्यापीति भावः गुणस्य आनुनासिक्यहृस्वत्वादेः न

यदि तु जातिसंज्ञाक्रियाभिन्नधर्ममात्रमिह रूपपदार्थस्तदा इदमपि स्यादेवेत्यत आह रूपशब्देनेति अवयवेति वर्णरूपेत्यादिः न चावयवसंस्थानवान् समुदायो न त्ववय
वा इति कथमवयवानां रूपत्वमिति वाच्यम् धर्मधर्मिणोरभेदात् एतदेव प्रकटयति वर्णरूपेत्यादिना तद्वान् अवयवसंस्थानवान् शब्दत्वादीति यथा शब्दत्वं शब्दस्य
रूपं तथा स्वरोपीत्यर्थः तत्र सङ्गतिं दर्शयति तत्रसूत्र इति एतेन रूपशब्देनानुनासिकस्य व्यावृत्तिर्न सम्भवतीति दर्शितम् स वक्तर्युक्तप्रयोगोऽनुनासिकः स्यादेवेत्यत
आह परः किङ्गुणक इति लभ्यत इति आन्तरतमपरिभाषयेति शेषः तत्र पूर्वोक्तलक्ष्ये तद्गुणकस्य परगुणकस्य शुद्धस्येति शेषः परशब्देन तस्योपस्थितौ मानमाह प

वर्णरूपावयवसंस्थानमेव शब्दस्वरूपं तदन्यैव शब्दस्य रूपमिति व्यवहारः स्वरस्तत्तद्वानिति शब्दत्वादिवत्तस शब्दस्वरूपमिति तदर्थः तत्रा
सूत्रे रूपातिदेशे स्वरा तिदेशोऽतस्यादित्युपक्रम्येद— मुक्तम् परः किङ्गुणको भवतीत्याकाङ्क्षायां स्थानिगुणक इति लभ्यते तत्रोभयगुणकस्या
संभवात् एकस्यान्यतरतमत्वात्तद्गुणकस्यैवोपस्थित्या चतस्यैव सिद्धेश्च परशब्देन पररूपशब्देन वाप्रयोगस्थस्योपस्थितस्य ग्रहणम् प्रयोगे च गु
णाभेदकस्य शास्त्रे परस्मुच्चारितो गुणोऽभेदकोऽतः प्रयोग इति परशब्देनोपस्थितानननुनासिकस्यैवैकस्यान्यतरतमत्वा द्विधिः यत्र तु स्थानिद्वयगु
णकसंभवस्तत्र ससन्नात एव स्वरितान्तस्त्रल्पण्याशब्दस्य निपातत्वादुदात्तेन आशब्देनाङोऽऽन्यैकादेशः स्त्रल्पण्यामिति स्वरित इति तस्यादित
इति सूत्रे भाष्यकैयटयोरुक्तम् एऐऔजिति सूत्रे एकादेश आद्गुण इत्यादौ दीर्घग्रहणं कर्तव्यम् त्रिमात्रचतुर्मात्राणां त्रिमात्रचतुर्मात्रा आदेशा मा
भूवन्निति वार्त्तिकव्याख्याने क्व कः सवर्णे इत्यत्र योगविभागेनैकः पूर्वपरयोरिति योनिर्दिष्टः सदीर्घ इति व्याख्याने पचंतीत्यत्र दोषमाशङ्क्यैकदेशि
नोक्तं रूपग्रहणात्परस्य यादृशं रूपमित्यादि भाष्ये तत्तु ह्रस्वस्य रूपत्वाभिमानेन ॥ ९ रशब्द इति भेदकः विभिन्नव्यवहारसम्पादकः अभेदकः आस्थिदधी

ति सूत्रे उदात्तग्रहणाज्ज्ञापकादभेदकः असम्भवादित्युक्तेः फलमाह यत्र त्विति अतएव सति सम्भवे उभयगुणकस्य स्वीकारादेव स्वरितान्तेति तत्र साधुरिति पदन्तत्वात्स्व
रितः स्त्रल्पण्यशब्दान्तः तत एव स्वरितानुदात्तयोरेकादेशोपि आन्तरतम्यात्स्वरित एव स्वरित इति स्वरितस्य समाहाररूपत्वेनोभयगुणकत्वात्सम्भवोऽस्तीति भावः
इति सूत्रभाष्य इति एतेनैतद्भाष्यप्रामाण्यादेकादेश उदात्तेनोदात्त इति सूत्रेऽनुदात्तस्येत्यनुवर्त्तत इति ध्वनितम् भाष्यान्तरविरोधपरिहारायाह एऐऔजिति एक

दर्शितेति आदुण इत्यादौ तपरत्वात्तद्धि मात्रस्य संज्ञा न तु त्रिमात्रचतुर्मात्राणामिति शङ्कायास्त्वभावेन तादृशशङ्कायां योगविभागादि प्रदर्शनमेकदेश्युक्तिरिति भावः।
अत एवाह अभिमानेनेति ॥ ॥ सिद्धान्तइति संज्ञासूत्रस्थेन परेण गुणवृद्धी इति सिद्धान्त इत्यर्थः तत्रैव सैषोऽजिति सूत्र एव एवन्तादि कैयटविरोध इत्यत आह इको
गुणेऽमीति चिन्त्य एवेति रूपशब्देनोक्तरीत्या तस्याप्याहृतेरिति शेषः स्वमते तत्र भाष्यविरोधपरिहारायाह तत्रेति खण्डनकारोक्तिं खण्डयति एतावितीति आहुरित्य
स्वरसबीजन्तु पूर्वनिपातप्रकरणस्यानित्यत्वेन तथा व्याख्यानमपि युक्तमेवेति ननु शाकदेशस्यैकत्वाद्देशविशेषाणामित्यत्र बहुवचनासङ्गतिरत आह देशविशे

सिद्धान्ते तु स्वस्यार्थमेव रूपग्रहणमिति तत्रैव भाष्ये सूचितम् इको गुण इति सूत्रस्य कैयटस्तु चिन्त्य एव तत्र हि हृकुपरिभाषाभावे जने गुणोऽनुनासिकः
स्यादिति शङ्किते परत्वेन शुद्धो भविष्यतीति भाष्ये उक्तत्वस्य मदुक्तरीत्योपपत्तेरितिदिक् तावच्छेत्नीयदेशिपाठेन च्छेदोभङ्गः तद्वदसादिति वृत्तौ भवति
ति व्याख्याने वानिक शब्दस्य पूर्वनिपातापत्तिरित्याहुः विषय इति शाकध्यादिषु इति विषयसप्तमीति भावः अत आहेति ईदृशव्याख्यानतो लब्धमाह इत्यर्थः।
आहुरिति अत्रारुचिबीजं तु वचनद्वयव्यापारो व्यर्थः पृषोदरादित्वाद्धि लोपेनैव सिद्धेरिति देशविशेषाणामिति देशविशेषशब्दस्य यौगिकत्वे तज्जा
तिवाचकत्वाभावाद्विशेषणानां चाजातेरिति तन्निषेध इति बोध्यम् कुलस्याटेति कर्मणः शेषत्वविवक्षया षष्ठी अन्यथा कर्मण्यणि कुलाटीति स्यादि
ति भावः किञ्चित्साम्येनेति तद्भावे हि भगदत्तादुच्चारितो व्यक्तशब्द एव स्यात् व्यक्तत्वं नार्थबोधजनकत्वेनापि वक्तुं शक्यमित्याहुः निरालम्बन
त्वादिति अद्रहणं तद्भिन्नव्यावृत्त्यर्थमित्यर्थस्य बालैरपि सुज्ञेयत्वेनानः किमिति प्रश्नस्य दानेमाभूदितिवटकमरुदित्यत्र च माभूदिति उत्तरस्य च।

येति मूले सकृत्समास इति समास इत्येकत्वस्य विवक्षयाऽस्यार्थस्य लाभः किञ्चित्साम्येनेति ध्वन्यन्तरव्यवच्छेदकत्वेन तद्भावे त्व ((निरालम्बनत्वादिति भावः
नुकरणे स्यैव स्याभावेऽव्यक्तशब्देऽव्यक्त शब्दानुकरणे तत्राव्यक्तत्वं कथमत आह अव्यक्तत्वञ्चेति च त्वर्थे एतेनानुकार्यस्याच्छब्दाभावेनानुकरणस्य लाभेऽ।
नुकरणस्येति चिन्त्यप्रयोजनमिति कस्यचिदुक्तिः प्रत्युक्ता निरालम्बनत्वमुपपादयति अद्ग्रहणमिति एतेनादिति प्रश्नस्याच्छब्दस्यातोभिस ऐसित्यत्रेव तत्स्वाकार
बोधकता वाच्या तथा चैतदुपादानं व्यर्थमतो गुण इत्यत्र तद्वत्त्वैव सिद्धेरित्यभिप्रायः दान्नेमाभूदित्युत्तरस्य त्वदिति तद्स्वाकारबोधकम् नाम्रेडितेति सूत्रेऽन्य

स्यानुवेस्युपादानसामर्थ्यात्किन्तु सम्प्रदायानुकरणमेव वाच्यमन्यथा च तान्तानुकरणमेव न तु दान्तानुकरणमित्यभिप्राय इति भौ लन्निः सारमित्येव निः सारमिति प्रागनुयायु
किः प्रयुक्ता बालानामपि भवदुक्तान्यस्यानुवेति ज्ञापकवशादु द्वग्रहणमद्भिन्नव्याहत्यर्थमिति ज्ञानमभिव्यक्तीत्याशयेनाह तद्भिन्नेति ॥ ० ॥ अतो गुण इति सूत्रे ऽत इत्या
स्य ह्रस्वाकारबोधकतयाऽनुवर्तमानस्याच्छब्दस्य तन्मात्रबोधकतास्यादतस्त्वाह शब्दाधिकारेति ननु जश्त्वविधायकशास्त्रस्यानुकार्यानुकरणयोरभेदे ऽपदान्तत्वान्न
प्राप्तिरतस्त्वाह अनुकार्येति ननु प्रक्रियायामपटत्यटेति पररूपोदाहरणमपटत्यटदिति तदभावस्योदाहरणमुक्तन्तत्त्वव्यक्तेति सूत्रप्राप्तियोग्यस्य तत्र कथनमिति न भवद्

शब्दाधिकारेति तदा अपुणाऽत्त्वाच्छब्दस्यान्यर्थो भविष्यतीति भावः तदापि स्यादिति एकदेशविकृतन्यायेनाच्छब्दत्वादिति भावः जश्त्वशास्त्रस्येति
अनुकार्यानुकरणयोर्भेदे पदान्ततया जश्त्वे पीत्यादिः तदसिद्धत्वेनात एव सत्त्वादिति भावः ननु पुनरत्तग्रहणाज्जश्त्वासिद्धत्वमपि बाध्यतामत
आह नाम्रेडितेति उदाहरणस्य वृत्त्यादिस्थस्यानुकार्यानुकरणयोरिति सर्वत्र जश्त्वप्राप्त्योदाहरणासम्भवाशङ्कायास्त्वेतदुक्तं तैरिति बोध्यम् उत
स्यं वेति नाम्रेडितस्यान्त्यस्य पटत् पटदिति उदाहरणपरग्रन्थे इत्यर्थः ननु सग्रन्थो जश्त्वासिद्धत्वेन योऽज्य इति चेत्तत्राह जश्त्वेति तस्यासिद्धतया पर
रूपेणैव भवितव्यमिति जश्त्वाप्रवृत्तिलक्षणो बाधः एवं च यदा जश्त्ववशादान्तत्वमिति ग्रन्थाः सङ्गतिरिति सेयमुभयतः पाशारज्जुरिति भावः दि
गिति दिगर्थस्तन्त्रपदानादित्यनुवृत्त्यैव जश्त्वविषये व्यावृत्तिसिद्धेः पुनरद्ग्रहणं व्यर्थमेव एतेन पुनरद्ग्रहणं श्रोतत्तात्त्वविवक्षाहारा जश्त्वा
विषये ऽभेदविवक्षायामेव यथा स्यान्न तु भेदविवक्षायां जश्त्वविषये इत्यर्थकमित्यपास्तम् मम तु ग्रहणं तु शब्दाधिकारानित्यत्वज्ञापनार्थमिति दिक्

क दूषणावसर इत्यत आह तन्त्यादीति मन्ते ऽनुकार्ये स्यादितदुक्ताशयम्प्रकटयति सर्वत्रेति मूले पटत्तु इतीति पाठः एतद्धि पूर्वसूत्रस्य प्राप्तियोग्यस्य प्रक्रियावाक्य
म् ननु समकक्षयोर्बाध्यबाधकभावो भवति मन्ते तु जश्त्वशास्त्रस्यासिद्धतया बाधादित्यनुपपन्नमत आह तस्यासिद्धतयेति स्याद्येति स्यश् ध्यानो बोधनार्थोद्दिः
क्रियामेतद्रूपम् खण्डनकारोक्तिनिरासायाह दिगर्थस्त्विति नन्वद्ग्रहणं तद्भिन्नेत्यादि पूर्वोक्तरीत्या व्यर्थमेवेति भवता कथन्तदुपपत्तिः क्रियते ऽतस्त्वाह ममाद्ग्रह
णमिति दिगर्थमध्ये दिगर्थस्तु मया यथा शब्दाधिकारानित्यत्वज्ञापनार्थमित्युक्तन्तथा भवतापि वक्तुं शक्यं यद्यपि तथापि प्रकाशकारादिकृता कल्पना व्यर्थैवेति ॥ ० ॥

व्यक्तिपक्षे यावद्व्यक्तीनामन्तरङ्गत्वेन ज्ञानासम्भवात्संख्याज्ञानमपि न सम्भवतीत्याशयेनाह जातिपक्षेति सूचितमिति एतेन यदि स्फावचमिति मूलकारोक्तिर्जातिपक्षा
भिप्रायात्तदापरमसूत्रस्थानन्तरमान्तर्यादितीको यणचीति सूत्रे याक्रनोक्तिः साव्यर्था यथासङ्ख्येनैवेष्टसिद्धेरिति परास्तम् तस्य ग्रन्थस्य व्यक्तिपक्षाभिप्रायकत्वात वस्तु
तस्तु जातिपक्ष एवेति तद्भाष्यस्य स्वकृतिस्त्रु वेत्येतद्भाष्येत्यर्थः प्रतीयते स तु न युक्तः तस्य विशिष्य व्याख्यानादतस्माद तुल्यास्येति अन्यथासिद्धिरिति तद्वार्तिकस्याध्यक
लान्यथासिद्धेरित्यर्थः उद्भावितेति यदि विजातीयादेशार्थं वार्तिकारम्भस्तदा ऽनयोर्विधानमात्रं स्यान्न त्वचूकार्यमित्य——नयोरचूत्वमवश्यं वाच्यमन्यथा सति दीर्घसं
ज्ञा नयोर्भविष्यतीति स्वकः सवर्णइत्यनेनैवेष्टसिद्धेर्वार्तिकवैयर्थ्यमिति रीत्योद्भावितेत्यर्थः सङः पदान्तादितिसूत्रे पदान्तादित्यस्याभावेपि पदान्तविषयकत्वङ्को

स्त्ववचमिति जातिपक्षाश्रयणे यथासंख्येनेष्टसिद्धेरिति भावः सवर्णेत्याय यथासंख्यमिको यणचीत्यत्रापि बोध्यमिति सूचितम् तद्भाष्येत्यादि
तुल्यास्यसूत्रस्य भाष्येत्यर्थः तत्र ह्यकः सवर्णइति सूत्रेणेत द्वार्तिकान्यथासिद्धिस्तद्भाविता आरंभादिति अपदान्ताच्चेत्ङसिङसोरेवेति निय
मादिति भावः उत्तरार्थमिति इको ऽसवर्णइत्याद्यर्थमित्यर्थः स्पष्टार्थमिति विभक्तौ चेत्ङसिङसोरेविति नियमशङ्कावारणार्थमिति भावः
इस्य तु वर्यति षष्ठ्या विपरिणमय्येत्यपि बोध्यम् प्रतिपदोक्तस्येति सङ्ग्रहणात्स्येति भावः प्रतिपदोक्तपरिभाषया वा वर्णग्रहणेतद प्र
वृत्तिज्ञापकस्य तदनित्यतामात्रज्ञापकत्वम् ध्वनितं चेदमोत्सूत्रे भाष्ये ॥ ९ यमत आह अपदान्ताच्चेदिति विभक्तौ चेदिति इरयइत्यादि विभक्ता
वितिनियमव्यावर्त्यम्भविष्यतीति भावः ननु तत्र सङ्ङिति पञ्चम्यन्तमत आह षष्ठेति गोरिति षष्ठ्यन्तमिति तेन सामानाधिकरण्यार्थमित्यादिः वर्णग्रहणे लक्षण
प्रतिपदोक्तपरिभाषायाश्च प्रवृत्तिर्वादिमत्ताभिप्रायेणाह आरस्येति आदिति सूत्रस्यादो भवदित्यत्र प्रवृत्तिवारणपरभाष्याद्वर्णग्रहणे पि सा प्रवर्तत इत्याशयेनाह भ
प्रतिपदोक्तेति अनित्यत्वेति तेन वर्णग्रहणेपि चेत्प्रतिपदोक्तपरिभाषाप्रवृत्तिस्तदा च कैऽ न्यादावेवेङ इति सूत्रम्प्रवर्तेत न तु हरेऽ वेत्यादाविति शङ्कायानाव
काशः वर्णग्रहणेपि प्रतिपदोक्तपरिभाषायाः प्रवृत्तिः सप्रमाणेत्याह [illegible] इदम् तत्र तत्प्रवर्तनम् तत्रहि अनदः अदः समभवददो भवदित्यत्र प्रकृ
तिभाववारणाय रश्वयोर्न स्त्रिप्रतिषेध इति वार्तिकस्यान्यथासिद्धिरनया परिभाषयाकृतानेनेदन्ध्वनितमित्यर्थः ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

नन्वेवमर्थाधिकारानुरोधादेङ इतिसूत्रेपि प्रतिपदोक्तस्यैवैङो ग्रहणं स्यादिति शाब्दोऽर्थ इत्यादौ मस्य प्रवृत्तिर्न स्यादतआह एङ इति अत्र च प्रकृतसूत्रे प्रतिप
दोक्तपरिभाषाप्रवृत्तौ च स्थानिवदित्यादि तत्र हि गोः पूर्वणित्वात्वस्वरेष्विव्यार्थस्य प्रतिषेधस्यैनामाश्रित्य प्रत्याख्यानपरभाष्येत्यर्थः ननु विभक्तौ चेदिति विपरीत
नियमो न भविष्यति भवतेर इत्यत्रापि पूर्वरूपादर्शनादिति तेन सामान्यापेक्षेन ज्ञापकेनापदान्ताच्चेदित्युक्तनियमस्यैव लाभादेङ इति सूत्रे पदान्तादिति व्यर्थमि
ति न सामर्थ्यात्तत्र प्रतिपदोक्तस्यैव ग्रहणमित्यस्त्विति चेन्न स्थानिवत्सूत्रस्य भाष्ये हे चित्रगोऽग्रमित्यत्र पूर्वरूपप्रदर्शनपरभाष्यविरोधादित्याशयेनाह अन्यत्रापि
त्युक्तो नादौ यद्येङ इति सूत्रे प्रतिपदोक्तस्यैव ग्रहणं तदा हलो नन्तराः संयोगः मुखनासिकावचनोऽनुनासिक इत्यादिप्रयोगासङ्गतिरिति प्रतिपदोक्तपरिभाषाया
इहाप्रवृत्तिस्तथा च साधारण्येन प्रवृत्तौ ङिङसौ श्चैत्यस्यापदान्ताच्चेदिति प्रथमोक्तनियमबोधकतया सार्थक्यमेव वाच्यमत एव भवतेर इति निर्देशस्योपपत्तिरिति

एङः पदान्तादित्यत्र तु हलो नन्तरा इत्यादिनिर्देशात्तत्प्रतिपदोक्तग्रहणमत्र च स्थानिवत्सूत्रस्थभाष्यं मानमित्यन्यत्र विस्तरः पूर्वरूपमेवेति
पूर्वरूपमपीत्यर्थः गोशब्दस्य यद्यत्वान्तप्रसक्तेति व्याख्यानेन नात्तः पाद मित्यनेनैव पूर्वत्वादिकं विकल्पेन निषिध्यत इत्यर्थः तेनावादेशोपि
न सङ्गन्तस्यवोरिति प्रतिपदोक्तस्यैङ इत्यपि बोध्यम् ननु गोरग्रवचनं स्वरसिद्ध्यर्थमन्यथाऽवङ् कदाचिदन्तोदात्तोपि स्यादित्येतत्सूत्रस्थ
भाष्यप्रामाण्याच्चित्रगवग्रमित्यत्रावङ्भावोस्तु तत्रावङो रूपे विशेषस्यास्पष्टत्वात् चित्रगोऽग्रमित्यत्रावङ्भावकल्पने किं मानमिति चेन्न

पदान्तादित्युत्तरार्थमेव पूर्वसूत्रे करणात्तु विपरीतनियमप्राङ्कावारणायैवेति तत्त्वम् गोशब्दस्यतान्त इति पाठपक्षे पूर्वरूपस्यैव विकल्पेन निषेधपक्षेऽवादे शा
मिरतआह पूर्वरूपमपीति अप्यर्थकोत्रैवकारः अपिनाऽवादेशस्य सङ्ग्रहः तल्लाभोपायमाह गोशब्दस्येत्यादिना सर्वत्र निषेधविकल्पे विधिविकल्पः फलती
ति न्यायेन पक्षेऽवादेशबाधकस्य पूर्वरूपस्य प्रवृत्तिस्तदभावे स्वरूपेणावस्थानमिति गो अग्रमित्यस्यावङादेशे गवाग्रमित्यस्य सिद्धिः अवङि इति सूत्रेपि प्रतिपदोक्त
स्यैवैङो ग्रहणमित्येतद्दूर्ध्यापाशङ्कते नन्विति स्वरसिद्ध्यर्थमिति गवादयः पशवस्त्रागता इति वाक्ये गवादय इति शब्दे गवाग्रमिति शब्दे च बहुव्रीहिसंज्ञके स्वरसिद्ध्य
र्थमित्यर्थः अत्र हि पूर्वपदप्रकृतिस्वरेण गोशब्दस्य यो व्यपदेशस्तस्यैवावस्थानं बोध्यते गोशब्दस्यौणादिकत्वात्तुत्पत्तिपक्षे आद्युदात्तः प्रत्ययस्वरेण अव्युत्पत्तिपक्षे

नुफिट्स्वरेणान्तोदात्तो व्यपदिश्यते यथ्यवङादेशात्तदाद्युदात्त इति व्यपदेशपक्षेऽन्तरतम्यादवङादेशोप्याद्युदात्तो व्यपदिश्येतेति गवाद्य इत्यादावाद्युदात्तत्व
व्यवहारस्योपपत्तावपि उणादयोऽव्युत्पन्नानीति सिद्धान्तपक्षेऽवङादेशोऽन्तोदात्तः स्यादिति वा शब्दाकारस्यैकादेश उदात्तेनेत्युदात्तस्य श्रवणापत्तिः आगामेत्वा गमाअ
नुदात्तादित्यनुदात्तस्यैवैकादेश इत्यनुदात्तस्येव श्रवणसिद्धिरिति भावः गवाग्रमित्यस्य तत्पुरुषत्वे तु समासस्वरेणान्तोदात्तत्वमेव स्यादिति स्वरे न विशेषः सत्तत्सूत्र।
स्येति स्वरभेदप्रतिपादकेन तत्सूत्रस्थभाष्येत्यर्थः अस्त्विति अत्रावङादेशे चित्रगवाग्रमिति रूपम् आगामेतु चित्रग्वाग्रमिति रूपभेदापत्तिरिति रूपाभेदात्सङ्ग्रहणानुद्
निरस्त्विति भावः किं मानमिति अस्य गवाग्रतुल्यतया रूपे विशेषाभाव इति भावः निपातनेनेति स कृस्तुत्यापाठे कर्तव्ये आद्युदात्तस्यावङ् शब्दस्योच्चारणेनेत्यर्थः पूर्ववा
र्तिकेस्वरसिध्यर्थमित्युपादानात्स्वरभेदसिद्धावेव वार्तिकतात्पर्यं तत्राद्युदात्तनिपातनेनापि निर्वह इति यदि हि चित्रगोऽग्रमित्यत्र पक्षेऽवङादेश [illegible] स्यात्तदा निपातन

उपदेशेऽन्त्याद्युदात्तत्वनिपातनेनावङ्न्यासस्थापनपरभाष्यस्यमानत्वात् चित्रगोशब्दस्यामंत्रिताद्युदात्तत्वेनान्तानुदात्तः तत्राकृतस्यागमानुदा
त्तत्वेउभयोर नुदात्तयोरेव श्रवणं स्यात् आद्युदात्तनिपातनेन तु गकाराकारस्योदात्तस्येति विशेषः स्पष्टः न च गवाक्ष इत्यादावङ् आद्युदात्तस्य
श्रवणं मा भूदिति तस्योपदेशिवद्भावो वाच्य इति समासान्तोदात्तादिवामंत्रिताद्युदात्तादपि प्राग् अवङ् स्वरप्रवृत्तौ पश्चादामंत्रितस्वरे स्वरभेदाभाव इति
वाच्यम् गवाक्ष इत्यादौ समानकालप्रवृत्तिकस्य परत्वेन प्रथमं प्राप्तस्य समासस्वरस्य प्राग् अप्रवृत्त्योपदेशिवद्भाववचनचारितार्थ्येनागसंज्ञासापे
क्षवहिरंगगुणापेक्षयान्तरंगत्वात्पूर्वमेवामन्त्रितस्वरप्राप्त्या तदप्रवृत्तिसंपादनेऽस्य सामर्थ्याभावात् तदुक्तं यन्नाप्राप्तिन्यायादि॥ ६ ॥

पक्षे स्वरभेदः स्यात्तदेवोपपादयति चित्रगोशब्द इत्यादिना स्पष्ट इति अतः प्रतिपदोक्तस्येत्यावश्यकमिति शेषः अन्यकृतां स्वराभेदशङ्कामनूद्य दूषयति न चेति इ
त्यादावित्यादिना गवाग्रमित्यस्य तत्पुरुषस्य सङ्ग्रहः तस्य निपातनेन साधितस्याद्युदात्तत्वस्य मा भूदिति कथनेन सति शिष्टत्वात्तस्य श्रवणापत्तिरुद्भाविता इवेति स
र्वादौ प्रवर्तते इति कल्पनयेति शेषः परत्वेनेति कथमत्र विरोध इति चेदित्थम् गोऽन्याम् अक्षिसक्थ इति स्थिते लौकिके प्रक्रियावाक्ये समासान्ते ऽप्योदर्शनादित्य
चित्तद्धितान्तत्वात्प्रातिपदिकसंज्ञायाः पूर्वभागस्य समाससंज्ञायाश्च युगपत्प्रवृत्तौ सुब्लुकि आद्युदात्तत्वयुक्तावङः समासान्तोदात्तत्वस्य युगपत्संभव इति ।

प्र॰ र॰ दो॰ भे॰ ५५

न्यङ्गसंज्ञातापेक्षेति अङ्गेति संज्ञायामित्यन्वयेनतत्सापेक्षेत्यर्थः एतेनसंज्ञाकृतस्य बहिरङ्गत्वस्य सिद्धान्तविरुद्धत्वशङ्कायानावकाशः अन्तरङ्गत्वादिति प्रकृति भावापेक्षत्वेनेत्यादिः अस्य उपदेशिवद्भावस्य ॥ ॐ ॥ औचित्यमुपपादयति यथान्यासइति अस्यआगागमस्य उक्तार्थे भाष्यकारोक्तिरपिसाधिकेत्याह स्थानिवत्सूत्र इति पूर्वत्वइति कर्तव्यइतिशेषः वार्तिकैकदेशोयम् अत्रपूर्वत्वइत्युपादानेनसर्वत्रेत्यस्यावङादेशस्य च कथंलाभइत्यतआह अत्रेति अतएव उभयबोधनस्य फलादेव स्थानिवत्त्वाप्राप्ताविति अतिदेशविषये सामर्थ्याल्लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तेरितिभावः तन्नकार्यम् गोः पूर्वेतिवचनन्नकार्यम् दिगर्थस्त्र

यथान्यासेत्वाद्युदात्तनिपातनेनोपदेशिवद्भावयोः करणेगौरवादस्यौचित्यमितिभावः स्थानिवत्सूत्रेभाष्येप्युक्तं गोः पूर्वत्वे स्थानिवत्त्वप्रतिषेधोवाच्यः चित्रग्वग्रंसर्वत्रविभाषागोरितिपूर्वत्वंप्राप्नोतितेनषदोषः एङ इतिवर्तते तत्रान्तरेणापिप्रतिषेधोभविष्यति सर्वंतर्हि चित्रगोग्रमित्यत्रप्राप्नोतीति अत्रपूर्वत्वपदेनतदपवादप्रकृतिभावावङोविनिगमनाविरहात् सर्वत्रेत्यवङ् इत्यस्याप्युपलक्षणम् अत्रचानङ् सूत्रस्थभाष्यमपिमानम् अतएवप्रकृतिभावेद्वित्वं क्वापूर्वत्वेइत्युक्तंवार्तिकेभाष्येच चित्रगोशब्दस्यलाक्षणिकत्वेपिस्थानिवत्त्वात्प्राप्तोतत्प्रतिषेधः हृतः एङः प्रतिपदोक्तत्वाश्रयणेतुतन्नकार्यमितिलाघवमितिदिक् टाप्स्यादिति ङीषउपलक्षणमिदम् इष्टसिद्धेरिति गवीत्यस्यस्थानेगवेइतिस्यादितितद्ग्रन्थव्याख्यानमपिता[illegible]जसम् भाष्यासमतत्वादिति इदंचेतिसामर्थ्यान्नित्यमितितदुक्तेरितिभावः प्लुतइति प्रकृतिभाववचनसामर्थ्यादिस्य प्लुतस्यतत्रनासिद्धत्वमितिभावः उपलक्षणमिति सर्वंचासत्ययप्लाइतेभवतीतिभावः सहीत्यादिरिति वाक्यस्यटेरित्युक्तेरितिभावः हरदत्तइति कैयटोप्येवम् ॥

यथासूत्रत्रयस्यभाष्यस्यैकवाक्यताभवतितथैवकल्पनमुचितमित्येङ्ग्रहणानुवृत्तिः प्रतिपदोक्तस्यच तस्यग्रहणमित्युचितमिति ननुजातिलक्षणङीषः प्रकृतेप्राप्तिसत्त्वेनटाप्स्यादित्यनुचितमतआह ङीषइति खण्डनकारोक्तिं खण्डयति गवीत्यस्येति नात्क्षमिति उदस्तत्वादितिशेषः ननुप्रकृतिभावविधायकवचनद्वयास्य प्लुतस्यासिद्धत्वात्कथम्प्लुतस्य प्रकृतिभावविधानमतआह प्रकृतिभावेति उपलक्षणस्यफलमाह सर्वत्रेति अपिनानन्तत्वसमुच्चीयते पदसमूहोवाक्यमितिपरमतम् स्वमतेतुसकतिङ्वाक्यमितिशास्त्रीयप्रक्रियायामाश्रीयतइत्याशयेनाह वाक्यस्येति कैयटोपीति एतेनायमेवार्थोयुक्तइतिध्वनितम् ॥ ६ ॥

राम॰ ५५

परममूलेसर्वः प्लुतइतिकथनेनप्राचामित्यस्यसर्वप्रकरणाङ्गत्वन्ध्वनितम् भाष्यकृतानुविभाषेतियोगविभागेनसर्वस्यप्लुतस्यवैकल्पिकमुक्तम् तत्रपक्षेप्राचामितिपूजा
र्थम् यदातुप्राचामित्यनेनैवसर्वस्यप्लुतस्यवैकल्पिकत्वंसाध्यतेतदाविभाषापृष्टेत्यत्रविभाषाग्रहणंकिमर्थमित्याशङ्कायामाह अत्रपक्षइति प्राचामितियोगविभागेनसर्व
स्यप्लुतस्यवैकल्पिकत्वसाधनपक्षइत्यर्थः विभाषापृष्टेत्यत्रविभाषाग्रहणमुपलक्षणम् वार्तिकपाठेनवाशब्दोप्येवम् अवयुत्यानुवादइत्यत्रावयुत्येतिल्यवन्तम् पृथ
क्कृत्येत्यर्थः अवयुत्येतितृतीयान्तम्वा तदावयुत्येत्यस्यपृथक्करणेनेत्यर्थः नन्वेवमविद्वांसइत्यनेनभाष्यकृताप्लुतयुक्तस्यप्रत्यभिवादवाक्यस्यकर्तव्यतासूचितासा
प्लुतस्यनित्यत्वएवोपपद्यते यदिसर्वस्यप्लुतस्यवैकल्पिकत्वन्तदाप्लुताकरणेपिदोषाभावेनसानोपपद्यतइत्याशयेनाह अविद्वांसइति शास्त्राज्ञानेनयान्निन्दातत्परं।

अत्रपक्षेविभाषापृष्टेत्यत्रविभाषाग्रहणमवयुत्यानुवादः अविद्वांसःप्रत्यभिवादेत्यादिपस्यशभाष्यमपिवैकल्पिकेषुभावानु[illegible]त्येतो
शास्त्राज्ञाननिंदापरंबोध्यम् आयुष्मानेधिअग्निभूता३इत्यादीतिवाक्यस्येत्यर्थः अनुकरणेदूरात्संबोधकत्वाभावाच्चेत्यपिबोध्यम् वैकल्पिकत्वादिति।
अस्याप्लुतवद्भावस्येत्यादिः अस्याप्लुतवद्भावस्यवैकल्पिकत्वेनतत्पक्षेस्याभावेनतत्वमित्यर्थः प्लुतःप्रकृतिभावइतितस्यमतेऽप्लुतवद्भावो के
रितिभावः एतेनचाक्रवर्मणस्याचार्यस्याप्लुतवदित्येव —— भाष्योक्तिरिदंसर्वंचिन्त्यमित्यपास्तम् प्रकारान्तरेणाप्यप्लुतवद्भावोत्रेष्याह्वापिचे
ति अवैदिकइति अस्यपुराणस्यत्वेनावैदिकत्वंस्पष्टमेव कुमार्योरिति अत्रहिप्रत्ययलक्षणेनद्विवचनान्तत्वस्कन्याचेदन्तत्वमस्तीतिभावः
इदंचद्विवचनान्तमीदन्तमित्यर्थइदन्तयद्द्विवचनंतदन्तमित्यर्थेतदन्तविध्यसंभवएवदोषोबोध्यः इत्युक्तमिति मूलेइतिशेषः॥ एमित्यर्थःदूरा

द्बोधकेति एतेनदूराद्धूतेचेतिसूत्रेदूराद्धूतपदन्दूराद्बोधनोपलक्षणमिति सप्रमाणमितिसूचितम् अतएवाकडारसूत्रेगुरुनदीसंज्ञयोः समावेशोगार्गीबन्धुःवात्सीबा
न्धुरित्यत्रगुरोरितिप्लुतःनदीबन्धुनीतिपूर्वपदान्तोदात्तत्वञ्चफलमित्युक्तन्तत्सङ्गच्छते ननुमूलोक्तप्रकृतिभावस्यवैकल्पिकत्वमयुक्तं किन्तुतस्यनित्यत्वमे
विष्टमतआह अस्येति तत्पक्षे अप्लुतवद्भावपक्षे अस्याभावेनप्रकृतिभावस्याभावेनतत्त्वम् वैकल्पिकत्वम् एवञ्चनकापिक्षतिरितिहृदयमाह तस्यमतेइति त
स्याक्रवर्मणस्य तथाचमूलोक्तफलितार्थपरमेवेतिभावः एतेन फलितार्थकथनपरत्वकथनेन अवैदिकत्वमिति उपस्थितशब्दस्यप्रकृतसूत्रेऽवैदिके

प्रगृह्यमिमिस्यत्राप्रसङ्गकथनस्त्रेऽर्थः असम्भव एव संज्ञाविधाविति निषेधादिति शेषः एवकारेण प्रगृह्यसंज्ञाप्राप्तिनिरासः वृत्युक्तमिति कथनमात्रेण मूलोक्तस्यैव स्वीकारात्पुनः कथं नैपौनरुक्त्यमिति याशङ्कानस्यानिरासोन जातोऽत आह मूलइति शेषः तथा च पुनः सर्ववाक्यं नोच्यते किन्तु मूलोक्तार्थस्य दार्ढ्याय स्मारणं कृतमिति भावः ॥ ७ ॥ वस्त्रं चेन सीमि मेदिनीकोशव्याख्यानावसरे सत्याभीमद्ग्निवदिवार्थे वशब्दप्रयोग इति तद्व्याख्यात्रोक्तन्नन्नयुक्तमित्याशयेनाह ववेत्यादीति कोशमात्रेण निर्णयाभावादाह विनापीति तादृशस्थले सखण्डस्थले तथा कल्पने लोपस्य कल्पने मूलोक्तमारम्भसामर्थ्यादित्यनुपपन्नमित्याशयेनाशङ्कते नन्विति न

स्मावत्वेति यात्रवयश इवेत्यर्थः ववेत्यादिकोश प्रदर्शनेन च वशब्द इवपर्यायः स्वतन्त्र एव ननु सत्याभामादिवदिवैकदेश इति सूचयति विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वाच्य इति वचनेन तादृशस्थले तथा कल्पनेऽप्यखण्डपदे तथा कल्पने मानाभावात् आरम्भसामर्थ्यादिति ननु कार्यकालपक्षेऽनुनासिकप्रतिषेधेन चारितार्थ्यम् तत्पक्षे हि संज्ञाशास्त्रस्य न पृथक् बोधकत्वं पूर्वत्रासिद्धमिति चातिदेशः कार्यार्थः कार्यज्ञानं च वाक्यार्थबोधोत्तरमिति यद्देशे वाक्यार्थबोधस्तद्देशस्थलमेव तस्य किंच अधिकारश्चासः सर्वं च सुत्वदृष्ट्यानुनासिकविधेरसिद्धत्वेन तदेकवाक्यतापन्नसंज्ञाया अपि तद्दृष्ट्यासिद्धतया सुत्वशास्त्रेऽनुवृत्तपूर्वत्रासिद्धमित्यत्र त्यपूर्वशब्देन तदेकवाक्यतापन्नस्यादसोमादित्यस्य ग्रहीतुमशक्यत्वम् एतेन कार्यकालपक्षेऽपि पाठक्रमपूर्वत्वस्यानपगमेन संज्ञाप्रत्यसिद्धत्वं दुर्वारमित्यपास्तमिति चेन्न अप्रगृह्यादसइत्यिस्मिन्ने ... साम त्यसंज्ञासूत्रकरणसामर्थ्येन सुत्वप्रगृह्यादृत्यत्राप्युपस्थित्या तत्सामर्थ्येनासिद्धत्वबाधात् ॥ १ पृथग्बोधकत्वमिति लक्ष्यसंस्कारकपृथग्बोधजनकत्वमिस्यर्थः अत्र मा नन्तु अयादिभ्यः परैव प्रगृह्यसंज्ञेति भाष्यमेवेति अन्नादसोमादिति सूत्रस्य भाष्ये संज्ञापदोपादानेन संज्ञाविषये प्रदेशीपपरत्वेनैव व्यवस्थेति दर्शितम् तत्र प्रगृह्यसंज्ञाविधायकशास्त्रस्य नन्विदम्भवदुक्तकार्यासिद्धत्वपक्षे ननु नयुक्तम् शास्त्रासिद्धत्वस्यैव मान्यव्यवस्थापनादतस्तत्पक्षेऽप्याह किञ्चाधीति संज्ञायाश्चाधीनिकार्यकालत्वादिति शेषः असिद्धत्वमिति किन्तु सिद्धस्यैव पूर्वशब्देन बोधनं युक्तमिति शेषः एतेन अष्टाध्यायीपाठक्रमपूर्वत्वस्य पूर्वत्रासिद्धमिति शास्त्रप्रवर्तनावनियामकत्वेन एतावतां ग्रन्थेन सामर्थ्यादित्यनुपपन्नमित्युपपाद्य समाधत्ते अप्रगृह्येति ॥ ७ ॥ ७ ॥

नन्विदमप्रगृह्यादसइतिकथनं यथान्यासपक्षे यथा फलसिद्धिस्तथैव चेदुक्तन्तथाऽधुना न सिध्यति हेऽस्मुक अस्मुका इतयोरपि प्रतिषेधःप्राप्नोतीत्यत आह हेऽसुकेति अ
स्मिन्पक्षे वाक्यभेदेनाप्रगृह्यस्यादसोऽनुनासिकोनेति सूत्रार्थादत्राप्राप्तिरितिभावः ननु व्यवस्थितविभाषापरिगणितस्थलएवेत्यत आह अनभिधानेति भाष्यइति प्र
कृतसूत्रस्थ तत्रदितत्रैवायमसूयादणोप्रगृह्यस्यानुनासिकः अदसोनेत्युक्तम् यत्तु तद्भाष्यस्यादसइत्यावर्त्यनदस्यसोयस्येत्यर्थे नोक्तप्रयोगयोर्निषेधस्यप्राप्तिरिति
तन्न आवृत्तिकल्पनेतत्रव्यधिकरणबहुव्रीहि कल्पनेच गौरवात् शेइतिसूत्रेछन्दसीत्युपादानाभावाच्छान्दसमपीदमित्यनुपपन्नमत आह शेआदेशस्येति नन्वपद

हेऽस्मुक अस्मुके त्यादौ व्यवस्थितविभाषाश्रयणात्तयोरनभिधानाद्वा सूत्रमन्तेपिनानुनासिकइत्याशयात् स्पष्टंचेदं भाष्ये छान्दसमिति शे आदेश
स्यछान्दसत्वादितिभावः मेइतीत्यनुकरणइति प्रकृतिवदनुकरणमित्यतिदेशेनपदत्वात्पदान्तत्वमप्युक्तः प्रकृतिभावस्तत्र [illegible] शेन प्र
ह्यत्वन्तुन वैयापदृत्यादावनुकार्ये फलाभावेन प्रगृह्यत्वाप्रवृत्त्या तदनुकरणेऽतिदेशेनासिद्धोपदेशप्रवृत्तिरेववाच्येतिभावः अन्यथात्वेति ।
अनभिमतत्वइत्यर्थः तदाह नामस्याइति स्मरणेति विस्मृतस्यस्मरणविषयतयाद्योतकइत्यर्थः मर्यादाभिविधावित्यत्रमध्यमपदलोपी।
समासस्तत्सहितेभिविधावित्यर्थः सप्तम्यर्थेइति तइतिचचतस्यनिरुक्तेस्पष्टम् अव्ययीभावाभावश्चक्तौ छान्दसत्वाद्बोध्यः अत्र परत्वादिति
नचैतदभावे नित्यविधिर्दुर्वारः इतिशब्दात्तिरिक्ते ओदित्यस्यनिपातातिरिक्ते संबुद्धावित्यस्य चाविताथ्यैन सामर्थ्याभावादेवच फलेऽविशेषइति
वाच्यम् परत्वेनविकल्पप्रवृत्तावभावपर्यन्तमप्यस्यव्यापारेण सकृद्गतिन्यायेन नित्यस्यतदभावेऽप्रवृत्तेः॥ ९ त्वादनुकरणे कथमफलमत आह

प्रकृतीति नन्वतिदेशेन प्रगृह्यत्वस्यापि सिद्धौ सूत्रस्यतर्हि वैयर्थ्यमत आह तेनातिदेशेनेति फलाभावेनेति अचूपरत्वस्याभावेन प्रकृतिभावो न फलमेवमवसानाभावे
नानुनासिकाप्राप्त्या तन्निषेधोपिन फलम् ननु वाक्यार्थस्य भेदाभावे नान्यथात्वेत्यसङ्गतमत आह अनभीति नन्वेवङ्किं लतदित्येनस्मृतोर्थो निर्दिश्यतेन तु स्मरणमु
द्योत्यते ऽत आह विस्मृतस्येति मर्यादाभिविधावित्येकवचनस्योपपत्तयेआह तइतित्वम् सप्तम्यर्थेइतित्वम् निरुक्तेइति तत्र द्विश्रभ्याम्भ्याः पदत्वमुक्तम् विभक्त्यर्थे
विद्दिताव्ययीभावस्य नित्यस्य प्राप्तिशङ्कायामाह अव्ययीति मूले परत्वादित्यस्य ओदितिसूत्रापेक्षयेत्यादिः परत्वस्य शास्त्रद्वयच रितार्थस्यैव प्रवृत्तिनियामकत्व

मित्याशयेनतद्दर्शयति इति शब्दानिरिक्तइति एवञ्च विकल्पेन संज्ञाविधायकशास्त्रसामर्थ्यान्नास्तीति ससुट्ठाविन्यस्य वैयर्थ्यमित्याशयः ॥ ॥ अतएव विकल्पा
भावे नित्यस्याप्रवृत्तेरेव अन्यथा वैकल्पिकशास्त्राभावेनित्यस्यप्रवृत्तिस्वीकारे निषेधोक्ति अनेन निषेधस्य प्राप्तिपूर्वकत्वेनैतदभावेनयदीति पूर्वस्यं प्राप्तिसत्वेनो
भयत्रविभाषात्वमस्यदुर्लभस्यादित्युक्तम् प्रगृह्यसंज्ञायाआकडारीयत्वाभावेनपरत्वादित्यसङ्गतमित्याशयेनशङ्कान्निरस्यति नचेत्यादिना अन्यत्र तदधिका
राभावस्थले कार्यसिद्धि मूलकारानुयायिनः अनेनारुचिर्बोधिता तथाहि तज्ज्ञापकसंज्ञायाभेदविषयकत्वस्यैवेति यदिब्रूषे तदासाक्षात्सम्भूतीति सूत्रस्यभाष्य
विरोधः तत्रहिच्चान्तस्यप्रतिषेधोवाच्यः लवणीकृत्य नवापूर्वेणाकृतत्वादस्तवेनेन विभाषापूर्वेणनित्योभविष्यतीत्युक्तम्भाष्यकृता तत्रकैयटः अत्रपरत्वादने

अतएवनयदिविभाषासाकाक्षदूति सूत्रेनिषेधीयो भयत्रविभाषेति संगच्छते अन्यथापरत्वादेवतत्प्रवृत्तावप्यनेननिषेधाभावेपूर्वसूत्रस्यदुर्वार
त्वेनसादुर्लभास्यात् नचाकडारसूत्रेणान्यत्रसंज्ञानांबाध्यबाधकभावाभावस्यज्ञापितत्वेनपरत्वाद्विकल्पस्त्यसंगतमितिवाच्यम् संज्ञायाए
कत्वाज्ज्ञापकस्यचविशेषापेक्षत्वेनसंज्ञाभेदविषयत्वादितिभावइतिकेचित् परेतु ओदित्यस्यइतिशब्दनिरपेक्षत्वेनांतरंगत्वमितिपरत्वमयु
क्तम् संबुद्धाविति तु निपातपदाननुवृत्तये अन्यथौदन्तनिपातस्यैवेतोविकल्पापत्तिः नित्यविकल्पयोर्युगपत्प्रवृत्तावपिविरोधाभावेनपरत्वा
दित्यस्यासंगतेश्च एवंचपरत्वादित्यस्योत्कृष्टत्वादपवादत्वादित्येवार्थः ओग्रहणानुवृत्त्यैव सिद्धेपुनरोग्रहणेनापि तन्निवृत्तिर्मिथ्यैवेतिचिन्त्य
मेव संबुद्धिग्रहणमित्याहुः ॥ ९ नविभाषाप्राप्नोति नित्याचशाप्तिसंज्ञाइत्यतइति साचपुनः प्रसङ्गविज्ञानात्कल्पनीया एकसंज्ञाविषये भावदर्पणेन्नत्ताप्र

रेणविकल्पाभावेनित्यस्याप्राप्तिरितियदिस्वीकारस्तदातत्रत्यवार्त्तिकस्यावश्यकतयातत्रत्यास्यानविरोधः स्पष्टएव ननुतर्हिकथम्मूलस्यसङ्गमनमतआह परेत्विति
ननुसम्बुद्धावितितर्हिव्यर्थंस्यादतआह संबुद्धाविति त्विति अन्यथा निपातपदानुवृत्तिस्वीकारे तथाच निरवकाशत्वात्सविभाषैवस्यादित्यत्रतात्पर्यम् अभावपर्य
न्तमपिव्यापारइतिकल्पनायास्मानाभावइतिभावः उत्कृष्टत्वादिति निरवकाशत्वेनेतिभावः ननुयदिनिपातपदाननुवृत्तितात्पर्यकं सम्बुद्धिग्रहणन्तदातत्कार्यम् राम
सम्बुद्धिपदन्त्यक्त्वाप्रकृतसूत्रेप्योग्रहणङ्कार्यन्तत्सामर्थ्यादेवनिपातपदाननुवृत्तिः सिध्यतीत्यतआह ओइत्यहेति वैचित्र्यार्थमिति वैचित्र्यापत्यर्थः स्वार्थस्यावि ५७

[illegible]इति ॥ ॥ ननु मूलोक्तस्थले सूत्रस्य प्रवृत्त्यर्थं यरोऽनुनासिक इति सूत्रे निमित्तस्याऽनुनासिकशब्देनोपादानमस्तु विधेयसमर्पकस्यानुनासिकपदस्यानुपादा
नद्विसर्थमत आह पूर्वोक्तइति नकारापत्तीति यरोऽनुनासिकेऽनम् इत्युपादाने स्थानतआन्तर्यान्नकारापत्तिरित्यर्थः अभ्यासारे त्विति तदायम् पदेन लकारस्याप्युपस्थि
तौ सत्येव भविष्यतीति भावः लस्यैवेति आन्तरतम्यादिति भावः इदम्मूलकाररीत्या वस्तुतस्तु कमत्वादेरनभिधानमेव अनुनासिकेति संज्ञायावर्णमात्रेतात्पर्येण लाघवा
भावइत्येवदूषणमत्रवोध्यम् अतएवाह यथान्यासमेवेति मूलेऽतएवेति किञ्चितीत्यत्रानुस्वाराभावस्येष्टत्वादेवेत्यर्थः सन्निपातपरिभाषयेति मयः परत्वमुपजीव्यतस्यक

पूर्वोक्तेकुमत्लांश्चिनोषीत्यत्र लस्य नकारापत्तिवारणायविधेयकोटावनुनासिक इति विधेयकोटौ यकारमारभ्य प्रत्याहारेऽनुविधेयविषये सवर्णग्र
हणाभावेन पूर्वोक्तेनिरनुनासिकलस्यैवापत्तिरिति यथान्यासमेवसाधु इत्येवावस्थितिरिति नचात्रापि न्यासे सन्निपातपरिभाषयाऽनुस्वाराप्राप्तिरि
तिवाच्यम् त्रिपाद्यां तथा पाठे सन्निपातपरिभाषाऽनित्यत्वस्यापिज्ञापनादिति भावः अनुनासिके वकारे इति इदं कैयटानुरोधेन मयउञ इत्यत्र
विधीयमानस्य सवर्णग्राहकत्वेनानेन सानुनासिकविधानाभावेन कथमत्र सः अन्यथाइदमो मकारस्यानुनासिकोऽकारः स्यात् अतएवेहश्राऽ
विषये गुणानामभेदकत्वपक्षानाश्रयणमिति चिन्त्यम् इति स्वरसन्धिः [illegible]मिति साहित्यं च योगक्रियायाम् [illegible] संयोग इति तदर्थः
सत्याभीम इतिवन्निर्देशः संयोगश्चाव्यवहितयोरेवेति चित्तं कटु नैलमित्यादौ न दोषः यथासंख्यमिति तथदधनेत्यादेरप्यनादि ८ "स्मादा
परस्मैपदानां णलित्यादौ सूत्रान्तरस्य क्रमेणैव यथासंख्यमिति भावः च्वादिशब्दैस्थानादिसिद्धलोकप्रसिद्धक्रमेणैवोपस्थितिरिति तात्पर्यम् ॥

रणादित्यादिः तथापाठेन मयउञोवोवेतिपाठेन सइति अनुनासिको वकार इत्यर्थः अन्यथा विधेयेपि सवर्णग्राहकत्वाङ्गीकारे अतएव अनुनासिकाकारापत्तेरेव अ
नु सन्धिरित्यत्राचोऽस्तु इत्यत्रेव कुत्वापत्तिवारणायाह इति स्वरसन्धिरिति सन्धिद्वयमित्यर्थः हलन्त्वप्रकृतिभावमादाय अतएव सिद्धः स्तुतः स्वरसन्धिश्चेति भाष्येऽ
भिहितम् ततएव पञ्चसन्धिरित्यस्योपपत्तिः इति श्रीमद्रत्नप्रकाशिकायामचां सन्धिद्वयसमाप्तम् तयोगमितीति अनायोगमित्यर्थः क्रियादावन्वये सति साहि
त्यस्य दर्शनादाह साहित्यञ्चेति चित्तमित्यादावतिप्रसङ्गवारणायाह संयोग इति यथासङ्ख्यापपत्तये आह तथेति अनादितयेति किमत्र प्रमाणमिति चेत् अ

नन्वयस्थ भवेत्पूर्वो ऽत्यन्तस्य परतोयदि तत्र मध्येयमस्तिष्ठेत्सवर्णः पूर्ववर्णयोरिति नारदीयशिक्षैव ॥ ः ॥ नन्विति ङ्कोत्यस्य वर्णान्तरत्वाभिप्रायेणेयमाशङ्का यद्वा वर्गे
स्य पञ्चमे परे पूर्वस्य स्थाने यमसंज्ञकादेशा इति पक्षे तज्ज्ञानमित्यत्र दकारस्य श्चुत्वं न स्यात् यमयोगस्यात्रसत्वान्नतु श्चुयोगस्येत्याशङ्का बोध्या उत्तराशयस्तु यमोनादे
शः किन्तु पञ्चमे परे ऽनन्त्यात्परत्र यमो नाम पूर्वसदृशो वर्णान्तरो भवति नत्वनन्त्यस्य यमो नामादेशः तत्पक्षस्यान्यत्र निराकृतत्वादिति ननु शादिति लिङ्गेनतस्मिन्निति परि
भाषायाद्वा नुपस्थाने चित्तमित्यादौ चुत्वापत्तिरतआह पूर्वत्वांशेति एतेनान्यथा तं शास्त्रबोधिका परिभाषाद्वोपतिष्ठत एव तत्र शादित्यस्य ज्ञापकत्वासंभवादित्याशयः

ननु तज्ज्ञानमित्यादौ श्चुयोगाभावान्न स्यात्तत्राह तज्ज्ञानमिति जञ्योगे तथोच्चारणमात्रं नत्विदं वर्णान्तरमिति भावः अनुपस्थानेति पूर्वत्वांशा
नुपस्थाने त्वर्थः तेन चित्तमित्यादौ न दोषः षत्वमिति नचषस्य पदान्तेजश्त्वं भविष्यतीति तद्व्यर्थमिति वाच्यम् षत्वस्यासिद्धत्वेना जश्त्वा
भावात् ॥ ॥ भाष्येति प्रत्ययेद्दृश्यैवं तत्र पाठादिति भावः दकारमिति चर्त्वेनेति भावः मृच्छ्रुदस्ययवादिगणे पाठेन मानमिति तत्र कयद्वृति वचनेम्
हानिर्नैवेति तात्पर्यमिति केचित्तन्न मृन्मानि तिसृ क्वाचित्को ऽसाम्प्रदायिकः पाठः ननु सवर्णपदमधिकं परसवर्णइत्यत्रैकार्थीभावापन्नस्यान्य
त्र संबंधो वक्तुमशक्यः नच पूर्वस्येत्यस्य संबध्याकाङ्क्षायां यत्किंचित्संबधिकल्पनापेक्षया पूर्वत्रोपस्थितार्थवाचकपदाध्याहारो चित्यात्तला
भः श्चुरूदुस्यादावित्यदादेरप्येवमेव संबधोपपत्तौ तत्र तत्र स्वरितत्वप्रतिज्ञाया वैयर्थ्यापत्तेः नच स्वरितत्वप्रतिज्ञासामर्थ्यादेकदेशानुवृत्तिः तोर्लीत्यत्र
समुदायानुवृत्त्या तस्याश्चारितार्थ्यादित्यत आह अनुस्वारस्येत्यादि एकदेशइति च पकारमात्रे स्वरितत्वप्रतिज्ञयैव तोर्लीत्यादावनुवृत्तिसिद्धौ पु
नः सकारांशेन प्रतिज्ञया तावतोपि शास्त्र उत्तरत्रानुवृत्तिरिति भावः ॥ ९ तद्व्यर्थमिति षकाररूपस्य व्यावर्त्यस्याभावेन रोरिति व्यर्थमित्यर्थः अस्य षस्य नचैवमपि
स्थानीयः सकारस्तच्छ्रुत्यास्यादेवजश्त्वमिति वाच्यम् देवदत्तहन्तृहतन्यायेनहुद्देरित्यसम्भवादित्याशयात् दकारस्य प्रश्लेषेनस्य श्रवणं निवारयति चर्त्वेनेति लोपस्तु वैक
ल्पिकत्वात्कृतः तत्र तत्रक्तानिकमपि तात्पर्यमिति दकारस्य चर्त्वेन प्रश्लेषं कृत्वा समाधानकर्तुरिति शेषः अत्र मौलयच्छक्यमिति तदग्रइति केचित्तन्न मृन्मानित्यादा
वतिप्रसङ्गादिति पाठाभिप्रायेण तन्मनूद्य तन्न कयइति वत्वेन तद्रूपस्यैवासम्भवादिति खण्डनकारेणोक्तं तत्खण्डयति इतीत्यादिना अधिकमिति सूत्रेणेदमावादिति शेषः न

मपवादत्वं बीजन्त्विद्वाक्ये वेतिभावः एतदेव उक्तं बीजमेव॥



परसवर्णेति प्रकारान्तरेण तस्य लाभोऽन्येनोक्तस्तन्मतमनूद्य दूषयति नचेत्यादिना सर्वमेव भवदुक्तप्रकारेणैव स्वरितत्वेति सवर्णपर इत्यादिः तोर्लीत्यत्र समुदायस्य सा
मन्त्यसूचकतया स्वरितत्वस्य चारितार्थ्यमुक्तं यद्यपि तथाप्येकदेशे स्वरितत्वप्रतिज्ञासामर्थ्यादेव सम्बन्ध इत्येतदुपपादयति प्रकारमात्र इत्यादिना॥ ः॥ अतिरभसमुपपा
दयति चयोऽभावादिति ननु दः स्यादिति सूत्रनिष्पन्नस्य थस्य स्थाने चर्त्वेन तकारेण तस्य द्वितीयादेशत्वमित्येषामभिप्राय इत्याशङ्कायामाह दीर्घादिति सम्प्रति श्रूयमाणा
ष्टाध्यायी पाठपक्षे स्वरितत्वेन इष्टस्य उदः स्थास्तम्भोः पूर्वस्येत्यस्यासिद्धत्वात्कथम् अस्य स्थाने चर्त्वेन तकार इत्याशङ्कानुत्थानायाह इत्युत्तरमिति सवर्णस्वरितत्वस्य पर
त्वान्न तदुदृश्या पूर्वसवर्णनिष्पन्नथकारस्यासिद्धत्वशङ्केतिभावः भाष्यसम्मतइति उत्कन्दो रोग इति भाष्योदाहरणाद्भाष्यसम्मत इत्यर्थः नचैतद्भाष्योदाहरणबलेन

तदतिरभसादिति चयोऽभावात् दीर्घादाचार्याणामित्युत्तरमनुस्वारस्य ययि वा पदान्तस्य तोर्लि उदः स्थास्तम्भोः झयो हो शश्छोऽटीति षट्सूत्री पा
ठे तत्र झलां जश् झशि अभ्यासे चर्च खरि च वावसाने अणोऽप्रगृह्यस्येति पञ्चसूत्र्याः पाठे भाष्यसम्मतेऽथस्य चर्त्वेपि तस्यासिद्धत्वाच्छ्शपरत्वाभावा
त्वेतिभावः चर्त्वमिति ततश्छत्वे शश्छोऽटीति प्रक्रियेतिभावः चर्त्वस्यापवादत्वादिति एवं च तत्र कृते जश्त्वाप्रवृत्तिः अन्यथा चर्त्वशास्त्रवैयर्थ्यस्या
दितिभावः नच जश्त्वे कृते चर्त्वस्य चारितार्थ्येन तस्यासिद्धत्वादपवादत्वेन मानमिति वाच्यम् तत्कालेऽवश्यप्राप्तत्वेन येन नाप्राप्तिन्यायेनापवादत्व
स्य सुलभतयोक्तरीतेरसंभवात् एतदेवाभिप्रेत्य मिदचोऽन्त्यात्सूत्रे भाष्ये उक्तं सत्यपि संभवे बाधनं भवतीति अन्यथा कौण्डिन्यायतक्रन्यायेन तत्र
ह्रणेभ्यो दधीति प्राप्तदधिदानस्यापि बाधो न स्यात् तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यात्॥ १ महाप्राणत्वघटितान्तरतम्य पूर्वसवर्णस्यान्तरतमनि
यामकमित्येव कल्प्यतां तावतापि तकारस्यलाभेन चयो लाभ सर्वेति वाच्यम् महाप्राणत्वन्तनियामकमिति यदि ब्रूषे तदा भाष्यकाराज्ञानकल्पनं तदपेक्षया ऽष्टाध्या
य्याम्पाठव्यत्यासस्य कल्पनमेवोचितमित्यभिप्रायात् तस्य चर्त्वनिष्पन्नतकारस्य एतत्सवर्णत्वयोर्द्वितीयाद्यस्यस्य च यः सतायामप्रवृत्तिस्तदभावेऽत्वनेत्यभिप्रायेण वस्तु
तोनिमित्ताभावादिदं तस्य प्राप्तिरेवनेत्याशयेनाह शरपरत्वाभावेति अथ ततो नोतीत्यादिना वक्ष्यमाणपक्षे मूलोक्तदोषोपपत्त्यर्थमिह प्रक्रियासूचयति ततइति सवर्ण
त्वावसाने चर्त्वस्य जश्त्वापवादत्वेच तत्र कृते चर्त्वे कृतेऽपवादे प्रवृत्ते पुनरुत्सर्गाप्रवृत्तेः सिद्धान्तिसम्मतत्वात् निरवकाशो विधिरपवादो भवति नचेदं निरवकाशत्वमि

अत एव तद्प्राप्तियोग्ये विषये चारितार्थ्यस्यापवादत्वप्रयोजकत्वादेव कैयटादिग्रन्थाः द्वित्वोत्तरं द्वित्वादेशस्य चारितार्थ्येनाबाध इत्येवंरूपाद् इत्यर्थः वार्त्तिकेति एवञ्च
भाष्यकृता तन्मतस्य खण्डितत्वात्तल्लक्ष्यसंस्कारकतेत्यत्र तात्पर्यम् एवञ्चेति विसर्गापत्तौ चेत्यर्थः ईदृशे विषये पदान्तरसम्बन्धासम्बन्धाभ्यां विलक्षणरूपप्राप्तिविषये
इष्टापत्तिरिति यदुक्तं तन्न्यूह्यपरिभाषया साध्यं तद्वाक्यसंस्कारेणैव साधनीयम् पदसंस्कारस्तत्र त्याज्यः तथा च प्राचीनोक्तं वावसान इति चर्त्वे कृते इत्यादिना यत्तदसत्
ङ्गतमेवेति भावः पदसंस्कारपक्षमवलम्ब्याह दोविसर्गाङ्कलापश्चात्तिङन्तसम्बन्धः कार्य इत्यभिप्रायेण सविसर्गरूपमपि साध्विति केनाप्युक्तं तन्मतमाह अन्ये
त्वित्यादिना तन्न्वक्तन्यूह्यपरिभाषया तथा न भविष्यतीत्यत आह परिभाषाया इति आहुरित्यस्वरसवीजं त्वेतादृशरूपानभिधानमेवेति यथासङ्ख्यमिति सूत्रे

अत एव अजादेर्द्वितीयस्येति सूत्रे प्रथमद्विर्वचनोत्तरमस्य चारितार्थ्येन प्रथमद्विर्वचनस्यानेन बाधो न स्यादित्याशंक्य सत्यपि संभवइ
त्यन्यायेन बाधकत्वमुक्तं भाष्ये एवं च दयतेर्दिगीति सूत्रस्थकैयटादिग्रन्थाः असम्भव एव बाधकत्वमिति वार्त्तिकानुसारेण प्रवृत्ता अयुक्ता इति
बोध्यमिति भावः केन वार्यतामिति एवं चेदृशविषये वाक्यसंस्कारपक्षेणैव साधुत्वान्व्याख्यानमिति स्वीकृत्या कृतन्यूह्यपरिभाषान्याज्ये
ति चेदिष्टापत्तिरिति बोध्यम् अन्ये तु पदसंस्कारे हरिः असीति सविसर्गमपि साध्वेव सत्यभिधाने परिभाषाया भाष्येऽदर्शनादित्याहुः प्रमा
णाभावादिति योगविभागस्य भाष्येऽदर्शनादप्रामाणिकत्वाच्चेत्यपि बोध्यम् यथासंख्यस्येति स्थानैकदेशेन सूत्रग्रहणं बोध्यम् पर
त्वादिति तस्मिन्निति सूत्रापेक्षया तस्मादित्यस्य परत्वादित्यर्थः॥ (९ यत्त्वथ मान्तं यथासङ्ख्यमिति पदनादनुकरणमान्तमेव भविष्यतीति यथासङ्

ख्यस्येत्यसङ्गतमत आह स्थानेकेति एवञ्च यथासङ्ख्येत्येकदेशयुक्तसूत्रप्रवृत्तेरिष्टत्वादिति मूलार्थः ननु नङ्सीति सूत्रे पञ्चमीनिर्दिष्टस्य परत्वाङ्ङ्णुसप्तमीनिर्दि
ष्टस्यैवेति पञ्चमीनिर्देशावलीयानित्यसङ्गतमपरत्वस्य तत्र हेतुत्वेन प्रतिपादनात्तच्च परत्वमत्र नास्तीत्यत आह तस्मिन्निति परिभाषाविषये कार्यकालपक्षेऽपि पाठ
कृतमेव परत्वं क्रियामकन्नतु संज्ञाशास्त्रवत्प्रदेशीयसाधकाभावात् किञ्च भाष्यकृताऽधिकारो नाम त्रिप्रकारः कश्चिदेकदेशस्थः सर्वशास्त्रमभिज्वलयति

इत्यभिहितम् कश्चित्तु विभाषारूपइति व्याख्याचक्रे यदेनद्वक्ता तेनाष्टाध्यायीपाठ एव नह्यिषये नियामक इत्यभिहितम् ननु विरोधे सति परत्वेन व्यवस्था सर्वत्र तु कथम्
तत्राह इकारादिति तत्त्वम् आगमित्वम् असम्भवः कार्यित्वनिमित्तत्वयोर्युगपदसम्भवः निर्णय इति परत्वात्तस्मादित्यस्य प्रवृत्तौ निर्णयः फलितइत्यर्थः ननु यदि तत्र षष्ठी
निर्देशस्तर्हि प्रकृतिमात्रस्य प्रयोगएव न स्यादत आह षष्ठ्यादिति अत एव चर्त्वस्यासिध्यात् तकारस्य थकाराभावादेव धातोः कर्त्रर्थकसार्वधातुके शप् भवतीत्यर्थे तोभयोर्म
ध्ये नवयवः शप् भवति यथा तथा डः सि धुट् भवतीत्यर्थे नवयवो धुट् स्यादिति तु शङ्का न भवति आगमलिङ्ग टकारोच्चारणवैयर्थ्यापत्तेर्न तस्यागमत्वमेव सर्वत्रा
गमित्वपदुकारस्य सकारस्य वेति सन्देहे उभयनिर्देश इत्यादिना सस्यागमित्वनिर्णयः कृतः नत्र डइत्यस्य पञ्चम्यन्तत्वे पूर्वोक्तः सन्देहो भवति यदि डइति षष्ठ्यन्तत्वा
दात सन्देहः परन्तु धुडागमएव चेत् क्रियते तदा डकारात्पूर्वः सस्यादिनीष्टरूपासिद्धिरित्याशयेन धुगिति त्यक्त्वा डकारस्यागमित्वनिर्णयाय सूत्रानुपूर्वीव्यत्यासइत्युक्त्वा

डकारात्सकारे धुडित्यर्थे तस्मिन्नित्यस्य प्रवृत्तावुपस्थित डकारस्यागमित्वम् तस्मादित्यस्य प्रवृत्तावुपस्थितस्य सस्य तत्त्वमित्यसंभवरूपविरोधे
परत्वेन व्यवस्थेति सस्यागमित्वनिर्णय इति भावः स्पष्टं चेदं तस्मिन्निति सूत्रे भाष्ये लाघवार्थइति षष्ठ्याः प्रयोगएव कर्तव्य इत्यर्थः चर्त्वस्यासिद्ध
त्वादिति अत एव तु डिति तोक्तम् ननु धुक् ङः सीत्येवास्तु सप्तमी च यथा श्रुतैव ङइति च षष्ठ्यन्तं परमार्थतो वाक्यशास्त्रं अंगीकारेण पूर्वान्तत्वे परादित्वे वा
न शक्ततावच्छेदकभेदोऽत आह धुटः परादित्वमिति श्रोतनिरूपदेशसादिः॥ १ शङ्कते नन्विति धुक्ङः सीति न्यासे सकारात्पूर्वे एङकारस्योपादानेन विधे
यान्तरोपादानेन च डकारस्यागमित्वनिर्णयो भविष्यतीत्याशयेनानुपूर्वीव्यत्यासो दर्शितः नन्वेवमपि शक्ततावच्छेदकानुपूर्वीभेदात्सङ्ख्यायाबोधानापत्तिरत आ
ह परमार्थत इति एतेन पदानुपूर्वीभेदादिष्टार्थाप्रतीतिः स्यादिति शङ्कानकार्येति दर्शितम् न शक्ततावच्छेदकभेद इति वाक्यानुपूर्वीभेदाभावादिति शेषः मूले ष्टु
त्वेनेति धुड इत्यादिः अत एव ष्टुत्वप्रतिषेधस्येष्टत्वादेव ननु धुगागमे चयो द्वितीया इति थकारस्यापत्तिरपि दोषः न चास्य पदान्तत्वात्त्वा द्वितीयादेशापत्तिरितिवाच्यम् इ
तत्र वक्ष्यमाणरीत्या पदान्तेपि क्वचित्प्रवृत्तेरिति चेन्न तु किं कृते द्वितीय ष्टुत्वयोः प्रसक्तौ ष्टुत्वदृष्ट्या द्वितीयादेशस्यासिद्धतया ष्टुत्वस्यापत्तिरेवेत्याशयेनात एवेत्यवधा
रणस्य करणात् तुडागमे द्वितीयापत्तिरिति त्वन्यत् केचित्तु चयो द्वितीया इत्यस्य पौष्करसादिमते प्रथमस्पर्शमेके द्वितीयमाहुरपदान्तभाजमिति प्रातिशाख्यादपदान्त एव वेदे

मूल. १ अत एव चर्त्वस्यासिद्धत्वादेव ७

मवत्यातदेकवाक्यतया लोकेपि व्यवस्थितविभाषाया आश्रयणेनापदान्तस्य न प्रवृत्तिरित्यभिप्रायेण तस्यैव व्यवधारणमित्याहुः अपरे तु ष्णोरयं स्पर्शो द्वितीयमाहुरि । त्येवं द्वितीयत्वस्य प्रथमसापेक्षत्वात् द्वितीयस्योपादानेन प्रथमलाभे प्राप्तिशाखे प्रथमपदमन्यास्थानिकप्रथमलाभार्थमिति नात्र द्वितीयादेशस्य प्रसक्तिरित्याशयेना वधारणमित्याहुः तुडेव कर्तुमुचितमिति ङः सस्य तुडिति न्यासः कार्य इत्याशयः ॥ ❁ ॥ अत्र श्चोतनीत्यत्र धुडागमप्राप्तिः सकारसञ्ज्ञावस्यैवेत्याशयेनाह श्चोतनीति सा दिः नकारजेत्याद्यभियुक्तोक्तेरिति शेषः श्चुत्वं धुटो निवार्निके धुटीत्युपादानस्य फलमाह श्चुत्वस्येति लाघवार्थमिति ङः सीति सूत्रमेवेत्यादिः अन्यथा उभयोरुच्चारिता र्थाभावे शीतिचेति सप्तमीति शेषः ननु छान्दसत्वादेव विरपृशमिति भविष्यतीत्याशंकायामाह छान्दसार्थमपीति असिद्धत्वन्तु नेति सम्प्रति प्राप्तमसिद्धत्वन्तेत्यर्थः प

श्चोततिरूपदेशे साहिः श्चुत्वस्य धुटि सिद्धत्वेपि तुक्यसिद्धत्वात् सन् श्चोतनीत्यत्र तुडिति वोध्यम् पञ्चीकरणायनीति नच शीति सप्तमीनिर्देशो लाघ वार्थः द्वयोरुच्चरितार्थत्वे लाघवेनान्यविभक्त्युच्चारणायुक्तं न तु न्यर्थत्वाशयात् धुडेवास्त्विति शीति च पक्षे अर्थ इति भावः विरपृशमिति छान्दसार्थमपिव हुशः सूत्रकृतोयत्नदर्शनादिति भावः णत्वन्नस्यादिति सन्त इत्यत्र श्चुत्वस्या सिद्धत्वन्तु न वचनसामर्थ्यादिति भावः त्रिपाद्यासर्वथापरिभाषा । प्रवृत्तौ पक्षद्वयेपीदमेव समाधानम् यथोद्देशपक्षे इति कार्यकालेत्वसिद्धत्वान्न दोषः पूर्वोक्तत्वेपीति भावः संज्ञायाम् ङमिति प्रत्याहाररूपा याम् विकल्पद्वयमध्ये इति विभाषामध्ये च यो विधयस्तेनित्या इति न क्त्वा सेडिति सूत्रभाष्योक्तेरिति भावः नच तन्मध्ये पाठेन नित्यत्वकल्पनेन । त्मध्यपतितानां न परे नद्वृत्यादीनामपि नित्यत्वापत्तिः ॥ ९ कार्यद्वयेयथोद्देशकार्यकालभेदेन पक्षद्वये इदमेवेति अत्रैव कारेणयत्तु वदन्तीत्यादिनायदभि

हितन्तन्न युक्तमित्यभिहितम् असिद्धत्वादिति असिद्धमित्यनेनासिद्धत्वादित्यर्थः इति भाव इति अत्रारुचिवीजन्तूक्तमेव यत्तु परमसूलेन क्वौ न च क्वाविति पद्य । न्तत्वदन्विक्वास्य मन्तूदितमिति वोध्यमेतेन त्रयो द्वितीया इति क्वादेशाविकल्पेन रूपद्वयाधिक्याच्चिन्त्यमिदमिति खण्डनकदुक्तिः प्रत्युक्ता तुगादिविकल्पमात्राभि प्रायकत्वाद्वा ननु मूले ङम्प्रत्याहार इत्यस्यानन्तरं संज्ञायामिति कथं न सामकन्नत्रचेत्येतावन्मात्रेण प्रकृतार्थनिर्वाहादत आह ङमिति प्रत्याहाररूपायामिति न तुडःसुडित्यत्र टित्वन्दृश्यते तत्रो कारान्तस्य टित्वन्तत्तु संज्ञाया इति संज्ञायामिति मूलमसङ्गतमिति चेन्न उकारस्योच्चारणार्थत्वात् एतेनोकारान्तस्य टित्वं साच नः

नचेति अस्यनित्यत्वापत्तिरित्यत्रान्वयः विभाषामध्य इत्यपूर्ववचनमिति शङ्काभिप्रायः॥ ॥ भाष्यकारोक्तन्तापूर्ववचनङ्गिन्तुन्यायसिद्धमित्याशयेन समा
धत्ते स्वरितत्वेत्यादिना उक्तार्थमेव स्पष्टयति तस्मादिति पूर्वेति अव्यवहितेत्यादिः यत्तु सुगण्णीश इत्यत्र ङमुटः परविधित्वेन स्थानिवद्भावशङ्केवा सङ्गतेति तन्न प्रत्ये
ष्वनित्यर्थम्पञ्चमीसमासस्यावश्यकत्वात् अनित्यत्वादिति प्रतिगण्ण्येतिभाष्योदाहरणादस्यानित्यत्वादित्यर्थः यत्तु प्राचेत्यादिना ऽजादेः पदस्येति व्याख्यानस्य स्वयन्दू
षयिष्यमाणत्वान्ङमुटः परादित्वमितिकथंविरुध्यतइत्यत आह तत इति ङम इति पञ्चमी पदस्येत्यनुवृत्तं सामानाधिकरण्येन संबन्धाय पञ्चम्या विपरिणमयति सा
वानवकाशात्रचीति सप्तमीत्युत्तरत्र चरितार्थेति सा ऽत्र षष्ठ्यर्थ इति कल्प्यते एवञ्च ह्रस्वात्परो यो ङम् तदन्तं यत्पदन्तस्मात्परस्याच इत्यर्थ इत्याशयात् मूलेणत्वप्रतिषेधार्थ

स्वरितत्ववलादनुवृत्तस्य पुनर्वा ग्रहणान्निवृत्तौ कल्प्यमानायां स्थानेन्तरस्य वतत्कल्पनेनोपपत्तावन्यत्र तत्कल्पने मानाभावात् तस्मादुत्तरत्र वा
ग्रहणसामर्थ्यात्पूर्वसूत्र एव पूर्ववाग्रहणस्यनिवृत्तिरिति भावः तन्निषेधादिति तस्य दोष इत्यस्यानुनप्राप्तिः लत्वसाहचर्येणादेशणत्वस्यैव ग्रहणा
त् पञ्चमीसमासस्यानित्यत्वाश्चेत्यपि बोध्यम् परादित्वमिति ततः परस्याच इति व्याख्यानेनेत्यर्थः ङम इत्यस्य षष्ठ्यन्तत्वमाश्रित्य ङमन्तपदावयवस्य
ह्रस्वात्परस्य ङमो ङमुट् अजादौ पदे इत्यर्थेन पूर्वादित्वमेव कुतो न कृतम् पदस्येति चमादुपधायादित्यादाविवावयवषष्ठी ॥ ६ ॥ ७ ॥

मिति पदान्तस्येति णत्वप्रतिषेधस्य सिध्यर्थमित्यर्थः ङम इत्यस्येति अस्यान्यथेत्यादिः षष्ठ्यन्तत्वमिति अस्मिन्पक्षे पदस्येत्यत्र विभक्तिविपरिणामेन कार्य इति लाघवम् ए
वमचीति सप्तम्यपि चरितार्था ह्रस्वात्परस्य ङमः पदावयवस्याचि परे इति तुनोनन्द एडिनेत्यादौ दोषापत्तेः अस्मिन्पक्षे पदे इत्यनन्वितन्तद्विशेषणमचीति तेनतदादिवि
धिः यदितु पदावयवस्य ह्रस्वात्परस्य ङमो ऽजादौ पदे इत्यर्थ आश्रीयते तदा एडिनेत्यत्र दोषः परिहृ तुशाकएव ननु नन्दनान्नित्यत्र सर्वथा दोष एव नन्दनशब्दोल्यु
डन्तः अननशब्दस्तु प्रकृतिकः तत्र नन्तः तेन नन्दनशब्दस्य कर्मधारयः अत्र ङमन्तस्य दन्नन्द इति तदवयवस्यान्यनकारस्य परादिवद्भावेनाजादिपदमानन्नि
ति तस्मिन्परे ङमुट् स्यादिति चेन्न परमसूत्रोक्तव्याख्यानेप्यस्य दोषस्य सत्वात् यदि तूक्तदोषवारणाय पदस्येत्यस्य तत्पदपदार्थे ङमन्ते पदे इत्यतत्पदपदार्थनिमित्तकपदत्व
वृद्धेदोषोपि विवक्षित इत्युच्यते तदा तु न कोपि दोष इत्यवधेयम् सूत्रे जग्रवेति णत्वाभावार्थमेवेत्यर्थः॥ ७ ॥

कार्यकालेति परशीत्येवेदम् उतस्यपाक्षिकमित्यस्यवैकल्पिकमित्यर्थइति अमसुन कार्यो विकल्पस्याप्रक्रान्तत्वात् अभावएवेति स्पष्टञ्चेदमन्यत्र यमुद्दिश्य यस्मागमो वि
हितः सआगमीयद्धर्मवैशिष्ट्येन गृह्यते तद्धर्मवैशिष्ट्येन गृह्यते सआगमीयेनशब्देन गृह्यतेतेन शब्देनागमविशिष्टस्यग्रहणमिति चार्थः आगमीयद्धर्मवैशिष्ट्येनगृह्यते
आगमोपि तेन धर्मेण गृह्यतइत्यर्थः किमान मिति चेत् प्रकृतसूत्रस्य भाष्यग्रन्थएवेति गृहाण तत्र हि दण्डिनाशकटिनेत्यत्र ङमुडागमाय पदादिग्रहणं कर्तव्यमिति वार्ति
कस्य पदादित्यस्यानुवृत्तिमन्तरेण सर्वमपि परमदण्डिनापरमवज्रिणेत्यत्र प्राप्नोतीत्याशङ्कायामुत्तरपदत्वे चापदादिविधौ प्रतिषेधइति वचनेन दोषमपरिहृत्यसर्वमपिप
दादित्यपूर्वेङमः कर्तव्यं यद्यपि तत्प्रकृतं प्राक्सुपिकृतसनादित्येव तन्न इति कथनमनन्तरमेवन्तर्दिङमएवायं ङमुट् क्रियते कथम् पदस्येति वर्ततेङमइतिचैषापञ्चमीकाऽत
हिसम्बन्धेषष्ठी पदान्तस्य ङमोङमुडागमः भवतीति इस्वादुत्तरस्यऋचीति यदि ङमएव ङमुट् क्रियते कुर्वन्नास्ते एषाभ्यां न्तोणः समानपदे इति णत्वम्प्राप्नोति पदान्तस्येति प्रतिषेधो

अजादौपदइत्युक्ते भ्रोअभ्यासइत्यस्माच्छतमिमन्तिनित्यादौ अनन्त्यस्यनेति भावःबहिरङ्गपरिभाषयेति तयोर्बहिरङ्गतयाऽसिद्धत्वादित्यर्थः उभयं
ङमदःपरादित्वदेइतिसूत्राकरणञ्च पाक्षिकम् कार्यकालपक्षसंवंधि दिगितिदिगर्थस्तुतन्त्यरिभाषायाश्चिपाद्यामभावएव किञ्च यदि यदा
गमाइतिन्यायेनागमानामागमिधर्मवैशिष्ट्यमपिबोध्यतेतन कारायवयवस्यापि पदांतत्वात्तन्निषेधसिद्धिरित्युच्यते तर्हिह्रस्वात्परस्यङमन्तपदस्या
चिपरेङमुडित्येवास्त्वसत्यासतिस्यान्तमागुक्तइतिमहदनिष्टमिति स्पष्टञ्चेदं सर्वभाष्य प्रत्ययलक्षणप्रतिषेधादिति इदञ्चप्रकृतसूत्रेभाष्येस्पष्ट

भविष्यति पदान्तस्येत्युच्यते नैषपदान्तः पदान्तभक्तः पदान्तग्रहणेनग्राहिष्यतइत्युक्तमूणत्वम्प्राप्नोतीति आगमस्तस्येत्यादिः अत्र पदान्तभक्तइत्यादिनाउक्तः परिभाषार्थो
ध्वनितः अनुवृत्तस्य पदस्येतस्यविशेष्यत्वाभिप्रायेणमूलेव्याख्यातं तथासति ह्रस्वादिति प्राधान्यात्पदस्यविशेषणंस्यादेवङमइतिषष्ठ्यन्तमपितस्यविशेषणंस्यात् एवं
सतियादृशः सूत्रार्थः सम्पन्नस्तमाह तर्हिह्रस्वात्परस्यपदस्येति ङमन्तस्येतिशेषः तथासति पदस्यविशेष्यत्वाङ्गीकारेसति तदप्राप्तुक्तः शङ्काकर्तुः सइदनिष्टमिति अ
स्तिपशङ्कात्मादेवदत्तरामानितिवदेत्यादावतिव्याप्तिः कुर्वन्नास्ते सन्नच्युतइत्यादावव्याप्तिःस्यादित्यर्थः तथाचलक्ष्यानुरोधान्मूलोक्तएवार्थः कार्यः सर्वमिति शङ्कास
माधानावसरोक्तम् मूलेअतएवउत्तरपदत्वइतिवचनस्वीकारादेव तत्परादर्शव्याख्यानम् अनेन उत्तरपदत्वइतिवचनस्यात्रसंचारणेनइहैव परमदण्डिनाविस्पष्टं

अनुस्वारं व्यत्वादिति एतेन वास्तविकस्य परिभाषाश्रयणस्येदन्त्वलोपात्मकदूषणापनिवारणमेव फलन्तु तुट्प्राप्तिर्नलोपस्यासिद्धत्वादिति ध्वनितम् नचैवंस
ति यदि प्रतिपदोक्तो निपातङस्ति गृह्यते तर्हि उत्तरार्थम्पदग्रहणमित्युक्तिः सूत्रस्य परममूलविरोधः पद इत्यस्य सम्बन्धं विनापि निर्वाहस्य मूले कृतत्वादिति वाच्य
म् तदन्तस्य पदमित्यर्थसम्पादनार्थन्तथोक्तमित्याशयात् वस्तुतस्तु पदस्येत्यधिकाराद्भम इति पञ्चम्यन्तेन सामानाधिकरण्याद्विभक्तिविपरिणामेनोक्तार्थस्य लाभान्नो
क्तप्रयोजनसिद्धिस्तु विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्व एव यस्मिन्विधिरिति परिभाषाप्रवृत्त्याऽऽदेः पदस्येति व्याख्यानलाभार्थमेव पद इत्युत्तरार्थमित्युक्तम् नचो
त्तरपदत्वमिति परिभाषयाऽपि निर्वाहेऽऽदेः पदस्येति व्याख्यानन्निष्प्रयोजनमिति वाच्यम् माषकुम्भवापेनेत्यत्र परव्यवायेऽपीति निषेधस्य सिद्ध्यर्थं उत्तरपदस्य कार्यित्वस
म्पत्त्याः परिभाषायाः प्रवृत्तिरित्यस्यास्वीकारात् एवमप्यत्रापि तत्र विशेष इत्याह यदि त्विति कार्यित्वस्येति नच पदान्तत्वनिमित्तक इति पूर्वोक्तार्थेन माषकुम्भवापेनेत्यस्य
निर्वाहे कार्यित्व एवेत्यस्यावैयर्थ्यमिति वाच्यम् किञ्चेत्यादिनाभेदेनोपादानेन पक्षभेदसूचनात् नचैवमपि पूर्वं दण्डिप्रिय इति त्रिपदबहुव्रीहाववान्तरतत्पुरुषे

॥ अनुस्वारं व्यत्वादिति यदि तु सति षष्ठ्योऽपदादिविधाविति पर्युदासेन पदान्तत्वनिमित्तके विधावेवेति नन्तुमत्तेति सूत्रे भाष्यस्यष्टम् ——

दण्डिन्नित्यत्र नलोपार्थम्पदत्वमावश्यकन्तच्चोभयथोक्तनिषेधान्न सिध्यतीति वाच्यम् मध्यमपदत्वानाक्रान्तस्य ग्रहणमित्यस्य निवेशेनादोषात् नचैवम्पूर्वो
क्तकार्यित्वनिवेशवैयर्थ्यमिति शङ्क्यम् प्रत्यासत्त्या तत्समासीयमध्यमपदत्वानाक्रान्तत्वनिवेशेन माषकुम्भस्य वाप इति समासे कुम्भशब्दस्य पदत्वसिध्यर्थं कार्यि
त्वनिवेशस्यावश्यकत्वात् प्रत्यासत्तिफलन्तु दधिसेचिशय इत्यादावलुक्समासे सेकृशब्दे कुत्वाभावः नचैवम्पूर्वं दण्डिप्रिय इत्यत्रावान्तरतत्पुरुषीयमध्यमप
दत्वानाक्रान्तत्वात्पुनरनुपपत्तिः तत्समासप्रयोजकैकार्थीभावप्रयोज्यसमासीयमध्यमपदत्वनिवेशात् नचैवं सति परमवाचेत्यादौ विशिष्टाभावाद्व्याप्तिरिति वा
च्यम् मध्यमपदशब्देन तत्समासीयचरमपदपूर्वत्वानाक्रान्तस्य ग्रहणात् अनङ्गित इत्यस्य प्रत्याख्यानाय परव्यवाय इत्यस्य पदव्यवाय इत्यर्थस्य करणेन माषकुम्भ
वापेनेत्यत्र वापशब्दस्य पदत्वसिद्ध्यर्थं कार्यित्वनिवेशस्यावश्यकत्वाच्च नच पदपदस्य पदत्वयोग्यपरत्वं शङ्क्यम् स्वशास्त्रसङ्केतितं पदं पदलक्षणापेक्षया शास्त्रां

॥ ७ ॥ तरसंकेतितोत्तरपदे लक्षणयाऽनुचितं तत्त्वमित्याशयात् ॥ ७ ॥

॥ [illegible] ॥

ननु सूत्रेऽत्र ग्रहणसत्त्वे तत्प्रकरण एव सम्बन्धो न तु ढो ढे लोप इत्यत्रेति लभ्यत इत्यनर्थकमित्यसङ्गतमत आह इदमिति उपलक्षणम् दोषान्तरस्यापीति शेषः तदाह प्राप्तीति इत्यर्थस्येति सूत्रोपात्तविधेयसम्बन्धे सति निराकाङ्क्ष प्रतिपत्तिर्भविष्यतीति भावः विधिपक्षे मूलानुक्तमत्रग्रहणस्य प्रयोजनं स्वयमाह विधिपक्ष इति अत्र केचित् । यद्यप्युभयत्र पाणिनितात्पर्यमिति लभ्यते तथापि विधित्वमेवोचितम् सत्त्वादिद्वैध्यबाधकशास्त्रस्य व्यापारेणाकाङ्क्षाशान्त्या लाघवादिति तन्नेत्याह वस्तुत इति परमपूर्वेरो हित्यस्यैतत्प्रकरणविधेयस्थानिनइत्यर्थः तेन लोपस्यापि सङ्ग्रहः इति सूत्रे क्तयोरिति सत्त्वेन यदुक्तमत्रग्रहणस्याविधित्वपक्षे प्रयोजनं तन्न यथाकल्पनेऽपि दोषस्तत्व य

किन्त्वउत्तरपदस्य कार्यित्वसत्त्वत्प्रवृत्तिः अत एव माष कुम्भवापेनेत्यादौ पदव्यवायेऽपीति प्रतिषेधसिद्धिरित्युच्यते तदा प्राचीनोक्तमजादेः परस्येति व्याख्यानमेवशरणम् स्पष्टं चैतं व्याख्यानं प्रकृतसूत्रेऽउत्तिचपदे इत्यत्र भाष्ये तेन निषेधेन सिद्धमिति प्रकृतसूत्रभाष्योक्तिस्त्वेकदेशिन इत्याहुस्तन्नाव न् भिसकारकत्वेति नच पुनर्हित्वेन तदपि सिद्धम् लक्ष्यलक्षणयोरिति न्यायात् अनर्थकमिति इदमुपलक्षणम् प्रतिसूत्रमाद्यैरो गोरवं चेत्यपि बोध्यम् [illegible]मिति अनेन तु ग्रहणमधिकारपक्षेऽपि परस्यकृत्तातः पूर्वस्यानुनासिक इत्यर्थस्य स्पष्टबोधनार्थं वा शब्दवदिति सूचितम् विधिपक्षेऽत्र ग्रहणानुसन्तदु प्रकरण इत्यर्थलाभार्थम् वस्तुतोऽस्याधिकारत्वमेवोचितम् मतुवसो रिति सूत्रे कृतयो वेतु उपसंख्यानं विभाषा भवदित्यनयो उदाहरणे भाष्येऽनुनासिकाद्यनु—स्वारणात् अस्य विधित्वे तु तत्र प्रवृत्तिर्दुर्वारैव अधिकारत्वे तूत्तरत्रैव प्रवृत्तिः स्पष्टं चेदं हस्यादाविति तत्व म् [illegible]तिदिग्योगलक्षणात्तु न अत्रानुस्वारपराऽनुनासिकः पूर्वस्य तु वेति न्यासेन सिद्धावनुनासिकान्यर इत्यस्य वैयर्थ्यापत्तेरिति भावः पर शब्देनैवेति प्रसिद्धावेवकारः मण्डूकेति एकदेशस्वरितत्वप्रतिज्ञेयत्यपि बोध्यम् अनराववसानेन सः पूर्वेण सन्निकर्षः इत्यासंहितात्वऽवसाने

वापि वनउपसङ्ख्यानमिति क्रान्तसन्तथापि विभाषेति लौकिकमपीति तत्र दोषसंवेत्याशयः [illegible]नैवेति अनरवास्यसूत्रस्य मतुवसोरित्यनन्तरस्पाठः कृतः पर शब्दस्य श्र वणे न दिग्योगलक्षणापञ्चमीति भ्रान्तिवारणायाह दिग्योगेति इति न्यासेनेति नचैवं न्यासेऽप्याम्रेडितमित्यत्राप्युभयसम्बन्धापत्तिः नचेष्टापत्तिः मदाद्य इत्यस्मिन्नुदाहरणेऽनुस्वारानुपलम्भादिति वाच्यम् एकदेशस्वरितत्वप्रतिज्ञयेष्टसिद्धेः अवधारणपरत्वे आगमलिङ्गस्यटित्वकित्वादेरभावे परशब्दस्यागमलिङ्गमिति लभ्यते तन्ना

भावि पूर्वे शब्दस्याप्यागमलिङ्गत्वदर्शनादत आह

नवेति योगनिर्दिष्टानामिति न्यायेनावसानपदसम्बन्धोऽपि स्यादत आह एकदेशइति ननु संहिताधिकारादेव तत्र न भविष्यतीत्यत आह पूर्वेणेति नत्वाकडारीयत्वाद्बाध्यबा
धकभावः संज्ञिभेदात् एतेन पूर्वमादाय सन्निकर्षसत्वं ध्वनितम् ॥ ॐ ॥ अत एव उक्तरीत्या तयोः समावेशस्येष्टत्वादेव सङ्गच्छत इति अन्यथा नोर्लीत्यादौ पुनस्त
स्य सम्बन्धे मण्डूकप्लुत्यापत्तिरिति भावः अत एव अयोगवाहानामकारोपरिपाठादेव दुर्वारमिति न चैवं सति नुम्ग्रहणवैयर्थ्यमिति वाच्यम् सुहिन्सु इत्यत्रानिष्टसम्पादकता
यास्तस्य चारितार्थ्यसम्भवात् आदिशब्दार्थ इति एतेनानिष्टापत्तौ तात्पर्यमिति भावः अत्र पूर्वसवर्णदीर्घस्य प्राप्तिः द्वितीयत्वचूवेऽपि द्वितीयान्तत्वविरहेण न दीर्घस्य प्राप्तिः वस्तुतस्तु
प्रथमेऽपि यणादेशस्यैव प्राप्तिर्न तु दीर्घस्य अन्विधित्वेन स्थानिवद्भावाभावात् अत एव अनित्यत्वादेव झलां जश् झशीति झलां जशोन्त इत्येतद्द्वयानुस्वारस्यासिद्धत्वान्न्याग:

अत एव संहिताधिकारेऽवसानकार्यपाठः संगच्छते अन्नं स्यादिति अत एव पुंस्विस्यादौ उकारन्तिमितीकृत्यानुस्वारव्यवधानेषत्वमाशंक्य नुम्स्थानिका
नुस्वारस्यैव नुम्विसर्जनीयेति सूत्रे ग्रहणान्नेति भाष्यं संगच्छते इकारात्तुत्तर पाठे हि अनुस्वारमिणं गृहीत्वा षत्वं दुर्वारं स्यादिति भावः यणादीति पूर्वसा
वर्णदीर्घ आदिशब्दार्थः अयं पाठोऽनित्यः अट्कुप्विति सूत्रे अनुस्वारोपलक्षणनुम्ग्रहणात् अत एव इंजयतीत्यादौ झलां जश् झशीति नेति बोध्यमि
ति कश्चित् भवत्येवेति एकस्याद्वितीयोच्चारणस्यैकेन साधुत्वबोधनम् तयोर्मध्ये परस्य द्वितीयोच्चारणस्यान्येन साधुत्वबोधनमिति भावः वक्ष्यमाणरीत्येति
प्रत्ययरूपो यो विसर्ग इति व्याख्यादर्शरीत्या इत्यर्थः वस्तुतस्तु तदसंगतम् कविभिः कृतमित्यादौ षत्वापत्तेः एतत्स्थान्वयेत्विति तु नाऽरुचिबोधने नू सूचि
तम् यदा तु सुजेः सस्य पकारोन्त्यस्य इत्वाम् सुः प्रत्यय इति क्लियामिति भाष्ये कैयटोक्तस्तु त्यनिस्तदा सस्य लोपे मस्यैव प्रत्ययत्वमिति व्याख्या दर्शोक्ता।

((सामानाधिकरण्येऽपि षत्वाप्राप्तिरेव ॥ ६॥

यदि जश्त्वं स्यात्तदाऽयोगवाहा विज्ञेया आश्रयस्थानभागिन इति शिक्षोक्तरीत्या तालव्यत्वेन जकारः स्यात् कश्चिदिति अन्ने
नारुचिः सूचिता तथा हि अट्कुप्वाङिति सूत्रस्थनुम्ग्रहणस्य प्रत्याख्यानेन ज्ञापकान्तराभावेन चानित्यत्वेन मानम् भाष्यानुक्तत्वानित्यत्वम् झलां जश् झशि जश्त्वापत्तिस्तु अ
भ्यासे चर्चेति सूत्रसान्निध्येनानन्य झलस्य ग्रहणेन वारयितुं शक्येति एकस्मिन् लक्ष्ये एकस्य शास्त्रस्य पुनः प्रवृत्तौ लक्ष्ये लक्षणमिति न्यायविरोध इत्याह एकस्येति एकेन अ
चोरहेत्यनेन अन्येन यणो मय इत्यनेन तत्व्याख्यादर्शोक्तसामानाधिकरण्यम् एतच्च आसाङ्गत्यञ्च सिद्धान्तरीत्या ऽऽह यदेति सुजेः सप्रसवेपुमानिति तत्रोक्तम् सुजेः सस्य पकार इति तदर्थः

गवाहानां वर्णसमाम्नाये पाठेऽयमेव निर्देशो ज्ञापक इति बोध्यम् न च जिह्वामूलीयस्यैव पाठे ज्ञापक इति वाच्यम् एकदेशानुमत्या सर्वेषान्तथात्वे ज्ञापकत्वसम्भवात् ॥ ❀ ॥ त
योः जिह्वामूलीयोपध्मानीययोः औ विना कवर्गपवर्गौ विना अभावेन असम्भवेन नान्तरीयकमिति अन्तराभवमन्तरीयम् अन्तरीयमेवान्तरीयम् नित्यसमस्तम् अन्तरात
द्भाववत्ति सर्ववर्तमानन्तज्जातद्भिन्नो वो ध्यत इति तद्भाववद्वृत्तिभिन्नत्वरूपव्याप्तिलाभ इति भावः तयोः कुप्वोः तन्मात्रे जिह्वामूलीयोपध्मानीयमात्रे तयोः समुदितयोः
ननु समुदायाद्विधेयसमर्पकविभक्तिसत्त्वेन समुदायस्यैव विधेयत्वं कुतो नेत्यत आह व्याख्यानादिति लक्ष्यदर्शनमूलकादिति शेषः प्राचां व्याख्याने वीजमाह निपातानां
मिति स्वमते दोषं परिहरति चानुकृष्टेति मूले कानू कानिति आद्यङ् किमूशब्दप्रकृतिकद्वितीयान्तम् द्वितीयन्तु कुत्सितार्थककशब्दप्रकृतिकद्वितीयान्तम् मूले गणपाठेति ॥

तयोरुच्चारणस्य औ विना ऽभावेन नान्तरीयकं तयोरुच्चारणं न तु तयोर्विधेयत्वं किन्तु तन्मात्रे तयोर्लक्षणा व्याख्यानादिति भावः चादिकत्वमिति निपातानाम
नेकार्थत्वाच्चशब्दो विकल्पार्थ इति तदाशयः सत्वप्रसङ्गादिति चानुकृष्टविसर्गस्तु सत्वापवाद इति नास्माकं दोष इति भावः गणपाठसामर्थ्यादिति सति
तपंचस्य तान्त्वार्थे त्तसि विधानेनाव्ययादुत्सर्गेन प्रथमैकवचनोत्पादेन यं चर्यन्तत्वाभावात्तत्र आगत इत्यर्थे कथमणित्यपास्तम् अव्ययानामिति
टिलोपः सन्निपातेति असिद्धविषयेपि साप्रवर्तते यद्यपूर्वत्र कर्तव्ये सिद्धत्वेपि तत्र कृते उत्तरस्यासिद्धत्वे मानाभाव इति नासिद्धत्वेन सन्निपात
परिभाषाप्रवृत्तिप्रतिबंधः शंक्य इति भावः वैकल्पिके ष्वपि भावानुष्ठानस्यैवौचित्यं फलाधिक्यायेति तात्पर्यम् इतिहल्संधिः नेत्ये वो च्येतेति कुप्वोरि
त्यत्रापि चेन सत्वन्नेत्येवानुकृष्टव्यमिति भावः [illegible]ति सत्वनिषेधे खरवसानयोरिति विहितस्य विसर्गस्य सत्वादिति भावः विकारनान्तर्भावेति ॥

अत एव निपातानामव्ययत्वेपि त्यवृत [illegible] रोतेन समुदायस्य गणे पाठेन ननु चर्त्वे शास्त्रस्यासिद्धतया कथमत्र सन्निपातपरिभाषाप्रवृत्तिरत आह असिद्धविषयेपीति प्रवर्तेत इ
ति उपजीव्यविरोधस्यान्याय्यत्वमिति लोकन्यायसिद्धत्वं न स्यादित्यसिद्धत्वविषये प्रवृत्तौ बाधकाभाव इति भावः इदन्त्व चर्त्वस्यासिद्धत्वात्कथं सन्निपातपरिभाषाप्रवृत्तिरिति शङ्का
मात्रेण वस्तुतस्त्वसिद्धत्वस्यात्र न प्राप्तिरित्याह यद्वेति ननु यदा नात्व इति विकल्पविषयता सत्वे न तु गभावेन सोत्र निर्देशस्योपपत्तौ कथं ज्ञापकमेत्यत आह वैकल्पिकेष्वपीति ।
इति श्रीमत्[illegible]प्रकाशिकायां हल्सन्धिविवरणम् ननु शर्पर इति सूत्रे विसर्जनीयपदाभावे कुप्वोरिति सूत्रे चादिसर्जनीय इत्यस्य कथं लाभ इत्यत आह कुप्वोरिति चकारेण नित्य

तत्राभावस्य प्रतियोगिसाकाङ्क्षत्वात्पूर्वसूत्रे योनिषेधप्रतियोगित्वेनङ्क्तस्यैवात्रापि प्रतियोगित्वमेवञ्च स्थानिनो विसर्गस्यैवावस्थानमिति भावः ननु नेत्यनेन विसर्जनीय
स्य स्थाने प्राप्तविकारमात्रस्याध्यत्तामत्तआह सत्वनिषेध इति येन नाप्राप्तिन्यायेनास्य सत्वमात्रनिषेधकतास्यादिति भावः विहितस्येति शरेनविसर्जनीयस्य सइति सूत्रप्राप्तियोग्य
तासूचिता ॥ ः ॥ तत्सामर्थ्यात् विसर्गस्य विसर्गविधानसामर्थ्यात् चोद्यर्थेअनेन शर्परइति सूत्रेण तस्यैव खरवसानयोरिति सूत्रविहितविसर्जनीयस्यैव प्रत्यापत्तावपीति प्राप्तस्यवि
कारस्यानिरसनपूर्वकस्वस्वरूपावस्थानेपीत्यर्थः खण्डनकृदुक्तन्दोषमपरिहरति एतेनेति उक्तव्याख्यानेनेत्यर्थः यत्तद्विहितस्य शर्परइति सूत्रविहितस्य तोजिह्वामूलीयो
पध्मानीयौ एतयोःउक्तयोःस्यादिति शर्परइतिसूत्र विहितस्यतु न सत्व प्राप्तिरस्यासिद्धत्वादिति भावः पराक्तमिति अनेन नापूर्वआदेशः क्रियते किन्तु खरवसानयोरिति विहितस्यैवा
वस्थानमुच्यते एवञ्च कुप्वोरित्यस्य विसर्जनीयस्य सइत्यस्य च खरवसानयोरिति विहितविसर्गादेशत्वमेवेति तदुक्तमपास्तमित्यर्थः अर्थाधिकारेणेति प्रकृते शब्दाधिकारे

तत्सामर्थ्याच्चानेन तस्यैव प्रत्यापत्तावपि ततो विजि भावः एतेनैत[illegible] द्विहितस्य स्थानेपि तौ स्याताम् किंचास्यैव तौ स्याताम् खरवसानयोरिति विहितस्यतै
तयोरसिद्धत्वाद्विसर्जनीयस्येति सत्वमेवस्यादित्यपास्तम् अर्थाधिकारेण खरवसानयोरिति विहितस्य विसर्गस्यैवादेशाच्च विसर्ज्जनीयस्य सोऽशर्परइ
ति तु न सूत्रितम् वाशरीत्यनेन सत्व विकल्पेन सिद्धावपि कुप्वोरित्यत्राशर्परइत्यनुवृत्त्या तयोःशर्परेऽप्रवृत्तावपि कुप्वोरिति सूत्रे चाद्विसर्गलाभानाप
त्तेः [illegible] सौत्रत्वादिति भावः इति क्लेशइति ॥ ९ मानाभावइति भावः आदेशाच्चेति कुप्वोरिति सूत्रेणेति शेषः सवञ्च कुप्वोरिति सूत्रं सत्वापवाद इति

यद्यपि तथापि शर्परइत्यस्य सूत्रस्य कुप्वोरित्यत्रानुवृत्तिङ्क्त्वा वाक्यभेदेन शर्परयोः कुप्वोर्विसर्जनीयस्य विसर्जनीय इति व्याख्येयमिति न कोपि दोषः लाघवानुरोधिनी
मन्यकृतां शङ्कान्निरस्यति विसर्जनीयस्येति सत्वविकल्पेनेति सइत्यस्यैवविधेयसमर्पकस्य पूर्वत्रसत्वादिति भावः सिद्धावपि हरिः शेते हरिश्शेतेइत्यादेरित्यादिः
अनुवृत्त्येति अशर्परयोः कुप्वोरिति व्याख्यानेनेति शेषः अनापत्तेरिति विधेयबोधक विसर्जनीयपदाभावादिति शेषः न च कुप्वोरिति सूत्रे चकारो न पाठ्यः विसर्जनी
यइत्येव पठनीयस्तावतापि लाघवमेवेति वाच्यम् अशर्परइत्यत्र प्रसज्यप्रतिषेधेवाक्यभेदस्यापत्तिः पर्युदासेतु हल्परयोः कुप्वोरित्यर्थस्यापत्तिरित्यनिष्टापत्तेः
एवमप्यपठितस्य वाशरीत्यस्यापि हल्परशर्य्येव प्रवृत्त्यापत्तावनिष्टापत्तिरितियथाश्रुतस्यैवोचितत्वात् ॥ ७ ॥ ८ ॥ ७ ॥ ९ ॥

ननु खरीत्यस्यानुवृत्तिपक्षे क्लेशमात्राभिधानम्मूलकारकृतमसङ्गतम् सुक्तेरित्यत्र दोषस्य स्फुटत्वादत आह किञ्चेति आदिना यशः पठतीत्यादेः सङ्ग्रहः सुजरामिति मण्डू
कप्लुतिप्रयुक्तस्तेकृतस्य च कुप्वोरिति सूत्रे श्रूयमाणा सप्तमी औपश्लेषिकाधारे ऽस्ति सोपदादाविति सूत्रे तु सा निर्धारणे इति कल्पनात्कुप्वोरित्यस्यानुवृत्त्या च स्कृतरामित्यर्थः
मूले ऽन्यस्येति प्रत्ययान्यस्येत्यर्थः ननु सुबुत्पत्तेः प्राक्समासे उरःकेणेत्यत्रान्यस्यापि सम्भवोऽस्तीतीदमसङ्गतमत आह अयम्भाव इति नन्वादिग्रहणमपदाद्योः कुप्वोरित्यर्थ
स्यस्पष्टप्रतिपत्त्यर्थमस्त्वित्यत आह तल्लब्धेति सामर्थ्यलब्धेत्यर्थः उरःकेणेत्येतदवयवककारस्य तु यदि सुबुत्पत्त्यनन्तरं समासः स्यात्तदा पदावयवत्वं स्यादिति सम्भावनया

किञ्च पूर्तरेत्यादौ षत्वादिवारणाय कुप्वोरित्यप्यनुवर्त्य तदन्तर्गते खरीति व्याख्याने स्फुततरां क्लेश इत्यपि बोध्यम् अन्यस्यासंभवादिति अयं भावः अ
पदस्येव कुप्वोरित्यनुवर्त्य यस्मिन्विधिरिति परिभाषया कपवर्गादौ अपद इत्यर्थेन सिद्धे आदिग्रहणमपदस्यैवादिरित्यर्थलाभार्थम् तेनोरः काय
तीति विग्रहे सुबुत्पत्तेः पूर्वं समासेऽपि उरःकेणेत्यादौ न सत्वम् आदिग्रहणसामर्थ्येन तल्ल्याऽवधारणेन च पदत्वयोग्यप्रातिपदिकानवयवस्यैव
ग्रहणादिति शक्तिमात्रपरत्वमिति अव्ययत्वं तु भूतपूर्वगत्या बोध्यमिति भावः नापदेऽति सत्वन्नेत्यपि बोध्यम् नत्वादिति षत्वविधावपि सर्वं चात्र पाठ
गत्रानुवृत्त्ययोभयमपि नेति बोध्यम् समुदायस्येति अलोन्त्यादिति सूत्रेऽवयववाचकान्त्यशब्देन समुदायस्याक्षेपेणोपस्थितस्य समुदाय नि
रूपितत्वादिति भावः इदुदुपधस्य विसर्गान्तस्य पदस्येति सामानाधिकरण्येनान्वयः षत्वं तु अलोन्त्यस्येत्यनेन विसर्गस्येत्यन्ये व्याख्यातारः
रीत्याह अप्रत्ययस्येति नान्यसिद्धेरिति विसर्गस्य प्रत्ययत्वप्रसिद्धेरित्यर्थः नस्यादिति ॥ ८९ नतत्वमिति भावः न च पाशादीनामपि तद्धितान्तप्रातिपदिका

वयवत्वमस्त्येवेति तेषामसङ्ग्रहापत्तिरिति वाच्यम् सर्वसत्तिवैयर्थ्यमिति तदारम्भसामर्थ्येन तद्धितान्तप्रातिपदिकभिन्नं यत्पदत्वयोग्यम्प्रातिपदिकं तदनवयवस्य
ग्रहणमित्याशयात् सन्नीषद्समाप्त्याद्यन्यत्र यद्यदि शक्तिमत्परत्वं कल्प्यते तदा कथमव्ययत्वमत आह अव्ययत्वमिति ननु रोरेवेति नियमेन षत्वबलात्सत्वव्यावृत्तिरपीष्ट
ति तन्मात्रोपादाने न्यूनतेत्यत आह सत्वमिति नन्विदुदुपधेति बहुव्रीहिसमासेऽन्यपदार्थत्वेन विसर्गस्योपस्थितत्वात्कथं समुदायस्य लाभोऽत आह अलोन्त्यादिनेति एवञ्चा
विसर्गापेक्षया समुदायस्य शीघ्रोपस्थितिकत्वेन पदार्थोपस्थितिकाले तस्यैवान्यपदार्थत्वं कल्पनीयमिति भावः लाघवादाह इदुदुपधस्येति अन्यद्वस्य कश्चित्तु पदाधिकारस्यावि

शेषणत्वमित्यर्थप्रतिपादकभाष्यविरोधइति लक्षणामकृत्वा सामानाधिकरण्येन सम्बन्धे वक्ष्यमाणदोषापत्तिरत आह व्याख्यादर्शोक्तेति ॥ ॐ ॥ रोरुत्वेनेति अतिदेशप्रवृ
त्ताविस्यादिः खण्डनकाराद्युक्तिं खण्डयितुं शङ्कते नन्विति अतिदेशेन प्रत्ययलक्षणेन सवर्णेन द्वयाख्यावसानयोरित्यस्यासिद्धतयातिदेशस्य प्रवृत्तिर्न स्यादिति भावः लौ
किकेन न्यायेन सिद्धा शङ्कां निराचष्टे नचेति समत्वादिनि रुत्वस्यासिध्यर्थं प्रत्ययस्य रुत्वस्य तेन न्यायेन रेफान्तेपि लाभस्य तुल्यत्वादित्यर्थः सवर्णज्ञापकानुपयोग इति
तात्पर्यम् अणुरपि विशेषोध्यवसायकर इत्याशयिका माशङ्कां निराचष्टे नचाग्निरिति आदेशस्य रुत्वस्य अतिदेश लभ्येति परस्परेत्यादिः कार्यस्य विसर्गस्य आकिञ्चि

रोरुत्वेन पदत्वाप्रवृत्तेरितिभावः अभिप्रार्थइति ननु तत्रापि पुनरुसित्यवस्थायां जातपदत्वस्यातिदेशेनैव सुलोपेकृते आनयनमिति को विशेषः नचैक
देशविकृतन्यायेन सिद्धिः अग्निरित्यत्रापि तत्समत्वात् नचाग्निरित्यत्रादेशस्यातिदेशलभ्यकार्यस्यचासिद्धत्वमत्र तल्लभ्यकार्यस्यैवेति विशेषइति वा
च्यम् सर्वथातिदेशापेक्षणेन तस्याकिंचित्करत्वात् किंच रुत्व स्यासिद्धत्वेनाग्निरित्यत्र पदत्वस्यालभम् किन्तु विसर्गस्यान्यत्ररूपरेफवृत्तिप्रत्ययल
क्षस्यान्यत्र धर्मत्वेन तदतिदेशाप्रवृत्तिरितिप्रत्ययरूपो विसर्गोदुर्लभः स्पष्टा चेयरीति भोभगो अघोरितिसूत्रेभाष्ये किंच सर्वसामानाधिकरण्ये सोरि
ति वक्तव्ये प्रत्ययग्रहणं व्यर्थं स्यात् किंचैवं नित्यंसमासेइतिसूत्रे उत्तरपदस्य स्यैवस्य वैयर्थ्यम् परमसर्पिः कुण्डिकेत्यादावनेन षत्वस्य दुर्वारत्वा
त् किंचैवं नित्यंसमासइति सूत्रस्य भाष्यासंगतिः तथाहि अथाव्युत्पन्नप्रातिपदिकसर्पिरादिनत्तो नित्यंप्राप्ते इसुसोः सामर्थ्ये इति विभाषा आरभ्यते इतितद्धि
तत्रोक्तम् प्रत्ययत्वपर्योत्यधिकरणभिन्नस्येत्यर्थे तु व्युत्पत्तिपक्षेपि नित्यषत्वेप्राप्तेरथाव्युत्पन्नमित्यादेरसंगतिः स्पष्टैव अत्र भाष्ये अथेति यदर्थे ॥

त्करत्वादिति यद्यतिदेशस्यापेक्षा न भवेत्तदा ज्ञापकानुसरणाभावोन्याय्यः स्यात् तथा तु नास्तीति भावः रुत्वासिद्ध्येति पदसंज्ञाप्रयोजकशास्त्रदृष्ट्येत्यादिः सवर्णज्ञापकवर्णन
परग्रन्थासङ्गतिरिति मूलकारोक्तिमपि खण्डयति किन्त्वेति सूत्रेभाष्यइति स्फुटीभविष्यति तत्रैवैतत् सर्वसामानाधिकरण्यव्याख्यादर्शोक्तसामानाधिकरण्ये नचासोरिति
न्यासेपि पदलाघवाभावइति वाच्यम् सूत्रोपात्तस्य प्रत्ययपदस्य प्रत्ययपदावच्छिन्नशक्तस्य सुमात्रपरत्वे लक्षणायां ज्ञानगौरवम् असोरितिन्यासे तु न लक्षणेति लाघवस्य
सत्त्वात् ननु न मया लक्षणाश्रीयते किन्तु शिवमात्रस्य पूजनकाले चैत्रोदेवम्पूजयतीति वाक्यप्रयोगकर्त्तृप्रकरणेन देवत्वेन देवविशेषबोधकता यथा देवशब्दस्य तथात्र

त्यप्रत्ययपदस्यापि भविष्यतीत्यत आह किन्त्वेवन्नित्यमिति एवम् उक्तरीत्या सामानाधिकरण्याङ्गीकारे अनेन षत्वस्येति व्युत्पत्तिपक्षेऽपि विसर्गस्य प्रत्ययभिन्नत्वसत्त्वात् एवम् उक्तोऽर्थः एतेन नित्यसमास इति सूत्रस्य मनुत्तरपदस्थस्येत्युत्तरार्थमिति कल्पनायामपि भाष्यविरोधः स्फुट एवेति दर्शितम् तेन यद्यर्थकस्याथशब्दस्योपादानेन अस्य सूचितमित्यत्रान्वयः ॥ ः॥ षत्वसिद्धये आदेशप्रत्यययोरिति सूत्रविहितस्य षत्वस्य सिद्धये नत्वसाविति अव्युत्पत्तिपक्ष इत्यर्थः एवञ्चेसुसन्तेनित्यषत्वप्राप्तिरेव फलिता सा च द्वीत्या उक्तास्यादिति भावः इदम्परीत्या अव्युत्पत्तिपक्ष एवेति पक्षे तु बाहुलकत्वेन षत्वस्य सिद्धिरित्यन्यतोऽनुसन्धेयम् तस्मात् उक्तभाष्याक्षरस्वारस्यात् प्रत्ययसंबन्धीति प्रत्ययावयवभिन्नस्येत्यर्थः एतेनाग्निः करोतीत्यत्र प्रत्ययसम्बन्धिप्रकृतिप्रत्ययसमुदायभेदस्य विसर्गसत्त्वाद्दोषोऽस्त्येवेति परास्तम् अत एव प्रत्ययावयवभिन्नस्येत्यर्थाङ्गीकारादेव न दोष इति न षत्वापत्तिरूपो दोष इत्यर्थः अन्यथा प्रत्ययत्वपर्याप्त्यधिकरणसमुदायभेदस्य विसर्गे सत्त्वाद्दोषः स्यादेवेति भावः आदिना पेस्तुः का

तेनसर्पिषा यजुषेत्यादौ षत्वसिद्धये व्युत्पत्तिपक्ष एव न त्वसाविति सूचितम् तस्मादत्र प्रत्ययपदं तत्संबन्धिपरम् प्रत्ययसंबन्धिभिन्नस्य विसर्गस्येत्यर्थ उचितः अत एव कविभिः कृतमित्यादौ न दोषः नित्यसमास इति सूत्रस्य स्यानुत्तरपदस्थस्येत्यस्य कस्कादिषु सर्पिः कुण्डिकाशब्दपाठस्य चैतदर्थज्ञापकत्वे वोचितेति चेत् सत्यम् व्याख्यादर्शानुसारेणेतद्ग्रन्थसत्त्वात्तद्धनयन्त्वस्यति नातीवादर्त्तव्यमिति न प्रवर्त्ततेनेदृति अत एव तिरश्चेत्यादौ सस्य

द्वित्वस्यसङ्ग्रहः उक्तमेवार्थं न्द्राढ्यों य पुनराह नित्यंसमास इतीति अनुत्तरपदस्थस्येत्यस्योत्तरार्थत्वमुक्तमेवात आह कस्कादिष्विति ननु कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठस्यापि व्यपेक्षाया नित्यार्थतया चारितार्थ्यमस्त्येवेत्यत आह चेति एतेनोक्तभाष्यपरिग्रहः एतद्ग्रन्थस्येति मौलग्रन्थस्येत्यर्थः तथा च प्रत्ययपदस्य प्रत्ययावयवत्वलक्षणया सामानाधिकरण्येनान्वय एवोचित इति सिद्धम् वस्तुतस्तु प्रत्ययावयवस्य नेति प्रसज्यप्रतिषेध एवोचितः अत एवाग्निः करोतीत्यत्र प्रतिषेधात्मककार्ये कर्त्तव्ये स्थानिवद्भावस्य प्रवृत्तिरपि सूपपादा अत एव अचः परस्मिन्नित्यस्य त्रिपाद्यामप्रवृत्तेरेव ष्टुत्वसिद्धिरिति अन्यथाऽत्लोपस्य स्थानिवत्त्वात्तन्न स्यात् न पदान्तेति निषेधेन सिद्धिः निषेधविधायकसूत्रस्य त्रिपाद्यामसिद्धत्वं न वक्तुमशक्यम् द्विर्वचनादिग्रहणात् अत एव न पदान्तसूत्रभाष्ये वेतस्वानित्यत्र रुत्वप्रा

कारकानामिति वचनस्य क्वचिदप्रवृत्तिस्वीकारात् अत एव गोचेत्यादाववङादेशेन गोचेत्यादिसिध्यर्थं पदद्वयस्य पदत्वयोग्यपरतायाश्चावश्यकत्वाच्चेत्यत आह आ
दाविति तेन राजन्नित्यादिसङ्ग्रहः ॥ ः ॥ एतच्चेति अचः परस्मिन्नित्यस्य त्रिपाद्यामप्रवृत्तिरित्येतच्चेत्यर्थः अयञ्च प्रपञ्चितपदानुवादः वस्तुतो न पदान्तसूत्रे द्विर्वचना
दिग्रहणेन चति घटितान्यादेशानां त्रिपाद्यामप्रवृत्तिर्भवत्येव अत एव वामीक्षीरपेणेत्यादिसिद्धिरितिस्फुटीभविष्यति द्विर्वचनादिग्रहणन्तु न्यायसिद्धानुवादः तस्य दोष
इति तु वाचनिकमिति बोध्यम् मूलेनन्वेवमिति एवम् प्रत्ययभिन्नस्येति रीत्या सामानाधिकरण्येन व्याख्याने षत्वं स्यादिति विसर्गस्य प्रत्ययभिन्नत्वादिति भावः अत्रैव

एतच्चेशानुरोधेन संयोगादिलोपलक्षणत्वातिरिक्तविषयम् तेन तत्र स्थानिवत्त्वं भवत्येवेति तस्य दोषइत्याद्यपि न वाचनिकमिति भावः मानुःकार्य
मिति सिद्धान्तव्याख्यानेप्यत्र दोषः तथाहि सकारसन्निधावकारोनेव प्रत्ययः समुदायनिवेशित्वात्प्रत्ययत्वस्येति तदादेशस्योः प्रत्ययत्वाभावेन विस
र्गस्य तत्संबंधित्वाभावात् यस्तूलेकृते वशिष्टः सकारः प्रत्ययसञ्ज्ञकः सलुप्त एव नचान्तादिवच्चेत्यस्य पूर्वस्य परस्य समुदायस्यान्तादिभ्यां वर्णा
भ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रत्ययत्वादयस्ते सकादेशविशिष्टस्यापीत्यर्थादुसित्यत्र प्रत्ययत्वस्य सुलभत्वेयैकदेशविकृतन्यायेनोसित्यस्य प्रत्य
यतया न दोष इति वाच्यम् त्रिपाद्या असिद्धत्वेन तत्रान्तवत्त्वाप्रवृत्तेः स्थानिवत्त्वेन तु न निर्वाहः उपात्तस्य स्थानिनोऽकारस्य प्रत्ययत्वाभावात् प्रत्यय
संबंधित्वन्तु न स्थानिवत्त्वलभ्यमशास्त्रीयत्वात् सर्वेसर्वपदादेशादित्यनेन तु मात्र असित्यस्य स्थानित्वेपि असित्यस्य स्थानित्वालाभेनोसित्यस्य
प्रत्ययत्वमलभ्यमिति ॥ ९ मित्युपादानेन प्रत्ययपदस्य प्रत्ययसम्बन्धिनि लक्षणापक्षेनायन्दोष इति भ्रान्तिः स्यात्तन्निवारणायाह सिद्धान्तेति अकारः असो

ऽवयवाकारः समुदायनिवेशितत्वात् असिति समुदायपर्याप्तत्वात् तदादेशस्य अकारादेशस्य अस्याकारादेशत्वेपि द्वयोः षष्ठीनिर्दिष्टयोरिति न्यायेन अवर्णादेशत्वमपी
ति रपरत्वस्यासिद्धिः सर्वेसर्वपदादेशादिति न्यायानुसारिणीमाशङ्कान्निराचष्टे नचान्तादीति प्रत्ययतयेति तदवयवस्य प्रत्ययावयवतया तदादेशस्य विसर्गस्य प्रत्य
सत्वेनेति शेषः ननु स्थानिवत्सूत्रस्य प्रवृत्तिरूपपादितेति तेनोरसित्यस्य प्रत्ययत्वं भविष्यतीत्यत आह स्थानिवत्त्वेनेति ननूपात्तस्य स्थानिनोऽकारस्याप्रत्ययत्वेपि सकार
निष्ठप्रत्ययसम्बन्धित्वमतिदेशेन विसर्गेस्त्वित्यत आह प्रत्ययसम्बन्धित्वमिति मानुः असित्यस्येति असिन्यपक्षे असिति समुदायो नार्थबोधक इति स परित्यक्तः ॥ ६ ॥

एतदेव उपपादितपदार्थसत्वमेव अत्रैवकारेणकैयटेनलुप्यतेत्रप्रत्ययइतिप्रतीकमुपादायससन्निधावकारेणप्रत्ययत्वन्नलब्धंसमुदायनिष्ठत्वातस्येतिकृतत्वस्था देशेनतम् उत्वेकृते ऽवशिष्टस्सक्तप्रत्ययसंज्ञोपिलुप्तइतिभावइतियदुक्तन्तन्नयुक्तमितिध्वनितम् सकारसन्निधावकारेयद्यपिनप्रत्ययत्वन्तथापितस्मिन्लुप्ते ऽवशिष्टे कारेप्रत्ययत्वस्यानपायात् ननुरात्सस्येत्यनेनसकारस्यलोपोविधीयतेनतुविसर्जनीयस्येतिलुप्यते ऽत्रप्रत्ययविसर्जनीयोरात्सस्येतिभाष्यस्यकथंयोजनेत्यतआह लुप्यतेत्रैत्यादेरिति यः विसर्जनीयः प्रत्ययस्यैव सस्यैव ज्ञापनद्वारेति एवञ्चसुत्वज्ञाप्यमिदमेव षत्वन्तेनितुफलितार्थकथनमितिध्वनितम् अतएव त्रिपाद्यामन्तादिवद्भावस्यप्रवृत्तिस्वीकारादेव एवञ्चोरसित्यस्यपरादिवद्भावेनप्रत्ययतयासकारेगतेष्णुरित्यस्यस्थानिवद्भावेनप्रत्ययतयातदादेशस्यविसर्गान्तस्योरित्यस्यापिप्रत्ययत्व

एतदेवाभिप्रेत्यप्रकृतसूत्रेऽरणूरयइतिसूत्रेचभाष्येउक्तम् इहकस्मान्नभवतिपिपठिषुःकरोति अप्रत्ययस्येतिषत्वंप्राप्नोति अप्रत्ययविसर्जनीयस्य इत्युच्यते प्रत्ययविसर्जनीयश्चायम् लुप्यते ऽत्रप्रत्ययविसर्जनीयोरात्सस्येतिलुप्यते ऽत्रेत्यादेरयमर्थः प्रत्ययविसर्जनीयत्वेन यस्तवाभिमतः सलुप्यतेनदृश्यतेस्थानिनः प्रत्ययस्यैवलोपादितिबोध्यम् ...पवादिति त्रिपाद्यामपिअन्तवत्वप्रवृत्तिज्ञापनद्वारेतिभावः अतएवाशीष्ठीरपेणेत्यादौमात्व णत्वेसिध्यतः अत्रैकारस्यादस्संबंधित्वम् पेदुत्यस्यैकाज्ञुत्तरपदत्वचान्तवद्भावाधीनमितिभावः व्यधिकरणमेवेति प्रत्ययसंबंधीयोविसर्गस्तस्यने। त्यर्थइतितद्भावः अगत्यावाक्यभेदासमर्थसमासवैयधिकरण्यान्वयरूपदोषत्रयसहनमितितदभिमानः ...वैयधिकरण्यान्वयफल। स्यकविभिः कृतमित्यादेः प्रत्ययसंबंधिभिन्नस्यविसर्गस्येत्येवंलक्षणयासामानाधिकरण्येनापिसंग्रहसंभवादितिभावः व्याख्यादर्शोक्तसामानाधिकरण्येतुलेशतोपितदादराभावादत्तीवेत्यसंगतमेवस्यादिति ॥ ((मितिविसर्गेप्रत्ययावयवत्वमर्थादेवलब्धमिति तदानयनार्थन्नातिदेशापेक्षेतिभावः सकाज्ञुत्तरपदत्वमितिकर्मधारयः अधीनमिति ननुस्थानिवद्भावेन अशास्त्रीयत्वात् सतेनान्तादिवत्सूत्रं स्थानिवद्भावेन गतार्थमितिप्राचोक्तमपास्तमितिसूचितम् पेदुत्यस्यैकाच्त्वे यद्यपिस्वतः सिद्धन्तथाप्युत्तरपदत्वस्याशास्त्रीयत्वेनतदलाभादित्यमुक्तम् इष्टदत्ताभिमतंवैयधिकरण्यमुपपादयति प्रत्ययस्येत्यादिना अगत्या कविभिः कृतमित्यादेगत्य न्तराभावेन अभिमानइति प्रत्ययपदस्यलक्षणयाप्रत्ययसम्बन्धिवोधकत्वन्तद्धर्मावच्छिन्नप्रतियोगिताकभेदवतो ऽभेदेनविसर्गविशेषणत्वमेतेनसर्वेष्टसिद्धौक्लेशानुस

पदस्य प्रत्ययसम्बन्धिपरम् एतावानेव विशेषः स्वमते सामानाधिकरण्येन सम्बन्धः तन्मते वैयधिकरण्येन फलन्त्वतुल्यम् व्याख्यादर्शीकमतेतु प्रत्ययपदस्य न लक्षणाकवि
भिरित्यत्र दोषावारणञ्चेति तदादराभावइतिभावः ॥ ॐ ॥ अनेन अमीवेति कथनेन अलमिति उक्तदोषगणापत्त्या स्वीयव्याख्यैवोचितेति सूचितम् एकादेशशास्त्रमुकारादे
शेनिमित्तन्तु विसर्ग इत्येकादेशशास्त्रनिमित्तकस्येत्यनुपपन्नमत आह एकादेशेति प्रचुरइति इदन्तु पधेति सूत्रोदाहरणपरसूत्रयोरेवन्दर्शनम्भाष्ये ऽस्तीत्यस्य प्रचुरत्वम् ता
दृशपाठसाध्यफलन्त्वन्यथासिद्धमित्याह ओषधीस्तुधीत्यादाविति ओषधिशब्दाच्छसि पूर्वसवर्णदीर्घे शसः सकारस्य रुत्वविसर्गयोः कः करदित्यस्य प्राप्तिः इति षत्वेति
इति सूत्रमात्र षत्वेत्यर्थः तत्रेणः षः स इति च सम्बध्यते कःप्रभृतिषु परेषु अदिति शब्दसम्बन्धिभिन्नस्य विसर्गस्य णः परस्य षोऽन्यस्य तु स इति कस्कादिषु चेति सूत्रस्यैव तदर्श
प्राप्तिः षत्वस्य अन्यथा परममूले तस्य सूत्रस्य सकारविधायकत्वेन व्याख्यानत्वाद सङ्गतिः स्यात् तत्फलम् पन्त्वप्यन्तपाठफलम् चोऽप्यर्थे मूलेपरममूले तस्य फलस्य

अनेनोक्तव्याख्याया एव स्वाभिमतत्वं सूचितवानित्यलम् [illegible] एकादेशशास्त्रसंपन्नरेफस्थानिकत्वेन विसर्गस्यैकादेशशास्त्रनिमित्तकत्वमितिभा
वः प्रचुर[illegible]इति ओषधीस्तुधीत्यादौ शसैकादेशेरुः कः करत्करतिकृधीति षत्वनिवृत्तिश्च तत्फलमुक्तम् मूलेतु तस्य फलस्य च्छान्दसत्वाच्छन्दसिवा
प्रेत्यतद्गुणः षद्गस्यनिवृत्त्यादोषाच्च पक्षयन्तमेव पठितमितिदिक् [illegible]दिकमिति पदादित्वेन सोपदादावित्यस्याप्राप्तिरितिभावः साहचर्यमिति तच्चरा
मलक्ष्मणाविश्यादौ दृष्टसाहचर्यसंबंधस्याभिधानियामकत्वं दृष्टम् ॥ ९ छान्दसत्वादिति सकारघटितस्य षकाराभावदर्शनविषयप्रयोगस्य छान्दसत्वादित्यर्थः

छन्दसीति एवञ्चेण इत्यस्य कस्कादिषु चेत्येतत्पर्यन्तमेव सम्बन्धो भवतीति तेन सूत्रेण सकारस्य विधीयत इति भावः दिगिति दिगर्थस्तु पञ्चम्यन्तपाठो भाष्यसम्मतः एवो
चितः अतस्य वा पदान्तस्य मूर्द्धन्य इति सूत्रे प्रकृतं षग्रहणमनुवर्तते तेनैव सिद्धे मूर्द्धन्यपदाङ्गमर्थमिति विचारे कप्रकृतमिणः ष इति भाष्यं सङ्गच्छत इति षग्रहणस्य कःक
रदिति सूत्रे सम्बन्धो भवत्येवेति परममूले तु कः करदिति सूत्रस्य सकारादेशमात्रविधायकत्वेन व्याख्यानं वृत्त्यनुसारेण अत एव इणो अदितिः करदित्यत्र सेकारादेशो
नेत्युक्तम् हरदत्तेन तु पूर्वोक्तापदान्तस्येति सूत्रस्य भाष्यदर्शनेन सकारादेश इति प्रतीकमुपादाय षत्वस्याप्युपलक्षणमेतदिति व्याख्यानम् दृष्टसाहचर्येति लोकादा
वित्यादिः साहचर्यसम्बन्धस्य एकस्मिन्कार्ये परस्परसापेक्षत्वरूपसम्बन्धस्य नियामकत्वमिति युगपदेवोभयोः प्रसिद्धार्थबोधकत्वमित्यर्थः संयोगो विप्रयोगश्चेत्यादि।

नाहरिणाऽयमर्थः सङ्गृहीतस्तदर्थस्तदुदाहरणानि चान्यत्र स्पष्टानि ॥ ॐ ॥ नचेति नदीत्यर्थः सप्ताम् सुजन्तहिरादीनाम् अयमपरिः अनियतार्थकः कर्मप्रवचनीयः।
परिः दृष्टापचारः दृष्टव्यभिचारः व्यभिचारमेवाह वर्जने चावर्जने चेति अवर्जने लक्षणादौ अपशब्द इति अपेति शब्द इत्यर्थः सहायेनार्थ इति सहायेन प्रयोजनमित्यर्थः
अक्षेनेति प्रकृतसूत्रे द्वयोः सुजन्तयोः प्रयोगेण चतुः शब्दस्य सुजन्तस्य तयोः सदृशत्वेन तस्यैव ग्रहणं भविष्यतीति मूला सङ्गतिरूपाक्षतिनोक्तेत्यर्थः ननु हरितात्पर्य
मन्यदेवास्ति भवतात्वन्यथैव व्याख्यायत इत्यत आह परिभाषायामिति सहचरितासहचरितयोरिति परिभाषायामित्यर्थः सदृशयोरेवेति अत एव समानशीलव्यसने
षु सख्यमिति लोके प्रसिद्धिरस्तीति भावः सदृशयोरेव सदृशार्थकशब्दयोरेव सहविवक्षेति धवखदिरावित्यादौ छेदनयोग्यत्वेन सादृश्यस्य सत्त्वात्सा एव मन्यत्र यथायथा

नचैषां कापि साहचर्यसंबंधो गृहीत इति कथमेतदिति वाच्यम् पंचम्यपाङ्परिभिरित्यनेन लक्षणादिद्योतक परियोगे पंचमीशंकायां यद्यप्ययं परिर्दृ।
ष्टापचारो वर्जने चावर्जने चायं स्वत्वपशब्दोऽदृष्टापचारो वर्जनार्थ एव कर्मप्रवचनीयस्तस्यैकः सहायो भवितुमर्हति अन्यो वर्जनार्थोऽत् यथास्य गोः
सहायेनार्थ इति गौरेवानीयते नाश्वोऽनर्गदेभ इति कर्मप्रवचनीययुक्त इति सूत्रस्य भाष्येण सदृशानामेव प्रयोगे सहायत्वमित्यर्थस्य प्रतिपादनेना।
स्ततेः परिभाषायां सहचरितशब्देन सदृशस्यैव ग्रहणम् सहचरस्य भावः साहचर्यं सहचरणं च सदृशयोरेवेति साहचर्यशब्देन सादृश्यमुच्यते स
दृशयोरेव सहविवक्षा तयोरेव च सहप्रयोगः रामलक्ष्मणावित्यादौ च सादृश्यमेव नियामकमिति दिक् अर्थवत इति प्रतिपदोक्तस्यैवेत्यपि वो।
ध्यम् नियंच इति भाष्यप्रामाण्येनात्राव्युत्पत्तिपक्षस्यैवांगीकारेण व्युत्पत्तिपक्षे प्रत्ययसंबंधित्वात्कथं षत्वमिति न शंक्यम् ॥ ८९ सूहनीयम् तयोरेव स

दृशयोरेव चोदेतो दिगिति दिगर्थस्तु हरिकारिकाव्याख्यानावसरे पञ्चम्यपाङ्परिभिरिति सूत्रं साहचर्ये उदाहृतं हेलाराजादिभिः वर्जनार्थोपशब्दसाहचर्यात्तदर्थक
स्यैव परेः कर्मप्रवचनीयस्य ग्रहणमिति चोक्तमिति तद्ग्रन्थानुसारि मूलमिति ननु इसुसोरिति सूत्रे इसः प्रत्ययस्यार्थवत्त्वग्रहणमित्येतद्गुणादयो व्युत्पन्नानीति प
क्षे संभवदुक्तिकत्वाव्युत्पत्तिपक्षेऽत आह प्रतिपदोक्तस्येति इसूत्रिसशब्दस्यावयवश उत्पन्नत्वेन तयोरिसु शब्दो लाक्षणिक इति भावः भाष्यप्रामाण्येनेति प्र
कृतसूत्रायनेयीति सूत्रभाष्यप्रामाण्येनेत्यर्थः अत्र चतुः शब्दे वस्तुतस्तु शास्त्र इत्यर्थः अत्रमानन्तु तः हक्मीति सूत्रैकं सग्रहणम् ॥ ८ ॥ ८ ॥

अत एव अत्र्युत्पत्तिपक्षाश्रयणादेव आदिना चतुष्पन्त्वा इत्यस्य प्रयोगस्य सङ्ग्रहः तत्त्वमिति इदुदुपधस्येति सूत्रे प्रत्ययपदस्य प्रत्ययभिन्नार्थकत्वेन व्याख्यानात्
व्याख्यादर्शोक्तरीत्या व्यपेक्षायां नित्यं षत्वं तेनैव सिद्धम् प्रत्ययपदस्य लक्षणया प्रत्ययसंबन्धिपरत्वमिति सिद्धान्तिमते तु तत्र नित्यषत्वाप्राप्त्या विकल्प एव असमासे व्यपेक्षा
विरहेऽपीति नूभयमतेऽपीति तत्त्वमित्यर्थः परमसर्पिः कुण्डिके तीति अत्र षत्वादर्शनेन तदुक्तिभाष्यविरुद्धेति स्पष्टमेवेति भावः सूत्रेऽयः सहितेति प्रतीकं धृत्वा नत्वयसो विकार इ
त्युक्तं तद् ग्रन्थादयस्कुशेत्यत्र न तथा विग्रहः किन्त्वयः सहिते स्येवेति प्रतीयते सा च न युक्ता कुशापदस्य टावन्तस्यैवोभयथा समस्तत्वेन ज्ञानपदे निङीष्प्रसङ्गादिति हेत्वसङ्गतिर
त आह आवन्नेति आवन्तं यत्सूत्रेऽतः कृकमीत्यत्र कुशेति तदनुवादः परमसूत्रे कुशेति सूत्रे विशेष्यबोधनाय नत्वयसो विकार इत्यर्थः कुशाशब्दार्थस्य च विशेष्यत्वं ज्ञा

अत एव चतुष्पाद्ध्यो ढञित्यादिनिर्देशसंगतिः इत्याबेतीति अन्तरत्वंनत्वं पूर्वं सूचितम् तज्ज्ञापयति अनुत्तरपदस्थस्येति किम् परमसर्पिः कुण्डिके तिनित्यं।
समास इति सूत्रस्य भाष्य इत्यर्थः आवन्तप्रयोगसूचितमर्थं स्फुटं प्रतिपत्तय आह नत्वयसइत्यादि इतिदिक्सूत्रासंधिः नस्य प्रत्ययविधीति अत एव येन वि
धिरिति सूत्रे भाष्ये प्रत्ययविधिभिन्ने असून्नित्यादौ गृह्यमाणप्रातिपदिकेनापि तदन्तविधिप्रतिपादनं स्वसापरमस्वसेत्यु दाहृतं च संगच्छते अस्य समासप्र
त्ययविधाविति निषेधानुवादकतायाः एव युक्तत्वाच्च यत्त्वस्य ज्ञापकं सपूर्वाच्चेति सूत्रमन्यथा पूर्वादिनिरित्यत्र तदन्तविधिनैव सिद्धे किं तेन तत्प्रत्ययवि
धौ प्रतिषेध इत्यस्यैव ज्ञापकमिति वक्तुं शक्यम् अत एव तदन्तविधिसूत्रभाष्ये समास इत्यादिनिषेधवदस्य कथनमिति बोध्यम् प्रत्याख्यानत्वादि।
ति फलाभावात्सूत्रान्तानुकूदशान्ताद्वु इत्यादौ अन्तग्रहणसामर्थ्येन व्यपदेशिवद्भावाप्रवृत्तेरिति भावः॥ ९ नपदेतिङी अससङ्गादित्यत्र तात्पर्यम् एवञ्च विशे
षणप्रतीकधारणं विशेष्यविशेषणबोधनतात्पर्यकमेवेति भावः इति श्रीमद्रत्नप्रकाशिकायां विसर्गसन्धिप्रकरणम् अत एव ग्रहणवतेति वचनस्य प्रत्ययविधिविषयत्वादे
वसङ्गच्छते इति यदि सर्वत्र तस्य वचनस्य प्रवृत्तिः स्यात्तदा परमस्वसेत्युदाहरणविरोधः स्पष्ट एव अस्य ग्रहणवतेति वचनस्य अनुवादकता तदूर्तिकस्थनिषेधानुवादक
तेत्यर्थः युक्तत्वादिति लघुसार्थबोधकत्वकल्पनेन लाघवस्य सम्भवेन युक्तत्वादित्यर्थः नन्वस्मिन्वचने ज्ञापकवर्णनं कृतोक्तमित्यस्यातिरिक्तत्वमेव युक्तमत आह यत्त्वस्ये
ति ज्ञापकमिति उपक्रमे उक्तमिति शेषः वस्तुतस्तु तस्य वार्तिकस्य जागरूकत्वाज्ज्ञापकमेव मतत्सूत्रं नेति बोध्यम् इत्यस्यैवेति एतेन ज्ञापकत्वासम्भव एव ध्वनितः स्वकल्पना

यम्मानमाहं अतएवेति

अनतिरिक्तत्वादेवेत्यर्थः अस्याः व्यपदेशिवद्भावोऽप्रातिपदिकेनेति परिभाषायाः प्रत्याख्यानन्तत्रत्यं स्पष्टयति फलाभावादिति ननु केवलसूत्रादिश्य्यनुगादिवारणमेव फलम ।
स्त्वित्यत आह सूत्रान्तादिति इति भाव इति कौस्तुभ इत्युक्त्वानन्तरमप्रत्याख्यानत्वादिति कथनस्य भावः ॥ ः॰ः ॥ एतेनास्तित्वं वेनितान्तामेवाह नन्वेकेत्यादिना पूर्वोक्तमन्तग्रह
णसामर्थ्यं खण्डयति तत्रान्तेति आवश्यकमिति एतेनचारितार्थ्यं दर्शितम् भयाढ्यादाविवेति येनविधिस्तदन्तस्येति सूत्रे एवं वार्तिकम्भाष्येतस्य सूत्रस्य प्रयोजनप्रद
र्शनपरमस्ति तत्र भयस्याढ्यादयश्चेति समासः येनेनस्मादिषुनेति सिद्धम् तेषु तथा कथनेन विशेष्यत्वमेव स्वीक्रियते इति यथा तथेह कल्पनया ऽन्तग्रहणसामर्थ्यं सूपपा
दम् तद्यथा कर्मण्यणिति सूत्रात्कर्मणीत्यनुवर्तते तत्र भये चतीति सूत्रे सम्बध्यमानम्भयादि चटितवाक्ये विशेषणबोधकमेव भयशब्दघटितेन तु विशेष्यबोधकन्तेन भयंकरअभयङ्कर

नन्वेकगोपूर्वादित्यस्य केवलैकशब्दगोशब्दयोरप्रवृत्त्यर्थमावश्यकी सूत्रान्ताद्दशान्तादित्यर्थस्त्व तत्रान्तग्रहणन्तु प्रत्ययविधौ तदन्तग्रहणनिषेधात्तदन्त
प्रवृत्यर्थमावश्यकमिति न तत्सामर्थ्याद्व्यपदेशिवद्भावाप्रवृत्तिर्वक्तुं शक्या नच भयाढ्यादाविव सूत्रान्तादित्यादौ विशेषणविशेष्यभावव्यत्यासेन सिद्धेऽन्तग्रह
णसामर्थ्यं सूपपादमिति कौस्तुभोक्तरीत्या निर्वाहः समासप्रत्ययविधावित्यादीनां सूत्रशब्दादेर्विशेष्यत्वे तात्पर्यग्राहकस्य सत्त्वेन विपरीतस्य वक्तुमश
क्यत्वात् नचास्य मानाभावः पूर्वोत्सपूर्वादिनिरित्येकयोगएव कर्तव्ये पृथग्योगकरणस्य मानत्वात् नचेष्टादिभ्य इत्यत्रानुवृत्त्यर्थं तथा पाठः अतएव
एवानिष्ठीत्यादि सिद्धिरिति वाच्यम् ज्ञापकपरभाष्यप्रामाण्येनानिष्ठीत्यादि प्रयोगाणामनिष्टत्वात् ॥ ९ इति भवति एवमाढ्यङ्करणम् स्वाढ्यङ्करणमि

ति भवति एवं सुभगादिषु बोध्यन्तेनानुवृत्तस्य विशेषणत्वमुपात्तस्य विशेष्यत्वमित्युक्तमोः प्रत्ययविधाविति निषेधस्त्वेतन्मात्रतात्पर्यग्राहकोनतु स्वार्थतात्पर्यग्राहक
इति कल्प्यते एवञ्च सूत्रान्तादिति सूत्रेऽन्तशब्दाभावेऽप्यनुवृत्तस्य प्रातिपदिकादित्यस्य तत्र विशेष्यबोधकत्वस्वीकारेण सूत्रान्तात्प्रत्यये सिद्धेऽन्तग्रहणं तत्र व्यपदेशि
वद्भावाप्रवृत्तौ ज्ञापकम्भविष्यतीति भावः समाधानमाह समासेत्यादिना आदिपदेन ग्रहणवतेत्यस्य सङ्ग्रहः विशेष्यत्व इति एवञ्च तत्रान्तग्रहणाभावे सूत्रशब्दान्ता
त्स्यादित्यन्तशब्दोपादानमावश्यकमेवेति भावः विपरीतस्य उपात्तस्य तत्र विशेषणत्वमित्येवंरूपस्य तस्य विशेषणविशेष्यभावस्य नचेति अस्य मानाभाव इत्यत्रा
न्वयः अस्याम् व्यपदेशिवद्भावोऽप्रातिपदिकेनेति परिभाषायाम् परोक्तन्दोषमुद्धरति नचेष्टादिभ्य इत्यादिना अतएव सपूर्वादित्यस्यानुवृत्तेरेव ज्ञापकत्वेति ॥

अस्ययेन विधिरिति सूत्रस्येत्यादिः एकयोगनिर्दिष्टानाङ् क्वचिदेकदेशोऽप्यनुवर्त्तत इति परिभाषामाश्रित्याह [illegible] तस्यां परिभाषायां ज्ञापकान्तरमपि सुवचमित्याशयेनाह व्यपदेशीति तद्वैयर्थ्यम् सूत्रवैयर्थ्यम् एवञ्च सूत्रसार्थक्यं तत्फलमिति भावः खण्डनकारोक्तं दोषमुद्धरति दिवउत्सूत्रमिति अन्तादित्यत्रेति यत्रैषामुपादानं तत्रैव व्यपदेशिवद्भावाप्रवृत्तिरित्यर्थः कैयटस्यापि सम्मतं इति मूलोक्तं सप्रमाणमेवेति भावः अनयोः मूलोक्तपरिभाषयोः तत्र भाष्ये समासग्रहणप्रयोजननिरूपणावसरे आहार्दगोपुच्छे इत्यत्र तदन्तविधौ पारमगोपुच्छिकमित्यत्र ठक्प्रतिषेधानुत्पत्तिः सिद्धो भवति तत्र तदन्तविधिप्रतिषेधसम्भावना यां विधौ प्रतिषेधः प्रतिषेधश्च यमित्युक्तम् तेनोक्ता प्रत्ययविधिविषयता ध्वनिता कैयटेन च स्पष्टीकृता [illegible] दिगर्थस्तु यदगोपुच्छस्यस्य पर्युदासपरतया व्याख्यानेन प्रत्ययविधित्वसम्पादनं तन्न ।

एकयोगेऽपि तत्रैव स्वरितत्वबलेन तावत् एवोत्तरत्रानुवृत्तौ बाधकाभावाच्च व्यपदेशिवद्भावस्य प्रातिपदिके निषेधस्वीकारादेव नान्तादसंख्यादेरिति च रितार्थ्यम् अन्यथा पञ्चमइत्यादावपि व्यपदेशिवद्भावेन संख्यादित्वात्तद्वैयर्थ्यस्य स्पष्टमेवेत्यरुचेराह व्यपदेशिवद्भावइत्यादि दिवउत्सूत्रयत्नेति बहुव्रीहिणा तत्सूत्रघटितपादे इत्यर्थः एवं च दिवउदिति सूत्रे हरदत्तेन द्वन्द्वेचेति सूत्रे कैयटेनोक्तमिति भावः येनविधिरिति सूत्रे कैयटेन सूत्रोपात्तान्तादिशब्दविषयतास्येति वदतास्पष्टमेव प्रत्ययविधिविषयतोक्ता असमासेनिष्कादिभ्यइति सूत्रे भाष्ये कैयटे च स्पष्टमनयोः प्रत्ययविधिविषयत्वोक्तमित्यादिक [illegible] ।

आदिनासजूर्भ्यामिति ननु सान्तानुकरणे विभाषा भवतीत्यादिवार्त्तिकनिष्पन्नानां ग्रहणं न स्यादित्यत आह [illegible] कृतत्वानुकरणमित्यर्थः अतोन्त्येति ननु भोराजसेत्यादौ रोरीति लोपे एकदेशविकृतन्यायेन भोःशब्दत्वादन्तस्योकारस्य यत्वापत्तिरिति वाच्यम् तेषामभिधाने सपवाशेर पूर्वस्य चक्षोरिति

युक्तमुक्तभाष्यविरोधापत्तेरिति नन्वपि शब्देनैव निर्वाहे आदिपदोपादानमनर्थकमतस्त्वाह आदिनेति तथाचापि शब्दः परमसजूरित्यस्य व्याख्यानेनादोषो बोध्यः समुच्चायकः तस्यादिति उत्तरग्रन्थानुरोधेनोभयोरपि तयोर्ग्रहणमिति भावः [illegible] तन्त्रेण वार्त्तिके तत्कृतत्वस्याप्यनुकरणमित्यर्थः तथाचोभयोरपि सङ्ग्रहः लोपइति यत्वासिद्धत्वाद्विशेषः [illegible] इति स्वीक्रियमाण इति शेषः एतेनानभिधानकल्पनया समाधानेऽपि भोराजन्नित्यस्य दर्शनेनानभिधानकल्पना या मानाभावइति दर्शितम् अपूर्वस्येति अः पूर्वो यस्येत्यर्थः एवञ्च रोःसुपीति सूत्रस्थं रोरित्युभयत्र सम्बध्यत इति सिद्धम् ॥ ७ ॥ ७ ॥

अत्रपक्षे कृतकृत्वानुकरणपक्षे ऽन्यथा ऽपूर्वोक्तद्वन्द्वात्षष्ठीकल्पने क्वचिद्वैयधिकरण्येन क्वचित्सामानाधिकरण्येनान्वयो दुर्घटः स्यादितिभावः अत्रपक्ष इति कथने
नायमर्थो नयुक्त इतिध्वनितम् सर्वसतिवाक्यभेदस्य षष्ठ्याः सौत्रलुकश्च कल्पनायाः गौरवस्यस्फुटत्वात् परममूलोक्तपक्षेतु अशब्दान्तद्वन्द्वस्य पूर्वशब्देन बहुव्रीहि
रितिनदोषद्वयमितिभावः अवधेयमितिकथनेन ध्वनितमर्थंस्पष्टयति यदीत्यादिना तत्रद्वन्द्वे टीतिसूत्रे प्रकृतेभोभगोइत्यत्र वैषम्यम् अलाश्रयणम् यथाप्रकृते
ऽलाश्रयणन्तथोपपादयति अनल्विधौतित त्रदेवाः सन्तीत्यत्र दुर्लभमिति सवर्ण्णेस्तिज्लोपविधायकंयदिदद्वीति ततोऽस्य वैषम्यस्पष्टम् नचैवं देवा अमेत्यादा
वपिस्थानिसकारवृत्तिसुत्वस्यादेशेलोपेऽआगमनन्दुर्लभमितिकथमपदत्वमितिवाच्यम् सान्तनिष्ठपदत्वस्यैकदेशविकृतन्यायेन सान्तस्यसमुदायस्याकारान्तादे
शइतिसर्वेसर्वपदादेशाइतिरीत्यासमुदायादेशत्वकल्पनेनस्थानिवद्भावेनपदत्वस्यसुलभत्वात् आवश्यकञ्चसमुदायादेशत्वकल्पनमन्यथा आदेश सत्लोपस्या

अत्रपक्षे ऽघोःशब्दान्तद्वंद्वेषष्ठ्याः सौत्रोलुग्बोध्यः [illegible] यदिग्रहोल्लिटीतिसूत्रेद्वन्द्वः स्थानित्वेननिर्देशइतितन्नानल्लाश्रयणंप्रसक्तेतुवि
सर्गरेफस्यैवस्थानित्वाद्वैषम्यम् अनल्विधावित्यस्यस्थान्यलृत्तिधर्माश्रये स्थानिसंबन्धिन्यल्त्वृत्तिधर्माश्रयेचनेत्यर्थः अत्रस्थान्यल्त्रेफवृत्तिरु
त्वस्थानिवत्त्वेनदुर्लभमनल्विधित्वात् ॥ ((भावरूपतयाऽर्थबोधकत्वासम्भवेनस्थान्यर्थाभिधानसमर्थस्यादेशत्वमितिप्रवादव्याकोपः स्यात् नचैवमपिदी
र्घोहोनिदाघेत्यत्रादेशसुत्वाभावेनासुपीति निषेधाप्रवृत्तेरेफापत्तिरितिवाच्यम् सावपिपदस्भवतीतिपक्षाश्रयणेनहल्ङ्यादिलोपात्प्राक् तेननिषेधेनरत्वाभावे
तः ततोरुशब्दान्तस्यौकारान्तादेशइतिकल्पनयासाधुत्वस्यसम्भवात् यत्रह्यभावरूपादेशस्तत्रैवेयंकल्पना यत्रतुभावरूपादेशस्तत्रतुश्रौतस्थान्यादेशभावमादायाल्
विधित्वमतस्तवानल्विधावितिचरितार्थम् अन्यथाव्यूढोरस्केनद्यौःपन्थाद्दत्यादावपिसमुदायादेशत्वकल्पनेनाल्विधित्वन्नस्यात् द्यौःपन्थादावस्यादौहलन्तत्वस्याश्र
यत्वात्स्थानिदेशासम्भवाच्च विशेषणतयाऽलाश्रयणस्यभावनापिसम्भवाच्च नचैवमप्यतिखद्वः निष्कौशाम्बिरित्यत्र ह्रस्वेअम्मात्वादेरतिदेशोऽनल्विधित्वान्नसम्भवतीति
हल्ङ्यादिसूत्रेदीर्घग्रहणंवैयर्थ्यमितिवाच्यम् सानुबन्धकनिष्ठस्यस्त्रीप्रत्ययत्वस्यपरादिवद्भावेनसवर्णदीर्घनिष्ठस्यह्रस्वेऽतिदेशसम्भवात् स्त्रीशब्दार्थेनरूपेणगो
स्त्रियोरितिसूत्रजन्यबोधेभानन्तस्यसमुदायनिष्ठत्वात्तत्रानल्विधावितिनिषेधासम्भवाच्च अतएवतत्रसूत्रेगोटाङ्ग्रहणंनव्यामितिवार्त्तिककारोक्तिः स्त्रियामित्यधिकृ

त्ययेविहितास्तेषाङ्ग्रहणमितिभाष्यन्त्वसङ्गच्छते नचैवमप्यातिस्वङ्गावेत्यत्रस्थानिवद्भावेनाप्त्वस्यसुपिचेतिदीर्घेऽतिदेशोल्विधित्वान्नसम्भवतीतिवाच्यम् अचःपरस्मिन्नि
त्यनेनसम्भवात् स्पष्टञ्चेदमिति तत्रहि व्यग्रग्रहणमनर्थकमन्यत्राभावात् ननुचायमस्तिछन्दःसुपयःसुकिस्सुनःकारणम् सुपरत्वोदाह्रियतेनपुनरयंवृक्षस्तत्रत्रक्षस्त।
त्रेति अस्त्यत्रविशेषः विसर्जनीयेकृतेनभविष्यति इहापिविसर्जनीयेकृतेनभविष्यति छन्दःस्वित्यादौननुचेहापिस्थानिवद्भावात्प्राप्नोतिवृक्षस्त्वत्रेति अनल्विधौस्थानिवद्भा
वः अयायमल्विधिःस्यात् शक्यमशग्रहणमवक्तुम् बाढंशक्यम् अल्विधिस्तर्हिभविष्यति कथमिदमस्तिरोरीति ततःखरवसानयोर्विसर्जनीयःरइत्येव रोःसुपिविसर्जनी
यः रोःरइतिप्रतिपादितम् एतेनभाष्यप्रघट्टकेनस्थानितावच्छेदकत्वेनाभिप्रेतस्यातिदेशेनप्राप्यस्ययत्राल् समर्पकस्थानिबोधकशब्दबोध्यवृत्तित्वन्तत्रानल्विधाविति
निषेधःप्रवर्ततेनान्यत्रेतिस्पष्टमेवलभ्यते उक्तभाष्यरीत्यासमाधत्ते [illegible] देवाःसन्नीत्यत्रोस्यवैलक्षण्यमस्तीत्याह [illegible] नन्वस्यसूत्रस्यनियामकत्वेनेति

स्पष्टंचेदंप्रकृतसूत्रेभाष्येइत्युच्यते तदापयःस्वित्यत्रयत्ववारणायाशीति तत्रहिरोःसुपीतिविसर्गोनियमशास्त्राणांचविधिमुखेनैवप्रवृत्तिरितितत्ररु
विशिष्टःस्थानीतितद्वृत्तिरुत्वस्यस्थानिवत्त्वेनलाभःसुकरः यदितुरोःसुपीत्यत्रापिरइत्यनुवर्त्यरोःरेफस्यैवतेनविसर्गस्तदाशग्रहणमुत्तरार्थस्यष्टार्थं
मिदैवकृतमित्यवधेयम् तन्नेति चादिष्वित्यर्थः [illegible] यदिति भोइत्यादिप्रयोगाणांनिपातैरेवसिद्धेर्निपातानामपिसम्बोधनान्तभवदा
दिसमानार्थकत्वात् सम्बोधनविभक्त्यन्तत्वेनामन्त्रितत्वमस्ति॥ ‹‹विसर्गइत्यसङ्गतमतआह नियमशास्त्राणामितिविधिमुखेनैवेति इदमन्यत्रस्पष्टमू

उत्तरार्थमिति अतएवोक्तभाष्यानन्तरमुत्तरार्थन्तर्हितत्कर्तव्यम् हलिसर्वेषामशिहलियथास्यादिहमाभूत् वृक्षवयतेरप्रत्ययःवृक्षव्करोतीत्युक्तम् परोक्तन्दोषमुद्धर
तियदित्विति उत्तरार्थम् हलिसर्वेषामितिसूत्रार्थम् अवधेयमिति मूलोक्तार्थावधेयपदार्थसत्ताविनित्यवधेयमित्यर्थः मूलेऽन्यथेति वार्तिकस्यैवस्वीकारे इत्यादिसि
द्धावपीति मतुवसोरितिसूत्रेपठितस्यतस्यवार्तिकस्यैषान्त्रयाणामन्त्यस्यरुःस्यात्सम्बुद्धौअवस्यचौदित्यर्थः तत्रनानर्थकइतिपरिभाषायाअस्वीकारपक्षेऽलोन्त्यपरि
भाषातुनप्रवर्तते वस्येतिवाच्येऽवस्येत्युपादानसामर्थ्यात् सचन्त्वपुंलिङ्गे हल्ङ्याद्लोपेनप्रत्ययलक्षणस्यप्रवृत्तिरितिसिद्धावपीत्यर्थः भोइति [illegible] आद्येसम्बु
द्धिपरत्वाभावादन्त्येसम्बुद्धेर्लुकाऽपहारादूपन्नसिद्ध्येदित्यर्थः वार्तिकाभावेपिलक्ष्याणांसिद्धिमाह भोन्स्वादीत्यादिना ननुनिपातमात्रस्वीकारेआमन्त्रितकार्यसिद्धिःकथ

त्रलादिसिद्धिमप्याह भवदादीति भवदादीत्यत्र भवदादियोग एवेष्यत इत्यत्र तत्र भो इत्यादीति आदिनात्तो भो इत्यादिसङ्ग्रहः साधारणानाम् सर्वलिङ्ग सर्ववचनविषय
निपातानामित्यर्थः विभक्ताविति गङ्गाशब्दसामानाधिकरण्येनत्तस्य स्त्रीलिङ्गत्वात्तत्र ङीप्स्यादिति भावः हे भो इति प्रयोगानुपपत्तिर्निपातमात्राङ्गीकारे सुचितानास्पष्टय
ति सुप्साधितस्येति अयम् भोः शब्दः अत एव तस्य निपातस्य भवच्छब्दसमानार्थकत्वादेव ननु शब्दत एव विभक्तिप्रतिरूपकत्वमस्तु तावताऽपि भाष्यो पपत्तिर्भविष्यती
त्यत आह विभक्त्यन्तेति अर्थतश्चेति विनिगमनाविरहादुभयं विवक्षितमिति भावः अन्यत्र स्पष्टमिति मतुप्सूत्रस्थभाष्यकैयटयोः स्पष्टमित्यर्थः तत्रादि अस्तिमा
नित्यादौ स्त्नाकर्तृत्वेन धनवो धादस्ति कश्चिदर्थतः साम्यमित्यस्तीत्यस्याव्यये ष्वप्रामाणिकः पाठ इत्युक्तम् सहप्रयोगस्याप्युपपत्तिमाह किञ्चव्यतीति समुच्चित्य चोत क

भवदादीत्यत्र भोः शब्दस्याप्यादिना ग्रहणात्तत्र भोरित्यादिसिद्धिरिति भावः अन्यथा साधारणानामभावे भो विद्वद्वृन्देति नपुंसके सो र्लुका लुप्तत्वेन वाऽपि
काप्रसक्तेरिति भावः भोगंगे इति विभक्तौ लिङ्गविशिष्टाग्रहणाड्डीपाव्यवधानाद्भवतः संबुद्धिपरत्वाभावेनेति भावः सुःप्याडिति अस्य निपातमात्रा
ङ्गीकारे इत्यादिः ननु निपातोऽप्ययं भवच्छब्दसमानार्थ एवेति हे भो इत्यस्यनासंगतिः अत एव भाष्यकैयटयोर्वार्तिकासिद्धविभक्त्यन्तप्रतिरूपकम
व्ययमित्युक्तम् विभक्त्यन्तप्रतिरूपकत्वं च शब्दतोऽर्थतश्चेत्यन्यत्र स्पष्टम् किञ्च व्यतिलुनीत इत्यादिवदेतयोरपि सहप्रयोगसंभव इत्यरुचेराह कि
ञ्चेति पदान्तरस्येति इदं च न भोः शब्दे फलं उभयोरपि भोः शब्दयोः संबोधनार्थत्वेन सम्बोधनप्रथमान्तत्वेनामन्त्रितत्वात् किन्तु तिष्ठसि भगो तिष्ठ
सि अघो इत्यादौ भगवन् अघवन् तिष्ठसीत्यर्थके आमन्त्रितस्येति निघातसिद्धिः ॥ ९ त्वस्य सम्भवादिति भावः इत्यस्त्वेवेति यद्यपि वार्तिकारम्भस्य फलमुक्त
न्तदन्यथासिद्धं तथैव अलादिसिद्धिरपि भवदादीत्यत्रादिशब्दोपादानेन साधितैवेत्यस्त्वेवेत्यर्थः किन्त्वेतीति किन्त्वामन्त्रितत्व इत्यादीत्यर्थः सूत्रे पदात्परत्व इ
त्यादिना वार्तिकारम्भस्य तत्र भो इति तिष्ठति भो इत्यत्र वाऽऽमन्त्रितस्य चेत्याष्टमिकसूत्रेण निघातसिद्धिः फलमित्युक्तं तदपि निपातस्य सम्बोधनविभक्त्यन्तत्वस्वी
कारप्रदर्शनेन साधितमेवेति मूलोक्तनिघातसिद्धिरूपप्रयोजनम्भगोअघोः शब्दां शब्द इत्याद्यन्यत्रेत्यादिनाऽभावादित्यन्तेन सम्बोधनप्रथमान्तत्वेनेति सा च प्राति
पदिकार्थेति सूत्रेण संबोधने चेत्यनेन वेति सामन्त्रितमिति सूत्रे व्यक्तीभविष्यतीति भावः सिद्धिरिति फलमित्यस्यानुषङ्गः ॥ ७ ॥ ७ ॥ ७ ॥

मानाभावेनेति भगोहरिहराविव्यत्रो भगवत्त्वप्रकारेणाघोदेवदत्तेत्यत्रो ऽघवत्त्वप्रकारेणबोधस्यानुभवसिद्धत्वयासम्बोधनविभक्त्यन्तत्वे मानाभावेनेत्यर्थः निपातयोर्भगो
अघोःशब्दयोर्नेपूर्वोक्तमेवफलङ्किन्त्वन्यदपीत्याशयेनाह भगोसिस्ठसीत्यादाविति आमभगोदेवदत्तेत्यादाविति आमित्यङ्गीकारे अत्रामूदेवदत्तभगोइतिपाठः अत्रभ
गोःशब्दस्यामन्त्रितस्यचेत्यनेनप्राप्तस्यनिघातस्यामएकान्तरमामन्त्रितमनन्तिकइत्यनेनप्रतिषेधसिद्धिःफलम् नचदेवदत्तेत्यस्याविद्यमानवद्भावेननैकान्तरता
प्राप्नोतीतिवाच्यम् नामन्त्रितेसमानाधिकरणइतिसूत्रेणाविद्यमानवद्भावस्यप्रतिषेधात् नैकान्तरत्वसिद्धिमात्रम्फलङ्किन्त्वन्यदपीत्याह भगोआगच्छेति इदंहि
भावप्रवृत्तियोग्यमुदाहरणम् भगोभगोआगच्छेति तदाभविष्यति धनेनभगोइति धनेनभगवन्ऐश्वर्यवन्नित्यर्थः अत्रमत्वर्थसत्तायान्धनस्यकरणत्वेनान्वयादा

निपातयोस्तुतयोःसम्बोधनेशक्तौमानाभावेनसंबोधनप्रथमान्तत्वाभावेनामंत्रितत्वाभावात् भगोसिस्ठसीत्यादावविद्यमानवत्त्वम् आमभगोदेवदत्तो।
त्यादावेकान्तरता भगोभगोआगच्छेत्यादौद्विर्भावः धनेनभगोइत्यादौपराङ्गवत्त्वमितिभावः यदिप्रामाणिकाविति यदीत्यनेनेदंसूचितन्नौनप्रामा।
णिकौ अतएवभाष्येविभाषाभवदितिव्याख्यायभोश्लाघ्नणाःभोश्लाघ्नणीत्यस्यैवासिद्धिमाशंक्याव्ययमेषभोःशब्दोविभक्तिप्रतिरूपकत्वादित्येवोक्तम् ए
वंचभगोहरिहरावित्याद्यसाध्वेवेति नदानिरमसादिति भोभगोमतुवसोरितिसूत्रयोरस्यार्थस्यभाष्येऽस्पष्टत्वादितिभावः उभयग्रहणादिति वार्तिकवोधित
साधुत्वानामविकुलटायावेत्यादौकार्यान्तरवोधनायसूत्रकृतानुवादस्यकरणादितिभावः इवदनेतिसवचानित्यत्वान्नदप्रवृत्तावुभयोर्ग्रहणसिद्धिरि
((तिभावः॥

मन्त्रितस्प्रातिकारकत्वमस्तीतिपराङ्गवद्भावस्यप्राप्तिः नप्रामाणिकाविति भोशब्दस्येवतयोःकोशेऽनुपादानादितिशेषः आसच भगोस् अघोसितिनि
पातयोरप्रामाणिकत्वादेवअसिद्धिमिति सप्रमाणुपपादिता इत्येवोक्तमिति नत्वव्ययान्येतइति मत्रोक्तमितितयोरप्रामाणिकत्वस्यसिद्धिः इत्यादीति आदिनाभगोगङ्के।
इत्यस्यसङ्ग्रहः नहीति प्रकाशइत्युक्तमित्यर्थः मूलेउभयग्रहणादिति निपातवार्तिकनिष्पन्नयोर्ग्रहणादित्यर्थः ननुसूत्रकारस्यसूत्रकरणसमयेवार्तिकासत्त्वेनैतद्बो
धितसाधुत्वकानामनुकरणासम्भवेनोभयग्रहणादित्यसङ्गतमतआह वार्तिकेति अत्रवार्तिकशकन्ध्वादिषुपररूपवाच्यमितिवोध्यम् सचन्त्रैकदेशानुमत्यातद्वार्ति
कस्यापूर्वत्वाभावबोधनद्वारातत्साध्यरूपाणासाधुत्वसूत्रकृतैवध्वनितमितिभावः मूलेमहाव्याहृतिग्रहणमिति भुवइतिसूत्रेभुवइत्यनेनान्तरिक्षवाचकस्यभुवरिति

एतस्य समभिव्याहृतेर्ग्रहणसुतक्विबन्तं पृथ्वीवाचकभूप्रकृतिषष्ठ्यन्तस्य ग्रहणमिति सन्देहस्य लक्षणप्रतिपदोक्तपरिभाषया निवृत्तौ महाव्याहृतिग्रहणम्परिभाषाया अनित्यत्वज्ञापकमिति भावः ॥ ॥ मन्त्रतत्सूत्रे उभयोर्ग्रहणे भाष्यमपि साधकमित्याह विभाषा[illegible]ति मूलेन[illegible]ति एवम्लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिस्वीकारेतेन साहचर्येण न केवलं साहचर्यमात्रं साधकं किन्तु परिभाषापीत्याह अर्थवदिति ननु मूलकृता साहचर्ये परिभाषा स्वीकृतानर्थवत्परिभाषा कुत्रत्र किम्बीजमत आह सान्तेति भोशब्दादीनामेवेति एवकारेण प्रभोरित्याद्येकदेशव्यावृत्तिः तथा चौकारान्तानुकरणमिति पक्षाभिप्रायको ऽयं ग्रन्थ इति भावः मूलासिद्धान्तनिर्णयात्त स्वयं सिद्धान्तमाह अत्रेदन्तत्वमिति रान्तानामेवेति लक्षणवशसम्पन्नरान्तानामेवेत्यर्थः एवञ्च लाक्षणिकत्वाविशेषान्निपातवार्तिकनिष्पन्नयोर्ग्रहणसिद्धिः प्रभोरि

विभाषा भवदिति वार्तिके भो ब्राह्मणा भो ब्राह्मणीत्यसिद्ध्याशंकायामव्ययसेपभोः शब्द इति सिद्धान्ते नोभयोरत्र ग्रहणलाभादिति बोध्यम् परस्परसाहचर्येणेति तेन चार्थवतामेव ग्रहणमिति भावः अर्थवत्परिभाषयेत्यपि बोध्यम् [illegible] अनर्थकानाम् सान्तरान्तान्यतरानुकरणमिति पक्षे प्रसिद्धा भोइत्यादिपूर्वकरेफान्तानामर्थवतां ग्रहणस्यान्याय्यतया भोइत्याद्योकारान्तानुकरणपक्षेपि वार्तिकनिष्पन्नानां निपातानां चैकदेशभूतभोशब्दादीनामेव ग्रहणमिति भावः अत्रेदन्तत्वम् रान्तानामेवानुकरणं सूत्रे सन्ध्यभावो न्याय्य एवेति भाष्यस्वरसः लघूच्चारणतरः लघुतरोच्चारणः इलोविशेषणादिति स्पष्टं चेदं भाष्ये इत्याहुरिति हरदत्तादयः वकारलोपे तत्तरतदर्शानवगतेरित्यर्थः ॥ (त्याद्येकदेशव्यावृत्तिस्त्वनर्थकत्वेन साधितैव एवका

रेण सान्तोकारान्तपक्षयोर्व्यावृत्तिः न्याय्य एवेति एतेनैतत्पक्षे सौत्रसन्ध्यभावाकल्पनेन लाघवमिति सूचितम् ननु लघूच्चारणतर इति मोऽलव्याख्यानादुच्चारणक्रियागतस्य प्रकर्षस्य लाभो भवति न तु क्रियाप्रयोजकप्रयत्नगतस्येति कथन्तदित्यत आह लघुतरोच्चारण इति एवञ्च लघूच्चारणतर इत्यत्रान्यपदार्थसम्बन्धोत्तरवर्ति पदार्थस्य लाघवस्य प्रकर्षविवक्षेति भावः शुक्लतरः पट इत्यादावपि विशेषणप्रकर्षविवक्षया साधुत्वस्य सर्वत्र दर्शनात् एवञ्च शिखीध्वस्त इतिवत्साधुत्वमस्येति बोध्यम् भाष्य इति एतच्च प्रागुपपादितम् हरदत्तादय इत्यनेन सूचितामरुचिम्प्रकटयति वकारलोप इत्यादिना अनवगतेरिति पदानुपूर्वीज्ञानस्यार्थोपस्थितिकारणत्वस्य क्लृप्तत्वादिति भावः न च शास्त्रस्य प्राप्तिः कथं वारणीयेति वाच्यम् शास्त्रस्यानिष्टार्थप्रवृत्तेरदर्शनात् ॥ ६ ॥

एवञ्च उकारीत्यालोपाभावस्य सिद्धौ च तत एव अर्थानवगतेरेव उक्तभाष्यविरोधम्परिहरति भाष्यमपीति ह्रस्वस्य करोतीत्यत्र प्राप्तिप्रदर्शकभाष्यमपीत्यर्थः एकदेशयु
क्तिरिति तदर्थानवगतेरित्युकारीत्येकदेशयुक्तिरित्यर्थः भाष्यान्तरसंवादादपि तस्यैकदेशयुक्तित्वमित्याह तपरान्ताः परेणेति अत्रेदम्बोध्यम् अनेन सूत्रेण लघ्वलघू
च्चारणयोर्लोपः क्रियते यदि हलीति प्रकृतसूत्रे नोच्येत तदा देवाद्धेत्यत्र लघूच्चारणस्य यस्य लोपः स्यादित्याशयेन परमसूत्रे हलीति किम् देवायिहेत्युक्तम् लोपः शाक
ल्यस्येति सूत्रन्तु देवाद्धेत्यत्र लघूच्चारणस्य यस्य लोपविधायकत्वेन चरितार्थमेतद्विषये यकारस्य यत्र वैकल्पिको लोपस्तत्रैतद्विषयकशास्त्रारम्भान्नित्यो लोपो हल्ग्र
हणाभावेपि न प्रवर्तते इति एतेन वैकल्पिकलोपविषये नित्यलोपस्वीकारे विकल्पस्य वैयर्थ्यापत्तिरिति परास्तम् भाष्ये स्थितमित्यत्र भाष्यं ढ्रलोप इति सूत्रस्थं ज्ञाप्यमिति

एवञ्च करोत्यादिपरेपि तत एव लोपो न भविष्यतीति अत आह लोविशेषणं व्यर्थमेवेति सूचितम् भाष्यमपि तदेकदेशयुक्तिरेव तपरान्ताः परेणः सं
तीति लणसूत्रस्थभाष्यविरोधाच्च ढुडभावे ढत्वं चेति चेन नलोपसंग्रहः ढ्रलोपादिति ढ्रलोप इत्येतद्दृष्ट्या शुत्वं नासिद्धं सामर्थ्यादिति भावः भाष्ये स्थि
तमिति ढढ स्थूलेति सूत्रे इति शेषः द्रष्टव्यमितीति ष्टुत्व णिरयभावे चेष्टापत्तिरिति भावः उभयोरपीति त्वदवलंबभूतेन इति क्तेति शेषः तदा इ नाम
न इति अत्राङ्गवीजन्तु इदं दे नकार हकारलोपार्थमिति भाष्यविरोधः अनिर्दिष्टार्थस्तु इदं दितमित्येवेष्यते इति कैयटविरोधश्चेति किञ्च प्रसादे
करीत्यादेरपि ढुडभावढत्वयोः सिद्धौ विशिनषेधप्रकरणे ढढ इति निपातनस्य व्यर्थत्वमित्यलम् आगमानुत्पत्तयेति आद्यार्यभावारोपादित्यर्थः

असमानुत्पत्तये आह ढढः स्थूलेतीति द्रष्टव्यमितियोक्तिः साद ढ इति प्रक्रियोक्तप्रत्युदाहरणस्योपपादनाय प्रसादस्य तस्माद्ढ शब्दारण्णेन तात्पयित्यपि लघुपूर्वेति सूत्रन्नैव
प्रवर्तते इति तदभिप्रेतमित्याह अस्येति मते इति शेषः एतेनेयमुक्तिरपसिद्धान्त इति ध्वनितम् अत एवाह त्वदवलम्बेति अत्राङ्गवीतिवामनोक्तावरुचिवीजन्त्वित्यर्थः भा
ष्यविरोध इति नकारहकारलोपार्थमित्युपादाने ऽनिर्दिष्टार्थेन निपातनमिति स्पष्टमेवेति भाष्यविरोध इत्यर्थः वामनेनोभयोरपीति यद्यप्युक्तन्तथापि प्रक्रियाक्रमानाथानो
क्तमतः स्वस्योभयोरपीति नेष्टमिति प्रसादानुयायिशंकां वारयति किञ्चेति आत्रमिति योगविभागस्यागमशास्त्रानित्यत्वस्य चाप्रमाणत्वम् सर्वावलम्बभूतः ढढ स्थूलेति
भाष्यविरोधश्चेत्यस्यार्थः ननूत्तरस्याभावादित्यसङ्गतमष्टाध्याय्यान्तस्योपलम्भादत आह आद्यादीति पूर्वत्रासिद्धमिति शास्त्रप्रामाण्यादिति शेषः वस्तुतो विद्यमानेपि श

त्वेदंत्वस्य प्रतियोगिना सम्बन्धेनाभावस्यारोप्यत इतितस्याभावत्वानस्याहार्यत्वम् ॥ ॥ नहैयर्थ्यम् अनञ् समासग्रहणवैयर्थ्यम् नञ्समासः शिवद्दत्यादौ लोपाभावार्थं कृतम् यद्यत्रविहितविशेषणं स्यात्तदासोस्तच्छब्दाहिधानाभावेन लोपाप्रास्यात्तद्वैयर्थ्यं स्पष्टमेवस्तुतस्तुविहितपदाध्याहारेणत्वयोगपक्षवीकल्पनाशंमक्कमकल्पनापेक्षयाऽनन्तरपदाध्याहारेणनञ्चिरूपितसम्बन्धेषष्ठीत्येवोचितमतरवात्रेतिभावइत्युक्तम् इदमेवानञ्समासग्रहणन्नञ्समासउत्तरपदार्थप्रधानइत्यत्रज्ञापकमन्यथानञर्थाभावसविशेष्यत्वेउत्तरपदस्योपसर्जनत्वेनत्यदाद्यत्वाप्रास्यात्तल्लुङ्गादिलोपस्यदुर्वारतयातद्वैयर्थ्यमेवस्यात् पूर्वस्तस्येति अत्रादेशस्यचेत्यपिबोध्यम् इत्यादाविवेति अन्नयथाग्र्यादवघादवक्तसुरन्नमायमेवन्त्वस्तुपुचेति सूत्रप्राप्तस्यप्रकृतिभावस्याभाववदित्यर्थः केचित्तुसोऽहमाजन्मेत्यादिसिध्यर्थमवधारणपरतयाव्याख्यानेसाम्यास्त्रमित्यत्रसुलोपापत्तिः यदिवहुलग्रहणात्तुचन्त्यैवतत्साध्यते तदातेनैवसोऽहमाजन्मेत्यादेरपिसिद्धाववधारणपरतयाव्याख्यानस्यवैयर्थ्यमित्याहुः तन्न

सिद्धमिति विहितविशेषणेतद्वैयर्थ्यं स्पष्टमेवेतिभावः [illegible] सोऽस्माग्रमितिसंधावपिपादपूर्तेः नचप्रकृत्यान्तः पादमितिपूर्वरूपाभावेननपादपूर्तिः सोयमागादित्यादाविवात्रापिप्राप्तिशाखानिसिद्धेः एवंचावधारणपरतयानव्याख्येयम् सोऽहमाजन्मेत्यादौबहुलग्रहणेनक्वचित्प्रवृत्त्यापिसिद्धेरितितात्पर्यम् इतिश्रीदीक्षितभट्टोजिपौत्रदीक्षितहरिकृतेलघुशब्दरत्नेमनोरमाव्याख्यानेपञ्चसंधिप्रकरणम् ॥

लक्ष्यस्याभावदर्शनेनलौकिकेप्रयोगेशास्त्राप्रवृत्तिकल्पनमन्याय्यमित्याशयात् किन्तुलोकेलोपेसत्येवपादपूरणेलोपोभवतिनान्यत्रेत्यर्थस्यस्पष्ट ॥ [illegible] प्रतिपत्त्यर्थमत्रावधारणपरतयाव्याख्यानंप्राचामनुरोधेनकृतम् वस्तुतोवहुलग्रहणेनैवसर्वेष्टसिद्धाववधारणपरतयाव्याख्यानन्नकार्यमित्याह [illegible] बहुलग्रहणेनेक्तप्रयोगसाधनेचेत्यर्थः अप्रसक्तात्यर्थमित्यत्रान्वयः सिद्धेरिति लोपाभावस्यसोऽहमाजन्मेत्यादौसिद्धेरित्यर्थः [illegible] अतएवेतिवदतोमूलकृतइतिशेषः एवञ्चपरममूलस्याप्राचामनुरोधेनैतदेवध्वनयितुन्तत्रसत्येवेत्यवधारणमितित्तुशब्दोऽसूचितोऽथकउपात्तइतिबोध्यम् इतिश्रीमत्[illegible]सर्वपण्डितसार्वभौमभवदेवमिश्रात्मजभैरवमिश्रकृतिविरचितायां[illegible]सन्धिविवरणम् [illegible] सकृदुच्चरितःशब्दोऽनेकार्थपरोयत्रतत्रतन्त्रेतिव्यवहारः उभयम् प्रत्ययपदस्यप्रत्ययपरस्यप्रत्ययान्तपरमित्येतदुभयम् [illegible] ग्रहणन्तुलिङ्गित्यादौधातुपर्युदासात्प्रातिपदिकसंज्ञासिद्धयेऽत्रावश्यक ।

मिति भावः नचात्रापि लिङ्क्विदित्यवस्थायाञ्ज्ञातायाः संज्ञाया एकदेशविकृतन्यायेन लिङित्यत्र सौ लभ्यमिति वाच्यम् फलाभावेन तदानीमप्रवृत्तेः परत्वान्नित्यत्वादन्तर
ङ्गत्वाच्चाएकत्वोपस्य प्राक्प्राप्तेश्च वस्तुतस्तुद् कृत्तद्धितग्रहणमत्र नियमार्थं ङ्गः ग्रहणन्तु प्रतिषिद्धार्थमिदङ्किदित्यत्र निषेधस्य प्रसङ्गादिति कैयटेनोक्तङ् कृत्तद्धितग्रहणं नियमा
र्थमिति भाष्यव्याख्यावसरइति तदनुरोधेन यथोद्देशपक्षाश्रयणेनुक्तङ् ग्रहणमपि तदन्तप्रतिषेधे ज्ञापकमेव ॥ ः ॥ [illegible]मिति आदिनाञ्ग्धुनेत्यस्य सङ्ग्रहः असद्धा
यनयाव्यपदेशिवद्भावेनास्य तद्धितान्तत्वम् कृत्तद्धितेति तु साजात्याल्लब्धम् [illegible]मिति तदानादशस्य समुदायस्य प्रत्ययभिन्नतया तद्धितग्रहणं विनापीष्टसिद्धेः वस्तु
तोऽत्र सूत्रे धातुग्रहणमप्रत्ययग्रहणञ्च न कार्यम् कृत्तद्धितग्रहणन्तु धातोः प्रत्ययान्तस्य चेत् कृत्तद्धितान्तस्यैवेति तु नियमार्थं तेनेष्टसिद्धिरिति एकदेशविकृतन्यायेनेति शा
स्त्रीयेन स्थानिवद्भावेनेत्यर्थः नवेति नहीत्यर्थः [illegible] प्रशस्तार्थवत्त्वम् [illegible] केवलकृत्तद्धितमात्रस्य एतच्च तत्र तदन्तविधिलाभार्थमुपात्तं नियमार्थं तयोरूपा।

नचास्यापत्यमित्याद्यनित्यादौ प्रत्ययत्वप्रयुक्तनिषेधबाधेन तद्धितान्तत्वम् अत्रास्तीत्यवस्थायां प्रवृत्तसंज्ञाया एकदेशविकृतन्यायेन सुलभत्वात्
कार्यीभावेनेति नचैतत्प्रत्ययमात्रस्य तन्मात्रे एकार्थीभावाभावादिति भावः एकार्थीभावश्च यस्य प्रातिपदिकसंज्ञाचिकीर्षिता तन्मात्र वृत्तिरेव ग्राह्यः

दानमितिकल्पनायान्तु न प्रशस्तार्थवद्विषयको नियमः किन्तु एतस्यार्थबोधकत्वमर्थवत्त्वमेव पूर्वसूत्रे धातुप्रत्ययपर्युदासाद्विवक्षितन्ताद्दशार्थवद्विषयकमेवातएव भा
ष्ये प्रत्यय इति किम् काण्डे कुड्ये अप्रत्यय इति शक्यमवक्तुम् कस्मान्न भवति काण्डे कुड्ये इति कृत्तद्धितग्रहणं नियमार्थं भविष्यति कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रा
तिपदिकसंज्ञा भवति नान्यस्येति नियमप्रदर्शनेन प्रत्ययग्रहणप्रत्याख्यानसङ्गच्छते तन्मात्रे प्रत्ययमात्रे भावाभावादिति अर्थवद्द्वितीयाभावादिति शेषः यत्तु वाग्दृ
षदप्रिय इत्यादौ तद्धितान्तस्य प्रातिपदिकत्वापत्तिः संज्ञाया सुप्त्वाग्दर्शितद्धितान्तमात्रस्याप्रयोगेण प्रशस्तार्थवत्त्वाभावान्न दोष इति समाधानन्तन्नयुक्तम् सुप्प्रकृतिमा
त्रस्य कृत्तद्धितान्तस्य क्वापि प्रयोगस्यादर्शनेनासम्भवापत्तेः यदि त्वर्थबोधक इति प्रकृतिकसुबन्तसमुदायघटकत्वमित्यर्थस्तदा वाग्दृषदप्रिय इत्यादावप्यस्त्येवेति तदि
त्यातिप्रसङ्गवारणासम्भवः कृत्तद्धितमात्रेऽपि भवद्भक्तस्यार्थबोधक इति प्रकृति सुबन्तसमुदायघटकत्वस्य सत्त्वेनैताद्दशार्थकरणेऽपि तदन्तग्रहणालाभश्च स्यात्॥
वाग्दृषदमिति समाहारद्वन्द्वस्य प्रयोगदर्शनाच्च कात्यनिकस्य तस्याविशिष्टत्वाच्चेति तन्मात्रवृत्तिरेवेति प्राशस्त्यार्थकमतुप्प्रत्ययबलादेतल्लभ्यते ॥ ८ ॥

तद्धितान्तत्वेति समासान्तानामलौकिकविग्रहवाक्यावयवत्वसिद्धान्तेनटजन्तस्य तद्धितान्तत्व॰ स्य समाससंज्ञाप्युत्तरपदनिमित्तकास्तीति समासत्वस्य च सत्त्वमिति भावः ॥ एतेन समासग्रहणकृतनियमेनाव्याप्तिः सूचिता न चैकार्थीभावेऽर्थवत्त्वं द्वितीयसत्त्वमेव प्रकृते लुटचोनिरर्थकतया कथं तदन्ते एकार्थीभावस्य सत्त्वमिति वाच्यम् तस्या नर्थकत्वेपि तत्प्रकृतेरर्थवत्त्वेन तत्रैकार्थीभावस्य सत्त्वेन टच्चत्तादृशसमुदायावयवत्वात्तत्राप्येकार्थीभावस्य सत्त्वमित्याशयात् अत एव बहुगोमत्केत्यादावपि कवन्ते एकार्थीभावव्यवहारः न चार्थवत्त्वं द्वितीयसत्त्वमेव चेदेकार्थीभावव्यवहारस्तदा स्वन्तस्वार्थिककान्ते कथमेकार्थीभावव्यवहार इति वाच्यम् तस्यार्थवत्तद्धितान्ततुल्यतयाऽऽरोपेण तन्मात्रेप्येकार्थीभावस्य व्यवहारात् न प्रातिपदिकत्वमिति अतस्तादृशटजन्तात्टाप् यदित्युत्तस्य समुदायस्यादिदन्त त्वन्तदर्थम् अत्सुपसर्जनत्वएव ङीपोऽप्रवृत्तिरित्याश्रीयते तदा ङीबापत्तिरपि दोषः एतेनाधातुरिति प्रातिपदिकम् लिविति सुपः पकारेण प्रत्याहारः तत्क्रेणातिपत्तिवन्तत्ववर्जयित्वेत्यर्थः समासश्चेति द्वितीयं सूत्रम् । यद्वाऽविभक्ति प्रातिपदिकम् समासश्चेत्येवास्त्विति परास्तम् उक्तदोषापत्तेः किञ्चेतिप् प्रत्याहारस्याश्रन्यासे प्रत्यासत्त्यासिपः पकारेण ग्रहणेनेति थसा ऽप्यन्तेऽतिव्याप्तिः

गेन पंचनावप्रियदृति समासघटकपंचनावेत्यस्य तद्धितान्तत्वसमासांतत्वयोरपि न प्रातिपदिकत्वम् ॥

व्याप्तिन्यायश्चेद्विवक्षितस्तदा कृपः पकारेणतदापत्तिः एवञ्च टावादिकवन्तानाम्प्रातिपदिकत्वाय तद्धितस्त्रीप्रत्ययग्रहणङ्कार्यम् टापश्चाशब्द मारभ्य कपः पकारेण प्रत्याहारेण टावग्रहणं वा कार्यमिति गौरवम् वक्ष्यमाणरीत्या दृशादाडिमानीत्यादिसमुदायस्य व्याप्तये ऽर्थवद्ग्रहणस्यावश्यकत्वाच्च किञ्चाहन्नित्यस्य वक्ष्यमाणरीत्याऽतिवन्तत्वेन तत्र नलोपापत्तिवारणाय धातुग्रहणमप्यावश्यकम् केचित्तु इति मदर्थेवत् प्रातिपदिकमित्येव लक्षणङ्कार्यम् एवञ्च सूत्रद्वयाकरणेनल्लाघवम् अर्थवदित्यत्र भवदुक्तम् शास्त्रार्थवत्त्वं विवक्षितमतो न पञ्चनावप्रियदृत्यादौ दोषः न चाव्युत्पन्नानाम्प्रातिपदिकसंज्ञा न स्यादिति वाच्यम् सर्वत्र प्रकृत्यादिकल्पनेनाव्युत्पन्नत्वस्यैवकल्पनात् यद्यपि पचतकीत्यादिभ्य एवं सति सुबुत्पत्तिः प्राप्नोति तथाप्येतादृशानां नपुंसकत्वाभ्युपगमेन सुपो लुकासिद्धम् न चैवमेधतके इत्यादौ नपुंसकह्रस्वापत्तिरिति वाच्यम् सप्तम्यधिकरणे चेति ज्ञापकेन विभक्त्यन्तप्रातिपदिकस्य ह्रस्वत्वाभावज्ञापनात् सुपो धात्विति सूत्रे प्रातिपदिकपदोपादानमात्रेण सिद्धे धातुग्रहणेन धात्वर्थविशेष्यकत्वेनाप्रातिपदिकत्वाभावस्य ज्ञापनाद्वा नचैवमप्यचतिकल्पमित्यादौ प्रातिपदिकसंज्ञा न स्यादिति वाच्यम् ॥

धात्वधिकारीयप्रत्ययान्तत्वेनाप्रातिपदिकत्वाभावस्य ज्ञापनात् भोक्तुं पाक इत्यादौ धात्वधिकारीयप्रत्ययसत्त्वेपि धात्वर्थविशेष्यकबोधाजनकतया न क्षतिः सर्वत्र व्यु-
त्पत्तिपक्षस्यैवाङ्गीकारेण निपातस्यानर्थकस्येति वार्त्तिकमपि न स्वीकार्यमित्याहुः तन्न वृत्तिपदस्य कृदन्तादिबोधकतया तद्वत्त्वस्य तत्र वक्तुमशक्यत्वात् किञ्चैको द्वौ बहु-
व इत्यादौ विधानन्विताथैकविभक्तिकस्य नापेक्ष्यानुवादकविभक्तेर्न्याय्यतया पचतकः पचन्तकीत्यादिभ्यो द्विवचनबहुवचनयोरेवोत्पत्त्या लुका तयोरपहारासम्भ-
वेन श्रवणापत्तेः किञ्च विभक्त्यर्थप्रधानस्य लिङ्गसंख्याभ्यां योगो नास्तीत्यस्य भाष्यसम्मतत्वेन पचतीत्यादिभ्यः परस्य सोर्लुका पहारस्य वक्तुमशक्यत्वाच्च किञ्च सप्तम्य-
धिकरणे चेति निर्देशेन सामान्यतो विभक्त्यन्तप्रातिपदिकस्य कृत्स्वलन्तेति कल्पनेऽन्तरङ्गानपीति न्यायेन प्रक्रियुक्तमित्यादौ पूर्वं सुपो लुकि कृत्स्वत्वानापत्तिः किञ्च पुत्री-
यतीत्यादौ क्यजन्तस्य धातुसंज्ञया सुपो लुग्भवति तस्य धात्वधिकारीयप्रत्ययान्तत्वलुनाक्षीति धातुग्रहणस्य चारितार्थ्येन ज्ञापकत्वासम्भवः यदि च वृत्तिमदित्यत्र व्य-
पदेशिवद्भावेन स्वेनैव वृत्तिमत्त्वमनुपस्त्यागेन वृत्तिरित्येवाश्रीयते तदा प्राथमिकदोषोद्धारेपि डित्थडवित्थादिशब्दस्याव्युत्पन्नत्वेनैषां प्रातिपदिकसंज्ञानापत्तिरिति दिक् ॥

प्रियशब्दात्तत्पवत्तत्रैकार्थीभावो न तु तन्मात्रे इत्यदोषात् न च क्विवन्ते दोषः तत्र धातोरेव विशिष्टार्थबोधकत्वेनार्थवद्वितीयाभावेन पृथगर्थानामेकोप-
स्थितिजनकत्वरूपैकार्थीभावाभावादिति वाच्यम् अलौकिकवाक्यकल्पितैकार्थीभावस्य तत्राप्यारोपेणादोषात् ॥ ९ ॥ ॐ ॥ तेनेत्यनेनोक्तमर्थं स्पष्ट-

प्रतिपत्तये आह प्रियशब्दात्तत्पवेति तत्र पञ्चनाव प्रिय इत्यादौ अयम्प्रियशब्दात्तन्निष्ठैकार्थीभावस्योत्तरपदनिमित्तकहिं गुप्रयोजको न तु तो शब्दात्ते ऽन्यस्यैका-
र्थीभावस्य स्वीकारः वृत्तिधर्माणामेकार्थीभावफलाबात्प्रियशब्दात्तन्निष्ठेनैवोपपत्तेरिति भावः प्रियशब्दात्तदित्यस्य प्रियशब्दप्रकृतिकसुबन्तदित्यर्थः अदोषा-
दिति प्रशस्तार्थवत्त्वानापत्तिरूपदोषाभावादित्यर्थः दोष इति प्रातिपदिकसंज्ञाया अप्राप्तिरूपदोष इत्यर्थः दोषमुपपादयति तत्रेत्यादिना धातोरेवेति यः शिष्य-
ते इति न्यायेनावशिष्टः श्रूयमाणो लिह इत्यादिशब्द एव लेढृ नकर्त्रादिबोधक इति भावः अलौकिके वाक्ये लिह् क्विवित्यत्र अस्य वाक्यत्वञ्च शक्तशब्दसमुदा-
यत्वरूपम् तस्यार्थबोधनाय प्रयोगाभावेन नैकोपस्थितिजनकत्वस्य सङ्घावो ऽत आह कल्पित इति तत्र लुप्तक्विबन्ते अदोषादिति वास्तविकस्य विशिष्टार्थबोध-
कत्वस्य तत्राभावेन प्रातिपदिकत्वाभावापत्तिरूपदोषाभावादित्यर्थः एतेन पदैकार्थीभावेनेत्यादिमूलोक्तमनूद्य तन्न औपगवो दक्ष इत्यादौ सुबूविशिष्टस्यैव तत्पत्ते।

नाव्याप्त्यापत्तेः किञ्च समासग्रहणं व्यर्थम् वाक्ये एकार्थीभावविरहेण तस्य नियमार्थत्वायोगात् किञ्च भोः कुम्भुत्वा शुक्लतरः पाचकतमः इत्यादावव्याप्तिः तसुन्नन्तादेः प्रत्यया न्तत्वे सति अर्थप्रत्यायनयोग्यत्वम् अप्रशस्तार्थवत्त्वमिति निरस्तोऽक्रोक्तः अतः परास्तम् प्रशस्तसमीपत्वेनारोपित प्रशस्तार्थवत्त्वस्य औपगवादेः सुब्रहितेः सत्त्वात् समासग्रहणस्य नियमार्थत्वमप्येवमेवोपपादनीयम् अनेनाव्यर्थं स्यादित्यन्तग्रन्थेन सातेरुपादानेना पूर्ववचनकल्पनापेक्षयाऽल्पप्रत्ययपदस्यान्तत्वेवनस्यतात्पर्यग्राहकत्वं युक्तमितिभावः औत्सर्गिक इति सङ्ख्याकर्मादेरभावादित्यर्थ उक्तम् ॥ ः ॥ तस्यापीति सातेरपीत्यर्थः अपिः प्रकृतिसमुच्चायकः न चैवम् प्रकृतिप्रत्यययोः समासापत्तिः बहुचञ्चित्वसामर्थ्येन प्रकृतिप्रत्यययोः समासाभावस्य कल्पनात् इतिभाव इति मूलकारस्येति शेषः एवमभिधानेनास्य विधेर्ध्वनिता सा वस्तुतस्त्वित्यादिना ऽग्रे स्फुटा तस्य च सोऽत्र न के

व्यर्थं स्यादिति अनेन प्रत्ययपर्युदासे मानमुक्तम् सातेः प्रातिपदिकत्वे हि ततः औत्सर्गिके कवचने तस्यापि सुबन्तत्वेन पदत्वे पदादित्वादेव निषेधसि द्धेस्तद्व्यर्थमिति भावः सोऽर्थवत्त्वादिति तस्य च समुदाय प्रातिपदिकत्वेन तदवयवत्वात् लुक् समुदायसंज्ञा चान्तरङ्गत्वादवयवेभ्यः प्रातिपदिकत्वात् सुपि सति प्रवर्तते इति तस्य तदवयवत्वमसङ्गतम् पचति ध्वनतीत्यादीनावयवानां सा धातुप्रत्ययान्तपदयोस्तदवयवपरत्वेन तत्र तन्निषेधात् दस्माद्व्युत्पन्नप्रातिपदिकावयवेभ्यस्तदुत्पत्तिरापाद्या धनशब्दस्य धिनोतेर्द्धन मिति व्युत्पत्तिपक्षे तु वनाद्युदाहरणं बोध्यम् ॥ ११ वन्तेति निषेध

विषयतायाः सत्त्वेन सोऽस्त्यति रुचित्वेवेति भावः प्रातिपदिकावयवत्वन्तस्योपपादयति समुदायेत्यादिना संतिन प्रत्येकं सोऽस्त्यतो न च क्रुवणापत्तिरिति दूषणस्य रिहतम् नन्वेवन्तत्र लुक्प्रवृत्तावपि धात्ववयवादुत्पन्नस्य श्रवणापत्तिरत आह पचतीति तन्निषेधादिति प्रातिपदिकसंज्ञाप्राप्तिनिषेधादित्यर्थः अत्र धात्ववयवादुत्पन्न । स्यापि लुकापहारस्तु नोक्तः अधातुरिति पर्युदासात् प्रत्ययावयवस्याप्येवम् श्रवणापत्तिः समुदायस्य प्रातिपदिकावयवत्वन्तु न अप्रत्यय इति पर्युदासात् न च यदि धातुप्र त्ययपदयोस्तदवयवे लक्षणा तदा तयोरेव निषेधो न स्यादिति वाच्यम् प्रागुक्त तद्धितग्रहणकृत नियमेन तयोर्वारणात् तस्मात् व्युत्पन्नेऽक्तरीत्या दोषवारणात् आ पाद्या आपादनाद्धा एतेन भाष्योक्तम् धनं वनमिति प्रत्युदाहरणमेतयोरव्युत्पन्नत्वाभिप्रायेणेति ध्वनितम् व्युत्पत्तिपक्ष इति अत्र द्वेव व्युत्पत्ती यस्के नोक्ता वनशब्दे तु

ध्वनितमिति एतस्यैवोदाहरणत्वप्रदर्शनेन ध्वनितमित्यर्थः नलोपाद्यापत्तिरिति अत्रादिपदेन वनशब्दे वकारस्य लोपो व्योरिति लोपापत्तिः धनिशब्दावयव धकारस्य जश्त्वापत्तिश्च दोषः इदम् प्रतिवर्णम् प्रातिपदिकसंज्ञापत्तौ सुबुत्पत्त्यापत्तिरूपन्दूषणम् अभ्युपगमेनेत्युक्तिसूचितमर्थं स्पष्टप्रतिपत्तये आह वस्तुतस्त्विति अन्वयदीति कश्चित्पाठः तदुत्पत्तिः सुबेकवचनोत्पत्तिः अत्र सुबिति कथनेन सप्तानामपि विभक्तीनामेकवचनानीति पक्षः सूचितः इदमुपलक्षणम् औत्सर्गिकैकवचनस्यापि अन्यत्रानुत्पत्तौ हेतुमाह एकवचनमिति महासंज्ञाकरणमन्वर्थत्वाय यदि गमकाभावेपि तदुत्पत्तिः स्यात्तदा महासंज्ञाकरणमनर्थकं स्यादिति भावः एवमर्थनियमादिप्रकारत्रयं वक्ष्यमाणमपि सत्येव गमके इति बोध्यम् प्रकृते धनवनमित्यादौ अत एव गमकं विना तदनुत्पत्तेरेव त्वदीत्या साधकाभावेप्यौत्सर्गिकैकवचनोत्पत्तिरिति प्रकारेण अत एव प्रकृतसूत्रे भाष्ये निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या स्वञ्जति निस्वञ्जति लम्बते प्रलम्बते किम्पुनरत्र प्रातिपदिकसंज्ञया प्रार्थ्यते प्रातिपदिकादिति स्वाद्युत्प

ध्वनितं चेदं भाष्यकैयटयोः तस्मान्नलोपाद्यापत्तिदोषः इदमव्ययेभ्य इव तेभ्योपि सुप एकवचनाभ्युपगमेन यदि तु तदुत्पत्तिः सत्येव गमके यथाऽव्यये भ्य उत्पत्ता वृव्ययादाप्सुप इति गमकं नान्यत्र एकवचनमित्यादिमहासंज्ञाकरणात् प्रकृते तु न तथा गमकम् अत एव ङ्याविति सूत्रे प्रातिपदिकाधिकाराभावेति ङ्सेभ्यस्तदुत्पत्तिमाशंक्य कृत्वादीनामु कृत्वान्तेति समाहितम् त्वद्रीत्यौत्सर्गिकवचनं दुर्वारमेव अत एवाग्रे भाष्येऽर्थवत्पद स्यदशदाडिमानीत्यादिपदसमुदायो निरर्थको व्यावर्त्यत्वेन प्रदर्शितः तत्र हि सुपो धात्वित्यस्य प्राप्तिरितितदवास्य मुख्यं व्यावर्त्यम् ॥ ७ ॥ ७ ॥

तिः सुबन्तमिति पदसंज्ञा पदस्य पदादिति। निघातो यथा स्यात् नैतदस्ति प्रयोजनम् सत्यामपि प्रातिपदिकसंज्ञायां सुबुत्पत्तिर्न प्राप्नोति

—— किं कारणम् न हि प्रातिपदिकसंज्ञायामेव स्वाद्युत्पत्तिः प्रतिबद्धा किन्तर्ह्येकत्वादिष्वप्यर्थेषु स्वादयो विधीयन्ते न चैषामेकत्वादयः सन्तीत्यादिकसुक्तम अत एव च प्रकृतसूत्रशेषभाष्ये काएडेकुडेय इत्यत्र पूर्वान्तवत्त्वेन प्रातिपदिकत्वाद्ध्रस्वत्वमाशंक्य ह्रस्वो नपुंसके यत्स्यादिति न्यासान्तरेण तद्वारणम्प्रदर्शितं तत्र तु तत्र सु बुत्पत्तिर्दर्शिता उक्तार्थे साधकान्तरमाह अत एवेति प्रातिपदिकावयवानामव्यावर्त्यत्वादेव संतेनार्थवदिति व्यपदेशाय वर्णानाम्मा भूदित्युपक्रमभाष्यमेकदे। त्युक्तिरिति सूचितम् निरर्थकः परस्परान्वितार्थबोधाभावेन निरर्थकः मुख्यमिति इदमपि यथाश्रुतरीत्या वस्तुतस्तु वक्ष्यमाणसिद्धान्तरीत्या प्रत्ययस्य पञ्चगवध

इत्युक्तमित्येतावन्मात्रकथनेपि पौनरुक्त्यभावो न लभ्यत इत्यत आह एतेनेति तेन आरोपेण तन्मात्रस्य इडु.मात्रस्य तदुत्तदर्थत्येव वाच्यत्तावत्तैव प्रक्रान्तयोः प्रकृतिप्रत्य
ययोर्बोधसम्भवेन तत्तदर्थेति वाच्यम् नच स्पष्टप्रकृतिप्रत्यययोर्बोधनाय इन्द्वनिर्देशोयमिति वाच्यम् एकशेषप्रसङ्गादत आह तस्येति कृतद्विर्वचनेन वीप्सायामित्या
दिः षष्ठीसमासे अर्थविभागशब्दस्यार्थशब्दस्यवेति शेषः एकदेशान्वयापत्तिभिया आह समस इति अत्रापि समस इति वीप्सायामेव द्विर्वचनम् इदम् तत्तदर्थविभाग इति पर
म् उक्तरीत्या साधुत्वे उपष्टम्भकं सूत्रयन्नाह एतेनेति उक्तप्रकारेणेत्यर्थः ननु प्रत्ययग्रहणपरिभाषया कृतद्विर्वचनस्य षष्ठ्यन्तत्वसुबन्तत्वयोरभावात्कथं षष्ठीसमास
स्य कर्मधारयस्य वा प्रसक्तिरत आह सुबन्तत्वमपीति। अपिना षष्ठ्यन्तत्वपदत्वयोः परिग्रहः द्विः प्रयोगपक्ष इवेति यद्यपि समासग्रहणकृतनियमेन समुदायस्याप्राप्ति

एतेनेदमुक्तमेव पुनर्दार्ढ्यायोच्यत इति सूचितम् आद्य इति सर्वं तत्र — भाष्यम् अर्थवदिति वर्तते कृतद्विर्मात्रं त्वैवार्थवत् न केवलाः कृत्तद्धि
तावेति कृत्तद्धितेति सूत्रे त्वग्रहणं न कार्यमिति अर्थवद्ग्रहणसामर्थ्यादेव चेदृशार्थलाभ इति कैयटः [illegible] तेन तन्मात्रस्य क्रियावा
चित्वनिबन्धनधातुत्वसिद्धिरिति भावः तत्र क्रियावाचकत्वम् [illegible] तस्य तस्येति कृतद्विर्वचनेन षष्ठीसमासे समासोऽर्थविभाग इति
कर्मधारये वा विभक्तिलुकि इदं साधु एतेनान्यान्यप्रादुर्भावादित्यपादाने पञ्चमीति सूत्रस्थभाष्यप्रयोगोपि व्याख्यातः सुबन्तत्वमपि द्विः प्रयोगपक्ष
इव स्थाने द्विर्वचनपक्षेपि आद्यान्यशब्दे प्रकृतित्वबुद्ध्यान्त्यस्य शब्दे प्रत्ययत्वबुद्ध्या सूपपादम् [illegible] ॥ ९ पदिकात्वन्त्यापि कस्कादिगणे कौतस्कु

त इत्यस्य पाठेन तद्धितोत्पत्तिर्भवतीति ज्ञापनवदाद्योच्चारणविषये यस्माद्धितस्तत्त्वबुद्धिरन्त्यस्य शब्दादौ सुत्वषष्ठ्यन्तत्वबुद्धिरित्यपि कल्पनीयमुक्तापादाने पञ्चमीति सूत्र
स्य भाष्यप्रयोगादित्ययेत्यर्थः वस्तुत उक्तप्रयोगाभ्यां स्थाने द्विर्वचनपक्ष एव ज्ञाप्यत इत्याशयेनाह स्थाने द्विर्वचनपक्षेपीति अस्यापसानत्वेन निर्देशो युक्तत्वस्य सू
त्वनाय यद्यप्यस्मिन् पक्षे स्थानिवद्भावेन सुबन्तत्वं सूपपादम् तथापि त्वदुक्तरीत्यैव निर्वाह इत्याशयेनाह आद्येति अत्राद्यशब्दः सुलभत्वध्वननाय नन्वस्मिन् पक्षे समु
दाये स्थानिवद्भावेनोक्तरीत्या वा सुबन्तत्वबुद्धिर्भवतु तथापि तदवयवे सुत्वबुद्धिर्न स्यात् वस्नसादिषु प्रकृतिप्रत्ययविभागसम्मोहो यथा अतस्वादिष्टदित्यत्र स्थाने द्विर्व
चनपक्षेपि लोपानापत्तिरूपं दूषणं समभिहितम् तथा च सुपो धातुप्रातिपदिकयोरित्यस्य कथं प्रवृत्तिरिति चेन्न उक्तभाष्यप्रयोगेणानभिमतादेशस्य समुदाये कल्पनेन दोषाभावात् एव

आद्यन्तौ द्विर्वचने स्थानिनि समुदायावयवे वा यायावृद्धिः सासा ऽधुनापीति सुब्लुकः सिद्धिः अत एव ऽग्रे ऽग्रे वृक्षान् वृक्षान पचन्न पचन्नित्यादौ पूर्वरूपणत्वप्रतिषेधङमुडा गमादीनां सिद्धिः अत एवास्य्यन्यस्तोतावेव सुप्तिङ्ङ्योतनः परीमेव प्रकृतिरावासमुदायपदत्वमेते नेति षाष्ठे सकाचइति सूत्रे भाष्यकृतोक्तम् ॥ ॥ सर्वपदार्थमाह [illegible] तूपसर्गेति एवमेव कल्पितेनैव स्फोटः स्फुटत्यर्थो ऽस्मादिति स्फोटः वाचकः शब्दः स च हृदयप्रदेशे ऽभिव्यक्तः कर्णपिधाने सूक्ष्मतरवायवभिघातेन स्वमात्रश्रव्यः प्रण वापरपर्यायनादशब्दबोध्यः आन्तरोव्यञ्जकतत्तद्वर्णप्रतिबिम्बयुक्तोऽभिधीयते अधिकमन्यत्र स्फुटम् यद्यप्यष्टौ स्फोटा अन्यत्रोक्तास्तथापि निष्कर्षे वाक्यस्फोटस्यैवा वस्थानमित्यत्रान्ते लेखः तस्य परमार्थत्वे साधकमाह लोकानामिति व्युत्पित्सूनामित्यर्थः प्रयोज्यप्रयोजकवृद्धव्यवहारेणाव ग्रहस्य तत्रैवोत्पत्तेः नन्वेवं शास्त्रेणत

धातूपसर्गविभागो वृत्तिष्वेकार्थीभावश्चैवमेवेति भावः स्फोट एवेति पदरूपो वाक्यरूपो वेत्यर्थः लोकानां तत्रैव शक्तिग्रहेण बोधादिति भावः अत एव तस्य परमार्थत्वम् लोके बोधजनकत्वात् शास्त्रेण प्रकृतिप्रत्ययविभागव्युत्पादनेन विशिष्टपदस्यैव तत्तदर्थबोधनद्वारा विशिष्टे पदे विशिष्टा र्थकत्वमेव बोध्यते उपलालनाद्यत्यस्यभवतीति शेषः ननु वास्तवत्वाद्भिभावस्तदाह असत्य इति आरोपित इत्यर्थः लोकानां मतत्त्वच्छेदजन्यबोधानुप योगित्वात्तत्त्वम् सत्यम् विशिष्टशक्त्या बोधकं पदादीत्यर्थः स्युरिति अधिजगे अध्यगीष्टेत्यादौ अर्थवत्त्वादिति आरोपितार्थवत्त्वादित्यर्थः शास्त्र कृत् भाष्यकृदादिः समन्तेति तद्वितविषय इति शेषः औत्सर्गिकप्रवृत्तौ हेतुमाह इष्टस्य लोपीति ॥ [illegible] स्याप्रतिपादनेन शास्त्रानर्थक्यमाशङ्केतीत्यत आ

ह [illegible] पाणिनीयेनेति शेषः पदस्यैवेति तद्द्वारा वाक्यस्यैवेत्यपि बोध्यम् प्रतिवाक्यं सङ्केतग्रहासम्भवाल्लघुभूत उपायः शास्त्रेण बोध्यते शाखाचन्द्रन्यायेन एवञ्च तत्तदवयवस्य तत्तदर्थानाञ्च प्रदर्शनं वाचकस्य समुदायस्य विशिष्टार्थस्य च बोधन तात्पर्यकमेवेति भावः स च समुदायो बोद्धस एव परम्परया बोध्यते ऽयोऽपि बोद्ध एव अ तस्य एवं व्युत्पत्त्यासुतरां स्यादेरुपपत्तिः क्रियापदरहितस्य बोधकत्वाभावादाह भवतीति उपलालनाः वञ्चनस्थानापन्ना मिथ्या भूता इत्यर्थः पर्यवसितार्थमाह [illegible] तस्यारो पितत्वमुपपादयति लोकानामिति मुख्यार्थवत्त्वाभावादाह आरोपितेति गौतमादिभ्रमापगमायाह भाष्यकृदादिः त्रिषु प्राधान्याद्भाष्यकृत एवात्रादावुल्लेखः अत्र नि वि [illegible] सर्गपाठो युक्तः शास्त्रकृच्छब्दस्य मूले समस्तत्वात् ननु प्रत्याहाराह्निक इत्यादिना स्पष्टमित्यन्तेन भाष्यकारमतस्य दर्शितत्वान्नैवेति शङ्कायामनुत्थितिरत आह गौ

तथा च तद्धित विषये प्रत्याहाराह्निके नोक्तमिति शङ्कायाउस्थितिरितिभावः वचनस्यौत्सर्गिकी प्रवृत्तिर्गमकसापेक्षेति प्रकृते गमकाभावात्कथम्प्रवृत्तिरत आह औत्सर्गि
केति अत्र गमकान्तरानुक्तेश्चकारस्य प्रयोगोऽनुपपन्न इत्यत आह चः पञ्चम्यर्थ इति पातादिति पञ्चम्यर्थ इत्यर्थः एवञ्च चकारो व्यर्थ एवेति तात्पर्यम् अनेन कथञ्चिदि
ति पदेन एतेन तज्ज्ञापनस्य भाष्यसम्मतत्वेऽपि तस्य फलत्वाभावो ध्वनितम् इदं किञ्चित्त्रपो इति न्यायसत्तामप्रदर्शयति इकोचीत्यादिना यद्यप्युत्तरार्थे तथाप्युत्तरा
र्थे ——— स्यैतस्यैव करणमुचितमिह करणं कि स्विन्नस्फलसाधकत्त्वात्किम् त्रपोइतीति तदर्थः अनित्यत्वेति एतेन तस्य निषेधस्य पाक्षिकी प्रवृत्तिरिति प्रदर्शितम्
तत्फलत्वेऽइकस्वादिति सूत्रस्थ भाष्ये त्रपु इति प्रयोगाएव इत्यस्तीति अर्थवद्ग्रहणस्यैव ज्ञापकत्वसम्भवे सतीत्यर्थः लघुनेति एकस्यास्य फलद्वयसाधकत्वसम्भवे

चः पञ्चम्यर्थ इत्युक्तानुवादकः कथंचिदिति अनेन तदनावश्यकत्वमेवेति ध्वनयति ननूत्तरत्र चरितार्थस्य कथं ज्ञापकत्वमत आह उत्तरार्थे
स्यापीति इकोचि इति सूत्रेऽजग्रहणस्योत्तरार्थतामुक्त्वा भाष्ये उक्तमिह किंचित्त्रपो इति नतु मतेति निषेधानित्यत्वज्ञापनद्वारा त्रपो इत्यत्र गुणः फलमि
ति तदर्थः इत्यस्तीति लघुनाऽनेनैवानित्यत्वज्ञापनमाश्रित्य न्यायानुसरणेन तयाः प्रत्याख्यानसंभव इति भावः न लोप इति सुब्लुगित्यस्तु
मोक्ता भूवादय इत्यस्य लविधौ तिबादिविधौ चोपस्थिते निरवकाशतयाऽपवादैस्तिबादिभिर्वा धातुकार्यकालपक्षादिति न च यथोद्देशेऽपि प्रत्ययान्तत्व
स्याभावितत्वेनाकृतव्यूहपरिभाषया फलाभावेन च संज्ञायास्य प्रवृत्तिरिति वाच्यम् ॥ (( ।नित्यत्वज्ञापनमात्रफलकं यत्तदिदं यत्नस्य व्यर्थमिति तात्पर्यम् ननु धातोः प्रा
तिपदिकसंज्ञायान्ततः सुब्लुक्त्याप निर्विकल्प्या इयोः संज्ञयोरेकदारीयान्यत्वेन समावेशेऽपि परत्वात्सुब्विधायकशास्त्रस्य तत्प्रवृत्तेन्याय्यत्वात् लडादयः पुन्ने यस्तीत्यादेः सावका
शाः भुवादय इति धातुसंज्ञापि क्रियावित्यादावियङादिसम्पादकत्वेन च रितार्थेति न लोपमात्रस्य फलत्वेन प्रदर्शनमफलमत आह सुब्लुगितिरिति निरवकाशतयेति अ
स्य सवेशेत्यादिः एतेन पूर्वं लडादीनामुत्पत्तिरिति ध्वनितम् एतेनापवादविषये बाध्यप्रातिपदिकसंज्ञायाः कथम्प्रवृत्तिरिति शङ्काया नावकाश इति ध्वनितम् अपवादश
ब्दोऽत्र बाधकपरः तिबादिभिरित्यादिशब्देन तत्स्थानिलडादेरपि संग्रहः येन नाप्राप्तिन्यायस्य नात्र विषयतास्मत्ति प्रातिपदिकसंज्ञाया अप्राप्तिविषये चारितार्थ्याभावा
त् गमकाभावाद्यौत्सर्गिकैकवचनोत्पत्तिरपि नोक्ता ननु न लोपवारणस्य यथोद्देशपक्षेऽपि सम्भवेन विशिष्यात्र कार्यकालपक्षस्यैवोपादानमफलमित्याशङ्कां वारयितुम्

पक्षमते नचेत्यादिना अतएवभाष्ये प्रत्ययइत्यत्र पर्युदासप्रसज्यप्रतिषेधयोराशङ्काङ्कृत्वा न्त्येराजानस्केत्यादौ प्रत्ययलक्षणेन प्रतिषेधः प्राप्नोतीति शङ्कायान्नङीतिद्वा
पकान्तरदोषइतिसाधारण्येनोक्तिः संगच्छतइतिभावः फलाभावेनेति तस्मिन्कालइत्यादिः अप्रवृत्तिरिति तदानीमितिशेषः मूलस्योक्तभाष्यस्य च तात्पर्यन्दर्शयितुमादौ कै
यटादिरित्याह अकृतेति अनित्यत्वादिति प्रकृतिप्रत्यापत्तिवचनेनानित्यत्वादित्यर्थः स्वसिद्धान्तरीत्याह असत्वेति पूर्वोक्तद्वितीयहेतुन्निराचष्टे भविष्यतीति तत्रपक्षेय
थोद्देशपक्षे यथाश्रुतभाष्यस्यप्रकारान्तरेणसङ्गमनेमूलकारोक्तरीत्यातद्योजनसुचितमित्याशयेनाह यथोद्देशेति पर्युदासे लाघवाद्धातुरितिपर्युदासे लक्ष्यसिद्धेः
अहन्नित्यस्यराजेत्यस्य च लक्ष्यस्यसिद्धेः शङ्कासमाधाने नचकार्यकालपक्षे इत्यादिनाशङ्कासमाधानेनिर्दले निःसारे शङ्केति दोषस्येत्यादिः अतएवभाष्यकृ
तापर्युदासपक्षे राजानस्केत्यत्रदोषशङ्का नकृतेति बोध्यम् तत्राहन्नित्यत्र निङुत्पत्तेः प्राक्प्रातिपदिकसंज्ञायाव्यावर्तकतयाधातुपर्युदासस्यसार्थकताम् राजेत्यस्यतु प्राक्प्रवृ

अकृतव्यूहपरिभाषयाऽनित्यत्वादसत्वाच्च भविष्यतीतिकिञ्चित्फलमित्यभिसंधिमात्रेण तत्रपक्षेसंज्ञायाः प्रवृत्तेः प्रगृह्यसंज्ञाप्रकरणेकैयटे।
नोक्तत्वाच्च यथोद्देशपक्षेणपर्युदासेलक्ष्यसिद्धेः शंकासमाधाने। त्वनिर्दलेनह्यव्यवस्थितयोः पक्षयोरन्यतरपक्षेणलक्ष्यसिद्धेः पक्षान्तरेणशं
काउचितेत्यर्थस्य प्रगृह्यसंज्ञाप्रकरणे भाष्येध्वनितत्वादितिकश्चित् ॥ ]त्तप्रातिपदिकसंज्ञयासुलुप्त्यानलोपस्यप्रवृत्त्याचसिद्धिः पर्युदासेत्युपादा।

नतु यदि प्रसज्यप्रतिषेधः स्यात्तदानिषेधाश्चबलीयांस इतिन्यायेन प्रत्ययोत्पत्तेः प्रागपिनिषेधविषये बाध्यप्रातिपदिकसंज्ञायाः प्रवृत्तिनस्यादित्याशयेन एतेन कैयटो
क्तिरपिपर्युदासपक्षे नङीत्यस्यज्ञापकत्वोपपादनपराऽतिस्सारेतिदर्शितम् नहीति अत्र हिशब्दोयतइत्यर्थेवर्तते पक्षयोः कार्यकालयथोद्देशपक्षयोः भाष्येध्वनितत्वा
दिति तत्रह्यग्नीइत्याहेत्यत्र प्राक्प्रगृह्यसंज्ञायात्तस्यस्थानेगुरोरनृतइतिप्लुतेइदूदेदितितपरकरणात्पुनः प्रगृह्यसंज्ञाप्रकृतिभावफलिकानप्राप्नोति प्लुतसंज्ञाकृतस्य
प्रकृतिभावस्यतप्रवृत्तिरप्लुतवदुपस्थितइत्यप्लुतवद्भावस्यविधानात् प्रगृह्यसंज्ञाविधायकसूत्रेदृष्ट्याप्लुतस्यासिद्धत्वन्तु नभवति कार्यकालपक्षे प्रगृह्यसंज्ञायाःप्लुत
प्रगृह्येत्येतदेकवाक्यतयास्वरसन्धिस्थत्वसम्भवात्सिद्धः प्लुतः स्वरसन्धिष्वित्यनेनसिद्धत्वस्यबोधनादित्याशंक्ययथोद्देशपक्षाश्रयणेनसमाहितन्तेनास्यध्वनितत्वा
दित्यर्थः काश्चिदिति अत्रारुचिबीजन्तु यथोद्देशपक्षेयद्युक्तरीत्यानिर्वाहस्तथापिपक्षान्तरसम्बुद्धिपदस्योक्तार्थज्ञापनपरत्वम्भाष्यकृदुक्तमनुपपन्नमेवेति वस्तुत

द्वित्वादिविशिष्टार्थाभिधायकद्विवचनाद्युत्पत्तिर्निर्बाधैवेति भावः [illegible] दिति प्रत्येकमनेकार्थाभिधायकत्वस्य कल्पनादित्यर्थः॥ ॐ॥ सत्यन्यक्षे प्रसक्तातिप्रसङ्गं वा रयति रामकृष्णावित्यादाविति द्वन्द्वविधानसामर्थ्येनेति इदमुपलक्षणम् समानार्थानामिति विशेषणसामर्थ्यादित्यपि बोध्यम् [illegible] कालिकस्य युगपदधिकरणत्व वचनत्वात्त्राकालिकस्य तन्त्र वार्तिकप्रवृत्तौ निमित्तत्वादिति निमित्तत्वेनाश्रयणादित्यर्थः मूलेऽजहत्स्वार्थायामिति अस्मिन्पक्षेऽवयवानामनर्थकतया प्रत्येकं द्विव चनाद्युत्पत्त्यसम्भवः पक्षान्तरेऽपीति अजहत्स्वार्थावृत्तिपक्षेऽपीत्यर्थः प्रथममेकवचनस्य प्रवृत्तौ साधकमाह [illegible] त्यादिना तत्कल्पनेऽपि अनेकार्थाभिधायित्वक ल्पनेऽपीत्यर्थः तन्नरम् सुबुत्पत्त्यनन्तरम् [illegible] युगपदधिकरणताकल्पकेत्यर्थः एवञ्च सुबुत्पत्तिकाले तयोरप्रवृत्त्या कल्पकाभावेन तदभावेऽपि अन्तरङ्ग

रामकृष्णावित्यादौ विरूपाणामपीत्येकशेषस्तन द्वन्द्वविधानसामर्थ्येन तत्त्राक्कालिकस्यैव समानार्थत्वस्य तन्त्रनिमित्तत्वात् एवं चैकस्य विभ क्त्यन्तस्य निवृत्तावपरस्य तद्विशिष्ट स्यश्रवणमिति भावः पक्षान्तरेऽपीति अयं भावः अलौकिके तत्कल्पनेऽपि प्रत्येकसुबुत्पत्त्यनन्तरमेव तत्कल्पना तदनन्तरमेव तत्कल्पकद्वन्द्वैकशेषयोः प्रवृत्तेः एवं चान्तरङ्गत्वादुत्पन्नैकवचनत्यागेन द्विवचनाद्युत्पत्तौ मानाभाव इति उत्तरपदार्थे उपसंक्रा मेणेति उपसङ्क्रमश्च तदालिङ्गितस्यैव स्वार्थस्योपस्थितिः सा च विभक्त्यर्थसंबन्धाद्यन्तर्भावेणैवेति तस्योक्ततया तदनापत्तौ न तदुच्छेद इति भावः दुःखा चेति रूढव्यवहारस्य शब्दार्थनिश्चयहेतुत्वम् न च प्लक्षस्य न्यग्रोधाभिधायित्वं रूढव्यवहारे दृश्यते न्यग्रोधशब्देन लाभाच्च न लक्षणा पि प्लक्षन्यग्रोधावित्यादौ बोधात्यनुभवाच्च दुरुपपादा चेति॥९ त्वम् स्वार्थमात्रसापेक्षत्वादन्तरङ्गत्वम् [illegible] दिति उत्तरपदार्थः स्वार्थस्य पूर्वपदार्थस्य

तस्य सम्बन्धस्य तदनेति षष्ठ्याद्यन्तेत्यर्थः ननु [illegible] षष्ठीतत्पुरुषोच्छेदः दुःखाद् दुःखप्रदाफटितिप्रतीतावनुपारोहादोषाकान्तत्वाच्च एतदेवाह रूढव्यवहारेति अस्य व्याकरणादिस्यापि प्रथमं प्रवृत्त्या प्राधान्यम् न च न हि ननु शक्त्यभावेऽपि लक्षणास्त्वित्यत आह न्यग्रोधशब्देनेति यदि भवत्समस्त युगपदधिकरणवचनता स्यात्तदा बोधवृत्तिः स्यात्सापि नास्तीत्याह प्लक्षन्यग्रोधाविति दुरुपपादेत्यस्य दुष्टः निःसारः उपपाद उपपादनं यस्याः सेत्यर्थः॥ ७ ॥ ७ ॥ ७ ॥

तद्धाप्रमाणशङ्कां निरस्यति नचेति द्विवचनेनेति द्वन्द्वोत्तरद्विवचनेनेत्यर्थः अभिधानशक्तिमत्वात् अभिधानसामर्थ्यवत्वादित्यर्थः ननु समुच्चयान्वाचययोर्द्वन्द्वाप्रतिरे
धोपपादिका भविष्यतीत्यत आह समुच्चयेति नचेति आवश्यकमित्यत्रास्यान्वयः अन्यत्र द्वन्द्वे यः शिष्यत इतिन्यायेन कस्यचित्सर्वार्थप्रतिपादनसामर्थ्यवत्वं वक्तव्यं
तत्र विनिगमनाविरहात् सर्वेषामेव तत्तथात्वं वक्तव्यमितिभावः तथासतीति यद्येकशेषविषये तत्स्वीकारस्तदा एकेनानेकार्थबोधस्यैकशेषं विनापि सिद्धत्वात् द्वैयर्थ्य
मितिभावः तस्मादिति एकशेषवैयर्थ्यापत्तेरित्यर्थः तत्स्विति अनेकार्थाभिधानशक्तीत्यर्थः ततः एकशेषात् नदोषः नैकशेषवैयर्थ्यापत्तिरूपदोषः एतेन प्रागेकव

नच द्विवचनाद्यनुपपत्तिस्तदुपपादिका समासस्योद्भूतावयवभेदसमुदायाभिधानशक्तिमत्त्वाद्द्विवचनादिसिद्धौ तदनुपपत्तेस्तदुपपादकत्वाभा
वात् समुच्चयान्वाचययोः समासस्यासामर्थ्येनैव वारयिष्यमाणतया न तदापत्तिरेतदुपपादिका नचान्यत्रोपपादयितुमशक्यत्वेपि एकशेषेक
स्यशेषइत्यत्र विनिगमकाभावात्सर्वेषां सर्वार्थत्वमावश्यकम् तथासत्येकशेषस्यैव वैयर्थ्यापत्तेः तस्मादेकशेषज्ञानानन्तरं शास्त्रवासनावतां त
च्छक्तिज्ञानं ततः प्रागपीतिनदोषः आक्लृत्यविनाभूतेति नियमेनाकृतिसंबद्धेत्यर्थः ब्राह्मणशब्देनैवेतिभावः नहित्तत्रैकशेषः तावद्ब्रा
ह्मणशब्दज्ञानासंभवात् तस्मात्तत्रतन्त्रेण यथानिर्वाह स्तथान्यत्रापीतिभावः नब्राह्मणमित्येकवचनं त्वार्षम् तन्त्रेणएकवचनत्वादिति अयं
भावः भाष्ये शब्दार्थौ प्रतिपदर्थान्तर्थान् प्रतिचयन्तदपि प्रत्यर्थमेवेत्युक्तम् एवं चैकेनानेकार्थबोधनमपि प्रत्यर्थमेवेति एकेनैव ब्राह्मणप
देनानेकार्थबोधनं तत्र अन्यथा विद्यमानायाः शक्तेरेकशेषशास्त्रसहस्रेणाप्युपपादयितुमशक्यतया बोधानुपपत्तिरेवस्यात् तंत्रं चानार्थं तंत्र

चनस्योत्पत्तिद्वारेति प्रतिपादितम् सूत्रेयदित्याद्युरिति प्रसादकृतद्रूतिशेषः एवकारासङ्गतिमुपपादयन्नाह ब्राह्मणेति अन्यत्रापि रामावित्यादावपि
नन्वेवंसति बहुर्थस्य तन्त्रेण तत्रप्रतिपत्तिसत्वाद्बहुवचनापत्तिरत आह नब्राह्मणमिति नन्वेकशेषं विना कथमनेकार्थाभिधायकत्वम् अन्यथा प्रत्यर्थं शब्दनिवे
शान्नैकेनानेकार्थाभिधानमिति भाष्यविरोध इत्यत आह अयम्भाव इति तत्र नब्राह्मणं हन्यादिति दृष्टान्तस्थले अन्यथा अर्थावगतिवित्याद्यनङ्गीकारे बोधेति अ
नेकार्थबोधेत्यर्थः सूत्रारम्भात्स्वतन्त्रेणैकशेषे यौ द्वार्थानां बोधानुपपत्तिरिति भावः तन्त्रस्य द्वौ भेदौ शास्त्रप्रसिद्धौ अर्थतन्त्रम् शब्दतन्त्रञ्चेति तत्राद्यमाह अ

अत्रार्थतन्त्रमिति अत्र नन्वाम्रूणं हन्यादित्यादि घटकन्नाम्रणादिशब्दे सकृदुच्चरितस्यानेकार्थपरत्वं यत्र तत्र तन्त्रव्यवहारः यत्रार्थानामभेदेपि शब्देका न्नतन्त्रतात्त्वोषपुटादि
व्यापारप्रकाशितैकशब्देनैकवृन्तगतानेकपुष्पफलन्यायेनानेकार्थे सम्बन्धेनैकशब्देनानेकार्थबोधादर्थतन्त्रमितिव्यवहारः ॥ ॥ सूतदेवाह [illegible] अस्य लक्ष
णमाह शब्दस्येति पर्यायपरिवृत्तौति पर्यायेण पर्यायवाचकेन परिवृत्तिरनेकार्थस्य प्रकाशनन्तत्सहत्वमित्यर्थः स्वप्रयोगाभावेपि स्वबोध्ययावदर्थबोधकस्वपर्यायकत्व
मर्थतन्त्रत्वम् अस्ति चेदम्ब्राम्रणादिशब्दे ब्राह्मणशब्दस्य प्रयोगाभावेपि तद्बोध्यानाम्बोधनाय विप्रशब्दस्य प्रयोगदर्शनात् द्वितीयमाह [illegible] अत्रा
क्षशब्दो देवनास्करथाक्षविभीतकानाम्प्रतिपादकस्तावता मन्येना प्रतिपादनादिति भावः प्रातिपदिकतन्त्रादयो ऽन्ये तन्त्रा अनयोरेवान्यत्र प्रतिपादिताः [illegible] समयोरि
त्यत्र उभयवृत्त्येकजातेरभावेन तन्त्रानङ्गीकारे जातिप्रकारकानेकार्थविशेष्यकप्रतीतिरत्र न सम्भवतीति बोध्यम् उक्तरीत्या सूत्रकाराशयमुपवर्ण्य भाष्यविरोध

सकृत्तैवशब्देऽनेकार्थानां सत्वात् शब्दस्य पर्यायपरिवृत्तिसहत्वार्थतन्त्रमेवैतत् अक्षाइत्यादौ तु तदसहत्वाच्छब्दतन्त्रमेव अन्यथा तन्त्रानं
गीकारेऽक्षाशब्दः स्वाभिभूस्योर्वाचकः नानार्थानुरोधेनेति सूत्रमावश्यक मत्रेति शेषः न्यायमानाबादिति अनभिधानमाश्रित्यतु भाष्ये पक्ष
द्वयेपि सूत्रप्रत्याख्यातमित्यन्यत् अनेकघटादिपदानां चार्थवृत्तिरेव नानभिधानादिति द्वन्द्वाप्राप्तिरेवेति न दाशयः आवश्यकमिति अनभि।
धानाज्ञाने इति शेषः नानेनैकशेषो विधीयत इति ॥ (९ स्यादिहरति अनभिधानमिति पक्षद्वयेति जातिपक्षे व्यक्तिपक्षे चेत्यर्थः व्यक्तेर्वाच्यत्वमते पर्यायवर्थावि

त्याश्रयणेनैकस्यानेकार्थत्वमप्यभिधानस्वाभाव्यादिति तद्भावः नच प्रत्येकव्यक्तेः शब्दप्रतिपाद्यत्वविवक्षायां द्वन्द्वापत्तिवारणाय सूत्रमस्त्विति वाच्यम् चार्थइत्य
स्य सूत्रस्य येषां चार्थवृत्तिस्तेषां संज्ञाविधायकत्वमर्थः समूहः सच भिन्नानामेव भेदश्च क्वचित्पदार्थानां स्वतः सिद्ध एव क्वचित्तु पदार्थत्तावच्छेदककृत इति घ
टशब्देनैकेनैव प्रतिपादनं तत्तु पदार्थानामभेदात्साहित्यस्य प्रतीतिरित्याशयात् सूतदेवाह अनेकेति ननूक्तरीत्या चार्थवृत्तित्वाभावेनैव पाक्षिकानिष्टवारणे सिद्धे
आवश्यकमित्यनुपपन्नमत आह अनभिधानाज्ञान इति मूले सूत्रवैयर्थ्यमेव वह्निति निधायेति अयम्भावः यद्येकार्थाभिनिवेशित्वमेव शब्दानां तर्हि कृते त्येकशेषे।
नानेकाभिधानं विधास्यमाणेनैकेन वचनेनास्याः शक्तेर्वक्तुमशक्यत्वात् यदि स्वभावादनेकार्थाभिधायकत्वं सिद्धमेव तदा सूत्रमास्तु सकेनानेकव्यक्तिप्रतिपादन

सम्भवादिति॥

॥ना॥ रिलूलम् त्रु॰८॥+

तत्वप्रयोजकं शास्त्रन्त्वप्रवर्ततेतद्दूतिभवन्मतन्तत्त्वोक्तभाष्यवार्तिकाभ्याङ्कैयटीयव्याख्यानेनचविरुद्धमितिभावः अनेकेति एतेनयथाऽनेकव्यक्तिप्रतिपादनायानेक
प्रातिपदिकस्यप्रयोगेप्राप्तेएकस्यैवयथास्यादित्येवमर्थमस्यसूत्रस्यारम्भइतिप्रातिपदिकेषुसूत्रस्यप्रवृत्तिर्भवतितथाधातुषुनभवतिएकनिष्ठानामनेकव्यापाराणामिवा
नेकनिष्ठानामपिव्यापाराणामेकधातुत्तरवनिवृत्तभेदानाम्प्रतीत्याऽनेकधातुप्रयोगस्याप्रसक्तेः तदुक्तम्भाष्ये नतिङन्तान्येकशेषारम्भम्प्रयोजयन्ति यथाजातीय
कानान्द्वितीयस्यपदस्यप्रयोगेसामर्थ्यमस्तितथाजातीयकानामेकशेषः नचतिङन्तानान्द्वितीयस्यपदस्यप्रयोगेसामर्थ्यमस्ति किङ्कारणम् एकाद्धिक्रिया एकेनोक्त
त्वात्तस्यार्थस्यद्वितीयस्यप्रयोगेणनभवितव्यमुक्तार्थानामप्रयोगइति अत्रकैयटः यथाजातीयकानाम् सत्ववाचिनाम् एकादीति आख्यातवाच्याक्रियासर्वैवनिवृत्त
भेदाप्रतीयतइति एकश्च एकश्चद्वौचद्वौचेत्यत्रानभिधानान्नैकशेषः विंशतिश्च विंशतिश्चेत्येवंसहविवक्षायांविंशतीइतित्विष्टमेव तदुक्तम्भाष्येइहकस्मान्नभ
वति एकश्चएकश्चद्वौचद्वौचेति सवमाशङ्क्यसङ्ख्यायाअर्थासम्प्रत्ययादन्यपदार्थत्वाच्चानेकशेषः नह्येकावित्यनेनार्थोगम्यते अन्यपदार्थत्वाच्चसंख्यायाः।

अभियोजितीति अवयविनआधारत्वविवक्षायांवृक्षेशाखेतिवत्सप्तमीत्यदाह अभोऽवयवेचीति पूर्वपरयोरित्यधिकृतपरशब्देनविशेष्या
त्वादजेवगृह्यतइतिबोध्यम् निर्विवादत्वादिति उत्तरत्रानुवृत्तेः सत्वादितिभावः विंशतीति अनुवृत्तौअनुवृत्तस्यविशेष्यत्वेचेत्यर्थः ॥

कशेषोनभविष्यति एकश्चएकश्चेत्यस्यद्वावित्यर्थः द्वौचद्वौचेत्यस्यचत्वारइत्यर्थः वाचकशब्दान्तरस्तुविशिष्टार्थासम्प्रत्ययेनैकादिष्वादश तामेकशेषोनविंशत्या
दीनान्तुभवत्येवेतितात्पर्यार्थः अर्थासम्प्रत्ययादित्यस्ययत्रैकःशब्दोऽनेकमर्थमभिधातुंशक्नोतितत्रैकशेषोनान्यत्रप्रयुक्तानामन्वाख्यानारम्भात् एकावित्युक्ते
असहायादिरर्थोगम्यतेनतुद्वावित्यत्रतात्पर्यम् ततोऽर्थासम्प्रत्ययेपिगार्ग्यश्चगार्ग्यायणश्चगार्ग्याविति अस्त्रश्चअक्षश्चासावित्यत्रैकशेषोदृश्यतइत्यभिप्राये
णपूर्वोक्तोपृथक्परिहारोनोपपद्यतइत्याशयेनशङ्काङ्कुल्यासवन्तादिनेमौपरिहारौ एकपरिहारोयःसङ्ख्यायाअर्थासम्प्रत्ययादन्यपदार्थत्वाच्चेति यत्रह्यर्थासम्प्र
त्ययएववा अन्यपदार्थतैववाभवति तत्रैकशेषः गार्ग्यौविंशतीइतियथेतिभाष्यापप्रबद्धकार्थोध्वनितः नन्वचोऽमवयवत्वादभियोजित्यनुपपन्नमतआह अ
वयविनइति उत्तरत्र सम्प्रसारणाच्च अवङ् स्फोटायनस्येत्यनयोःअनुवृत्तौअत्रप्रकरणेऽनुवृत्तौ नन्वचोऽनुवृत्तिरस्तीतिचेन्मध्येपिसम्बन्धोभविष्यत्येवपुनस्त

भाष्ये इति तत्र हि गामिच्छति गव्यतीत्यत्र प्रत्ययलक्षणे नौत्तो ऽम् शसोरित्यात्वं माशङ्क्यानल्विधाविति वचनान्न भवतीत्युक्तम् अज्ग्रहणानुवृत्त्यभावे ऽनल्विधावि तिनिषेधाप्राप्त्या तदसङ्गतिः स्पष्टैव प्रथमयोरित्यतः पूर्वसवर्णग्रहणानुवृत्त्यैव सिद्धे पूर्वग्रहणं रामभित्यादौ द्विमात्रादेशव्यावृत्तये यत्तु पूर्वग्रहणानुवृत्त्यैव सिद्धे पूर्वग्रहणमेकादेशकृतेरामभित्यत्र सुपि चेति दीर्घो माभूदिति तन्न पूर्वान्तवद्भावेनाकारान्तेसुप्यस्माद्विधीयते तत्त्वस्य सद्भावेपि मकारमात्रे सुप्त्वाभावात् एकदेशविकृतन्याय स्याद्यधिकविकारे ऽप्रवृत्तेः नापि स्थानिवद्भावेनानुमानिकादेशकल्पनया तत्त्वम् अमः स्थानित्वाभावात् अत्रामित्यस्य स्थानित्वकल्पने तु सुप्त्वस्य स्थान्यवृत्तित्वं स्पष्टमे व अवयवषष्ठीत्यस्यावयवत्वरूपसम्बन्धार्थिका षष्ठीत्यर्थो वाच्यः स च न सम्भवति सम्बन्धस्योभयनिष्ठत्वस्वभावतया ऽवयवत्वस्यैकमात्रसम्बन्धित्वेन सम्बन्धत्वस्य वक्तुमश क्यत्वात् यद्यप्यवयविन्यपि निरूपकत्वात्मकस्तदीयः सम्बन्धोस्ति तथापि स तन्नियामक इत्याशयेनाह अवयवावयविभावेति अवयवत्वावयवित्वसमूहः सम्ब

स्पष्टं चेदं औतोम् शसोरित्युपक्रम्य प्रत्ययलक्षणसूत्रे भाष्ये अवयवषष्ठीति अवयवावयविभावसंबंधबोधिका षष्ठीत्यर्थः निर्देशाच्चेति नु म्ग्रहणाच्चेत्यपि बोध्यम् नेमार्थ इति स च साजात्यादक्षरसमाम्नायिकविषयको ऽतो नृणामित्यादावुत्तरात्मागेन व्यवधानेपि णत्वसिद्ध्या ऽऽवा णान्तस्येति वचनं न कार्यमिति भावः इदं भत्यादावान्हिके प्रकृतसूत्रे च भाष्ये स्पष्टम् यद्यपि रषाभ्यामिति पंचम्योपस्थितनिर्दिष्टपदस्य व्यवाय इत्यनेनाविरोधाय ऽडाद्यतिरिक्ताव्यवहितपरतया आदर्शेना त्रीत्यादौ णत्वं सुशकवारणं ध्वनितं चेदं प्रकृतसूत्रे वार्त्तिककृतान्तथापि तत्र नृणा मित्यर्थवचनारम्भे गौरवमिति इदमेवाह तन्मूलकत्ता ॥ ९। स्थ इत्यर्थः एवमेव स्वस्वामिभावादि स्थलेपि बोध्यम् प्रकृतसूत्रे नुम्ग्रहणं तद्व्यवधानेपि णत्वा र्थं कृतं यदेकव्यवधान इत्यर्थः स्यात तदा यत्र नुमाव्यवधानं तत्रैकमात्रव्यवायाभावेन तस्य वैयर्थ्यापत्तिरतस्तस्यैव ज्ञापकत्वसम्भवे निर्देशपर्यन्तानुधावनमफलमत आह नुमिति एवञ्च मूले प्राचामनुरोधेन तथोक्तमिति भावः न च नुम्ग्रहणस्यानावश्यकतया तस्य ज्ञापकत्वं न सम्भवतीति वाच्यम् सूत्रार्थनिर्णयावसरे तत्प्रत्याख्या नानवसरात् स च नियमश्चेत्यर्थः उत्तरत्वमागेनेति सत्त्वात्मागमात्रोपलक्षणम् सर्वेनोत्मागस्य सत्त्वादत एव प्रातर्ह्नीतमित्यत्र रोरीति लोपेन णत्वसिद्ध्या ऽऽकार वयवरेफात्परत्वेन णत्वस्य सिद्ध्या अत एवाह इदमिति आदर्शेनेत्यादौ पात्वाप्रवृत्तियोगविभागभावेपि भविष्यतीत्याशयेना शङ्कते यद्यपीत्यादिना ध्वनितमिति

णत्वेऽन्यव्यवायेप्रतिषेधोवक्तव्यः नवाऽन्येनव्यवेतत्वादितिग्रन्थेनध्वनितमित्यर्थः तत्रस्थाभ्यामितिसूत्रे इदमेव योगविभागेननियमत्वमेव यथोत्तरम्मुनीनांप्रामा
ण्यात्तत्खण्डनायप्रवृत्तेश्च उक्तनियमंविनोक्तसादृश्यस्यालाभःस्यात् ननुस्वाभाविकोऽनुस्वारोदुर्लभः नकारजावनुस्वारपञ्चमावितिवृद्धोक्तेरत आह तद्भिन्नस्थानि
केति नन्वेवमपिस्वाभाविकत्वमनुपपन्नमेव नुम्भिन्नस्थानिकस्यापिलक्षणवशसम्पन्नत्वादत आह पाणिनीति एतेनस्वस्यपाणिनेराभावः उच्चारणंसयत्रा
स्तीतिव्युत्पत्तिर्ध्वनिता एतादृशव्याख्यानेबीजमाह तंहूह्वित्यादेरिति वृद्धोक्तेरावश्यकत्वमाह अतएवेति नकारस्थानिकत्वादेव इतिप्रीणनेइत्येवम्पाठाभावा
दाह द्विधीति पठितस्येति माधवादिभिरितिशेषः एतेनस्वमतेइविव्याप्ताविति पाठोपिनस्तीति दिगर्थमाह तद्धीति नुम्विसर्जनीयेतिसूत्रस्थनुम्ग्रहणवदेत

स्वाभाविकस्येति तद्भिन्नस्थानिकस्यपाणिन्युच्चारितस्येत्यर्थः तंहूह्वित्यादेरपिनकारजावनुस्वारेतिवृद्धोक्तेर्नस्थानिकत्वात् अतएवतंहूह्वित्यस्य
नलोपेनतढ इत्यस्यसिद्धिः [illegible] द्विविरिविइतिदण्डकपठितस्येदं निष्कृष्यग्रहणम् प्रेन्वनमित्यादौनुमोनस्यसुब्वादित्वाणत्वाभावः
इतिदिगिति तद्धदत्रतुनवक्तुंशक्यम् तंहूह्वित्यस्यतृहणमितिसिद्धेः स्पष्टंचेदंभाष्ये अंगत्वादिति तदनंगीकारेहि अपाचितरामित्यादौचिणोलु
गापादनादिपरभाष्यविरोधः चिणःपरस्यागसंज्ञानिमित्तस्यप्रत्ययस्यलुगित्यर्थात् दिगिति दिगर्थस्तुयथाकथाचमित्यादौयथाकथाचह
स्ताभ्यांणयत्ताविति अनेनवचनसामर्थ्येननिपातसमुदायात्प्रत्ययेङ्गत्वानापत्तौवृद्ध्यनापत्तेरित्युक्तम्॥ एतत्सूत्रस्थत्वमित्यर्थः असिद्धेरिति यदिनुम्

स्थानिकेलक्षणास्यात्तदातृंहणमित्यत्रनुम् स्थानिकानुस्वाराभावाण्णत्वंनस्यादतःकाकेभ्योदधिरक्ष्यतामितिवाक्यस्थकाकपदस्यदध्युपघातकसामान्येयथा
लक्षणातथेहापिनुम्शब्दस्यानुस्वारमात्रेलक्षणास्त्वीकार्येतिभावः तिङन्तस्यतरप् निरूपिताङ्गसंज्ञायाःफलमाह ननुनुलीकारइत्यादिना आपादनादीति अ
त्रादिनातत्समाधानपरभाष्यसङ्ग्रहः सर्वमदुहितरामित्यत्रेदः सम्प्रसारणसंज्ञायांहलइतिदीर्घःप्राप्तःसयथासंख्यविज्ञानान्नेतिग्रन्थस्यचनतत्स्यमतेविरोधः
निपातसमुदायादिति एतेनप्रातिपदिकत्वाभावोध्वनितः अलमिति अलमर्थस्तुयदिणप्रत्ययस्यणित्वसामर्थ्याण्णित्वनिमित्तिकावृद्धिर्भविष्यतीत्याश्रीयतेतत्
दानेदम्प्रयोजनम् किन्तुओपगवादौवृद्धिर्नस्यात् सुबन्तात्प्रत्ययस्यविधानेनाण्प्रत्ययनिरूपिताङ्गत्वस्यभवन्मतेऽ आन्तेरितिबोध्यम् यदित्वत्रापिप्रातिपदि

काधिकारात्प्रातिपदिकादेर्विधानमणादेः कुत्सित इति सूत्रस्य भाष्यरीत्यानुसंधानाद्वंशीत्युच्यते तदाऽऽपाचितरामित्यत्र तुगापादनपरभाष्यविरोधप्रसङ्ग इत्यन्यत्र प्रपञ्चितमि
ति ॥६॥ उत्तरार्थमिति बहुलग्रहणं छन्दसीत्युत्तरसूत्रार्थमित्यर्थः मूले षष्ठीविषयभेदाद्भिद्यत इति स्पष्टेन तन्त्रेण षष्ठीद्वयोच्चारणं तत्रास्तीति दर्शितमेतदेवाह आदे
शेत्यादिना षष्ठीभेद इति अत्र प्रतिपाद्यार्थस्य भेदान्न्यूनं द्वयोच्चारणं ङ्कायेन्नित्वसमुदायात्सम्भवतीति स्पष्टं तन्त्रेणोच्चारणस्य सकृदुच्चारणेन निर्देशः कृतः तत्त
द्विषयस्य संस्कारकालेऽनुप्रत्येकं उत्तरस्योच्चारणं न वा क्वचित्कल्पनाकार्येति इत्येवंरूप इति इत्येवं व्याख्येयवाक्यार्थ इत्यर्थः षष्ठीभेदः वाचिकायाः षष्ठ्या
भेदः न च डसे कस्य सम्बन्धस्य बोधनं वदता सम्बन्धयो बोधनं न्याय्यमिति किन्त्वत्र स्वीकारेणैव निवाच्यम् प्रतियोगिनः कार्त्स्न्येन प्रयोगात्तयोर्द्वित्वादावासादेरिति
कल्पना तन्त्रेणैवेत्याशयात् ननु यत्र शब्दस्य सारूप्यं तत्र तन्त्रेणोच्चारणमिति भवति प्रकृते तु तन्नास्तीति कथं तन्त्रेणोच्चारणं द्विवचनप्रत्ययमात्रेण तन्त्रेणोच्चारणं

रे स्थानद्विति नद्ये इत्यादिसिद्धये उत्तरार्थं न त्वित्यन्ये विषयभेदादिति तन्त्रेण षष्ठीद्वयोच्चारणात् आदेशरूपसस्य स्थाने प्रत्ययावयवसस्य
स्थाने च षो भवतीत्येवंरूपः पष्ठीभेद इत्यर्थः ओस्संबन्ध इत्यार्थक इत्यभिमानः तिसृणामिति तिस्रादेशे सकारोच्चारणं तु तिस्र इत्यत्र नस्य परेति
षत्वनिषेधेन चरितार्थमिति भावः ठकारेऽतिप्रसंगादिति सोष्मणः सोष्माण इति द्वितीय इति स्थानेऽन्तरतम सूत्रस्य भाष्येण तस्यापि सोष्मत्वबोधना
सोष्मण इत्यस्य सोष्मत्वसहितस्येत्यर्थः अत्रार्थे ऋष्यन्तरसंवादमप्याह तथा चेति प्राक् सुब्रुवन्नेतेति ॥ लोकेन दृष्टमत आह श्वास सम्बन्धेति तथा चै

कस्योसोयतः सम्बन्ध इत्यार्थत्वमतः सर्वत्र तत्र व्यवहार इत्याशयः अभिमान इति प्रकाशग्रन्थानुवादकर्तुरिति शेषः ननु यदि तिसृणामित्यत्र षकारस्यापत्तिस्तदा स
कारोच्चारणवैयर्थ्यमत आह तिस्रादेश इति चरितार्थमिति एतेन तिस्र इत्यत्रैव षत्वापादाने कार्ये तिसृणामित्येतत्प्रयत्नानुधावनमफलमिति यत्केनचिदुक्तं तदपा
स्तम् निषेधाविषयस्य प्रदर्शनाय तावत्प्रयत्नानुधावनात् ननु सकारस्य सोष्मणोऽघोषस्य तादृश एव षकार इति परोक्तानुवाद इत्यत आह ठकारेऽतिप्रसङ्गादिति य
न्मूलकृताऽभिहितं तदयुक्तं ठकारस्य सोष्मत्वानुक्तेरत आह सोष्मण इति तस्यापि द्वितीयस्यापि ननूष्मशब्दस्य शषसहा उष्माण इत्यत्र धर्मिवचनत्वस्य दृष्टत्वात्
सोष्माण इत्यनुपपन्नमत आह सोष्मण इत्येति भावप्रधानोष्मशब्देन सोष्माणावित्यत्र समास इति भावः न चैवं सति विवृतमूष्मणामित्यत्र द्वितीयस्यापि ग्रहणं

पत्तिरिति वाच्यम् शषसहानामेवात्र ग्रहणात् अन्यथा नाङ्क्लाविति सौत्रनिर्देशस्यानुपपत्तिः स्यात् पूर्वस्य सोष्मत्वाभावात् ककारस्य तु सोष्मत्वेन विवृतत्वेन प्रयत्न
भेदस्य जागरूकत्वात् सतदेव ध्वनयति अन्तर्यहति अध्यन्तरेति आश्वलायन प्रातिशाख्य कृत इत्यर्थः ॥ ॥ ननु वार्तिकारके ति वचनस्य कथं दधि सेचा विन्य
त्र प्रसक्तिर्यावता कैयटेन सोपपदाद्विज् नास्तीत्यभिहितमत आह सोपपदादिति सुपीत्यनुवर्तमाने ऽन्येभ्योपि दृश्यन्त इत्यनेनात्र विज् इति भावः विचीति सति स
मीयम् दृश्यन्त इति दृशिग्रहणादुपपदस्यापि व्यभिचारो न द्रष्टव्यो ऽतस्सर्व वनिपा शर्वरीत्युदाहरणस्य सिद्धिरिति भावः प्रत्ययलक्षणप्रतिषेधवचनस्याप्रा
प्तिमुद्घाटयति उत्तरपदत्व इति उत्तरपदत्वे चापदादिविधाविति वचनेनेह निषेधः प्रत्ययलक्षणस्य न भवति पदादिविधित्वादित्याह तत्र उत्तरे ति लुप्त विभक्ति

सोपपदात्सिचेर्विचिति भावः केवलात्सिचेर्विचिदधः सेचाविति समासे तु उत्तरपदत्वे चेत्यस्यापदादिविधाविति निषेधेन प्रत्ययलक्षणेन प
दत्वसत्त्वात्पदस्यादित्यर्थेपि सिद्धिरिति भावः यद्यपि कैयटेन सोपपदात्सिचे विजेव नानभिधानादित्युक्तं तथापि यच्चि भमित्यत्र स्फुटिंङ्गमित्य
नः सुविधत्तु वार्त्ययजादावसर्वनामस्थाने तत्प्रकृतिर्भसंज्ञा भवति यजाद्यसर्वनामस्थानपरत्वं यद्यस्ति तदपि भसंज्ञं तेन सुवाचेत्यादौ न कु
त्वम् अत्रतत्प्रकृतेः संज्ञाप्रधानशिष्टावयवस्त्वन्तस्यान्वाचयशिष्टा सर्वस्वादिष्विति योगं विभज्य स्वादिषु पूर्वस्य पदत्वं विधाय सर्वनाम
स्थाने इत्यत्र स्त्ववन्तमित्यनुवर्त्य यचीत्यपकृष्य प्रसज्य प्रतिषेधमाश्रित्य यजादौ सर्वनामस्थाने परतः पूर्वपदं न तत्स्य रं यदि स्त्वन्तमस्ति तद

कस्तुतर शब्दः समासचरमावयवे रूढो वाक्ये प्रयुज्यमाने वाक्यैकदेशस्य प्रयोग इति न्यायेन पदञ्च शब्दः पदत्वव्यपदेशपरः कार्त्यदस्साध्या ऽपि पदं नेत्यर्थः ॥
दारः नन्वत्र कैयटीपरीत्या केवलादेव विजिति पूर्वोक्तमसङ्गतमत आह स्वथीति तथापीति अस्यानभिधानेन्नमानमिति परेणान्वयः उत्तरपदत्वेति वार्तिकप्रत्याख्यान
प्रकारमाह यच्चि भमित्यत्रेत्यादिना तेन मध्यवर्तिस्तुपो भसंज्ञाविधानेन नन्वेवं यच्चि भमिति सूत्रस्य व्याख्यानेवाचेत्यत्र भसंज्ञा तस्मान्मध्यवर्तिसुबन्तविरहादत आ
ह अत्रेति नन्वेवमसर्वनामस्थानपरत्वं यत्तत्र भसंज्ञायेष्टसिद्धावपि यत्र सर्वनामस्थानपरत्वं स्त्ववाचा विश्वा दौ तत्र प्रत्ययलक्षणेन पदत्वं दुर्वारमेवेत्यत आह सर्व
मिति विभज्येत्यादि त्यवंतानां नेत्यर्थ इत्यस्य शेषभूतं यत्कार्यं इतिपदं तद् घटकथान्वर्थकरणक्रियायामन्वयः तत्र प्रथमसत्त्ववन्तस्य विधीयेत्यत्रैवान्वयः प्रसज्य

स्वादिष्विति प्राप्ता अवयवस्य स्वान्तमिति प्राप्ता + मूल ७॥

शा॰ र॰ टी॰ भै॰ ९८

असमर्थसमासो॰ सर्वनामस्थानइति पदद्वयस्याश्रियेत्यपि बोध्यम् तत्परम् यजादिसर्वनामस्थानपरमित्यर्थः॥ :७॥ राजपुरुषादिशब्दघटकराजादिपदे निषेधान्नस
ङ्क॰ णाडु॰ कांवारयति स्रुवन्तश्चेति तत्र सुवाचावित्यादिग्रहे अत्र योगविभागसामर्थ्यादनन्तरस्येति न्यायस्य बाधो बोध्यः यचीत्यस्यापकर्षेणायमपि निषेधः उक्तत्वस्य फ
लमाह श्रूयमाणइति तेन पदसंज्ञानिषेधेन इत्येवमिति यचिभमित्यारभ्योक्तप्रकारद्वयरूपे इत्यर्थः आवश्यकइति अन्यथा पूर्वोक्तरीत्या सेच्छत्वस्य पदत्वनिषे॰
धात्स्यात्पदाद्योरित्यस्याप्रवृत्तिर्नस्यादिति भावः सवन्त्वानभिधाने साधकालाभः यथोत्तरस्मिन्नीनाम्नामण्याद्याख्यकारोक्त्यैव व्यवस्था तात्पर्यमिति तथा वदतो मूलकृ
तइति शेषः उत्तरपदइति वार्त्तिकारम्भप्रत्याख्यानपक्षयोस्तुल्यत्वमाह प्रत्याख्यानइति पंचमीसमासे पदादादिरिति पञ्चमीसमासे सप्तमीति शेषः बहुसेचाविति अत्र बहुचः
प्रत्ययत्तया पदत्वाभावेनादेश इत्यनेन प्राप्तस्य षत्वस्याप्रवृत्तये सात्पदाद्योरिति सूत्रानन्तरं स्वद्रुचूर्वस्य चेति पठनीयमिति तात्पर्यम्॰ अस्मिन् पक्षे समासचरमाव

सुबन्तं च यजादिप्रत्यया व्यवहितमेवातो राजपुरुषादौ पूर्वपदेन लोपादिसिद्धिः तत्र समुदायस्य श्रूयमाणे सौ पूर्वस्य संज्ञेष्टैव तेन सुवाचावि
त्यादि सिद्धमित्येवमुत्तरपदत्वे चेत्यस्य प्रत्याख्याने दध्नः सेचाविति षष्ठीतत्पुरुषेपि षत्वनिषेधाय पंचमीसमासस्यावश्यकइत्यनभिधानेन मा
नमिति तात्पर्यम् प्रत्याख्याने पंचमीसमासे बहुसेचावित्याद्यर्थं बहुचः पूर्वस्य षत्वं नेति वचनं कार्यं वार्त्तिकारंभे त्वेवं ज्ञात्व वारणाय बहुचः पू
र्वस्य चापदादिविधौ नेति वत् इदमपि

यवकस्य क्वचिद्योगविभागलब्धनिषेधेन वा पदत्वाभावः श्रूयमाणे सौ पदसंज्ञाऽनिष्टैव तत्रैव बहुसेचावित्यत्रैव समासाभा
वेनोत्तरपदत्वइति लुप्तस्य वचनस्य तत्त्वाप्राप्तिरिति पदस्यादिरिति षष्ठीसमासेनैव षत्वस्य वारणादाहकृत्वेति बहुचः पूर्वस्य चेति पदादिविधिभिन्ने पदान्तस्य बहुचः पूर्व॰
स्यकार्यैकत्वे प्रत्ययलक्षणत्वेतित्तदर्थः दधिसेचावित्यादि समासेत्तुक्तस्य वचनेनैव षत्वज्ञात्वयोः प्रवृत्तिः अस्मिन्पक्षे समासचरमावयवस्य पदत्वं कार्यविशे
षं एव न तु सर्वत्रेति विकल्पः श्रूयमाणे सौ पदत्वं नेति निष्कर्षः एवमारम्भप्रत्याख्यानयोः साम्यं दर्शितम् इदमपीति उक्तप्रकारेण भसंज्ञादिकमपीत्यर्थः राजेनद
धिसेचावित्यत्र कृत्वाभावाय पदत्वनिषेधस्यावश्यकत्वे तया पदस्यादिरिति षष्ठीसमासे षत्वनिषेधानापत्तिः वार्त्तिकसत्त्वे त्वपदादिविधाविति युक्तेर्दोषाभावइति निर
स्तम् केचित्तु वार्त्तिकारम्भपक्षे लाघवमस्ति तथाहि प्रत्याख्यानपक्षे स्वादिष्विति योगविभागः कार्यः असर्वनामस्थानइति सूत्रे यचीत्यस्यापकर्षो समर्थस्त

ऽत्वेनक्वचि ६

मासश्च स्वीकार्यः भद्रङ्करोषि गौरित्यत्रैचो प्रगृह्यस्येत्यस्याप्रवृत्तिसिद्धये वा वक्तव्यः सन्त्यः पदान्तस्येति व्याख्यानञ्च कार्यम् बहुच्पूर्वस्य चेति सात्पदाद्योरिति सू
त्रानन्तरं पठनीयम् वार्त्तिकारम्भेतु तस्यारम्भ एकः सात्पदाद्योरिति सूत्रे सातेः पदादिति योगविभागेन पठनीयम् अत्र पदशब्दः शक्तस्य पदसंज्ञकस्य च बोधकः न च
शक्तस्य पदमिति नात्र शास्त्रे प्रसिद्धमिति भ्रमितव्यम् नेविशद्युति सूत्रे निरपि पदं विशिरपि पदमिति भाष्ये सर्वे सर्वे पदादेशा इत्यत्र च तस्य प्रसिद्धत्वात् एवञ्च बहुचः
प्रत्ययस्य कुत्साद्यर्थे शक्तिः स्वीकार्येति बहुसेचाविन्यादेः सिद्धौ बहुच्पूर्वस्य चेति वचनं न कार्यम् न चाग्निसाद्भित्यादौ पदादित्येव सिद्धे सातिग्रहणस्यापि एवं सति वैय
र्थ्यमिति वाच्यम् स्वादिष्विति यस्य पदसंज्ञेति वक्ष्यमाणार्थज्ञापनाय तस्यावश्यकत्वात् वस्तुतस्तु सातिग्रहणं विध्यर्थं कार्यम् इति सर्वेषामिति निर्देशेन प्रकृ
त्युत्तरप्रत्ययावयवस्य षत्वमिति ज्ञापनात् अत एव तु भूषति राजपुरुषेष्वित्यादेः सिद्धिः ध्वनितञ्चेदन्तात्पर्यमित्यरुचि सूचकशब्दोपादानेन एवञ्च मूलोक्तज्ञाप

योगविभागस्येष्टसिद्ध्यर्थं तया यत्रोत्तरपदस्य कार्यित्वं तद्विषय एव पदान्तत्वप्रयुक्तकार्यं न च बोध्यमित्यन्यत्र विस्तरः यापदसंज्ञेति न च राज
पुरुषेष्वित्यत्र दोषः अन्तर्वर्त्तिविभक्त्याश्रयं तमिति पदत्वमाश्रित्य निषेधापत्तेरिति वाच्यम् सातिग्रहणेन स्वादिष्विति यस्य पदसंज्ञा तदुत्तरस्य ष
त्वनिषेधो नेति ज्ञाप्यत इति तात्पर्यात् प्रत्याख्यानरीत्या तस्यापि स्वादिष्विति पदत्वाच्च ॥ ((कविनैव रामेष्वित्यादिसिद्धौ लाघवमिति न चैवं सति बहुसेचावि

त्यत्रापि षत्वापत्तिरिति वाच्यम् सादितिलुप्तषष्ठ्यन्तमभिन्नमपदम् पदाद्योरित्यत्र तु पदस्य आदिश्चेति द्वन्द्वात्षष्ठी आदिशब्दश्चादित्वविशिष्टबोधकशब्दपर इति।
बहुचोलाभ इत्याहुः पदत्वमाश्रित्येति न चोत्तरपदत्वइति वार्त्तिकेन निषेधः स्यादिति वाच्यम् उत्तरपदस्य कार्यित्वाभावेन तस्याप्राप्तेः ननु सोः समुदायाद्विधाने
न राजपुरुषेष्वित्यत्र कथमेतावता निर्वाह इत्यत आह प्रत्याख्यानरीत्येति अत्र प्रत्याख्यानरीत्येति कथनेन वार्त्तिकारम्भपक्षस्यायुक्तत्वं सूचितं मत एव भाष्ये उक्तरी
त्या प्रत्याख्यानमूर्द्धस्य पुनस्तेन घटितस्य तस्य वचनस्य पाठेन तस्य साकाङ्क्षत्वनितम् तस्यापि उत्तरपदस्यापि अयम्भावः प्रत्याख्यानस्वादिष्विति योगविभागेन क्रि
यते एवञ्च सर्वनामस्थाने यचीत्यत्र स्वादिष्वित्यस्य चेदनुवृत्तिस्तदा स्वादिष्वित्यत्रापि तस्य सम्बन्धः कार्यो ऽन्यथा सएडकत्वस्यापत्तिरिति मध्यवर्त्तित्वं तस्यापि तेन
पदत्वम्भवतीति एवञ्चेदं समाधानमपि प्रत्याख्यानानुरोधीति स्पष्टं लभ्यते स्वादिपरत्वेन यस्य पदसंज्ञेति ज्ञाप्यतामित्यत्र च सात्प्रतिषेधो ज्ञापकः स्वादिपरत्वे

नयेषास्पदसंज्ञानतेषास्त्रिषेधदूति कथनेन भाष्यकृता सूचितमेव केचित्तु सातिग्रहणेनतो स्मार्थो ज्ञाप्यते किन्तु पदादेरिति प्रतिषेधः प्रत्ययस्य षत्वे कर्त्तव्ये न प्रवर्त्तते।
इत्येव ज्ञाप्यत इति वदन्ति तन्मतं दूषयति मूलेयत्वादु रित्यादिना आह रित्यस्य प्रकाशक्त इति शेषः अनेककर्तृकेति अयं भावः कर्त्तरि कर्मेति सूत्रे कर्मशब्दः
क्रियापरः व्यतीहारश्च परिवर्त्तनरूपः अतएवोदाचाम्माडे व्यतीहार इति सूत्रस्यापमित्ययाचत इत्युदाहरणव्याख्यानावसरे याचित्वावस्त्राणि परिवर्त्तयतीति कैयटेनो
क्तम् सवस्त्रीयं वस्त्र दत्वा परकीयस्य वस्त्रस्य ग्रहणमपि व्यतिहारः प्रणिदानव्यतिहार इत्यनर्थान्तरमिति घुसंज्ञासूत्रस्थकैयटात् सवन्वसम्प्रदस्ते राजान इत्यत्रे
वानेकसाधनसाध्यक्रियास्थलएव व्यतिहारसम्भावदति यत्र कर्तृभेदस्तत्रैव कर्त्तरि कर्मेति सूत्रस्य प्रवृत्तिर्युक्तेति भावः अतएवैतादृशस्थले बहुवचनान्त प्रयोग।

सर्वे चेदं नलुमतेति सूत्रे भाष्ये स्पष्टम् [illegible] यद्यपि व्यतिहारस्यानेककर्तृकक्रियाविषयत्वादेकवचनस्यात्रासंभवस्तथापि विश्वामित्रा
श्रमे मारीचं प्रति किमर्थं ब्रह्मवधं करोषीति रामेण पृष्टे मायं धर्म इति तेनोत्तरिते धर्मोऽस्ति सत्यं तव राक्षसाय मन्यो व्यतिक्षत्तु ममापि धर्मः त्र
ह्मद्विषस्ते प्रणिहन्मि येनेति भट्टिकाव्यस्थरामवाक्ये तव धर्मेण ममान्यो धर्मस्तपोरूपो व्यत्यासेन भवति येन धर्मेण त्वं संबंधिनो निहन्मी।
त्यर्थके एकवचनदर्शनान्न दोषः अद्यारभ्यात्त इमः क्रौर्यमपि भवति मद्धर्मो क्रौर्यं चत्वादि वर्त्तमानसामीप्ये लट् रामबाणपातेन समुद्र
समीपे पतितो मारीचस्तपश्चचारेति रामायणे प्रसिद्धम् अन्यसंबंधिक्रियामन्यः करोति इतरसंबधिनीमितर इति कर्मव्यतिहारसंभवादिति
जयमंगला व्यतिसे इत्यस्य हि चैत्रमैत्रेण सह व्यत्यस्तो भवतीत्यर्थः यद्देशे मैत्रस्य सत्ता तद्देशे चैत्रस्य सा यद्देशे च चैत्रस्य सा तद्देशे च मैत्रस्य सेति

एवप्रायेण दृश्यते क्वचिद्व्यतिलुनीत इति यत्तदयुक्तम् सवस्मादि प्रयोगोऽप्ययुक्त एव बाधेद्दढ इति न्यायात् नचैवं सति तास्त्योर्वेति सूत्रस्य प्रवृत्तिसे॥ फलति॥
इति वृत्तिकारोक्तमुदाहरणन्तत्प्रसङ्गच्छ्तामिति वाच्यम् तस्यच्छान्दसत्वात् सवन्त्वैकवचनान्त प्रयोगो लोके साधुरेवेति तथापि स्वरूपव्याक्रियैव पराक्रिये॥
ति न्यायेन समाधत्ते तथापीत्यादिना फलतीत्यन्तेन प्रणिहन्मि येनेत्यस्याग्रे राजन्य बन्धुर्धुतकार्मुकेष्विति चतुर्थः पादः तव धर्मेण देवब्राह्मणद्वेषरूपेण येन
धर्मेणेति युक्तमिति शेषः त्वत्सम्बन्धिन इति ब्रह्मद्विषस्त्वत्सम्बन्धिनो निहन्मीति योजना तात्पर्यार्थमाह अद्यारभ्येति ननु क्रौर्यो क्रौर्ये योर्भावित्वात्कथमत्र लड्

वर्त्तमानसामीप्य इति इति कर्मव्यतिहारे तिङ्न्स्येवं रूपोऽयः कर्मव्यतीहारस्तस्य सम्भवादित्यर्थः फलतीति तथा चात्र यन्मूले अभिहितं तद्गुरु गौरवेणेति बोध्यम् अस्याप्यशा
स्त्रीयस्य यस्मादिदि तस्तदादित्वस्याशास्त्रीयस्यापि रामेषित्यादौ प्रत्ययमात्रेऽतु भवद्गुणः प्रकारेणेत्याह [illegible] असहायत्वेति सूत्रे एकस्मिन्नित्यस्योपादानेन लो
के सजातीयसहायसद्भावे व्यपदेशिवद्भावादर्शनेनासहायएवतत्प्रवृत्तिरिति भावः [illegible] व्यतिसे इति प्रयोगस्येव लोके ऽसत्वमिति भावः अभ्युपेत्यन्येनास्मदुक्त
रीत्या समाधानस्यौचित्यं ध्वनितम् सिद्धान्तपदोपादानेन सिद्धान्तान्तरस्य स्मरणसम्भवादाह [illegible]भावित्यादि लस्य इत्यर्थः एतेन यथोद्देशपक्षे निर्वाहेऽपि कार्यका
लपक्षे कथन्निर्वाहः उभयत आश्रयणेनान्तादिवदिति निषेधेनान्तादिवच्चेति सूत्रेण निर्वाहो वक्तुमशक्य इति शङ्का कथानावकाश इति ध्वनितम् उक्तरीत्या पदत्वानयनका

यद्यपि व्यपदेशिवद्भावेनैकाचश्चादेरिवास्याप्यशास्त्रीयस्याप्यतिदेशो वक्तुं शक्यः रामेषित्यादौ तु असहायत्वाभावान्न तत्प्रवृत्तिस्तथापि पूर्वपक्ष्यु
क्तमभ्युपेत्यापि समाधानसुपपन्नं सन्ने नवयमित्यादिना सिद्धान्तादिति स्याप्रिड् न मित्यत्र यस्मात्प्रत्ययविधिरित्यनुवृत्तेरिति भावः अत्र कृतेत्येकादे
शः एकदेशविकृतन्यायेनोक्तरीत्या मातृत्सप्रकृतित्वादौ इत्यस्य परादिवद्भावेन सुप्त्वान्तत्वेन पदत्वसिद्धिरिति सिद्धान्तान्तरमपि सूचितम् इदं चा
नादिवत्सूत्रे भाष्ये स्पष्टम् तत्रादिहृक्ष इत्यादौ परादिवत्त्वेन सकारस्य सत्वमाश्रित्य पदत्वं साधितम् अनुपयोगाच्चेति चेन ससहायेव्यपदेशिव
द्भावाप्रवृत्त्या तत्संनिधाने नैषां पदत्वमस्तीति सूचितम् आद्यन्तवत्सूत्रस्थभाष्ये एकपुत्रादिदृष्टान्तवत्त्वेन तथैवलाभादितिदिक् तद्गुणसंविज्ञा
न इति तस्यान्यपदार्थस्य गुणविशेषणानि संविज्ञायन्ते कार्यित्वादिना यत्रेत्यर्थः॥ ॥ लोकरीत्या सर्वसिद्धान्तान्तरकथनेन भाष्यैकवाक्यतापि सिध्यती
ति दर्शयति इदमत्रेति मूलेन [illegible] नास्त्येवेत्यर्थः तत्सन्निधाने प्रकृतिसन्निधाने तेषाम् प्रत्ययानाम् चकारो दोषान्तरसमुच्चाय कइत्याशयेनाह [illegible]नेति सर्वस्व
मन्त्रेषित्यादिके तूक्तिमात्रोपपादानं तेषामयुक्तमिति भावः [illegible] दिगर्थस्तु व्यतिसे इति प्रयोगस्य लौकिकस्याभावे मूलोक्तं सर्वमापातरमणीयम् एकस्मिन्नस्य
सूत्रे उपादानेनासहायस्यैवन्याय प्रवृत्तेरिष्टत्वमिति [illegible] वर्तिपदार्थरूपाणीति शेषः संविज्ञायन्त इति एतेन संविपूर्वकाज्ज्ञा धातोः कर्मणि ल्युडिति ध्वा
नितम् तेन तद्गुणाः संविज्ञानयत्रेति समानाधिकरणपदकोपि बहुव्रीहिः सम्भवतीति बोध्यम् नचातद्गुणसंविज्ञानबहुव्रीहौ सर्वशब्दाद्यवयवकसमुदायउक्तुं

जावयवभेदो अन्यपदार्थ इति लभ्यते तथाच तस्य लक्ष्ये प्रयोगाभावात्संज्ञाविधानवैयर्थ्यमिति वाच्यम् अजादिसंज्ञावत्प्रत्येकन्तु हिस्त्राङ्के: स्त्रीकारस्तत्रैव। मानदर्शयितुं मूले हलिसर्वेषामितिनिर्देशादित्युक्तम् एवमविधेयान्वयिस्वघटकावयवार्थको बहुव्रीहिस्तद्गुणसंविज्ञानः यस्त्वेवन्न सोऽतद्गुणसंविज्ञानः तस्यलोके प्रवृत्त्युदाहरणमाह प्रायइत्यादिना लोहितोष्णीषा ऋत्विजः प्रचरन्ति लम्बकर्णमानयेत्युदाहरणे लम्बकर्णम्भोजय —— त्यत्रतथान्वयादर्शनादाह प्रायइति·एते। नोक्तनियम औत्सर्गिक इति सूचितम्· इदम्भेदद्वयमनेकेति सूत्रविहितबहुव्रीहेः नन्वेवन्नागयज्ञोपवीती भोज्यताम् शुक्लवाससम्भोज्यतान्नागचमौनरक्त इत्यादौ विधेयान्वयस्वविशेषणेऽदर्शनादतद्गुणत्वमेवस्यान्न चेष्टापत्तिः विशेषोपादानस्यव्यर्थत्वापत्तेरतआह नागेति तथाचैतेषु विशेषधर्मविशिष्टबोधकशब्देनोपात्तनसामर्थ्याद्विशेषस्यक्रियायामन्यपदार्थान्वयवेलायांसन्निधिमात्रेण तद्गुणत्वव्यवहारः एवंरीत्यातद्गुणत्वेमानन्तु हरिवंशीयो व्यालयज्ञोपवीताश्च केचित्तत्र महासु

प्राय:संयोगसमवायान्यतरसम्बन्धेन सम्बन्धी यत्रान्यपदार्थस्तत्र तद्गुणत्वम् तदतिरिक्तस्वस्वामिभावादिसंबंधेन संबंधित्वे ऽतद्गुणत्वम्
नागयज्ञोपवीती भोज्यतामित्यादौ यज्ञोपवीतस्य कार्यित्वाभावेऽपि तत्सन्निहितत्वमस्त्येवेति तद्गुणत्वमेवेति हरिग्रन्थस्याशयः ॥ ६ राहुतिवाणयुद्धप्रसङ्ग

समयकालिकवर्णनपरप्रयोगएवेति अत्र न कर्मधारयादिति निषेधसूत्रस्थवृत्तभाष्यप्रयोग इवात्र न अयंभावः पूर्वोक्ततद्गुणसंविज्ञानशब्दार्थनिरूपणावसरे। कार्यित्वादिनेत्यत्रादिपदमुपादानेन विधेयसमानकालिकत्वस्यापि ग्रहणमिति ध्वनितन्तथाचविधेयक्रियान्वयित्वतत्कालवृत्तित्वान्यतरवत्त्वघटकावयवार्थक। त्वन्तद्गुणसंविज्ञानत्वमिति लक्षणनिष्पत्तिः कार्येति एवमत्वर्थे बहुव्रीहिरिति वार्तिकान्मत्वर्थकत्वनायेवमेव कार्यात्ते नदण्डीविषाणीचानीयतामित्यस्यसाधुत्वस्या बोधनात् नचदण्डिनं भोजयेत्यादेर्दण्डस्वामिनमित्यर्थोऽपिसम्भवतीति कथमनेन तद्गुणत्वलाभ इतिवाच्यम् तदस्मास्यस्मिन्निति सूत्रेऽस्मिन्नित्युपादानेनाधारतावच्छेदकोयोवृत्तिनियामकः सम्बन्धः सोऽपिविवक्षितः सचनस्वस्वामिभावः किन्तु विलक्षणो दण्डवानितिमतीति नियामक इति दण्डसंयुक्तस्यैव कार्यान्वयित्वमिति तद्गुणत्वलाभात् भोजनकालिकत्वस्य संयुक्तत्वेऽप्यन्वयः प्रायः पदस्यतु तद्गुणत्वमित्यत्रान्वयः एवमतद्गुणसंविज्ञानो बहुव्रीहिर्मत्वर्थीयश्चित्रगुमानयगोमिन
मानयेत्यादौ अत्रापिप्रायःपदस्वार्थ्यंत्ते नाहिताग्निड् गृहिणम्भोजयेत्यस्यतद्गुणत्वेपिनक्षतिः ॥ ७ ॥ ७ ॥

तत्सिद्धेरिति मूलस्य स्यायादेशस्य समुदायस्य संज्ञां विनापि तदन्तविधिना सिद्धेरित्यर्थः कार्यः संचनं संभवति ङि हृचनस्य समुदायाद्विधानेनाधुना भवन्मते सर्वना
म्नो विधानाभावात्तस्य सिद्धेरप्रसंगइत्याशयिकामाशङ्कां निराचष्टे नचेति अवयवनिषेधकत्वेनेति सामर्थ्यादित्यादिः अवयवात्यरत्वमादायातिप्रसङ्गनिवारण
रूपफलाभावादित्यर्थः ननु तदन्तविधिफलमवयवात्यरत्वमाश्रित्य सिद्धमित्येतन्नास्तीत्याह अवयवेति प्रयोजनं सर्वनामाव्ययसंज्ञायामिति तदन्तविधिसूत्र
स्य भाष्यवार्तिकप्रामाण्येनाङ्गाधिकारीयकार्ये तदन्तविधिः किं सर्वनामवद्भ्यइत्यसत्तु नाङ्गाधिकारीयत्वमिति सर्वनामप्रकृतिकसप्तम्यन्तात्पञ्चम्यन्ताद्वात्र तसि
लो वितिस्वीकारात् सर्वमव्ययसर्वनाम्नामिति सूत्रस्याव्ययसर्वनामप्रकृतिकसुबन्तात्तुन्साद्यर्थे विवक्षायां सर्वनामाव्ययावयवटेः प्रागकजित्यर्थः एतेन परस

तत्सिद्धेरिति नच सर्वनाम्नो विहितत्वाभावः तदन्तसंज्ञाभावे द्वन्द्वे चेत्यादीनामवयवसंज्ञानिषेधकत्वेन विहितविशेषणे फलाभावादिति भावः त
सिलिति अवयवसर्वनामत्वेन तु न निर्वाहः सर्वनामप्रकृतिकसप्तम्याद्यन्तत्वाभावादिति भावः भाष्यप्रयोगादिति दिङ्नामान्यन्तराले दक्षिणो
त्तराभ्यामिति सूत्रस्थ इतिशेषः सर्वम् नित्यद्विवचनान्तत्वे सागशिटामित्याद्युदात्तत्वन्तु न फलम् उभे भद्रे इत्यादावन्तोदात्तपाठेन गणे अन्तोदात्त
निपातनात् वृषादित्वेन तत्सिद्धेश्चेति भावः [illegible] प्रायग्रहणादुभाविति रिक्तासर्वनाम्नः प्रथमाद्वितीयेन सह इत्यर्थे कल्पन संभवात्तास

र्वत्रेति तल्परमभवकानित्यं त्राकञ्च तयोरङ्गाधिकारीयत्वाभावेपि प्रातिपदिकाधिकारीयत्वेन तदन्तविधिना भविष्यतीति कस्यचिदुक्तिः // र्वनामत्वे सदोषः
परास्ता समासप्रत्ययविधौ प्रतिषेध इति तदन्तविधेः प्रतिषेधाच्च भाष्यप्रयोगस्याप्रसिद्धत्वशङ्कां वारयति दिङ्नामेति नच विहितविशेषणत्वं विहितस्येत्यस्याध्या
हारेण कार्यं तथा च कथं सर्वनाम्नो विहितस्येत्यत्र पञ्चमीति वाच्यम् योयतो विहितस्तस्मात्तोनिः स्मृत इत्येवं प्रतीत्या वोढ्यापादानत्वस्यतत्र सत्वात् नचैवं सुपपद
विभक्तेरिति न्यायेन द्विर्योगे विहिता पञ्चम्यनुपपन्नेति वाच्यम् तस्मादित्युत्तरस्येत्यनेन तस्यापि शास्त्रे स्वीकारास्यबाधनात् सर्वजसः शीः सर्वनाम्नः स्मै ङसिङ्यो
रित्यत्रापि विहितविशेषणमेव अशोकवनिकान्यायेन त्वेकत्रोक्तिः पाठवैयर्थ्यशङ्का दृग्ध्याये वमिति व्याचष्टे नित्य द्विवचनेति स्वरस्य सिद्धेः संज्ञाफलत्वं निराचष्टे
स्वाङ्गेति तत्सिद्धेरिति आद्युदात्तत्वस्य सिद्धेरित्यर्थः ननु कथन्ति मितेति वार्तिकेन सिद्धिर्यावता तत्र प्रायपदस्य विभक्तिष्वेव सम्बन्ध इत्यत आह प्रायदर्शनमिति प्राय

ननु यच्छ्रस्यादित्येव कथं न विरुद्धं प्रतिभाति यावता द्वित्रिस्याभिमिति स्वतान्तयस्येत्यस्य प्रक्रान्तत्वादत आह अन्यापीति विभक्त्यादयसूत्रेपीत्यर्थः अपि नैकसूत्रसत्त्वसमु
च्चयः द्वितीयसूत्रस्यादेशविधायकत्वं तु नैव सम्भवति तस्य स्वार्थे कार्यविधायकतया तयपः स्वार्थे प्रवृत्तेः सोप्युदात्त एव स्थानिवत्सूत्र इति तत्राद्वित्तयादेश उभ
यप्रतिषेधः स्थानिवद्भावेन तयपो ग्रहणेन ग्रहणाद्विभाषा प्राप्नोतीत्यभिधायायच्छ्रत्ययान्तरमिति प्रतिपादितम् प्रत्ययान्तरत्वमिति अयम्भावः उभादुदात्त इति सू
त्रस्य विभाषाधिकारीयत्वेन तत्सम्बन्धस्यावश्यकतया नित्यग्रहणं योगविभागार्थमेव सवर्णाभादुदात्त इत्यत्रास्वरितत्वादयज्वेत्यनेवाग्रहणसम्बन्धाभावेपि महावि
भाषासम्बन्धो भवत्येवेति तेनावयवदृत्तेः संख्यावाचिन उभयशब्दादवयवित्यर्थे यच्छ्रस्यादित्यर्थकेन पक्षे यच्छ्रक्षे वाक्यं भवति नित्यमिति सूत्रेनुवाच्यार्थवि
रोधान्न विभाषापरसम्बन्धः तस्य नित्यमयच्स्यादित्येवार्थ इति तत्रार्थे विशेषानुपादानात्तस्य स्वार्थिकत्वमिति तत्र कैयटेन वृत्तिविषय इत्युक्तं तद्व्यर्थसुभाष्यामि।

अयच्छ्रपादिति अत्रापि स्थानिवत्सूत्रस्य भाष्यरीत्या प्रत्ययान्तरत्वमिति भावः निर्देशेन चेति वृत्तिविषये इत्यनुक्त्वा इदमेव वक्तव्यमिति भावः अन्याभा
वइति अन्येषां सर्वनामकार्याणामभाव इत्यर्थः पूर्वपक्षिणां तद्भावविरहादिति वदतैकदेशविकृतन्यायोः शास्त्रीयविकारविषयोपीति नाभ्युपेत
मिति तदनुसारेणैव समाधिं वक्तुमुपक्रमते ॥ ((त्वनेनैव माकृतिसिद्धेरित्याशयेनाह वृत्तिविषय इति इदमेव उभशब्दाद्यत्र द्विवचनं तत्र यत इदमेव तेनो

भयो वेस इत्यत्र वृत्तिसत्त्वेपि शपवासेत्य लुग्विधानेन द्विवचनस्य श्रवणादयज्भावस्यासिद्धिः श्रूयत इत्युपादानादुभयपक्षविनीतनिद्रा इत्यादौ प्रत्ययलक्षणेन द्वि
वचनपरत्वे प्ययच्प्रसिद्धिः न लुमतेति निषेधकृत्वात्र लुक्प्रत्ययनिमित्तककार्यस्य कर्तव्यत्वेन निषेधात् अन्येषामिति भाष्ये यचः प्रक्रमात्मक्तेः न्यत्वमतियो।
स्याकांक्षायां तेनैव शान्त्यायेवा अन्येषामित्यर्थः अभाव इति तेषामेकवचनबहुवचनयोर्विधानादिति भावः भाष्यसिद्धान्तरीत्या शङ्कासमाधानयोरत्रानवसर इ
त्याशयेनाह पूर्वपक्षिणेति अत्रानभ्युपेतमिति कथनेनाभ्युपगमवादेनैतदुक्तमिति सूचितम् एकदेशविकृतन्यायेन भान्तस्योभशब्दत्वं तत्तः परादिवद्भावेन
द्विवचनान्तत्वं तस्य च श्रवणमिति तस्यासिद्धिरिति भावः ननूभौ साभ्यासस्येति निर्देशेन उभयत आश्रयणेप्यादेशो भवत्येवात्रेति कल्पनया सामञ्जस्येन तु हृयघट
नाव्यर्थेति चेन्न उभयपक्षविनीतनिद्रा इत्यत्र लुप्तेपि अङ्गकार्यत्वाभावेन निषेधाप्रवृत्त्या द्विवचनपरत्वसुस्थमित्ययजनापत्तिरित्याशयेनान्तत्वं यथ इत्याभिधानात्

उभनेतेति सर्वत्रैवोभयशब्दादुत्पन्नमित्ययुक्तमितिभावः उभ[illegible]दितादिति उभशब्दादित्यसोभःशब्दोयत्रेतिबहुव्रीहिणाप्रकरणादुभयशब्दस्यान्यपदार्थत्वेनउभघटिता
दित्यर्थकत्वम् सर्वत्रतत्रोभयशब्दादुत्पन्नद्विवचनस्यलुकापहारविषयतायाःसत्वाल्लुक्कृतापहारसम्भावनाभाववदन्यत्वन्तत्रास्तीति पूर्वमयच् प्रवर्तते तस्मिन्
कृतेउभयशब्दस्यसर्वादिगणेपाठस्यसत्वेनततउत्पन्नपञ्चमीसप्तम्योः सर्वनामप्रकृतिकत्वेनोभयतउभयत्रेत्यस्यसिद्धिः नञर्थद्वयघटनायाः प्रयोजनमाह न
त्वलुकापहृतमिति प्रातिपदिकेति उभाविवाचरत्युभयतीत्यर्थेउभशब्दादाचारक्विपिउभयतीतिभवति भवन्मतेतत्रद्विवचनस्योभशब्दादुत्पत्तेरेवाभावेनोभश
ब्दादुत्पन्नंद्विवचनंलुकापहृतमितिनास्तीत्ययचोऽसाधुत्वापत्तिरिति यदीयमित्यनेनाऽनभिधानान्नेष्यतइतिध्वनितम्· नञ्द्वयघटितवाक्यार्थस्यतत्रसत्वमस्तीत्याह

तथापीत्यादि उभशब्दादिति अयंतस्वार्थिकानांसत्वुत्पत्तेः पूर्वमेवांतरंगत्वादुत्पत्तेः उभघटितांच्छब्दात् उभयशब्दादित्यर्थः यत्रलुकापहृ
तंतत्रायजितितुनोक्तम् प्रातिपदिकप्रकृतिकाचारक्विवंतयच्प्रत्ययजिष्यंतेतदातस्यानापत्तेः तत्रोत्पत्तेरभावेनविशिष्टाभावाक्षतेः लुकानापहृ
तमिति लुक्कृतापहारसंभावनाभाववदित्यर्थः संतेनोभशब्दनपाठाभावेः सर्वनामत्वेनततस्त्रलादिविवक्षायाः कर्तुमशक्यत्वेनद्विवचनस्यलु
कानपहारस्यैवसत्वेन ततोऽयजनापत्तौउभयत्रेत्यसिद्धिरित्यपास्तम् यद्वायच्स्याततदात्रलादिःस्यात्तस्मिंश्चलुगपिस्यादितिलुकापहारसंभाव
नासत्वेनलुक्कृतापहारसंभावनाभाववतोन्यत्वात्॥ ५ नवोत्पत्तेरिति विशिष्टाभावेति लुक्कृतापहारसम्भावनाविषयत्वाभाववदुभयशब्दापादानकोत्प

त्तिकर्तृत्वविशिष्टद्विवचनाभावस्यासत्तेरित्यर्थः संतेनोभास्यामित्युभयतउभयोरित्युभयत्रेतिरीत्याविग्रहकालेउभशब्दस्यसर्वादौपाठः किमर्थइतिशङ्कामते
नास्तीतिसर्वनामप्रकृतिपञ्चम्याद्यन्तत्वस्यप्रकृतेविरहात्तसिलाद्यनुत्पत्त्योभयतउभयत्रेत्यादावितिदृष्टान्तासङ्गतिरितिशंकापिनिरस्ता तन्मतेपियथानदृष्टान्तासिद्धि
स्तस्यप्रकारस्यनिष्कृष्यायलुकानापहृतमितिमूलंव्याचष्टेलुक्कृतेत्यादिना अयजनापत्तौ अयचोप्राप्तौ इत्यसिद्धिरिति इत्याद्यसिद्धिरित्यर्थः सम्भावनाघटितार्थसद्भा
वंप्रकटयति यद्यजित्यादिना संतेनोभौसाध्यासस्येति निर्दि शंतेनोभयोन्यत्रेतिवार्तिकस्वारस्येनचयत्रद्विवचनविषयत्वसंभावनातत्रोभशब्दस्यप्रयोगः यत्रतुन
तथातत्रोभयशब्दस्यसः यत्रतूभयपक्षेत्यादौलुग्भवति तत्रलुकानद्विवचनस्यापहार इतिनासाधुता उभाविव्यत्रैकादेशान्नागपिनद्विवचनत्वान्नायच् सर्वमेवोभय

अत एव तद्वाक्यात्पूर्वं पठितेनाश्वताङ्गं तुमशक्तो ञ्चिरमनुरकांस्ततो गृहे दृष्ट्वा तच्चरितं गोविन्दे मनसि ज मन्दे सर्वो पादेति वाक्यैनैकवाक्यं भवति युष्मदर्थेत्वे इति तथा
धरद्रस्तत्रेति शेषः अनन्वितमिति यदि युष्मदर्थं एवात्र विवक्षितः स्यात्तदा भवन्तमित्यत्र यो भवच्छब्दस्तत्र भवत्पादो पिक्क सायणेति सोयाधरपानस्वकर्तृकं बाधित
मित्यनन्वय इति भावः अत्र पक्ष इति एकस्य तात्त्वमिति पक्षमित्यर्थः निर्देश इति तेन एतत्त्वमिति मूलोक्तयोर्द्वयोर्वाक्ययोरुपपत्तिरिति भावः पूःशब्दार्थस्य विशेष्यत्वे सं
ज्ञानेति वार्त्तिकार्थ इत्याशयेनाह पूःशब्देनेति एतेन गणसूत्रशेषत्वे प्रमाणत्वमुक्तम् अत एव स्त्रीरूपस्य पुरोरूपार्थस्य विशेष्यत्वादेव मुदाहृतमिति यद्यष्टाध्या
यीस्थसूत्रस्य शेषः स्यात्तदा जस्परकप्रयोगमेव कुर्यात् सप्तम्यामेवेति अष्टाध्यायीस्थसूत्रशेषत्वे पुर इति वक्तव्ये पुरीति समुदायोपादानेन सप्तम्युपादानेन
चान्तर स्याः पुरस्त्रागत इति भवत्येवेति तात्पर्यम् असहाय इति एतदर्थक एकशब्दस्ताकिभिः क्षुद्रकैर्जितमित्यत्र प्रसिद्धः समस्तपाठमिति क्वचित्तु स्वाभिधेया

पिबंतं भवंतमिति चानन्वितमिति बोध्यम् अत्र पक्षे त्व इत्येकश्रुत्योदात्तानुदात्तयोर्निर्देश इति बोध्यम् प्राप्त्यभावादिति पूःशब्देन स्त्रीत्वविशि
ष्टस्यैव बोधनेन तादृशार्थस्य विशेष्यत्वे एवं तत्प्रवृत्तेः अत एव भाष्ये ऽन्तरायामिति स्त्रियां सप्तम्यामेवोदाहृतमिति भावः केवल इति असहाये
इत्यर्थः स्वाभिधेयापेक्षावधीति समस्तपाठं व्याचष्टे स्वस्येत्यादि अपेक्षेति कर्मणि घञ् व्यवस्थास्येवेति पूर्वादिशब्दैरेकस्या एव दिशोऽवधि

पेक्षोवधिनियम इत्यसमस्तपाठः तत्रापेक्षशब्दः कर्मघञन्तोऽवधिशब्दार्थविशेषणं यदि विवक्षितं तदा सापेक्षत्वेन समासा((कृतभेदस्य प्रतिपादनम्· ॥
नुपपत्तिः नियमशब्दार्थस्य विशेष्यत्वे त्वनन्वय इति दूषणं परिहृतम् अपेक्षशब्दावधिशब्दयोः कर्मधारयोत्तरं नियमपदेन षष्ठीतत्पुरुष इति भावः कर्मणीति अ
कर्त्तरि च कारके इति सूत्रेणेत्यादिः ननु व्यवस्थायामित्यसङ्गतम् व्यवस्थाप्रवृत्तिनिमित्तकत्वं हि दिक् शब्दत्वमित्यर्थः स्यात् सत्यमुक्तः तस्याः प्रवृत्तिनिमित्त
त्वाभावात् दिग्वाचकशब्दत्वस्यैव दिक्शब्दत्वेन सुप्रसिद्धत्वात् तथा दिङ्नामान्यन्तराल इति सूत्रसङ्गच्छत इत्यत आह पूर्वादिशब्दैरिति एकस्या एवेति
॥ सा चाकाशवदेकैवेति तार्किकाभिप्रायम् भेदस्त्विति कल्पितस्येति शेषः ॥

ननु पृथिवीमध्यस्यावधित्वमप्रसिद्धं हरिवंशादौ पर्वतानामेव चतुर्णामवधित्वस्य प्रसिद्धत्वादत आह रामायण इति मध्यदेशावधिकस्यैवेति विन्ध्यहिमालययो
र्यो मध्यदेश आर्यावर्त इति तदपेक्षया स्वावस्थित्यधिकरणमाल्यवदपेक्षया चेत्यर्थः यत्र यस्यावस्थितिस्तदपेक्षया मध्यत्वव्यवहारो हि लौकिकव्यवहारस्तत्र आ
ह पृथिवीमध्यस्येति सर्वत्र सुग्रीवकृतभेदप्रतिपादनेन च तन्मध्यभागेति स्वावस्थितेर्मध्याह्नसूर्यसंयोगिदेशभिन्नो मध्यदेशरूपो भाग इत्यर्थः उदयाचलादी
त्यादिना स्ताचलपरिग्रहः पूर्वादिशब्दानामिति दिग्वाचकानामिति शेषः व्यवस्थालक्षणघटनायाह उदयाचलेति [illegible]लस्येति चोदितो यत्तस्सदाका

उपाधिश्च पृथिवीमध्यं तत्पात्तवर्तिनश्चत्वारः पर्वताश्च रामायणे किष्किन्धायां सुग्रीवेण मध्यदेशावधिकस्यैव दिग्विभागस्योक्तेः पृथ्वीमध्यं
च मध्याह्नसूर्यसंयोगिदेशः सर्वं च तन्मध्यभागावधिकोदयाचलादिपर्यन्तदेशरूपोपाधिविशिष्टदिशि पूर्वादिशब्दानां तत्तच्छब्दप्रवृत्ति।
निमित्तीकृत्य प्रवृत्तिरित्युपाध्यन्तर्गततया व्यवस्थास्त्येव उदयाचलपर्यन्तरूपोपाधेस्तदभिधेयस्य तदाकाङ्क्षत्वं चास्त्येव मध्याह्नसूर्यसंयोगि
देशात् तत्सम्मुखदेश उदक् तत्पृष्ठस्थदेशो दक्षिणः मध्याह्ने सूर्यस्योदङ्मुखत्वात् स्पष्टं चेदं हेलाराजीये व्यवस्थायामिति च विषयसप्तमी
निभाव्यस्तदाह प्रसिद्धत्वादिति देशवृत्तीनां तत्तदवधिकोदयाचलसन्निहितत्वादि प्रवृत्तिनिमित्तमित्यादि बोध्यम् आधुनिकसंकेतो हीति।
ऽसंज्ञापदसामर्थ्यात् अन्यथा सर्वादीनां केवलरूढत्वे नेन्द्रादिपदानामिव रूढत्वरूपसंज्ञात्वस्य सर्वत्र सत्त्वात्तदसंगतिः स्पष्टैवेति भावः व्या
ख्यात्रिति कैयटादीत्यर्थः आधुनिकसंकेताभावादिति किन्त्वीश्वरस्यैवेति भावः यदि तत्रोत्कर्षस्यावधि॥ (१) डुःस्वमतो व्यवस्था इत्येवेत्यन्वयः त

त्सम्मुखेति मध्याह्निकसूर्यसम्मुखेत्यर्थः देशवृत्तीनामिति पूर्वादिशब्दानामिति शेषः ननु रूढ्या यैः शब्दैरर्थाः प्रतिपाद्यन्ते ते संज्ञाशब्दा यथेन्द्रादिशब्दाः संज्ञे
त्यन्वर्थशब्दापेक्षया प्रवृत्तिनिमित्तमन्यदेव वाच्यमन्यच्च शब्दरूपप्रवृत्तिनिमित्तभेदादिन्द्रशक्रादिशब्दानां पर्यायवाचकतानुपपत्तिः एकस्य धर्मस्य प्रवृत्ति
निमित्तत्वे हि तदिति पूर्वादिशब्दभिन्नकिम्प्रवृत्तिनिमित्तं तेषामित्याकाङ्क्षायामाह देशवृत्तीनामिति केवलरूढत्वेनेति अत्र केवलेत्यनेन योगरूढत्वादिव्यवच्छेदः इन्
द्रादिपदानामिवेत्यनेन शब्दस्वरूपातिरिक्तप्रवृत्तिनिमित्तमिति ध्वनितम् आधुनिकसंकेतस्थले तु शब्दस्वरूपमेव प्रवृत्तिनिमित्तमिति भावः नन्वाधुनिकसंकेताभावे

विधिरन्तनसंकेताभावात्कथमेतदत आह किन्त्वेष्वेति तत्र दक्षिणागाथकादित्यत्र आग्रहइत्यनेन नियमाभावो दर्शितः ननूपचारो हि लक्षणा सा च — शक्यतावच्छे
दकारोपस्येति कथमुक्तमित्यत आह तत्वेति देशनिष्ठपूर्वोक्तशक्यतावच्छेदकारोपादित्यर्थः मूले स्वार्थविशिष्टार्था न्तरेत्यादि स्वार्थविशिष्टं यदर्थान्तरं तद्विशेष्यकप्र
तीति जनकत्वमेवोपसर्जनत्वं न तु लाक्षणिकत्वमित्यत्र भाष्यीयप्रयोग एव प्रमाणमित्याह समान्यपीतीति अत्रैतच्छब्दस्यैतत्त्वमिति पाद्यवस्तुनि लक्षणायामपि तद्दाध
त्स्यदर्शनेन लाक्षणिकत्वमुपसर्जनत्वव्यवहारनियामकं नेति भावः स्वार्थविशिष्टस्योपसर्जनपदार्थत्वमपि भाष्यकारसम्मतमिति सूचयन्नाह इदन्त्विति तत्रेदि
त्रियोविकारावयवार्थकः प्रत्ययस्तस्माद्विकारावयवार्थको निर्दिष्ट यथास्यादित्यर्थं सूत्रमिति प्रयोजनं तस्य सूत्रस्योक्तासमुदाये इष्टः शास्त्रा अवयवेपिवर्त्तते इतिस्या
येन विकारविकारेपि माथमिकप्रत्ययान्तस्य प्रवृत्तिर्भविष्यतीति सूत्रन्निष्प्रयोजनमित्यभिधाय प्रकृतिवाचकस्य शब्दस्य यद्यपि प्रथमविकारे प्रवृत्तिरस्ति तथापि प्रकृतिप्र
कृतिकप्रत्ययान्तस्यापि प्रवृत्तिरस्तीति ततोविकारे प्रत्ययः प्राप्नोतीत्याशङ्क्या नभिधानात्ततो न भविष्यतीति अभिधाने हि सत्यन्यतोपि मयट्न प्राप्नोति वैल्वस्य विकार इ

सापेक्षत्वाद्यवस्थास्तीत्याग्रहस्तदाप्रत्युदाहरणान्तरमाह अथ रेइत्यादि अत्रापि संज्ञात्वमत्वाह उत्तरे इत्यादि उपचारादिति तत्वारोपादिति
भावः अर्थान्तरसंक्रमइति स्वार्थविशिष्टार्थान्तरबोधकत्वमित्यर्थः इदं च नित्यवृत्तमत्ययादिति सूत्रे भाष्ये ध्वनितम्· मेवार्थइति देशवदयम
पितच्छब्दकाय इत्यर्थः तुल्यन्यायादेतच्छब्दस्यापि कैयटोक्तार्थः शक्यइति ध्वनितम्॥ ११ नियद्यनभिधानन्त्वाश्रीयते तदा नित्यवृत्तमत्ययादिति सूत्रम पनीय

वैल्वमयादिनित्यर्थं न प्रत्ययान्ताल्लुग्भवतीत्युक्ता यदि लुक् क्रियते पालाशीसमिदिति न सिद्ध्यति अत्र पलाशशब्दात् पलाशादिभ्यो वेत्यण् तदन्ताद्विकारे मयटि तस्य लु
क्यनुपसर्जनलक्षणईकारो न प्राप्नोतीति दूषणमभिधाय मा भूदेवमत्र योऽनुपसर्जनमित्येवं गृह्यमाणविशेषणमनुपसर्जनादित्येतदिति पूर्वपक्षिणोक्ते इदमर्थि
दोषः स्यात्काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी तामधीते काशकृत्स्ना ब्राह्मणी अत्राणन्ताद्गीकारः स्यात्तस्मादस्तु अनभिधानादित्येवेति भाष्ये उक्तम् अनेन भाष्यग्र
न्थेन स्वार्थविशिष्टार्थान्तरबोधकत्वमुपसर्जनत्वमिति ध्वनितमित्यर्थः अयमपीति पूर्वादिशब्दानान्दिशि दिगवच्छिन्ने च स्वभावतो वृत्त्या देशो यथा शक्यस्तथा देशान्त
रनिष्ठत्वविशिष्टत्वविशिष्टस्यापि दिगवच्छिन्नतया सोपि शक्य एवेत्यर्थः तुल्यन्यायादिति यथा परदिगवच्छिन्नदेशे वर्त्तमानानां शत्रूणां दिगवच्छिन्नत्वेन परशब्दा।

उक्तबहिर्देशस्थमिति प्राकारपरिखाद्यावृतदेशाद्बहिर्देशस्थमित्यर्थः ननूपसंख्यानशब्दो यदि स्तुत्यतिभ्यासुभयपरस्तर्हि तदुपादानमेव व्यर्थम्बहिर्योगेन गतार्थत्वात्
तत्राह सर्वत्रेति तस्योभयपरत्वे चेत्यर्थः प्रसिद्धिमाश्रित्येति पाणिनेः सर्वज्ञत्वस्यानुपपत्तिः स्यादिति भावः आश्रित्येत्यनेन गतार्थत्वम्भाष्योक्तं ध्वनितम् ननु त्रिसू
त्रीसत्वेऽकच्त्वरयोरपि विकल्पयोः सिद्धिर्भवति भवत्समते व्याख्याने तु कथमत आह त्रिसूत्र्येति जसाधारसर्वेत्यनेनाकजादिर्नित्यमेवेति सूचितम् अव्यवस्थायां
रूपद्वयापत्तिं वारयति व्यवस्थेति पाठविशेषणमिति त्रिष्वपि सूत्रेषु योगविभागं कृत्वा पाठविशेषणत्वं संपादनीयं तिङ्गोत्रादीनीत्यत्रेवेति भावः यदि जसः शीत्यत्रे
व पूर्वादिभ्य इति सूत्रेऽपि सर्वनाम्न इत्यस्य सम्बन्ध इति स्वीक्रियते तदा गणे योगविभागो मास्तु न्यर्थनिर्देशस्य संज्ञाप्रवृत्तावेवेति मि तत्वमस्तु तथा च ततोऽपि लाघव

वार्यं चेति उक्तबहिर्देशस्थमित्यर्थः उपसंख्यानशब्दोऽपीति एवं च तद्ग्रहणं बहिर्योगस्य गृहेष्वेव प्रसिद्धिमाश्रित्य सूत्रे कृतमिति भावः [illegible]ला
घवमिति त्रिसूत्र्या जसाधारशीभावे एव विकल्पविधानात् अव्यवस्थायामित्यादिना सोऽपि पाठविशेषणमिति भावः वक्ष्यमाणत्वादिति संकृद्व
इति बहुव्रीहेरभिधानेऽपि तत्रैकद्व्यन्यतरादृत्यर्थादुपसर्जनत्वमेव समासान्ते कृते विशिष्टस्य सर्वाद्यन्तत्वाभावाच्च समासान्तानामुत्तरपदाव
यवत्वं तु नेत्युक्तम् चिकीर्षित इतीति अध्याहारलभ्यमेतत् स तदर्थमेव न बहुव्रीहिरिति वक्तव्ये बहुव्रीहाविति गुरुनिर्देश इति भावः विना
शोन्मुखत्वादिति यद्यप्यलौकिके सर्वैकार्थीभावस्यारोपोऽस्ति तथापि तत्र स्वार्थे विशिष्टार्थान्तरबोधकत्वरूपोपसर्जनत्वाभावादेवमुक्तम्

मित्यपि बोध्यम् ननु संख्ययाव्ययेति सूत्रविहितबहुव्रीहौ निरुक्तोपसर्जनत्वाभावेन तत्र निषेधार्थं सूत्रमस्त्वित्यत आह [illegible]ति अत एव तस्य सूत्रस्य विषये प्रथमसूत्रे
णैव बहुव्रीहिसंज्ञामाश्रित्य तत्प्रत्याख्यानं भाष्यकृत्सम्मतं सङ्गच्छते सूत्रकारमतेऽप्याह समासान्त इति बहुव्रीहौ संख्येये डजिति समासान्ते कृत इत्यर्थः तेषां समासार्थो लौ
किकविग्रहवाक्यावयवत्वेन समुदायावयवत्वस्य सत्त्वादिति भावः उक्तमिति अर्थवदधातुरिति सूत्रे सर्वेति शेषः स तदर्थमेव अध्याहारार्थमेव सर्वत्र बहुव्रीहिपदं वाच्या
र्थपरमेवेति भावः अकृतव्यूहपरिभाषयैवेष्टसिद्धौ न बहुव्रीहाविति सूत्रं चिकीर्षितमिति व्याख्यानं व्यर्थमित्याशंकां निराचष्टे मूले नचेति अलौकिके प्रक्रियावाक्ये
समासप्रयोजकैकार्थीभावारोपस्य सर्वजनप्रसिद्धत्वादेव निषेधस्यासिद्धौ सूत्रस्य वैयर्थ्यमेव सर्वत्र तत्रैवानुपसर्जनत्वस्य नष्टत्वाद्विनाशोन्मुखत्वादित्यसङ्गतमि

जातेपिप्रत्ययलक्षणेन यथानिमित्तविनाशाद्वृद्धिस्तथाप्यलुक्यपिसन्नियोगाविनाशाद्बुध्याऽकृतेतिपरिभाषायाःप्रवृत्तिर्न भविष्यतीत्यभिहितम्‌ पूर्वकार्यसवेति
लुप्तप्रत्ययपरतो यः पूर्वस्तत्प्रकृतिभूतो लब्धाङ्गसंज्ञकस्तदुद्देश्यकं कार्यमाङ्गमनाङ्गं वा तस्मिन्कर्तव्ये तेन प्रत्ययलक्षणस्य प्रतिषेधादिति भावः यद्यप्यत्र जाया
मानङ्कार्यम्पूर्वस्यैव तथापि प्रत्ययसन्नियोगेन तद्विधानं तु तस्मिन्परतः पूर्वस्येति तत्रोक्तमिति तस्य निषेधस्यायमविषयः तस्मात्‌ मूलोक्तज्ञापकासम्भवात्‌ पु
ष्ययोगे ज्ञीति अत्र ज्ञीति सम्पदादिक्विबन्नाज्ञावाभिधायकात्‌ ज्ञोरूपम्‌ यद्यपि नक्षत्रयोगे ―― ज्ञीति वार्तिकेपाठः तथापि तत्संग्राहकवाक्यमिति तस्माल्लब्धस्य संस्का

पूर्वकार्यसवेति स्पष्टमेव तस्मात्पुष्ययोगं जानाति पुष्येण योजयतीत्यर्थे तस्माद्‌ धञ्पुष्ययोगेज्ञीति वचने भाष्यकृतकृतप्रत्याख्यानुवृत्तिज्ञापिका तत्रा
द्विचजो ऽरिति धित्परतः कुत्वमिति भाष्यकारोक्तेः अकच्चरेणु कर्तव्यो प्रत्ययमुक्तसंशयाविति च तदुक्तिः एतदेवाभिप्रेत्याधिन्विकृण्व्योरच्चेति
सूत्रे किमर्थमत्वं विधीयते वलोपसवास्त्वित्याशङ्क्यात्वे ऽल्लोपे तस्य स्थानिवत्वेन गुणाभावाय तत्‌ नचवलोपेपिन धात्विति गुणनिषेधः सिद्धदा
तिवाच्यम्‌ तत्प्रत्याख्याने गुणप्राप्तिरित्युक्तम्‌ अनेन सूत्रमतात्प्रत्याख्यानवादिमतं प्रबलमिति प्रत्याख्यानवादिसमततलक्ष्यमेव कथंचित्सूत्र
मतेसाध्यं नतु विपरीतं सति संभवे ऽन्यथा सूत्रमप्रमाणमेवेति च प्रत्याख्यानं सूत्रसमतमिति च ध्वनितम्‌ सूत्रहृत्खण्डितप्राचीनऋषिवाक्यानाम
प्रामाण्यवत्सूत्रकारवचः खण्डनप्रवृत्तभाष्यवार्तिकवचनैस्तदंशे सूत्रकारवचसोप्यप्रामाण्यकल्पनैवोचितेति दिक्‌॥ ७ ॥ ७ ॥

एकवाक्यमेतादृशङ्कल्पनीयमित्याशयेनैवमुक्तम्‌ नक्षत्रवाचिशब्दपूर्वपदकयोगशब्दान्नाम्नाति पदिकाज्ज्ञानात्यर्थे णिच्‌ तत्लुक्‌ प्रकृतिप्र त्यापत्तिः प्रकृतिवच्च कार
कमिति तदर्थः अत्र कुत्वनिमित्तस्य विनाशोन्मुखत्वात्कुत्वं न स्यात्‌ एतदेवाह तत्रहीति अत्र घिति परे कुत्वस्य विधानेति न लुमतेति निषेधस्य प्राप्तिरस्तीति भावः प्रत्यङ्गमिति
प्रत्यवयवमित्यर्थः स्वरः स्वाङ्गशिटामिति विहितः मुक्तसंशयमिति क्रियाविशेषणघटितपाठान्तरम्‌ तदुक्तिः भाष्यकारोक्तिः स्मृतिद्वयप्रामाण्याद्विकल्पस्तनेत्याशये
माह एतदेवेति यथोत्तरम्मुनीनाम्प्रामाण्यमेव तदिति उक्तमत्वविधानमित्यर्थः तत्प्रत्याख्यानेन धात्विति सूत्रस्य प्रत्याख्याने अनेन उक्तरीत्याऽत्वविधानप्रयोजनक
थनेन कल्पनैवेति सर्वेन विकल्पकल्पनानिरासः दृष्टार्थत्वेन तत्साहृष्टार्थत्वन्त्वस्तु न तत्र विवादः अत एव तत्र तत्रापाणिनीयन्तु भवतीति भाष्यकारोक्तिः सङ्गच्छते

नचेत्यादिना विशेषणेति स्वन्दरादिविशेषणान्वयापत्तेरित्यर्थः यद्वद्वयसाधारणन्दोषमाहविनीति ॥ ः॥ ननुप्रत्ययानांसन्निहितपदार्थगतस्वार्थबोधकत्वमिति व्युत्पत्तिस्त
त्रपदस्य लक्षणासाधिकास्तीत्यत आह एकार्थीभावेति तन्मते समुदायेन शक्त्यैव भवत्स्मत्तलक्ष्यार्थस्य प्रतिपादनादिति भावः तद्घटकेति बहुव्रीहिघटकेत्यर्थः उचि
तइति तथाच नबहुव्रीहावितिव्यर्थमेवेत्याह दिगिति स्वोक्तिनेप्रकरणान्तरस्थेति विस्मृति शङ्कापि नकार्येत्याह सन्तप्रकरणेति पुनः प्रसादङ्कदुक्तिङ् खण्डयति मूलेय
दपीति तैरप्येतिप्रकाशकृद्भिरपीत्यर्थः पुनरिति समाससंज्ञोत्तरकालमित्यर्थः नसंज्ञेति नसंज्ञाकार्यमित्यर्थः समुदायघटकस्यतदन्तस्य चेति शेषः नप्रवृत्तिरिति लुग्विद्य

एकार्थीभाववादिभिस्तथावक्तुमशक्यत्वाच्च एवंचतद्घटकावयवानां सर्वनामत्वाभावस्यौचित्यदूतिदिक् [illegible]ति सन्तप्रकरणस्थयेत्यर्थः स्व
ग्रन्थेति तैरप्यलौकिकएवनिषेधस्योक्तेरितिभावः अर्थान्तरोपसंक्रमे सतिगतेति तेनातिसर्वायेत्यादौनदोषः पुनः संज्ञातुदुर्लभा संज्ञोपसर्जनानां
निषेधात् पाठात्पर्युदासेन तदन्तग्रहणेनापिनसंज्ञा अर्थान्तरसंक्रमात्पूर्वन्तुस्यैभावस्यनप्रवृत्तिः अकच्प्रवृत्तिस्तुततः प्रागस्त्येवेतितन्निरुत्तये
इदंसूत्रमित्यभिमानः गच्छत्विति निमित्तापायपरिभाषयेतिभावः दुर्लभेति उपसर्जननिषेधादितिभावः इत्यर्थइति अनंगकार्यत्वेनेत्यस्या
र्थइतिभावः क्लिष्टमितितन्त्वनुसृष्टमेव न्यासग्रन्थासंमतिसुपपादयन्ननंगकार्यत्वेनेत्यस्य वैयर्थ्यमुपपादयति तथाहीति विशेषविषयत्वा
दिति अन्यपदार्थविशेषणत्वादित्यर्थः समुदायेति तस्यैवतद्विशेषणत्वमित्यभिमानः [illegible]ति त्वत्कपितृकमत्कपितृकयोरित्यर्थः अंग
संज्ञानपेक्षत्वमेवास्त्वेइति सर्वंचानुपदोक्तेपदपीतिपक्षेकप्रत्ययापवादत्वस्याकचिप्रसिद्धत्वादेवंवक्तुरीत्यातदुक्तिर्व्यर्थेतिबोध्यम् इत्यादि
वदेतेति वृत्तिग्रन्थव्याख्यावसरेइतिशेषः [illegible] ॥ ८॥ वयत्ताया स्तत्वादितिशेषः अभिमानपदोपादानस्य चिन्तामस्तुचिमप्रकटयति निमित्तापायेति

एतेनयत्तत्रारम्भस्यफलन्त्वत्कपितृकइत्यादिरूपसिद्धिरितिसाप्यधुनापिजातेति सूत्रवैयर्थ्यमेवेतिभावः प्राक्प्रवृत्तासंज्ञागतेति नन्वमोयेनभवदुक्तप्रतिबन्दिः स्यादि
त्याशयेनशङ्कते मूलेननुकार्यकालेति दुर्लभेति अतिसर्वायेत्यादावितिशेषः मूलेविरोधादिति अनङ्गकार्यत्वेनेति हेतूक्त्यानर्थक्यापत्तेश्चेत्यपिबोध्यम् तत्वम्
क्लिष्टत्वम् विशेषविषयत्वमुपपादयति अन्यपदार्थेति तस्यैव समुदायस्यैव वृत्तिग्रन्थेति पूर्वोक्तरीत्यासूत्रस्यार्थद्वयमुक्त्वाप्रियविश्वायेत्याद्युदाहृत्य त्वत्कपितृकोम

ननु यत्किञ्चिन्त्यदोषाद्नेन तृतीयेत्याद्युच्चारणेन विहितत्वमत्र तिपदोक्तत्वं इङ् कर्तृकरण इत्यस्यापि दुर्वीरमत आह [illegible] तेन तत्त्वयकासदृशस्तत्कासदृश इत्यत्र विवेकेन अनेनायनिषेधोपि समुदायस्येति भाष्यीयसिद्धान्तार्थो ध्वनितः तृतीयासमास इति सूत्रे विभाषादिगिति सूत्रात्समास इत्यनुवृत्त्यैव सिद्धे पुनस्तत्र समास इत्यस्योपादानमसमास इति पदच्छेदाय तेन समासभिन्नस्य समाससदृशस्य लौकिकविग्रहवाक्यस्य लाभ इत्याशयेनाह [illegible] उभयोर्व्यावृत्ताव्वाह तेनेति इति समासवृत्ति तृतीया तत्कृतेति सूत्रविहितसमासवृत्त्यर्थः तत्तत्पूर्वसदृशत्यस्य प्रवृत्तिस्तस्य यत्र हेतौ तृतीया तत्र चरितार्थतया करोति द्वारा सामर्थ्येन प्रवृत्तिरिति भावः तत्र सूत्रे त

यदं तत्त्वमादाय सर्वनामत्वप्राप्तिस्तमुच्चार्य विहितत्वात् वाक्यमपि तत्सम्बन्ध्येव प्रत्यासत्तेरिति भावः तेन करोति द्वारा सामर्थ्येमासेन कृताय पूर्वस्मै मासपूर्वस्मै इति समासे तत्संबंधिनि वाक्ये च न तत्र वाक्यस्य प्रतिपदोक्तसमाससंबंधिन एव ग्रहणे फलान्तरमप्याह [illegible] तृतीयासमासमा त्रस्य ग्रहणे हि तदर्थे वाक्ये यत्र क्वापि स्थितस्य सर्वादेः संज्ञा नेत्यर्थो त्रापि स्यादिति भावः [illegible] किंचावयवमात्रनिषेधे प्रयोजनं सर्वनामाव्ययसंज्ञायामिति येन विधिरिति सूत्रस्य भाष्यप्रामाण्येन तदन्तस्य संज्ञायां वर्णाश्रमेतराणामिति भाष्यप्रयोगानुपपत्तिः तद्यत्र सर्वार्थवाचकत्वं नास्तीति वक्तुं शक्यम् मानाभावात् लोकव्युत्पत्तिसिद्धस्य तस्यानेन निषेद्धुमशक्यत्वात् नापि तस्य सर्वादिपाठो निषिध्यत इति युक्तम् तस्याप्रकान्तत्वात् त्राविधेयत्वाच्चत देवध्वनयन्नाह फलवत्त्वाच्चेति फलस्त्ववच्चमिति इह ह्यवयवमात्रे स्तदशादि विशेषणान्वयाभाववत् कुत्सादिविवक्षायाम् त्वाभावात् समुदायेतद्वि वक्षायान्तु समुदायान्तर प्रत्ययेन तदुक्तेर्नावयवात्तदुत्पत्तिरिति चिंत्यमेतत्॥ ))योमेध्यद्युत्यर्थो वा तदर्थे समासार्थे मूले यदुक्तं [illegible] तद्वलस्याव यवनिषेधे फलाभावस्य किन्त्वेत्यादिनोपपादनेपि यत्फलादिति तस्यानुपपादनान्न्यूनतापरिहारायाह [illegible] नन्वनेन निषेधात्सर्वार्थवाचकत्वं नास्तीति ब्रूम इत्यत आह तस्येति [illegible] मानाभावादिति संज्ञानिषेधेपि स्त्रीयसर्वार्थवाचकसर्वादित्वानपायादिति भावः ननु तस्यैव निषेधः किन्न स्यादत आह [illegible] तस्य सर्वार्थवाचकत्वस्य तस्य इत्यान्तर्गतेतरशब्दस्य तस्य पाठस्य यद्यपीत्यादिना मूलोक्तप्रयोजनद्वयं खण्डयति [illegible] अत्र पदकान्त्येन तत्समाहारेतरेतरयोगयोः सङ्करः अभाव इति उभयत्र समूहस्य विशेष्यतया ऽवयवस्य तद्विशेषणत्वेन पदार्थैकदेशत्वान्न तत्र विशेषणान्वय इति भावः तद्विवक्षायाम् कुत्साद्यर्थान्वयविवक्षायाम् तदुक्तेरिति तथा दक्षिणोत्तरपूर्वकाणामित्यादावयवनिषेधेन कप्रत्यये समुदायसंज्ञाभावोऽपि फलम्॥ मू॰ पं॰ ६॥

अवयवगतकुत्सादेरनुक्तेरित्यर्थः एवञ्चार्थकार्याणामप्रयोग इति न्यायेनावयवेभ्यस्तदुत्पत्तिर्नेति भावः यद्यप्यकारोऽवयवानां द्वियत्वे तदा भवन्मते प्रत्येकमकच्प्रत्ययोऽपि स्या
त् चिन्त्यमेतदिति शास्त्रस्यान्यविषयतास्यादिति कथनेन परोक्तफलस्य स्वीकरणमिति यत्तच्चिन्त्यमित्यर्थः त्वच्छब्दस्योक्तरीत्या तान्तस्य सत्त्वमस्तु तथापि तस्य सर्वादौ पा
ठे प्रमाणाभावः बहूनामसमस्तत्वम् अतः एवञ्चावयवनिषेधे फलाभावः इत्यपि बोध्यम् ॥ ३१ ॥ ननु यद्यपि द्वन्द्वात्मकसमुदायस्यैव सर्वनामसंज्ञानिषेधस्तर्हि द्वन्द्वे इति सप्त
म्यनुपपन्नेत्यत आह समुदायनिषेधे त्विति तद्विषयेति भाष्योक्तिविषयेत्यर्थः तदर्थकेति प्रथमार्थकेत्यर्थः द्वन्द्वे चेत्यस्य समुदायस्य संज्ञाव्यावर्तकत्वं प्रकारान्तरे
ण साधयति किञ्चेति फलाभावादिति शीभावे कर्तव्ये सर्वनाम्नेन विकल्पविधानं शीभावस्य च सर्वनाम्नो विहितस्य जसः स्थाने प्राप्तिरिति समुदायस्य तेन विकल्पेन संज्ञावि

समुदायनिषेधे तु द्वन्द्वस्य संज्ञिनोऽधिकरणत्वविवक्षया सप्तमी बोध्या यद्वा इयं सप्तमी प्रथमार्थे अकच्स्वरौ तु कर्तव्यौ प्रत्ययं मुक्त्वा संशयाविति
भाष्योक्तेन तु प्रकरणविषयस्त्वन्तरेण तद्विषये न बहुव्रीहावित्येतत्साहचर्येण वा एतत्प्रकरणस्य सप्तमीनिर्देशानां तदर्थकत्वौचित्यात् किंच
विभाषा जसीत्यनेन फलाभावादवयवनिषेधाभावेन तत्साहचर्येणाऽर्थाधिकारानुरोधेन च द्वन्द्वे चेत्यस्याप्यवयवनिषेधकत्वाभावः एतेन सप्तमी
निर्देशसामर्थ्याद्बहुलस्य संस्कारानुरोधाच्च विद्यमानानीत्यध्याहारेण समुदायस्यावयवानां चायं निषेधः तत्र समुदायस्य व्यपदेशिवद्भावेन निषे
धः आधाराधेयभावेऽपि व्यपदेशिवद्भावस्यानद्यतने लङ्गुत्यास्य प्रत्ययस्यादित्यादिसूत्रस्थभाष्यादौ स्पष्टत्वात् ॥ ॥ धाननिषेधस्य विकल्पे विधिविक

ल्पस्य फलितत्वेन परममूले उक्तसंज्ञा वा स्यादित्युक्तमत एवात्र निषेधाभावेनेत्युक्तिसङ्गतिरिति भावः तत्साहचर्येणेति विभाषा जसीत्युत्तरसूत्रसाहचर्येणेत्यर्थः सूत्रा
न्तरसाहचर्यन्तु व्यवस्थानियामकमित्याशयेनाह अर्थाधिकारेति खण्डनकृदुक्तिं खण्डयति एतेनेति अकच्स्वरौ तु कर्तव्याविति युक्तिः किञ्चेत्याद्युक्तप्रकारद्वये
नेत्यर्थः सामर्थ्यादिति यदि समुदायस्यैव संज्ञानिषेधोऽभिप्रेतः स्यात्तदा द्वन्द्वस्येत्येव वदेदिति भावः विद्यमानानीति अत्र बहुवचनं समूहावयवाभिप्रायम् ननु द्वन्द्वे इदं
स्य वर्तमानत्वं कथमभेदेऽप्याधाराधेयभावविरहादत आह तत्रेति तयोर्मध्ये इत्यर्थः ननु भट्टभावादौ व्यपदेशिवद्भावस्यावयवावयविभावस्याश्रयणस्य लक्षणप्रसिद्धेर
त आह आधाराधेयेति अनद्यतन इत्यादि आद्येऽन्यद्यह्योऽभुक्ष्महीत्यत्र आमिश्रे लुङ्वद्यथा स्यादित्येवमर्थं —— मनद्यतन इत्यत्र बहुव्रीहिनिर्देशः कर्तव्यः अविद्य

ना नाद्यजनने ऽन्यद्यतनवदित्यभिप्रायः एवमद्यतनेपि लङ् प्राप्नोति न त्वद्यतने द्य तनो विद्यत इति पूर्वपक्षे ऽद्यतने ऽप्यद्यतनो वर्तते कथम् व्यपदेशिवद्भावेनेत्युक्तम् द्वितीये आस्यश॥
ब्दस्य मुखमात्रपरत्वोपक्रमे किमास्योपादाने प्रयोजनमिति पूर्वपक्षः सिद्धन्त्वास्ये तुल्यदेशप्रयत्नं सवर्णमिति न्यासप्रसक्तः ततः प्रयत्नविशेषणमास्योपादानम् सन्निहि
आस्याद्याद्याः प्रयत्नास्ते ह्यपिता भवन्ति इति समाधाने एवमपि व्यपदेशो न प्रकल्पते आस्ये येषां तुल्यो देश इति व्यपदेशिवद्भावेन व्यपदेशो भविष्यतीत्युक्तम् तृतीये कादि यत्र
सङ्घातग्रहणं वर्णग्रहणं वेति विचारे संघातग्रहणमिति पक्षे रात्रिकेति न सिध्यतीति पूर्वपक्षे वचनसामर्थ्याद्भविष्यतीति परेणोक्ते अस्मिन्वचने प्रयोजनम् किम् कारिकेति॥
आत्राप्येकादेशे व्यपवर्गाभावान्न प्राप्नोति अन्तादिवद्भावेन व्यपवर्ग इत्युक्तम् तत्फलमिति तादृशव्याख्यानफलमित्यर्थः अपि समुदायप्रयुक्तत्वपरामर्शकः अवयवस्य।
सर्वनामसंज्ञानिषेधो यादृशरूपव्यावृत्तये भवता स्वीक्रियते तादृशरूपन्तादृशव्याख्यानेपि दुर्वारमिति भवदीयन्तादृशव्याख्यानं निष्फलमित्याह इतरकशब्द इति एते

तत्फलन्त्ववर्णाश्रमे तराणामित्यादावव्ययवत्सर्वनामत्वप्रयुक्तोपि ताकजिन्यपास्तम् इतरक शब्देन समासे ऽति भवकानित्यादावित्वतच्छ्रवणस्य दुर्वारत्वे
न तन्निषेधफलाभावाच्चेति दिक् [illegible] समुदायात्प्राप्तस्येति शेषः यद्यपीति जसीत्याधारसप्तमीति भावः जस इति इकारेण इकारग्रहणं वो
थम् प्रत्याख्यायेति प्रत्याख्यानेन नेदं ध्वन्यतेवक्ष्यमाणक्लेशपरिहारार्थं सर्वकारो न त्वफलान्तरे ऽभिनिविष्टव्यमिति आदादेशत्वादिति च्छेदस ॥ एव सूत्रतात्पर्यमिति॥

नावयवस्य संज्ञानिषेधे प्रमाणाभावमाशङ्क्याकच्छिन्न भवतीति भाष्योक्तिरेव तत्र मानमिति कथनं परास्तम् तस्य भाष्यस्य समुदायस्य संज्ञा
निषेधफलप्रदर्शनपरत्वात् दिगर्थस्तु नवेद्बहुव्रीहाविति सूत्रवद्द्वन्द्वे चेति सूत्रमप्युपसर्जनप्रतिषेधानुवादकमेव इतरेतरयोगद्वन्द्वे प्युद्भूतावयवभेदसमूहस्य विशेष्य॥
त्वसिद्धान्तादिति समुदायादिति ज्ञापितात्ह्याचनिकाद्यात्तदन्तविधेरित्यादिः आधारसप्तमीति आधारवाचकसप्तमीत्यर्थः तथाच विद्यमानयोरेव पदार्थयोराधारा॥
धेयभावस्य प्रसिद्धतया जसाधारमित्यनुपपन्नमिति भावः इस्त्रेकारात्मकसर्वनामकार्यस्याप्रसिद्धेराह इकारेणेति ननु भाष्यकृतेकारस्य प्रत्याख्यानमपि सूत्रकारस्य। इति राम.
त्यादित्युक्तरूपमस्त्वित्यत आह प्रत्याख्यानेनेति वक्ष्यमाणः योगविभागादिरूपः एतेन यथोत्तरं मुनीनां प्रामाण्यात्भाष्यकारसम्मतलक्ष्यातिरिक्तस्य रूपस्यासाधुत्वमिति

मूलेऽन्त्रशसप्रभृतयइत्यादिनास्थानिलाभोपायउक्तस्तत्रवाक्यभेदेनतेचेत्यादिनास्थानिलाभप्रदर्शनमधिकमेकवाक्यतयाप्युपपादनस्यकर्तुंशक्यत्वादेवञ्चैवंकथ
नंयत्तदोर्नित्यसम्बन्धप्रदर्शनार्थमेवेत्याशयेनाह येनिमित्तेति आनुरूप्यप्रयोजकधर्मन्दर्शयति स्वार्थेत्यादिनाअर्थविशिष्टस्यशब्दस्यात्रशास्त्रेकार्यित्वेनाश्रयणाद
र्थोपादानम् चरणादिशब्दव्यावृत्तयेस्वसदृशेति अनेकधर्मस्यसादृश्यप्रयोजकस्यसम्भवितत्वात्तोऽनुचितइतिभावः नचपदाद्यादेशानांवैकल्पिकत्वात्याचरणश
ब्दस्यपदादेशेपिपक्षेचरणशब्दस्यशसादौप्रयोगःसिद्धएवेतिस्वसदृशवर्णवत्त्वइत्यर्थमितिवाच्यम् पदङ्घ्रिश्चरणोऽस्त्रियामितिकोशाच्चरणशब्दस्यनपुंसकत्व
मप्यस्तीति यद्यपदादेशश्चरणशब्दस्यापिस्यात्तदातानियन्द्विपूजयेति प्रयोगस्यापत्तिरितिस्वसदृशेत्यस्यावश्यकत्वात् किञ्चोदकशब्दस्येवापशब्दस्याप्युद
न्नादेशेस्त्रीलिंगत्वस्यापिसम्भवेनास्मान्नान्तलक्षणङीबापत्तिरपिस्यात् ननुस्वमतेछन्दसीत्यस्यानुवृत्तिर्नास्तीत्यनुवर्त्ततइत्यनुपपन्नमतआह अस्येति अत्रस्या

तेनेति येनिमित्ततयोपात्तास्तेशसप्रभृतयइत्यर्थः स्वानुरूपानिति स्वार्थबोधनसमर्थान् स्वसदृशवर्णवतश्चेत्यर्थः अनुवर्त्ततइति अस्येतिप्रां
चइतिशेषः ज्ञापकादिति तन्निवृत्तेरितिभावः अतएवभाष्येतदनुवृत्तिर्नोक्ता तथासतीति प्राचीनसंमतव्याख्यादरेइत्यर्थः भस्येत्यनेनेति अंग
स्येत्येतत्सहितेनेत्यर्थः एतेनभत्वस्यदूषणोऽप्रत्ययवस्त्वश्वशब्दयोरपिविधानात्तेनप्रत्ययाक्षेपइत्यपास्तम् अंगञ्चेति अधिकारलब्धमि
तिभावः ननुभत्वस्यतत्सूत्रेयस्मात्प्रत्ययविधिरित्यनुवृत्त्यागनिष्ठत्वेनतेनांगनिष्ठयजादिपरत्वाक्षेपेणतद्वयवस्यतत्वालाभः॥ ७॥

न्तस्पृथक्पदम् अतएवछन्दोग्रहणवैयर्थ्यपत्तिदोषादेवमूलेअन्नान्यइति काशिकाकृदादयःतथासतीत्येतदाहशब्दव्याख्यानेसतीत्यर्थःकंयदुक्तन्तस्यवैयर्थ्यन्दोषोपपा
दनमात्रस्योचितत्वादतआह प्राचीनेति एतेनयद्यपिमयातस्यादरःकृतस्तथापिनदुष्टमितिध्वनितम् एतेन अङ्गस्येत्येतत्साहित्यकथनेन अतएवमूलेऽङ्गन्वेती
त्यभिहितम् अङ्गस्येत्यस्याप्रक्रान्तत्वशङ्कानिरासायाह अधिकारेति सर्वसतिदूषणश्वइत्यत्रान्लोपाभावोपिद्रष्टव्यः अत्राङ्गस्येत्यस्याधिकारलब्धत्वकथनेनभा
स्येत्यस्यापितथैवलाभइतिध्वनितम् नन्वत्राङ्गस्यभस्येत्यस्यचयद्यप्यधिकारात्लाभस्तथाप्यङ्गस्यभस्यानइत्येवार्थःस्यान्नतुप्रत्ययविशेषस्यततोलाभःआक्षेपे
णेतिचेत्कोसावाक्षेपःअनुमानंवाभसंज्ञासूत्रेणैकवाक्यतावा तत्राद्यःपक्षोनयुक्तइत्याशयेनाशङ्कते नन्विति अनुमानमत्रप्रत्ययविध्युपादानम् असर्वनामस्थान

यजादिस्वादिपरं भाङ्गपदोद्देश्यत्वादित्येवङ्कार्यम् । तदवयवस्य तत्वालाभ इति तस्य पक्षतावच्छेदकत्वन्तत्पक्षत्वमिति भावः । किन्त्वपदभेदेवोद्देश्यताभेदात्तपदयोर्हि तेन देशतावच्छेदकत्वमिति भत्वादिनैव तत्त्ववक्तव्यमेवञ्च दूषणद्वयस्य स्तुयोऽशिष्यनेनयोर्भसंज्ञानयोरपि भतावच्छिन्नोद्देश्यत्वसत्वेन तत्र निरुक्तसाध्याभावेन व्यभिचारः स वपदशब्दोद्देश्यत्वस्य राजभ्यामित्यत्रैव व्यभिचारः । न द्वितीयः यशोद्देशपक्षे संज्ञाशास्त्रस्य पृथगेव वाक्यार्थबोधे नैकवाक्यताया लाभात् कार्यकालपक्षेपि वाक्यैकवाक्यतानपदैकवाक्यतेतिनिरुक्तार्थालाभाच्च प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वात्तद्विशेषणताया अन्याय्यत्वाच्चेति परोक्तमविशेषणत्वमभ्युपगम्याप्याह किन्त्वेति दोषः अतिव्याप्तिः भाष्यमिति एतच्च भाष्यन्तस्मिन् सूत्रे ऽनन्त्यविकारे ऽन्त्यसदेशस्येति परिभाषायाः प्रयोजनखण्डनावसरे प्रपञ्चितम् । ननु प्रत्ययस्याङ्गसाकांक्षत्वमेवाङ्गस्येति सूत्रभाष्यपरस्य रस्यात्यङ्ग प्रत्ययसंज्ञाभावादित्यनेन दर्शितमित्यविशेषणत्वङ्कथमत्रोक्तमत आह तस्यायम्भाव इति श्रुते अधिकारतो लब्धे जिज्ञासायामिति एतेन भपदस्याङ्ग

किन्त्वनेविशेषणेपि विशेषपरिभाषोपतिष्ठते नानुवाद इति निर्दिष्टपरिभाषानुपस्थितेरनल्स्वित्यादौ दोषो दुर्वार इति चेत्तत्राह एतच्चेति तथाच भाष्यम् सर्वत्र हि कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्रोपस्थितमिदं द्रष्टव्यं भस्येति उपस्थितमिदं भवति यचि भमिति तत्र यजादिपरतयान्कारं विशेषयिष्यामः अनोऽकारं यजादिस्वादिपरस्यानोऽकारस्येति तस्यायं भावः कार्यकालपक्षे भस्येत्युक्ते भपदार्थजिज्ञासायां यचि भमित्युपस्थितेन शक्तिग्रहे दृष्टे सति तद्वाक्यार्थबोधकाले तस्यानुरोधेन तन्त्रादिन्यायाश्रयणात् यचीत्यस्याविशेषणतापि ॥

वर्णमात्रेण कृत्रिमाकृत्रिमन्यायेन यत्स्येयं संज्ञा कृता तत्स्यार्थस्योपस्थितिसत्वात्पुनर्वाक्यार्थबोधस्य नापेक्षेति निरस्तम् कार्यकालपक्षेण कल्प्यते स्वसन्निधिस्थाप्यते इति युक्तया कार्यविधायकशास्त्रघटकसंज्ञाशब्दघटितं यत्संज्ञासंज्ञिभावसम्बन्धबोधकं शास्त्रं तस्य जिज्ञासाजनयित्वोपस्थितिः कार्यमिति स्थेव भस्येत्युपस्थितमिदम्भवति यचि भमिति भाष्येण लभ्यते तच्छास्त्रोपस्थितिमात्रेण विधायकशास्त्रवाक्यार्थबोधासम्भव इति पुनस्तत्र संज्ञासूत्रेण शक्तिग्रहो भवति स च प्रकृतोपयोग्येव शास्त्रान्तरे पुनस्तथाजिज्ञासायां पुनरप्येवमेव कल्प्यते इति एतद्वाक्यार्थबोधकाले विधायकशास्त्रार्थबोधकाले त्वविशेषणतापीत्यपि नाऽङ्गविशेषणतायाः समुच्चयः सम्बन्धोभयविशेषणत्वसत्त्वादुपस्थितिमात्रेण न सम्भवत्यतस्तन्त्रादिन्यायाश्रयणम् अत एव भस्याङ्गस्यानोऽकारस्यासर्वनामस्थानपरस्येति व्याख्यानस्योपपत्तिः ॥ ७ ॥ ॐ ॥ ७ ॥

यदुक्तमाविधावित्यादितत्रेत्याह विधाविति एतच्च तस्याः परिभाषायाः सार्वत्रिकत्वन्नास्तीत्येतच्च तत्रविधीयतइत्यस्याध्याहारेणतद्विषयतायाउचितत्वादितिभावः अत्रे
दन्तत्वम् तस्यायम्भावइत्यत्रतच्छब्दोपादानेनष्यङः सम्प्रसारणमितिसूत्रस्थभाष्यमेकदेश्युक्तिः प्रत्ययस्याङ्गाक्षेपे उत्थिताकाङ्क्षत्वेनतद्विशेषणत्वस्यैवन्याय्यत्वात्
आकडाराधिकारीयभपदसंज्ञाविषयेयथोद्देशपक्षस्यैवसिद्धान्तितत्वाच्चतथात्वप्रकृतविषयेदोषाभावोऽन्त्यविकारइतिपरिभाषयैवसम्पादनीयइति मूलेसामर्थ्यादित्या
स्यपदपदोपादानेत्यादिः अतएवादनिमित्तेत्यादि तेनविभिन्नपदस्थानाम्मातुर्नेमननमित्यादौणत्वाभावः सिद्धः नन्वेकपदस्थत्वंयत्रनिमित्तनिमित्तिनोस्तत्रणत्वमित्येत
ल्लब्धन्तावतारामनामेत्यत्रातिप्रसङ्गवारणासम्भवइत्यतआह तत्त्वञ्चेति तच्चनिमित्तनिमित्तत्वंविधीयमानस्यणकारस्यतत्तन्नकारस्येतिकथन्निमित्तस्यानिनोरेकपद

विधौ परिभाषेतिन्यायसत्त्वइक्कोगुणवृद्धीऋचश्चेतिव्यतिरिक्तेनात्स्यैव उदात्तस्वरितयोर्यणइत्यादावुदात्तस्वरितस्थानिकयणइत्यर्थस्येष्टत्वादि
ति एतच्चस्त्रीप्रत्ययेइत्त्वप्रकरणेनिरूपयिष्यामः सामर्थ्यादिति निमित्तनिमित्तिनोरपदस्थयोरसंभवादितिभावः असत्त्वमिति तत्त्वंचनिमित्तानभि
करणनिमित्तिमत्पदाघटितत्वम् तेनमातृभोगीणइत्यत्रणत्वसिद्धिः केवलभोगीनेत्यस्यप्रत्ययमात्रस्यवापदत्वाभावात् अतएवात्मन्विश्वजनेति
सूत्रस्थमाचार्योदणत्वंचेतिचरितार्थम् रूपवर्णेणेत्यादिसिद्धयेनिमित्तानधिकरणेति पदंचात्रलोकेविभक्त्यन्तरानपेक्षतयार्थबोधकत्वेनदृष्टन्ते
नगन्धर्वगानमित्यादौसुब्लुप्तेः प्राक्समासेपिणत्वन्न॥ ((स्यात्वस्यलाभइतिवाच्यम् स्वप्रयोज्यकार्योद्देश्यत्वस्यषष्ठ्यर्थत्वमाश्रित्येतिप्रत्ययस्यस्वीकारा

त् निमित्तानधिकरणनिमित्तिमत्पदघटितंयत्तद्भिन्नंयत्पदन्तदवयवत्वंयत्रद्वयोस्तत्रणत्वमित्यर्थः तेन निमित्तिमन्निपदत्वविशेषणेन णत्वाभावादिति पदत्वाभावादि
त्यर्थः आत्मन् विश्वेत्यनेनखप्रत्ययस्यमातृभोगशब्दाद्विधानेनतदर्थविशिष्टस्वार्थबोधकत्वमेवतस्यनतुभोगशब्दमात्रार्थविशिष्टस्वार्थबोधकत्वमितिवक्ष्यमाणप
दत्वाभावःस्पष्टएव अतएव उक्तस्यसमानपदत्वस्याश्रयणादेव चरितार्थमिति तावन्मात्रेणातिप्रसङ्गवारणासम्भवादणत्वमित्यावश्यकमितिभावः इत्यादिसिद्ध
ये णत्वघटितप्रयोगस्यसिद्धये नत्वत्रपदत्वम्पारिभाषिकमुक्तार्थवत्त्वमात्रम् नाद्यः गन्धर्वगानम् रामनमनमित्यादौसुब्लुप्तेः प्राक्समासेनोत्तरपदस्यपारिभाषि
कपदत्वाभावात्सत्त्वापत्तेः नापिद्वितीयम् रामेणेत्यादावेवणत्वासिद्धेरतआह पदञ्चात्रेति अत्र उक्तसमानपदत्वलक्षणे अर्थबोधकत्वमर्थबोधजनकत्वम्

श्रयघटकत्वन्तत्त्वविभक्तिसहकारेणयस्यबोधकत्वात्तद्घटकेस्वप्रत्ययेप्यस्तीतिमात्त्रभोगीत्यत्रणत्वाप्राप्तिरतोऽभावद्वयनिवेषः तेन उक्तरूपस्यपदत्वस्यलक्षणघटकत्वेन नि मित्तानधिकरणत्वन्निमित्तानवयवकत्वन्तत्त्वमात्त्रभोगीणइत्यत्रभोगशब्देऽस्तीतितदनवयवकत्वस्वरूपरूपन्तद्घटितत्वसमुदायस्यनास्तीत्यत्रणत्वन्नस्यादतोनिमित्ति सदि ति ननुवर्णैकदेशावर्णग्रहणेननगृह्यन्तइतिपक्षेन्नकाराद्यरस्यणत्वेक्षुभ्नादिगणेनृनमनशब्दपाठस्यज्ञापकताभाष्येउक्ता सानिरुक्तस्याखण्डपदत्वस्याश्रयणेकथसङ्गच्छेत त त्रभवत्सम्मतास्वण्डपदत्वस्याभावेनणत्वप्राप्त्यभावादाह क्षुभ्नादिष्विति संज्ञाभूतोऽखण्डइत्यनेनपूर्वोत्तरसमुदायस्यसंज्ञात्वसूचनेनपूर्वपदात्संज्ञायामगइतिसूत्रस्यप्र वृत्तिर्ध्वनिता छन्दस्यृदवग्रहादित्यस्यतुनप्राप्तिरत्रावग्रहस्यादर्शनात् भाष्योक्तेति सञ्ज्ञाइ सूत्रेइत्यादिःवस्तुतस्तयदीयमखण्डानशब्दोत्तसंज्ञातदासंज्ञात्वभङ्गा पत्याततत्रणत्वाभावस्यसिद्धौगणेतस्यपाठोव्यर्थसवस्यादितितस्ययौगिकत्वमेवास्तिननुसंज्ञात्वन्नचैवंसतिपाठस्यवैयर्थ्यमाशङ्क्यनोयम् तेननिरुक्तस्याखण्डपदत्वस्य रषाभ्यामितिसूत्रेसत्तास्तीतिबोधनद्वाराविध्यप्राप्तिरेवबोध्यतेऽत्रतस्याह इतिभावइति नन्वेतादृशाखण्डपदत्वमेवयदिणत्वप्रवृत्तिसम्पादकन्तदासर्वनाथरघुणेत्य

क्षुभ्नादिषुनृनमनशब्दस्तुसंज्ञाभूतोऽखण्डइतितस्यकृवर्णात्परस्यणत्वेज्ञापकताभाष्योक्तानासङ्गतेत्याहुः [illegible]इति तद्विशेषइत्यर्थः॥ ७॥

त्रनिमित्तानधिकरणनिमित्तिमत्त्वाथपदघटितत्वस्यसमुदायेसत्त्वात्सात्वंनस्यादितिचेन्न पदेतिरुक्ताखण्डत्वन्निरुच्यनकारेतत्त्वनिवेशापेक्षयालाघवान्नकारस्यनिमि त्तानधिकरणनिमित्तिमत्पदावयवत्वविशेषणविवक्षासत्वेनादोषात् नचैवमपिरघुनरेणेत्यत्रनरशब्दावयवस्यनस्यणत्वन्दुर्वारमितिवाच्यम् निमित्तिमत्त्वमित्यत्रनिमित्ति त्वन्नकारेनिविष्टन्तच्चस्वोत्तरत्वसम्बन्धेनरेफषकारान्यतरत्वरूपमेव सवन्त्वयस्यस्वपदेनोपादानन्तत्रतस्यैवप्रत्यासत्त्यानिमित्तानधिकरणेत्यत्रनिमित्तपदेनग्राह्यत्वतया नरशब्दाद्यनकारस्यपरेणरेफेणनिमित्तत्वव्यवहारसत्वेनेति यद्रेफव्यक्तिमादायनिमित्तत्वव्यवहारस्तस्यनकारस्यतद्व्यक्त्यनधिकरणत्वस्यनरशब्देसत्वेनादोषात् ननुम राडशब्दस्यतण्डुलेतिनिमित्तेद्रवेप्रसिद्धेर्मुद्गामलकयूषस्त्विति परवाक्यविरोधोयूषोमराडइतिव्याख्यानेप्राप्नोतीत्यतआह तद्विशेषइति सवन्त्वयथातण्डुलजलनिमि तेयूषव्यवहारस्तथामुद्गेःकृतेपियूषव्यवहारस्यायुर्वेदग्रन्थस्थप्रसिद्धत्वायानपरवाक्यविरोधइतिभावःमूलेपाक्षिकत्वामिति तस्यानित्यत्वादनाश्रयणेपितत्साधनीयत्वा र्थस्यप्रकारान्तरेणसिद्धत्वामित्यर्थः तामेवाह तथाहीत्यादिनातस्यानित्यत्वेप्रमाणन्तुनिष्ठायांसेटीतिसूत्रेइटिकृतेएवणिलोपोनतुततःप्रागितिकालावधारणार्थकसे

निषेधादिति भिदिरेवद्धिः प्रयोगसत्वेन तस्योपदेशे एकाचत्वादिति भावः यत्त्वमीसमासात् अचः परस्मिन्पूर्वविधाविति सूत्रे पूर्वविधिशब्दे पूर्वस्माद्विधिरिति पञ्चमीसमा॰
सात् इतरयोः माथितिकः अपीपचन्नित्यनयोः तदप्रवृत्तिरिति इण्निषेधाप्रवृत्तिरित्यर्थः यत्तु पञ्चमीसमासस्यावश्यकत्वमिति तेनैवेष्टसिद्धौ विहितविशेषणाश्रयणे प्रमाणा॰
भाव इति तन्न विभिक्ततीत्यस्य सिध्यर्थन्तस्यावश्यकत्वाद्भाष्यकारसम्मतत्वाच्चेत्याशयेनाह विहितविशेषणत्वञ्चेति परिहृतमिति अत्रत्याह त्याद्य
कुमङ्गन्तत्वेकाजिति निषेधाप्रवृत्तिरितिभावः यथाश्रुतत्वे एकाचोऽङ्गात्परस्य वलादेरार्धधातुकस्येड्स्यादित्यर्थकत्वे दोषवारणाय इण्निषेधानापत्तिरूपदोषवारणायेत्य
र्थः सम्बन्ध इति तथासति य उपदेशे एकाच् तत्परस्याङ्गसञ्ज्ञानिमित्तस्येड्स्यादित्यर्थः वेभिदितेत्यादावपीति सौलभ्यार्थकैवकारार्थकोत्रापिशब्दः तस्य एकाचोऽङ्गादि॰
ति भाष्यस्य आवश्यकमिति तस्य भाष्यस्य दोषवारणाय प्रवृत्तत्वेन यथा दोषपरिहारो भवति तदर्थकत्वन्तस्यावश्यकमिति भावः तन्त्वङ्गादित्येतावन्मात्रेण कथन्तस्य लाभो

वेभिदितेति वेभिद्यतेर्यङन्तात्तृचि अल्लोपयलोपयोरेकाच उपदेश इति निषेधादिणस्यात् पञ्चमीसमासे त्वल्लोपस्य स्थानिवत्त्वान्निषेधाप्र
वृत्तिरिति भावः एवमितरयोः कादेशानुसारभावो बोध्यः विहितविशेषणेति एवं च स्थानिवत्त्वं विनापि तदप्रवृत्तिः सिद्धेति भावः विहितविशेषण
त्वं चास्य एकाचो इत्यत्र भाष्यध्वनितम् तत्र हि यङ्लोपे वेभिदितेत्यत्र यङन्तात्तृचि इट्प्रतिषेधमाशङ्क्य एकाचो गादित्व्याख्यानेन परिहृतं त
द्भाष्यस्य यथाश्रुतत्वे विभित्सतीत्यादौ दोषवारणायोपदेशग्रहणस्य एकाजंशेपि सम्बन्धे वेभिदितेत्यादावपि परिहारासम्भवेन तस्य विहितविशे
षणत्वे तात्पर्यमावश्यकम् प्रत्ययविधानावधेरेव प्रायेण गत्वादग्गादित्यनेनेदं सूचितम् विहितविशेषणे च विभित्सतीत्यादौ अदोषेणैकाच
अंशे उपदेशग्रहणासम्बन्ध इति तदाशयः लभविष्यतीति स्थानिवत्त्वं विनापीति शेषः ॥ ९१ ॥ तत्राह प्रत्ययविधेति यस्मात्प्रत्ययविधानन्तदादेरित्यर्थः ।
अङ्गसञ्ज्ञाविधायकसूत्रे तथोपादानादिति प्रत्ययविधानावधेरेकाचः परस्येति व्याख्येयमिति तात्पर्यम् यस्मात्प्रत्ययविधानन्तद्भिन्नस्य तदादेरप्यङ्गत्वसम्भवात् मीत्यादौ इष्ट
मतः प्रायेणेति इदमिति विहितविशेषणमित्यर्थः अदोषेणेति इट्प्रतिषेधानापत्तिरूपदोषाभावेनेत्यर्थः न च विहितविशेषणपरतया तस्य भाष्यस्य योजने गोधुक्शब्दा
दाचारक्विबन्तादिट्प्रतिषेधो न स्यादिति वाच्यम् तत्र उदित्यस्याङ्गत्वाभावेन यथाश्रुतेपि निषेधाप्राप्तेः इत्यन्ते भ्यस्याचारक्विपो नभिधानाच्च स्थानिवत्त्वमिति अचः परस्मि

ठस्येकइत्यत्राकारान्तस्यठस्यस्थानित्वेनाश्रयणमितिकथमल्विधित्वमतआह ठस्येकइत्यत्रेति प्रत्ययेषु ठकारादिप्रत्ययेषु एतेनाठचोव्यावृत्तिः अन्यथेति सू
त्रोक्तरीत्यास्थान्यादेशयोरेवतस्याविवक्षायाम् लाक्षणिकत्वादिति स्थानिबोधकयवुस्येति तत्रव्यञ्जनमात्रस्यविवक्षितत्वेनतस्यस्थानेककाररूपव्यञ्जनादेशेपूर्वकाल
स्थिताकारान्तस्यकशब्दस्यलक्षणइत्यानुसंधानमयोज्यप्रतिपत्तिकस्वरूपत्वादित्यर्थः अत्रइत्वस्य प्रवृत्तावव्ययात्यप्सूत्रस्थभाष्यमेवमानम् तत्रहि निषादकर्षूर्नामदेशः नैषा
दकर्षूकः दाक्षिकर्षुर्नभवाहीकग्रामः तत्रभवइतिठञ् इसुसुक्तान्तात्कः केणइतिह्रस्वः उक्तकल्पनायामपिमूलंतत् समञ्जसमित्याह इकादेशस्थानिभूतेति स्पष्टमिति त
त्रहिठस्येत्यत्रवर्णस्यग्रहणंसङ्घातस्यवेतिविचारेप्रथमपक्षेधात्वंतस्यप्रतिषेधोवक्तव्यः पठति पठितुम् अस्तुतर्हिसङ्घातग्रहणम् सङ्घातग्रहणंचेदुणादिसाधि
तिकानाम्प्रतिषेधोवक्तव्यः उणादिनान्तावत् कण्ठः शण्ठइति इक्त्वमथितम्पण्यमस्यमाथितिकइति अकारलोपेकृतेतान्तादितिकादेशःप्राप्नोति वर्णग्रहणेपुनः सति

अल्विधित्वादिति ठस्येकइत्यत्रस्थानिनिप्रत्ययेषुचसर्वत्राकारोनविवक्षितः आदेशएवविवक्षितः अन्यथानिषादकर्षूशब्दादौदेशाद
तिठञिव्यञ्जनमात्रस्य व्यञ्जनरूपकादेशेक शब्दस्यलाक्षणिकत्वात्केणइतिह्रस्वानापत्तेरितिभावः स्थान्यादेशयोरिति इका देशस्थानिभूत
प्रत्ययेआदेशविधायकेसूत्रेठस्येकइत्यत्रचेत्यर्थः स्पष्टंचेदंठस्येकइत्यत्रभाष्यकैयटयोः इदमुपलक्षणं सन्निपातपरिभाषयापिकादे
शवारणंबोध्यम् स्पष्टंचेदंठकृच्छसोश्चेतिवार्तिकभाष्ये बलीयस्त्वादिति एतच्च यस्यविभाषाविकतोभोगेतिसूत्रस्थकैयटेस्पष्टम्॥ ७ ॥

अल्विधिरयम्भवति तस्माद्विशिष्टग्रहणम् तस्माद्विशिष्टस्यठकारस्यग्रहणङ्कर्तव्यम् तस्माद्विशिष्टस्येतितद्धितस्यठादेरितिकर्तव्यम् एवञ्चठादेशितिवचनादल्वि
धित्वात्स्थानिवद्भावाभावात्कादेशाप्रसङ्गः अस्तुतावद्वर्णग्रहणन्तनुचोक्तं एठादेशोवर्णग्रहणञ्चेद्धात्वन्तप्रतिषेधइति नैषदोषः अङ्गादितिवर्तते अर्थवशाद्विभक्तिवि
परिणामइतिकैयटः एतेनवर्णमात्रस्यस्थानित्वमिति प्रतिपादितम् इदमिति अल्विधित्वेनसमाधानमित्यर्थः सन्निपातेति अजादिसन्निपातेनजातस्यतान्तत्वस्य
तद्विघातकादेशम्प्रत्यनिमित्तत्वमितिभावः एतच्च परसादृचयेस्यबलीयस्त्वञ्चकैयटेस्पष्टमिति तत्रत्यभाष्येभगवतावहबइमेविदयःपठ्यन्तेतत्रनज्ञायतेकस्य
नित्यन्त्वम् कस्यविभाषा कस्यइडितिप्रश्नेवेत्तेर्विदितोनिष्ठाविद्यतेर्विन्नइष्यते विन्तेर्विन्नश्चवित्तश्चविन्तोभोगेषुविन्देतेरित्युक्तम् एतेनविदसत्तायामित्य

स्यान्तत्वम् विद विचारण इति धातोर्निष्ठायान्तत्वविकल्पः उन्दिनापरेण साहचर्यात् यद्यपि नुदविदेति सूत्रे नुद धातुस्तौदादिक आदौ पठितस्तथापि शब्दपरविप्रतिषेधा
दुन्दिरत्र व्यवस्थाहेतुरुदिरिति कैयटः विन्दतेर्लाभे इत्यस्मात्तु प्रतिषेधो मा गतप्रत्यययोः विदन्तानित्यस्मात्तु इटा व्यवधानान्नत्वाभावः यस्तु तुदादौ पठ्यते तस्माद्विभाषा
गमहनविदविशामिति क्वसुप्रत्यये इड्विकल्पात्तस्य विभाषेति निषेधः विभाषेति सूत्रे हनसाहचर्यादादादिकस्यैव ग्रहणम् पूर्वसाहचर्यात्परसाहचर्यस्य बलवत्त्वा
दिति भावः ॥ ॥ ननु विप्रतिषेधे परं कार्यमिति सूत्रे कार्यशब्दोपादानेनाप्राप्तस्यापूर्वस्य विधेयस्य ग्रहणमिति परसाहचर्यस्य बलवत्त्वाश्रयणमशक्यमत आह सतस्सर्व
मिति अनुरोधेनेति अयम्भावः तेन हि पूर्वविधाविति न्यासपक्षे पञ्चम्याय्यन्वन्नीत्यादिप्रयोगस्तस्यानिर्वाह इति मनसि निधाय यद्वार्तिककृता सतमपरविधाविति त्विति त
स्य युक्तत्वमित्याशयेन तादृशन्यासान्तरे निमित्तापेक्षयापरत्वाश्रयेण वेत्यादि सिद्धिरुक्तानन्तु पूर्वे विधाविति न्यासेनैव तेषां सिद्धिरित्यभिहितं तन्नेत्याशयेनेति वस्तुतस्तु

सतस्सर्वमपरविधाविति तु वक्तव्यमिति वार्तिकस्य कैयटानुरोधेन दिगिति दिगर्थकं सतदर्थं पञ्चमीसमासस्यावश्यकत्वमिति तथाहि परसा
हचर्यस्य बलवत्त्वे मानाभावः विप्रतिषेधसूत्रे कार्यशब्देन शास्त्रीयस्यैव ग्रहीतुमौचित्येनात्र तदप्राप्तेः नित्यः पूर्वायणादेशः परस्त्वासौ व्यवस्था
या युगपत्सम्भवो नास्ति बहिरङ्गेण सिध्यतीत्यचः परस्मिन्निति सूत्रस्थभाष्योक्तरीत्या पूर्वसाहचर्यस्यान्तरङ्गत्वेन तस्यैव ग्रहीतुमौचित्याच्च विभाषा
गमहनविदविशामित्यत्र लुग्विकरणपरिभाषानुग्रहाय परसाहचर्याश्रयणं नुदविदेत्यत्राप्यन्तरङ्गपरिभाषा नित्यत्वाद्व्याख्यानेन परसाह॰

पूर्वविधाविति न्यासेनैव सर्वेष्टसिद्धिर्भवति पञ्चमीसमासस्य वक्ष्यमाणप्रयोजनानुरोधेनावश्यकत्वात् यद्यप्यस्मिन् पक्षे द्वेगोरि ऽ चर्याश्रयणमिति बोध्यम् ॥
त्यत्र स्थानिवद्भावेनेड्ढ्रस्वादिति लोपः प्राप्नोति तथापि पञ्चमीसमासमाश्रित्य यः स्थानिवद्भावस्तस्यानित्यत्वेनेड्ढ्रस्वादिति सूत्रे सङ्ग्रहणसामर्थ्याद्वा तत्र स्थानिव
त्वाप्राप्त्या दोषः परिहर्तुं शक्य इत्याशयेन दिगर्थमाह दिगर्थस्त्विति सतदर्थम् अपीपचन्निति रूपसिद्ध्यर्थम् शास्त्रीयस्यैव शास्त्रविधेयस्यैव अत्र साहचर्यविष
येन तदप्राप्तेरिति विप्रतिषेधशास्त्राप्राप्तेरित्यर्थः सामान्यतः परत्वाश्रयणेऽपि न विप्रतिषेधशास्त्रस्य प्राप्तिरित्याशयेनाह नित्यः परेत्यादिभाष्योक्तरीत्येति पक्षान्तरद्योत्या
देरचः परस्मिन्निति सूत्रारम्भाभावेऽपि सिद्धिर्यथोक्तान्तद्रीत्येत्यर्थः अन्तरङ्गत्वम् पूर्वोपस्थितत्वरूपमन्तरङ्गत्वम् नन्वेवं सति विभाषा गमेति सूत्रविषये परसाह॰

र्चर्याश्रयणपरभाष्यविरोध इत्यत आह विभाषेति तथा च लुग्विकरणपरिभाषानुरोधसत्त्वे तत्र परसाहचर्याश्रयणबीज — न्नतु तस्य बलीयस्त्वेनेति भावः ननु यदि पू
र्वसाहचर्यस्यान्तरङ्गत्वं तदा नुदविदेति सूत्रविषये कथमभ्यन्तरे लक्ष्यसिद्धिरत आह नुदेति परिभाषा पूर्वोपस्थितविषये प्रवर्तते यावद्धि रङ्गान्तरङ्गयोरन्तरङ्गस्वा
लोपइत्येषा परिभाषा सा अनित्यत्वादिति आमाङोश्चेति सूत्रस्याङ्ग्रहणादित्यादिः व्याख्यानेन पूर्वोक्ताकारसम्मतव्याख्यानेन प्रत्यैषिषन्निति अत्र प्रतिपूर्वकात्स्रि
एकारात्मकाद्धातोः सनन्तदन्तात्लङ् एवमपि परसाहचर्यस्य बलवत्त्वाश्रयणेऽपि ननु परसाहचर्यस्य बलवत्त्वानाश्रयणेऽपि प्रत्यैषिषन्नित्यादेः पञ्चमीसमासानाश्रय
णेनापि विलक्षणार्थग्रहणेन सिद्धिर्भविष्यतीत्यत आह पूर्वोत्तरेति अनपहृतविकरणकेति अत्र हि पररूपेण विकरणस्य चङोऽपहारसत्त्वात्तत्र विहितस्य तु सभा
वस्य प्रवृत्तिर्न भविष्यतीति भावः अतिक्लिष्टमिति उभयसाहचर्यस्याश्रयणापूर्वार्थाश्रयणप्रयुक्तगौरवेणातिक्लेशकरमित्यर्थः यत्तु मूले परसाहचर्याश्रयणस्यैव

प्रत्यैषिषन्नित्यादौ लङि उभेऽभ्यस्तमिति सूत्रस्थभाष्यसंमतेरेवमपि दोषात् पूर्वोत्तर — साहचर्येण भावरूपादेशानपहृतविकरण
कास्यस्यैव ग्रहणमित्यप्यतिक्लिष्टम् ततोवरं पञ्चमीसमास एव अपरविधाविति तु वक्तव्यमिति न्यासांतरेऽपि पंचमीसमासो वक्तुं शक्यः न्या
सान्तरं तु स्वविधेरपि संग्रहार्थमिति स्पष्टमेव अतिप्रसंगस्त्वनित्यत्वेन परिहरणीय इति ॥ ))लवत्त्वमाश्रित्यापीपचन्नित्यस्य सिद्ध्याश्रयणं न्यूनं यत्तु अ

केरीत्यादुसवारणेऽपि अदभ्यस्तादित्यद्भावस्य वारणादिति तन्न क्त्वाभावेन तदप्राप्तेः स्थानिवद्भावेन तु न तल्लभ्यमल्विधित्वात् तत्तु सादेशविषये नैवं वक्तुमशक्यत्वम्
केरिति समुदायाश्रयणात् ननु यदाऽपरविधाविति न्यासान्तरं तदा परस्य विधौ स्थानिवद्भावस्य निषेधो भविष्यतीति तदाऽपीपचन्नित्यस्य परसाहचर्यस्य बलवत्त्वा
श्रयेव सिद्धिर्भवतापि वक्तव्येवेत्यत आह अपरविधाविनीति परस्माद्विधिरिति पंचमीसमासस्तदापि वक्तुं शक्य इत्यर्थः न्यासान्तरम् अपरविधाविति न्यासान्तरम् ।
स्वविधेरपीति तेन आपन्नासन्नित्यस्य सिद्धिः वस्तुतस्तु क्त्वानुपूर्वीकेनाचः परस्मिन्निति सूत्रेणैवस्त्वेष्टसिद्धौ न्यासान्तराश्रयणं न कार्यमिति तु शब्देऽपादाने
नध्वनितम् ननु यदि न न्यासान्तरं तदा कथमायन्नासन्नित्यनयोर्धिन्वतीत्यादेश्च सिद्धिरिति चेन्न असिद्धवत्सूत्रेण लावस्थायामडागमेन वाऽध्ययोरा
चः परस्मिन्नित्यत्राभावातिदेशेनान्यस्य सिद्धेः ननु यदि पञ्चमीसमासस्त्वाश्रीयते तदा विगणय्येत्यादावतिप्रसङ्ग इत्यत आह अतिप्रसङ्ग इति ॥ ० ॥ ० ॥

चक्रान्तेत्यस्य णत्वं संयोगाद्योः स्कोर्लोपो नेत्यर्थो ऽयं णः प्रतिषेधो वाच्य इति वार्तिकस्य क्रियमाणे चेत्सिद्धिर्भविष्यतीत्यत असाधारणप्रयोजनमाह तस्मीति निगाल्यत
इत्यस्यान्तरङ्गत्वात्सिलोपात्प्रागल्कारादेशेन सिद्धिर्भविष्यतीत्याशङ्क्यान्निराचष्टे नचेत्यादिना प्रवृत्तियोग्यतयेति सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्ये विषये
त्रैपादिकं शास्त्रं न प्रवर्तत इत्यर्थस्तस्याविभाग्यादिसिद्ध्यर्थमवश्यं वाच्यः अन्यथा ऽष्टुत्वस्य पूर्वमप्रवृत्तौ ततो द्विर्वचने ऽभ्यासे टकारस्य श्रवणापत्तिः एवमन्यत्रापि बोध्यम्।
स्थानिवत्त्वमिति प्रथमसूत्रेण स्थानिवत्त्वमित्यर्थः विशेषणत्व इति एतच्च ज्ञापनं इत्यस्य सिध्यर्थमावश्यकम् नचात्रैकदेशविकृतन्यायेनोपसर्गत्वमपरादिवद्भावेन
चाकारादावयतीत्वमिति स्थानिवद्भावं विनापि तत्वम्भविष्यतीति वाच्यम् अर्द्धविकारस्य सत्वादुपसर्गत्वस्यापरिमाणनिष्ठत्वात् ननु माषवपनीत्यत्र माषाणां वपनी

चक्रान्तेति तस्मिरस्मिभ्यां एयं ताभ्यां क्विपि लोपाभावो पि फलम् [illegible] इति नचात्र णिलोपात्पूर्वं णत्वम् सपादसप्ताध्यायीस्थकार्यस्य प्रवृ
त्तियोग्यतया तदप्रवृत्तेः नच स्थानिवत्त्वम् अल्विधित्वात् प्रत्ययलक्षणं तु नियमार्थमिति भावः अत्र बहिरङ्गासिद्धत्वं न नाजानन्तर्य इति तन्नि
षेधात्त्रिपाद्यान्तदप्रवृत्तेरेव विसर्जनीयसूत्रस्थभाष्यसंमतत्वाच्चेत्यन्यत्र प्रपञ्चितम् एवं ज्ञाप्यते इत्यप्ययुक्ता विग्रहस्योपसर्गविशेषणत्वे फलं
म् माषवपनीति इह ङीब्युत्पत्तेः प्राक्समासे ङीपि अल्लोपे समासरूपप्रातिपदिकान्तत्वासत्त्वप्राप्तम् पूर्वपदात्सितसमासरूपप्रातिपदिका
न्तस्यानेन णत्वविधानात्तस्यापि पूर्वपरोभयसापेक्षत्वेन समासत्वज्ञानसापेक्षत्वेन च समत्वात् त्रिपादीस्थत्वाच्च न बहिरङ्गासिद्धत्वाशङ्का तत्र
तिबोध्यम् [illegible] इति अभिप्रेतेति शेषः सापेक्षत्वेनेति न लोप इत्येतद्विषयमिदम् अन्त्ये आह [illegible] बोति ॥ इति समासे समासरूपं यत्

प्रातिपदिकं तदन्तो नकार इति णत्वस्य प्राप्तिरेवेति कथं माषवपनीति णत्वोदाहरणमत आह इहेति प्राक्समास इति करणल्युडन्तवपनशब्दस्येत्यादिः गतिका
रकोपपदानां कृद्भिः सह समासस्य सुबुत्पत्तेः स्त्रीप्रत्ययोत्पत्तेश्च प्राक् प्रवृत्तेरिति भावः नन्वन्तरङ्गणत्वापेक्षया बहिर्भूतप्रत्ययापेक्षा लोपस्यासिद्धतया णत्वं न भ
विष्यतीत्यत आह तस्यापीति णत्वस्यापीत्यर्थः ज्ञानसापेक्षत्वेन चेति प्राचामनुरोधेनेदम् स्वसिद्धान्तरीत्याह त्रिपादीस्थत्वेति मूले कथञ्चिदिति पूर्वस्माद्विधौ स्था
निवद्भावस्यानित्यत्वात्प्रवृत्तिः स्त्रीकारादिति भावः सान्तम् रुपाभ्यामिति णत्वमित्यनेन तत् प्रागुक्तस्याभिप्रेत शब्दस्य नपुंसकत्वादाह अभिप्रेतेति अन्त्य इति प्रातिपदिका

न्तस्येत्यत्र यत्प्रातिपदिकं पदन्तत्रेत्यर्थः एतेनैकार्थीभावाभावः सूचितः व्यधिकरणषष्ठीत्वमुपपादयति प्रातीति यद्यप्युभयोरपि षष्ठ्योरवयवावयविभावार्थकत्वं तथापि व्यधिकरणप्रातिपदिकप्रकृतिकत्वेन व्यधिकरणत्वं द्रष्टव्यम् एतदेवाह परस्परेति अभेदस्य सम्बन्धत्वमन्यत्र निरस्तमतस्त आह सम्बन्धान्तरेति विशेष्यविशेषणभावनियामकसम्बन्धान्तरेत्यर्थः भाष्ये उक्तमिति एवञ्च सौत्रमन्तग्रहणं शक्यमकर्तुमित्यसङ्गतम् नराभ्यामित्यादौ नलोपव्यावर्त्यकत्वेनान्तपदस्य चरितार्थत्वात् न चान्तपदाभावेपि नेत्यनेन प्रातिपदिकं विशेष्यताम् पदस्येति तु व्यधिकरणमस्तु पदावयवस्य नान्तप्रातिपदिकस्य लोप इत्यर्थोस्तु तावतापि नराभ्यामित्यस्य व्यावृत्तिर्भविष्यतीति वाच्यम् लोमनिशाभ्यामित्यादौ नलोपस्य वारणाय तस्यावश्यकत्वात् सोत्रान्तपदस्य सत्त्वे तु चरमावयववाचकान्तपदस्यावयविसाकाङ्क्षतया प्रत्यासत्त्या

व्यधिकरणषष्ठीति प्रातिपदिकस्य पदस्येत्यनयोः परस्परानन्वितयोरन्तेनान्वयादिति भावः अभेदेनैवेति सम्बन्धान्तरासत्त्वेपि विशेष्यविशेषणभावसंबन्धेनेत्यर्थः [illegible] यदस्येत्यस्य क्वचिद्वैयधिकरण्येनान्वयेऽस्यतात्पर्यग्राहकत्वं भाष्ये उक्तम् तत्तु लक्ष्यानुसारिव्याख्यानादेव ज्ञापकं विनापि सिद्धमित्यभिमानः [illegible]दिति सर्वनामस्थानत्वेनेति भावः समाहारद्वन्द्वस्येति प्राण्यङ्गत्वात्कृतसमाहारद्वन्द्वस्य ककुद्दोः शब्दस्येत्यर्थः स्पोजम् दोःशब्दस्य पुंस्त्वेपि स निर्बाहम् न्याय्यमिति अल्पाच्तरत्वेन दोःशब्दस्य द्वन्द्वे पूर्वनिपातापत्तेः किंच तदन्ते आदेशोदन्तेः विशेष्यासन्निधानादिति भावः ककुदवयवकत्वमिति प्रकरणाच्छुतौ न तथात्वेकमेवेदमिति भावः दक्षिणन्तस्य धर्म्यदोर्नामानि शाचरइत्यन्वयभ्रमवारणायाह तत्रेति एकदेशिसमासइति तत्प्रत्याख्याने तु कर्मधारय इति बोध्यम्॥ १) न्यापदस्येत्यस्य सम्बन्धेन पदावयवस्य नान्तप्रातिपदिकस्य पदान्तस्य लोप इत्यर्थेनेष्टसिद्धेः तत्त्वेति वैयधिकरण्येन सम्बन्धकल्पनन्त्वित्यर्थः मूले द्विवचनोपपत्तये आह समाहारेति न्याय्यत्वमुपपादयति अल्पेति पूर्वनिपातप्रकरणस्यानित्यत्वादाह किञ्चेति असन्निधानादिति शब्दस्वरूपविशेष्यमादाय तदन्तविधिस्तु सत्येव गमक इति शेषः तत्प्रत्याख्याने एकदेशिसमासस्य प्रत्याख्याने द्विनावयवेपि तदवयवसद्भावमात्रेणाप्यद्धस्तीति लौकिकव्यवहारदर्शनादद्धः शब्दस्य प्रवृत्त्या कर्मधारयः॥ ७ ॥ ७ ॥

सूत्रे जहातीति हाशब्दउपपदे विच् नतु क्विप् ह्रस्वत्वस्य प्रसङ्गात् अमुनाब्राह्मणेनेत्यत्र नाभावे कर्त्तव्येऽप्यसिद्धत्वस्य निषेधाय नुम्यप्यस्त्वित्यत्रापिशब्दः एवञ्च नेत्यनेन नके श्रमुभयस्मिन्कर्त्तव्ये निषेधलाभ इत्यत आह [illegible] इति [illegible]तीति नाभाव नकारो भयस्मिन्नीत्यर्थः [illegible]ीति विभक्तिसम्बन्धि कार्यान्तरस्मिन्नीत्यर्थः रूपि चेति दीर्घव्यावृत्तये आह कृतेचेति एतेन अन्यस्मिन्नीति व्याख्यानेन नुमादेरिति पुंसि नाभावस्य सङ्ग्रहाय नादिपदम् नन्वकारस्योच्चारणार्थत्वेनाभावस्यैव सङ्ग्रहो नस्यादत आह नन्विति वक्ष्यमाणयोरमूकुलेऽमुयोरित्यनयोः सङ्ग्रहायाह विभक्तिनिमित्तेति नचैवंत्यदाद्यत्वस्याप्यप्रवृत्तिः स्यादिति वाच्यम् तस्याप्रवृत्तौ नमु नइति सूत्रविषयत्वस्याभावेनोपजीव्याविरोधाय तद्भिन्नस्यैव ग्रहणात् एवम्पररूपस्यापि पूर्वम्प्रवृत्तिर्बोध्या तस्यापि नाभावसम्पादकत्वात् अत एवाह [illegible]

जहातीति हा इति शोकव्यञ्जकशब्दमित्यादिः नुम्यप्यस्त्विति अयंभावः तन्त्रेण नाभावे नकारे च कार्ये तं प्रति अन्यं प्रति च कृते च कार्यान्तरं प्रति मुभावो नासिद्ध इति तदर्थः एतेन मुत्वस्यासिद्धत्वेन नादेशे गुणे नुमादेरप्राप्तिरिति परास्तम् नुम्येवास्त्विति पाठे एवकारोऽप्यर्थः उच्चारणार्थत्वादिति तन्त्रेणोच्चारिते द्वितीयेन शब्द इत्यर्थः [illegible] नमु नइति सूत्रविषये पूर्वं विभक्तिनिमित्तकार्याप्रवृत्तौ मुत्वे तस्य नकारविधेयकमपि प्रत्यसिद्धत्वाभावेन विभक्त्यादेशं प्रत्यसिद्धत्वेपि वा सैभावात्परत्वे नतु मापत्तेः आदिनाऽमूकुलेऽमूयोरिति तयोरेत्वस्याप्रवृत्तौ मुत्वे नुमिचानिष्टस्यष्टमेव नमुटादेश इति वार्त्तिकस्वारस्येन नादेशादन्यत्र तदर्थ उचित इत्यपि बोध्यम् नेसंज्ञ इति इयमपि तदुक्तिश्चिन्त्या तस्यलो पइति सूत्रभाष्ये उच्चारणार्थानामपीत्संज्ञकत्वस्य स्पष्टमुक्तत्वात् स्वरितत्वादर्शनादिति ॥ ऽऽ मः प्रकान्तत्वेन कटिस्थुपस्थितत्वादाह विभक्त्यादेशमिति अत्र वाशब्दोऽनास्थायाम् एतेनैतादृशार्थकल्पनेनादेशासङ्ग्रहापत्या नुम्यप्यस्त्विति पूर्वग्रन्थासङ्गतिरित्यपास्तम् [illegible]विति अमूइत्यत्र नपुंसकाच्चेति शीभावे सत्याद्गुणा इत्येकादेशसम्भावस्यत्वस्यासुपोरित्यत्र आसिचेत्येत्वस्य चाप्रवृत्तेरित्यर्थः न्यूनतापरिहारायाह नमुटादेश इति एतच्च वार्त्तिकं नमुनइति सूत्रस्य [illegible] नादेशोक्ते यत्कार्यम्प्राप्नोति तस्मिन्कर्त्तव्ये मुत्वन्नासिद्धमित्येवार्थ इत्यभिप्रायेण प्रवृत्तम् टादेश इत्यस्य टाया आदेशष्टायाम्वा य आदेश इत्यर्थः टाशब्दस्याऽजादिगणे पाठाद्टाप् स्वारस्येन आदेशपदोपादानस्वारस्येन एवमसुसीति न्यासे गौणेपि षष्ठी च नुमियइत्यस्य प्रवृत्तिरिति मतेप्रियत्रिणा कुलेनेत्यत्र नाभावस्याप्रवृत्यात्तस्यस्वरस्याप्रवृत्तिः स्यादित्यपि बोध्यम् एतच्च मतद्दलन्तप्रकरणे घनशब्दस्य निरूपणावसरे स्फुटम् तदुक्तिः न विभक्ताविति सूत्रे भाष्यासुक्तिः इत्संज्ञकत्वस्येति यद्युच्चारणार्थानां विशेषेत्संज्ञानि

सुपासानन्तेषामपीष्टतत्तात्पर्यसम्पादकत्वेनचरितार्थानांस्वभावतएवोच्चारणार्थकस्यैवनिवृत्तिसम्भवेनतस्यलोपइतिसूत्रस्यवैयर्थ्यापत्तिरितिभावः स्पष्टमुक्तं ॥ ७ ॥
त्वात् स्पष्टन्ध्वनितत्वादित्यर्थः अग्नावित्यत्रस्वरितौकारादर्शनतात्पर्यकेणस्वरितत्वादित्यनेनौतस्तकारः उच्चारणमात्रफलकः स्वरितत्वप्रयोजकत्वाभावादित्यनुमा
नन्ध्वनितम् किमोदिति सूत्रविधेयाच्छुद्धघटकतकारोव्यतिरेकेदृष्टान्तइतितत्रस्वरितत्वादर्शनस्योपायान्तरेणोपपत्तावुच्चारणमात्रफलकत्वकल्पनमन्याय्यमित्याशये
नशङ्कते नन्विति अग्निशब्दान्त्यावयवेकारस्यानुदात्ततयानात्रैकादेशउदात्तेनेत्यस्यप्राप्तिः किन्त्वेकादेशउदात्तेनेति सूत्रेउदात्तस्वरितयोरिति सूत्रादनुदात्तस्येत्यस्या
नुवृत्तिदर्शनेनतत्तस्यसूत्रस्यप्राप्तिरित्याशयेन तदुक्तिन्दूषयति स्वतावित्यादिना अत्रस्वतावित्युक्तिरुपलक्षणम् तस्यादितउदात्तमर्द्धह्रस्वमितिसूत्रस्य भाष्यमपिप्रमा
णम् तत्रहिसुब्रह्मण्योमित्यत्रसुब्रह्मणिसाधुः सुब्रह्मण्याइतिस्वरितान्तः सुब्रह्मण्याशब्दः तत्रसाधुरितियतिसुब्रह्मन् शब्दप्रकृतिकयदन्तःसुब्रह्मण्यशब्दस्तस्यटा

नन्वौतः स्वरितत्वेपितावग्नावित्यत्रस्वरितश्रवणमग्निशब्दस्यान्तोदात्तत्वेनैकादेशउदात्तेनेत्यनेनोदात्तत्वादितिचेन्न स्वतावनुदात्तस्येत्यस्यतत्रानु
वर्तितत्वात् शेषनिघातेनौकारस्यस्वरितत्वमादायाग्निशब्दस्यसर्वानुदात्तत्वाच्च स्वरितस्यानुनोदात्तपदेनग्रहणमुदात्तस्वरितयोरित्यादौस्वरितग्र
हणात् उच्चारणार्थानामितसंज्ञकत्वेपिआदेशेगुदकारस्थानिकत्वनिष्पन्नतकारस्यसत्वेनदित्वात्तदप्राप्तेः ॥ ८) योनुदात्तस्यचैकादेशस्त्रान्तरतम्यात्स्व

रितः ओं शब्दोनिपातत्वादाद्युदात्तस्तस्यैकादेशोप्युक्तरीत्यास्वरितएवतस्यस्थानेनसुब्रह्मण्यायामित्यनेनोदात्तइत्युक्तम् यद्येकादेशेतिसूत्रेअनुदात्तस्येत्यस्यानुवृत्तिर्न
स्यात्तदाभवदुक्तरीत्यासुब्रह्मण्योमितिप्रयोगघटकस्योकारस्योदात्ततयाभाष्यासङ्गतिः स्पष्टैव सर्वसतिवृत्तावितिनारुचिकङ्कणु प्रामाण्यार्थमेवेतिबोध्यम् यदुक्तमग्निश
ब्दस्यानुदात्तत्वन्तदुपपादयति शेषनिघातइति ननुभवदुक्तरीत्याग्निशब्देकारस्यानुदात्तत्वेपिस्वरितेउदात्तभागस्यापिसत्वेनैकादेशउदात्तेनेत्यनेनाग्नावित्यत्रोदात्तत्वम्
विष्यतीति स्वरितत्वादर्शनादित्यसङ्गतमतआह स्वरितस्यापीति ननूच्चारणार्थानामपीत्संज्ञास्वीकारेभवन्मतेप्यग्नावित्यत्रस्वरितत्वापत्तिः रस्यैवऔतस्तकारस्येत्वादित्य
तआह उच्चारणार्थानामिति सतेनौतस्तकारउच्चारणार्थोनेत्संज्ञकइतिग्रन्थः स्वरितत्वापत्तिपरिहाराभिप्रायकोसङ्गतएवस्वरितत्वस्यतत्रप्राप्तेरेवाभावादितिसूचितम् ।
अतएवभाष्येदिवउदित्यादौदित्वमाश्रित्यतितिप्रत्ययग्रहणमितिवार्तिकस्याप्याख्यातम् स्वरितत्वस्ययत्रयत्रानिष्टत्वंतत्रदित्वस्यैवस्वीकारात् नचैवंतितिप्रत्ययग्रहण
मन्यथाप्रत्यययोरित्त्वेवसिद्धेपुनस्तितिप्रत्ययग्रहणंकर्तव्यमितिवार्तिकेनोपदेशिकप्रत्ययवत्त्वेवतत्प्रवृत्त्यानात्रस्वरितत्वप्रवृत्तिरितिभाव्यं ॥ मूल+७

वार्तिकसद्भावेऽनाविरत्र स्वरितत्वम्प्राप्नोतीत्यपक्षेतु नेतिफलभेदे प्रत्याख्यानासङ्गतिरितिवाच्यम् विधानकालिकप्रत्ययत्ववतोग्रहणमित्यत्रवार्तिकस्यतात्पर्यात् ॥ ः ॥ ननुयत्युच्चारणार्थैकवर्णविषयेपीत्संज्ञातदात्रशास्त्रस्यव्यापारोज्ञातएवेतिनाइहाकथनासङ्गतिः उच्चारणमेवफलंनतुतत्रशास्त्रस्यप्रवृत्तिरितितदर्थादत
आह उच्चारणेति वर्णान्तरेति ओकारादीत्यर्थः नन्वन्यफलार्थः प्रयोगसम्बन्धिफलान्तरन्तस्यनेत्यर्थःइत्संज्ञालोपश्चेत्येतौनतुनप्रयोगसम्बन्धिनाविति तयोर्नेव्यावृत्तिरितिभावः इदृद्धौपत्यावैश्वर्यइत्यादिनिर्देशात्रतएवसङ्गच्छते नन्वौतस्तकारस्योच्चारणार्थत्वएवोक्तकल्पनासम्भवति तत्रैवतुकिम्मानमतआह अतएवभाष्य
इति तदाङित्वपक्षे विंशतावीति अर्थपरेविंशतावितिशब्दइत्यर्थः भाष्यप्रामाण्येन प्रत्याख्यानपरभाष्यप्रामाण्येन नचनस्तद्धितइतिसूत्रस्थस्यतद्धितइत्यस्यमण्डूकप्लुत्या विंशतेरित्यत्रानुवृत्त्यालोपाभावेनोपपत्तावनभिधानकल्पनमन्याय्यमितिवाच्यम् मण्डूकप्लुतेःसम्बन्धनदभावकल्पनाभ्याङ्गुरुत्वादितिभावः पर

उच्चारणार्थेइत्यस्यचवर्णान्तरोच्चारणेसुखसम्पत्तेश्चावारणार्थोनत्वन्यफलार्थइत्यर्थः अतएवभाष्येऔकारंङितमाश्रित्यादितिप्रत्याख्यानम् न
हितदादित्वमस्ति नचङित्वेविंशतौतिलोपापत्तिः भाष्यप्रामाण्येनतस्यसप्तम्यामनभिधानादिति दिक् अदिति अस्ययइपीत्यादिः दीर्घोमाभू
दिति भिन्नकालव्यावृत्त्यर्थत्वात्तपरत्वस्येतिभावः नचङ्ग्वोविदर्थस्येतिप्रकरणेनसमासवाधइवानेनटापोपिवाधइतिवाच्यम् ॥ ७ ॥ ७ ॥

अपात्तस्यतदपीत्यस्यसाकाङ्क्षत्वादाहअस्येति ननुतपरोच्चारणेऽणुदित्सूत्रादिप्राप्तसवर्णग्रहणस्यव्यावृत्तिरेवान्यत्रदृष्टेतिटापाऽस्त्वदीर्घोमाभूदित्यसङ्गतमतआह
भिन्नेति भाव्यमानेनसवर्णानाग्रहणमित्यनेनैवसिद्धप्रकृतन्तकारोच्चारणमेतादृशार्थतात्पर्यकमितिभावः मूलेटाप्तुस्यादेवेति तपरस्याकारस्यविधानेनयथा
तस्यश्रवणम्भवति तथैवकल्प्यतांनतुतत्स्वरूपाश्रवणप्रयोजककार्यबाधइतिभावः परोक्तङ्खण्डयति नचेति प्रकरणेन अष्टसूत्र्या अनेनटापोपीति अ
त्रापिशब्दोभिन्नक्रमः अनेनेत्युत्तरंयोज्यः यथातत्रषष्ठ्येवयथास्यात्ततुतन्निवृत्तिप्रयोजकः समास इतिकल्पनातथात्राप्यकारनिवृत्तिप्रयोजक ष्टाबभवती
ति कल्पनाभविष्यतीतिभावः नचात्रापिपत्यावैश्वर्यइत्यादिनिर्देशोमानमितिवाच्यम् सन्निपातपरिभाषयापि तस्योपपत्तिसम्भवात् ॥ ७ ॥ ७ ॥

प्रकाशकारोक्तिं खण्डयितुमुपक्रमते सोऽडित्येवेति तद्भावः प्रकाशकारस्य भावः नन्वगतिकगतित्वेपि क्वचित्तदाश्रयणमस्त्येवेत्यत आह सोऽडेतीति लाघवाभावः पदला
घवाभावः सोमिति रफमादाय मात्रालाघवाभाव इत्यपि बोध्यम् प्रत्युत कल्पनागौरवमित्याह डित्वेति एवञ्च लक्षणरीतिं परित्यज्यालक्षणकल्पनायां ज्ञानगौरवस्य
स्पष्टमेव मनुहलङ्याब्भ्य इत्यत्र विहितविशेषणत्वाभ्युपगमेपि तन्मूलोक्ताव्याप्तिव्याप्त्योरवसरः त्यदादीनामः इति सूत्रे विभक्ताविति स्यविषयसप्तमीत्वाभ्युपगमे
न विभक्त्युत्पत्तेः प्रागेव तस्य प्रवृत्त्याऽव्याप्तेः परिहारसम्भवात् एवञ्च हलन्तादिविधानाभावेन यः स इत्यादावतिव्याप्तिरपि परिहर्तुं शक्या सर्वमनड्वाचादिपि सौ॥

प्रतिपदविधानाषष्ठी न समस्यत इति वार्तिकानुरोधेन तत्र तथा कल्पनेपीह तथाकल्पने मानाभावात् अनड् सिध्यतीति वैकल्पिकत्वमात्रं तु वा
चनिकमिति तद्भावः संज्ञापूर्वकत्वस्य भाष्यास्पृष्टत्वादाह्गावृत्तेरिति इयमगतिकगतिः सोऽडेति न्यासे लाघवाभावश्च डित्वसामर्थ्यादिलोपकल्
पने गौरवं च तस्मादुशनसोऽनङ् तद्वैकल्पिकत्वं च चिन्त्यमेव भाष्यानुक्तत्वादिति प्रामाणिकाः चेतीति तस्मादित्युत्तरस्येति जाग्रति विहितविशेषणा
संभवश्च शब्दार्थः एकदेशविकृतन्यायेनेति स्थानिवत्त्वस्योपलक्षणमिदम् अर्द्धाधिकविकारेण प्रत्यभिज्ञाभावाच्छिन्नपुच्छश्वदृष्टान्तमूलो
कन्यायस्यात्राप्राप्तेरिति बोध्यम् प्रथमान्तेनेति यद्यपि तस्मादित्युत्तरस्येत्युक्तषष्ठ्यन्ततापि सम्भवति तथापि बहुषु पदेषु विभक्तिविपरिणामकल्प
नापेक्षयागन्तुकलोपशब्दस्य वाक्यान्तरकल्पनमुचितमिति भावः ननु सुतिसीति प्रत्ययैर्यस्मात्स विहितस्तदादेरित्युपस्थित्यात्तस्य हल्ङ्याब्भ्य इ
ति विशेषणमिति हल्ङ्यावन्तात्तदादेः परस्येत्यर्थेनोपसर्ज्जनस्त्रीप्रत्यये तदादिनियमसत्त्वाच्च प्रकृते ङ्यावन्तत्वाभावेन नात्र दोष इत्यत आह ॥

वित्यत्र विषयसप्तमीत्वमेवास्त्विति कर्त्तव्यत्वाव्याप्तिरपि परिहर्तुं शक्येत्यत आह चेतीति वक्ष्यमाणरीत्याऽनेकदेशविकृतन्यायस्याप्राप्तिसत्त्वेन तस्यचेत्याद्युक्तमूलासङ्गतिरि
यो लोच्याह स्थानिवत्त्वेति अर्द्धाधिकेति अर्द्धस्याधिकश्चार्द्धाधिकोऽतयोर्विकार इति समासः एवञ्च वर्णगणनायामर्द्धस्य मात्रायागणनेऽन्यतदर्द्धस्य विकारसत्त्वेन जाति
व्यञ्जकभूयोऽवयवसत्त्वाभावेन नात्रैकदेशविकृतन्यायस्य प्रवृत्तिरिति भावः षष्ठ्यन्ततापीति हलित्यस्येति शेषः बहुष्विति सुतिसिप्रकृतहलित्यत्रेत्यर्थः नात्रा
दोष इति अतिखट्वः निष्कौशाम्बिरित्यत्र सोर्विधानं यस्मात्तदादेरावन्तात् तद्धन्तत्वयोरभावेन दोषाभाव इत्यर्थः स च दोषः सोर्लोपस्य प्राप्तिरूपः एवञ्च दीर्घग्रहणस्य कथ

एवञ्च बाध्यसामान्यचिन्तायां भाष्यसम्मतत्वेच· अभिमानेन प्रवृत्तमिति· यदित्तद्विषयेबाध्यविशेषचिन्तासप्रमाणास्यात्तदा पुरस्तादपवादन्यायेन रादेशस्य ज्ञसियोगुण स्तद्बाधकत्वमेवस्यात्तनुसर्वनामस्थाने योगुणस्तद्बाधकत्वम् एतेन· वक्ष्यमाणदूषणेन· गुणम् ऋतोङीति गुणम्· तद्दूषणमेवाह· तज्ज्वदिति तत्रह्निमिचिरेति वार्तिक व्याख्यानावसरेतड्रेफयोर्विप्रतिषेधोनवाच्यः किन्तर्हि तुड्विषये रादेशस्य प्रतिषेधःसर्ववक्तव्यः इतरथाहि सर्वापवादोरः सयथैव गुणं पूर्वसवर्णञ्च बाधते एवन्नुट मपिबाधेतेत्युक्तम् भाष्यान्तरविरोधमप्याह· सपर्थ्यन्तस्येतीति अचिरेणेति· नुडागमस्येतिशेषः अथनति स्मिति सूत्रेरेफादेशस्य नुडपवादत्वाभावे सर्वज्ञापकत्वम भ्युपगम्यैवञ्च विप्रतिषेधस्योपपत्तिर्भविष्यतीत्याशङ्कते यद्यपीति· तेनैव· ज्ञापकेनैवतस्· नुटम् तन्दूषयित्वा विप्रतिषेधं दूषयित्वा तृज्वत्सूत्रभाष्य इति उक्तभाष्यान्तर

एवंचाचिरइति सूत्रस्थमचिरादेशे जस्युपसंख्यानं गुणपरत्वादिति वार्तिकं बाध्य विशेषचिन्ताभिमानेन प्रवृत्तमिति भावः एतेन तद्वार्तिकव लाज्जसोन्यत्र प्रियतिस्र इत्यादौ गुणं कल्पयन्तः परास्ताः तृज्वत्सूत्रस्थभाष्यविरोधात् मपर्यन्तस्येति सूत्रस्थ प्रियतिस्राविप्यादिभाष्यविरो धाच्च अनेन रेण कथं विप्रतिषेधइति अचिरेणेत्यस्यार्थः दूषयिष्यतीति यद्यपि नति स्मिति ज्ञापकेन तदपवादत्वाभावकल्पनया विप्रतिषेधउप पद्यते तथापि ज्ञापकानुसरणस्यावश्यकत्वे तेनैव तत्संसाध्य तद्दूषयितेत्यर्थः इदञ्च तृज्वत्सूत्रे भाष्ये संतोष्टव्यमिति अतिस्रोदस्तदंशे वार्ति केन कार्य इति भावः दशपादीति अत्राञ्चिवीज तुनुम् निपातनव्यर्थम् नच परसवर्णाभावार्थमुभयनिपातनम् नुस्येव निपात्ये ऽनुस्वारनिपा तनसामर्थ्ये नैवतदभाव सिद्धेरिति एवंचायमूकारोनधातोरियुवङोः प्रसंगाद्गुणाभाव्यमिति इत्यूर्वकम्प्रकृतिकद्रन्भूशब्देन सह न रूपवि शेष इति माधवश्चिन्त्य इति भावः निपात्यत इति सकादेशस्य पूर्वान्त त्वेन भूत्वमिति भावः वार्तिकमिति॥ ॥ तत्रं तस्मात्तुड्विषये रप्रतिषेधोवाच्यः न वाच्यः आचार्यप्रवृत्तिर्ज्ञापयति न रादेशोनुटम्बाधत इति यदयन्नति स्मिति नामिदीर्घत्वस्य प्रतिषेधं शास्तीत्युक्तम् अतिस्रोदः अतिविचारः तदंशे राशे सूत्रेनुमागा सोऽनुस्वारश्चेति· परसवर्णार्थमिति शेषः अत्र· दशपादीति विशेषतः कथने· उभयेति नुमनुस्वारेत्यर्थः अनुस्वारेति अनुस्वारमात्रेत्यर्थः एवञ्च· उभयथाप्यस्योका रस्योणादित्वं च· चिन्त्य इति· तत्रोवङादेशस्य प्रवृत्तेरत्र तुतदभावस्येति रूपविशेषस्यस्पष्टत्वादिति शेषः कृप्रत्यय इति भुव इति शेषः तत सकादेश इति च· सकादेश स्य· प्रत्ययोकारणेकादेशस्य सत्वेनात्र पक्षे भूशब्दस्य लाक्षणिकत्वान्न वार्तिकेनयणित्यपात्यम् अतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तेरन्यत्रो

भाष्ये पूर्वग्रहणमिति॰ वर्षाद्‌ह्न्वार पुनर्भ्योभुवइत्येवपाठे इष्टसिद्धेः एतेनेत्येतदाचष्टे॰ सूत्रेति॰ वर्षाभ्वश्चेति सूत्रस्य वर्षाभू पुनर्भ्वश्चेति वार्त्तिकस्यानुरोधेनेत्यर्थः यन्मूलेत
त्निमूलत्वाच्चिन्त्यमित्येवं वक्तव्ये उपेक्ष्यमित्युक्तन्तस्य बीजान्तरमप्याह कारा भूरित्यत्रेति॰ अडीति॰ टापिचेति शेषः एवञ्च काराशब्दो दुष्टाचरणकृताय त्रस्थाने निग्रहो
राजकर्तृकस्तद्वाचकः यत्रतु कारागृहमिति प्रयोगस्तत्र सङ्कोचकैर्मोक्तन पूर्ण रन्ध्रेरितिवत्प्रयोगः तत्र यथा कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धता इति कोशात् कीचकप
दस्य मारुतपूर्णरन्ध्रत्वविशिष्टे शक्तिसत्त्वेऽपि पुनर्मारुतपूर्णरन्ध्रैरित्युक्तं तदुपादानाद्वेणुमात्रपरत्वन्तथाऽत्र काराशब्दो बन्धनमात्रपरः प्रसिद्धत्वमुभयत्र तुल्यमित्या
शयेनाह इस्वेति॰ गोतइत्यपहायेति मूलोक्तरीत्या समुदायस्य त्यागो न चमत्कारकारीत्यतस्तद्व्याचष्टे एतदवयवेति॰ एतन्मूलफक्किकायां गोतइत्यवयवावयविभा

एतेन भाष्ये पूर्वग्रहणं व्यवहितेऽपि प्रवृत्त्यर्थमिति वर्णोद्धरित्या दावपि यणिति परास्तम्॰ सूत्रवार्त्तिकानुरोधेन पूर्वग्रहणस्य परिभाषाप्राप्तार्थानुवाद
त्वौचित्यात् उपेक्ष्यमिति कारा भूरित्यत्र काराशब्दः करोतेर्ण्यन्ताद्भिदादित्वादङि निष्पन्नो बन्धनगृहवाचकस्तस्य टापा सहैकादेशस्य पूर्वान्त त्वेपि वा
नैकग्रहणेन प्रसिद्धत्वेन ह्रस्वपाठे कवाक्यतया च हलवाचकस्यैव ग्रहणादिति भावः इत्यपहायेति एतदवयवगकारमपहायेत्यर्थः इत्योकारोप
लक्षणतयेति तपरकरणेनतस्याविवक्षितत्वलाभादिति निरवकाशत्वं चेति चोदतौ यतो निरवकाशत्वमतो बाधकत्वमित्युक्तं न सङ्गच्छेतेत्यर्थः
अमरास्तु स्त्वमिति भिन्नलिङ्गानान्न्द्वन्द्व इति तेन परिभाषणादिति भावः भाष्यमिति स्थानेन्तरतम इतिसूत्रे इति भावः कजन्तस्येति रैशब्दा
पियकारादिप्रत्ययान्तस्यादसदिति भाष्याक्षरार्थः॥ ))बार्थिकाबष्वीतिभावः कैयटो कस्यकारान्तरस्मूलकार आह गोतइत्योकारइति॰ एवञ्च पूर्वेङ्गका
रोयद्यपिपाणिनिनोच्चारितस्तथाप्याचार्य्यैः कृत्वानिवर्तते इति न्यायेन तस्य त्यागः कृतइत्याशयः केचित्तु गकारोच्चारणम्मङ्गलार्थम् ओतइति तु विवक्षितमत एव
चित्रगुरित्यत्र न दोषः गकारस्याविवक्षितत्वे स्थानिवद्भावेन गुशब्दस्य गोशब्दतयाऽङ्गाधिकारे तदन्तविधिसत्त्वेन गोशब्दान्तत्वेन दोषः स्यादेव॰ ममत्वल्लिविधित्वा
त्तस्थत्वस्य प्रवृत्तिः वस्तुतस्तु प्रकृतसूत्रे भाष्ये तपरत्वं प्रत्याख्यातम्॰ चित्रगुरित्यत्रातिप्रसङ्गस्य तु गोः पूर्वस्य णित्वे इत्यनेन स्थानिवद्भावस्य प्रतिषेधादेव निरासः द्योश्च
सर्वनामस्थाने णित्वं वक्तव्यम् ननु मूलोक्तस्याधकत्वन्निरवकाशत्वं चेत्ययुक्तं न्वकारोपादाने निरवकाशत्वाभावेऽपि बाधकत्वस्य प्रतीतेरतस्त्राह चोदनाविति॰

मूले संराया भूयसेति · यद्ययं स्त्रीलिङ्गः स्यात्तदा भूयसा इति स्यादिति भावः · ननु स्थानिवत्सूत्रस्थ भाष्ये शब्दस्य छान्दसत्वप्रतीत्या वैदिकेष्वस्य प्रतिपादनं युक्तमिति ह
तस्य कथनमयुक्तमित्याशङ्कानिवारणायाह रायिरित्यादि · उक्तभाष्यं व्याचष्टे रा · इ रै इति · उच्चारणार्थ इत्यन्तो ग्रन्थः · वास्तुतस्त्विकारः सप्तम्येकवचनरूप एवेत्याश
येनाह प्रायेणेति अत एव · केवलस्य छान्दसत्वादेव अत एव उक्तोर्थः सूत्रे सरवेति कैयटश्चेत्यर्थः · स्पष्टमेवेति यद्ययं केवलो ऽपि छान्दसः स्यात्तदापि शब्दे चारण
वैयर्थ्यापत्तिः उक्तभाष्योक्तप्रयोगद्वयविरोधश्च स्पष्टमेवेत्यर्थः · इत्यजन्तपुल्लिङ्गविवरणम् · यत्तु लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वादिति तन्नयुक्तम् परिभा

यकारेण यकारादिः प्रत्ययो लक्ष्यते इकार उच्चारणार्थः प्रायेण विसर्गरहितस्त्वपाठः नराया दौ प्रत्यये इत्यस्ये इति भावः नचेति · अत एव रायमिच्छती
ति विग्रहप्रदर्शनपरभाष्यं सङ्गच्छते नहि विग्रहश्छन्दो ऽजस एव रायि आशा राय्याशामित्यचः परस्मिन्नित्यत्र भाष्यप्रयुक्तमिति भावः पक्षा
न्तरमिति अत्रारुचिबीजं स्पष्टमेव इत्यजन्ताः पुल्लिङ्गाः लिङ्गविशिष्टेति तया परिभाषया प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टे बोधने।
न तया प्रातिपदिकत्वादित्यर्थः ध्वनितं चेदं बहुव्रीहेरूधस इत्यत्र भाष्ये परत्वादिति असंबुद्धो हल्ङ्यादिलोपश्चरितार्थः कृते लोपे रुत्वं साव
काशमित्यभिमानः ननु सत्यपि संभवे बाधनमिति न्यायविरोधो ऽत आह प्रतिपदोक्तत्वाच्चेति अपवादत्वाच्चेत्यर्थः यथाश्रुतेपीति आकारप्रश्ले
षाभावेपी इत्यर्थः परत्वेनेति योगपद्यासंभवेपि विप्रतिषेध इत्यभिमानेनेदम् आदश्चायुदाहृतमिति समुदायावयवयोः सन्निधाने ऽनुबन्धेऽ
भयोपकारकः न चायमनर्थकः आटो ऽर्थवत्त्वः क्वापि असंभवादिति तदाशयः इहाटो ऽभावादिति अयं भावः निर्देशेषु प्रायोगिकरूपासंभवादौप
देशिकरूपग्रहणमिति घसंज्ञादिसूत्रे भाष्ये स्पष्टम्॥ ॥ यथा तद्विशिष्टस्य ग्रहणमेव बोध्यते इति तन्नेत्याशयेनाह तयेति विशिष्टे लिङ्गबोधकप्रत्ययविशि
ष्टे बोधनेन अतिदेशेन ध्वनितमिति नचान्नाह बहुव्रीहेः कविरित्यर्थः कुण्डोध्नीत्यत्र कबाधनपरभाष्येण ध्वनितमित्यर्थः यदुक्तं प्रागर्धिसन्त्रेति तदिह दर्शयति · अ
संबुद्धावित्यादिना · सावकाशमिति प्रत्ययलक्षणेनेति शेषः अपवादत्वात् · निरवकाशत्वेनापवादत्वात् · अभिमानेनेति रुत्वेन पूर्वोक्तार्थः स्मारितः प्राचामाशयमाह
समुदायेति · भाष्ये स्पष्टमिति तत्र सर्वेषु सानुबन्धकनिर्देशेषु रूपमाश्रीयते यत्रास्येतद्रूपमिति रूपनिर्ग्रहश्च नान्तरेण लौकिकं प्रयोगं तस्मिंश्च लौकिके प्रयोगे सा

तुवन्धकानामप्रयोगो नास्तीति द्वितीयः प्रयोगउपास्यते कोसावुपदेशो नास्तीत्युक्तम् ॥ ॥ तेषाम् अनुबन्धत्वेनाभिप्रेतानाम् प्रकृताभिप्रायेणाह टकारे संज्ञकेति सतेन न
यदुपदेशप्रयुक्तायस्येत्संज्ञा तस्यैव तदनुबन्धकत्वव्यवहार इति निदर्शितम् प्रकृते तस्य टकारस्य तु स्यादुपदेशप्रयुक्तैवेत्संज्ञेति नाट इत्यस्य प्राप्तिरिति भावः यथा टका
रस्य नाडवयवत्वं तथाप्यन्यत्रानुबन्धविषये द्रष्टव्यम् तस्य महिडि· निङ्कारस्य समुदायस्यैवावयव इति वक्ष्यमाणत्वात्तत्र संप्रसारणं न सतेन टकार ॥ ७ ॥ ७ ॥
रेसंज्ञकेति व्याख्यानेन नन्वाडजादीनामित्यत्राच्परत्वमस्त्येवेत्यत आह नेष्यत इति अन्तरङ्गत्वादिति याटः सर्वनामसंज्ञानपेक्षत्वेनान्तरङ्गत्वमसुडस्तु कार्यकालपक्ष
माश्रित्य तत्प्रवृत्तिसापेक्षत्वेन बहिरङ्गत्वमिति भावः सूत्र इत्यादिना सिध्येदिति सर्वनाम्नोऽसुडादेशे सकारस्य प्रत्ययावयवत्वाभावेन षत्वाप्राप्त्या न सिध्येदित्यर्थः ननु प
रादिवद्भावेनाकारस्य प्रत्ययतया तदादेशस्यासुडः प्रत्ययतया तदवयवस्य षत्वं भविष्यति न च सर्वनामत्वं स्यात् पूर्वान्तवद्भावेन वाच्यमित्युभयतआश्रयणे नान्तादिवदि

उपदेशे चैतेषामित्संज्ञकत्वादुपस्थितत्वाद्ग्रहणवत्तामेव प्रदेशेषु भानमिति टकारे संज्ञकाकारस्येत्यादिक्रमेणार्थः क्तक्तवतू निष्ठेति सूत्रे भाष्ये स्फु
टमेतत् पाणिनेश्चात्र तत्र विशिष्टोपदेशतात्पर्येण तत्प्रयुक्तत्संज्ञकेन तस्यैव टित्त्वादिव्यवहारो नावयवस्य तदुपदेशतात्पर्याभावात् सतेनोपदे
शिकस्याच्परत्वाभावेन न वृद्धिप्राप्तिः नेष्यते च तत्र वृद्धिः प्रयोगे तु नाडिति आटश्चेत्यसंगतमित्यपास्तम् यादिपर इति अन्तरङ्गत्वात्पूर्वं याडिति भावः
न सिध्येदिति इत्याद्येव न सिध्येदित्यर्थः पूर्वमसुडि असन्नत्वाभावेन सुत्वाभावापत्तिः पूर्वं सुत्वे च सिद्धिः स्पष्टैव सवर्णा सुमुयडित्यादिवद्व्याख्या
भेदेन रूपद्वयमिहापि स्यात् सुत्वपक्षे न आप् स्थानिकत्वेनासुडः प्रत्ययतया तदवयवत्वेन षत्वसिद्धिः सर्वं चैतत्रास तस्येत्यप्यन्ये इत्यत्र स्या
द्ग्रहणमपि ज्ञापकमिति भावः परेतु संज्ञाकृत बहिरङ्गत्वस्यानाश्रयणेन नित्यत्वादसुडि रूपासिद्धिः ॥ ११ तिनिषेधो भविष्यतीति वाच्यम् विभिन्नका

र्यसम्पादकशास्त्रयोः प्रवृत्तये उभयाश्रयणेपि तन्न्यायविषयत्वाभावाद्यत्रैककार्यार्थमुभयाश्रयणं तत्रैव तस्य प्रवृत्तेरत आह इत्याद्येवेति पूर्वमसुडीति सुत्वस्यासि
द्धत्वेन पूर्वमसुडीत्यर्थः न सुनेरिति सूत्रे नेति योगविभागाभिप्रायेणाह पूर्वस्मात्त्व इति तथा च तृतीयव्याख्यापक्षेत्राः सेरित्यस्य वाक्यस्य प्रवृत्त्याऽसुमुयडिति यथा
भवति तथा यद्यप्यसुडादेशस्य पूर्वं प्रवृत्तिपक्षे सुत्वं भविष्यति तथाप्याद्यव्याख्याया न सिद्धिरिति भावः स्वन्त्रेति असुयेद्वत्यस्यैवेष्टत्वे च तत्र अदसोसेरिति सूत्रे
स्यात् ग्रहणमपीति अपिना सुमुयडिति लक्ष्यस्य संग्रहः संज्ञाकृतेति न लोपः सुविति सूत्रे कृतित्तुग्ग्रहणान्तदनाश्रयणं बोध्यम् ॥ ॥ ॥

इति न्यासः इति अत्र चकारस्य विधेयबोधकपदोत्तरमुपादानेन विधेयान्तरस्य समुच्चयो भविष्यतीति भावः उभयोरपीति अस्य ङ्याडागमस्य चेत्यर्थः सवर्णान्तस्य साडापद्
ति सूत्रबोध्ययाडागमस्यापि पक्षे ———— रूपासिद्धिः स्फुटैव इत्याद्यत्यादिपदेनासुद्धं इत्यस्य सङ्ग्रहः नच द्वितीयायाञ्चेति निर्देश रूपज्ञापकान्तस्य सूत्र।
स्योभयविकल्पबोधकत्वेनेति वाच्यम् ज्ञापकाश्रयणेन प्रतिपत्तिगौरवस्य स्फुटत्वात् दूषणान्तरमप्याह किञ्चेति ननु विषयभेदात्कथमपवादत्वमत आह अचिरे।
ति सर्वनाम्न इति सूत्रस्य याडपवादत्वेपि अस्यङादेशेनेष्टसिद्धिर्भविष्यतीत्याशङ्कां निराचष्टे यद्यपीत्यादिना ह्रस्वश्चेति न वाच्यमिति पूर्वपक्षाभिप्रायः अवङ्
सूत्रस्थभाष्यरीत्येति गौरवचनं स्वरसिध्यर्थमिति वार्तिकस्य व्याख्यानावसरे उक्तायां रीतिमित्यत्यर्थः सवर्णान्तस्यै इत्यत्र ताशब्दस्यान्तोदात्तत्वबुद्ध्यास्तस्य स्थाने

नचैवेन याडपि विधेयः सुड् चेति न्यासे इति वाच्यम् विभाषा द्वितीयेति सूत्रेण विनिगमकाभावादुभयोरपि विकल्पे द्वितीयाये इत्यायसि
द्धापत्तेः किञ्चास्य ङ्याडपवादत्वेन तद्विषये याट् दुर्लभः अचिरादेशान्नुट् पूर्वविप्रतिषेधेनेत्य सङ्गतम् रादेशस्य बाध्यसामान्यचिन्तयास
र्वापवादत्वे नत्नुडपवादत्वादित्याशंक्य नतिसृचतसृति दीर्घत्वनिषेधाद्रादेशात्नुटं न बाधत इति भाष्ये उक्तत्वाच्च सूत्रेऽस्माद्विषयभेदेपि येन
नाप्राप्तन्यायेन बाधकत्वं सिध्यत्येव यद्यप्यस्यङादेशेन सिध्यति तथाप्यवङ् सूत्रस्थभाष्यरीत्या अन्तरतम्येन कदाचिदन्तस्योदात्तत्वे सर्वा
देश उदात्तेनेत्यनेन विभक्तेरुदात्तत्वापत्तिरित्याहुः सामर्थ्यादेवेति॥ ७ ॥ ७ ॥ ७ ॥ आनन्तरतम्यादन्तोदात्ते स्यङादेशे

यन्तो बोध्यः यत्र स्थानिनस्त्रायुदात्तत्वबुद्धिस्तदायदापि सिद्धिस्तथाप्यन्तोदात्तत्वबुद्धिरपि कदाचित्स्यादिति तात्पर्यम् असुषे इत्यत्र सस्य प्रवृत्त्येकदेशाच्च सर्व
दूषणस्य यदि तु याट् सवर्णसुट् तदा सकारः प्रत्ययावयव इति सुत्वे कृते षत्वं स्यात् विष्यतीत्यभिप्रायेणाह मूले वस्तुतस्त्विति युक्तमुन्नामीति सूत्रानन्तरमेवमपि तु
युक्तम् सर्वनाम्न इत्यस्य तत्रानुवृत्त्या सर्वनाम्नः परस्य याटः सुट् ह्रस्वश्चेति तदार्थः सर्वसति सर्वनाम्न इत्यस्य पञ्चम्यन्ततया स्थानित्वासम्भवेन याट् इति षष्ठ्या य
था अवयवावयविभावार्थिका तथा स्थानपदार्थनिरूपित सम्बन्धार्थिकापि भविष्यतीत्यभिप्रायिका माशङ्कां निराचष्टे न चेति दीर्घ इति याट् इत्यत्र दीर्घ इत्यर्थः न्यास

यद्यपूर्वोक्ताभियुक्तवाक्ये आदिपदमुपात्तं तेन प्राप्ताप्राप्तविवेकन्यायस्यापि संग्रहः कार्यः उद्देश्यविधेयत्वमिति द्वन्द्वोत्तरं त्वप्रत्ययः द्वयर्थोदिति अन्यथा द्वयोः पदयोः सामानाधिकरण्याभावेनानेकमन्यपदार्थ इति समासानुपपत्तिः स्यादिति शेषः॥ ः॥ ननु यापूर्वा सा उत्तरेत्येव विग्रहोऽस्तु उत्तरापदमेव लाक्षणिकमस्तु न त्वपि बहुव्रीहिर्भविष्यतीत्याशङ्क्य तन्निराचष्टे नविधाविति जैमिनिशास्त्रप्रसिद्धोयं न्यायः उपक्रमोपसंहाराभ्यां यदर्थे तात्पर्यग्रहस्तत्रैवैकस्योद्देश्यत्वमपरस्य विधायकत्वम् यदि विधायकस्यापि लाक्षणिकत्वं तदा लक्षणाया अनुपपत्त्यादिग्रहसापेक्षत्वेन गुरुतया स्पष्टप्रतिपत्तये विवक्षितार्थबोधकस्य वाचकशब्दस्यैव प्रयोगः कर्तुमुचित इति भावः गुणवचनतयेति गुणोपसर्जनद्रव्यवाचकतयेत्यर्थः भाष्य इति अन्तरस्वहिर्योग इति सूत्रभाष्य इत्यर्थः खण्डनखण्डुक्तान्निरसितुम्भूमिकामारचयति।

नविधौ परशब्दार्थे इति विधेयबोधके लक्षणानौचित्याच्च चद्रुक्तविग्रहेतु पूर्वापदस्य यच्छब्दसमभिव्याहारेणोद्देश्यसमर्पकतया तस्यैव लाक्षणिकत्वे न गुणवचनतया पूर्वनिपातापत्तिरिति न कर्तव्यमिति स्पष्टं चेदं भाष्ये तृतीयाप्राग्दसाहचर्येण सहायवाचिद्वितीयाशब्दस्य न ग्रहणम् भागार्थे विधीयमानस्यानो भक्तिविशेष्यत्वेन तन्त्रीत्वमनभिधानात् एतेन तत्र लाक्षणिकत्वाद्वार्त्तिकाप्रवृत्ताविदमावश्यकम् अत्र सूत्रे नसापरिभाषाप्रवर्तते प्रतिपदोक्तस्याभावात् न च महाविभाषयानभावे वार्त्तिकप्रवृत्त्या रूपद्वयं सिद्धम् अनेनानित्यत्वाङ्गीकारात् आद्युदात्तस्य तथापि रूपद्वयासिद्धेश्चेति परास्तमिति भावः अत्रोपसंख्यानादाह संवृद्धाविति॥ ५ तृतीयाप्राग्दति साहचर्येणेति सदृशयोरेव साहाय्यत्वस्य लोके

विप्रराभ्याञ्जैनित्यादिसूत्रभाष्यादौ च स्पष्टत्वादिति भावः ननु द्वितीया भक्तिर्द्वितीयेत्यस्तु पूरणाद्भाग इत्यन् प्रत्ययान्तोयं शब्दोऽस्तु स्वच्छात्ततृतीयप्रत्ययान्तत्वाभावेन वार्त्तिकाप्रवृत्ताविदमावश्यकमित्याशङ्कां तु स्थानायाह भागार्थ इति अनभिधानादिति अत्र मानं तु सूत्रप्रत्याख्यानपरं भाष्यमेव एतेन अनभिधानादस्त्रीत्वे ननु तत्र अन्तन्ते अभावादिति अनोऽभावे पिटावेकादेशेन सर्वस्य लाक्षणिकत्वादिति भावः प्रकारान्तरेण सूत्रसार्थक्यशङ्कां वारयति नचेति अङ्गीकारादिति आनसव भादिरा इति सूत्रात्प्राक् तदधिकार इति हृद्वाः सिद्धान्तिमतेनाह आद्युदात्तस्येति मातुमातन्निति वार्त्तिके संवृद्धाविप्यधिकाराभावादनुपादानाच्च गस्यसंवृद्धावेव प्रवृत्तिरिति कुत इत्यत आह अत्रोपेति पुत्रार्थमित्यस्य पुत्रायेत्यर्थः अर्हत इति पुत्रायेत्यस्य विशेषणम् तादर्थ्ये चतुर्थी ब्राह्मणाय पायसमित्यत्रेवोप।

कार्योपकारकभावऊहनीयः अस्वार्थेति सूत्रात्समुद्रादित्यस्य सम्बन्धः यद्वा मातुरित्यस्य प्रयुज्यमाने सेत्यादि अभिधातुमिति तु मुन्नन्तमप्रयुज्यमानमिति क्रियार्थोपपद स्येति चतुर्थीतत्फलितार्थमाह अर्हन्तमिति नन्वेवमर्हतइति पुत्रायेत्यस्य विशेषणमिति सापेक्षत्वात्कथमर्थशब्देन समासइत्यत आह सापेक्षत्वेप्यत एवेति यः पुत्र उत्कृष्टगुणयोगादुत्तमकुलसम्भूतत्वाच्च कुलीनायाम्मातरि अयञ्जातइति व्यपदेशयोग्यो भवति स एव यदा गार्गीमातेत्यादि बहुव्रीहिसमासेनाभिधीयते तदाऽयम्मा तजादेश इष्यते अत्र मातृपदार्थप्रशंसया पुत्रस्य प्रशंसा विवक्षिता अ हेतइत्यत्राह प्रशंसायामिति शत्ता मातृगत प्रशंसामूलकपुत्रप्रशंसाया गम्यमानत्व एवास्य प्रवृ त्ते रिष्टत्वादत एव भाष्ये मातृणाम्मातच् पुत्रार्थमर्हतइति वार्तिके मातृणामिति बहुवचनमुपात्तम् गार्गीमातेत्यादौ जातेश्चेति पुंवद्भावस्य प्रतिषेधः समासइति अर्थश ब्देन समासइत्यर्थः मात्रात्र जनन्येव नत्वपरमाता जनन्याः प्रत्यासत्त्योपस्थितेः मातृद्वारकप्रशंसापुत्रस्य समासात्मकसमुदायेन प्रयुज्यमानेन गम्यते समासान्तस्यान्व

अर्हन्तं पुत्रमभिधातुं यो मातृशब्दः प्रयुज्यते तस्येत्यर्थः सापेक्षत्वेप्यत एव निपातनात्समासः अर्हत्वं च पुत्रस्य मातृद्वारकमेवेत्याह मात्रापु त्रस्येति अपवादइति यदीदन्तस्यात्तदा प्राप्नोतीति भावः वैयर्थ्यापत्तेरिति नन्वाकारोयं लाक्षणिक इति तदाशयः न च खट्वाद्यर्थमित्यत्रापियाडनाप तिः सूत्रन्तु निशाद्यर्थमित्यत्र चरितार्थमिति वाच्यम् यस्य रूपस्य लक्षणप्रवृत्तिं विना न सम्भवस्तस्यैव लाक्षणिकस्य परिभाषाविषयत्वात् न चेहत थाऽऽकारादेशतः प्रागपि तद्रूपसत्त्वादिति वेत्त वर्णग्रहणे तदप्रवृत्तेरेरप्युक्तत्वेन न द्विरोधादित्यभिमानः॥ लौकिके प्रक्रियावाक्ये प्रवृत्तिरिति नात्रयेन नाप्राप्तिन्यायेनापवादत्वमत आह यदीदमिति तथा चोपजनिष्यमाणेति न्यायेन कपोयस्वाधकः यत्तु परैः कृतमति खट्वाद्यर्थमत्र लाक्षणिकत्वान्न याडिति तन्मतमाश्रित्य शङ्कते नन्विति ननु लाक्षणिकत्वं यदि याडप्रवृत्तिसाधकं तर्हि खट्वायै दृत्यादावपि न स्यादित्याशङ्कां निराचष्टे न चेति तैः परैः प्रकाशकारादिभिः अयिशब्दः कैयटादि परामर्शकः अभिमान इति एतेनास्वरितध्वनिता तथा हि अदिति सूत्रभाष्येऽदो भवदित्यत्रौदिति प्रगृह्यत्वप्राप्तिमाशङ्क्य लक्षणप्रतिपदोक्तपरिभाषया समाधानं कृतं य दि वर्णग्रहणे तस्याः परिभाषायाः प्रवृत्तिस्तदा भाष्यविरोधः स्यष्ट एव स्थानिवत्सूत्रभाष्येऽपि खट्वायेत्यत्राापः प्रत्ययत्वात्तदन्तस्य लाभे तस्याङ्गविशेषणत्वेनावन्तान्तय दङ्ग भिरयर्थे नाति खट्वायेत्यत्र प्राप्तस्यापि याटो ङ्याब्ग्रहणे दीर्घइति वार्तिकेन समाधानेपि श्रुताकारस्तानुवन्धाभ्यामात्वमाश्रित्य पुनरपि याटः शङ्कां कृत्वा लाक्षणि

अतएव+त्रु.२

कत्वेन समाधायाकारप्रश्लेषे वार्तिकप्रत्याख्यानपक्षे समाधानान्तरन्त्वकृतमिति लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तिरेव समाधानमिति ध्वनितम् न चाङ्गस्येत्यस्य विशेषणत्वे
नाङ्गसंज्ञकं यदावन्तमित्यर्थ एवोचित इति वाच्यम् यदाङ्गाधिकार इति वचनेन तस्य विशेष्यतायाएवोक्तत्वात् अत एवाड्वृद्धायैत्यत्र याटः प्रवृत्तिः एवञ्चात्राप्यस्य सम
मूलस्मूलत्वञ्च भाष्यानुरोधेनेति तत्त्वम् अत एव ह्रस्वयोरप्राप्तेरेव नेति निवृत्तमिति निषेधस्य प्राप्तिपूर्वकत्वेन यूस्त्र्याख्याविति सूत्रे च दीर्घस्य ग्रहणेन विधेरप्राप्तेर्नेति ।
निवृत्तमित्युचितमेवेति भावः ननु ह्रस्वघटितवाक्यव्याख्यानावसरे तथाकथनेन दीर्घघटिते नेत्यस्य सम्बन्धोऽस्तीति गम्यते तथा च तद्घटितवाक्यस्यवानस्यादित्येव व्याख्या
नमुचितमत आह भावेति भावमात्रेत्यर्थः उभयत्र तात्पर्यकल्पनापेक्षया प्राप्तभावस्यैकस्य कल्पने लाघवम्भवति अत एव ह्रस्वघटितवाक्येनैकवाक्यतापि भवति न च
दीर्घघटितवाक्येपि नेत्यस्य निवृत्त्या तदंशे उभयत्र विभाषात्वमेवास्त्विति वाच्यम् अकॢप्तकल्पनापेक्षया कॢप्तार्थस्य कल्पनायां लाघवात् ननु स्त्र्याख्यपदस्य प्रक्रान्तत्वा

**ह्रस्वयोरप्राप्ताविति अत एव यूस्त्र्याख्याविति सूत्रे ह्रस्वघटितवाक्ये नेति निवृत्तमित्युक्तं भाष्ये निषेधेप्राप्त इति भावः तात्पर्यैकत्वलाघवानुरोधेना**
**प्राप्तविभाषात्वमेवोचितमिति भावः ह्रस्वयोस्तु स्त्रियामित्येवेति इत्यादिष्वप्राप्तिमाशङ्क्य ङिति ह्रस्वश्चेत्यत्र नित्यस्त्रीलिङ्गाविति एवंविधो नियमो**
**नाश्रीयत इति कैयटोक्तिः स्वपक्षमानुरोधात् ह्रस्वांशमात्रविषया यूस्त्र्याख्याविति सूत्रे इयङुवङ्स्थानावित्यंशस्य निषेधपरतया भाष्ये**
**व्याख्यानेन निषेधस्य प्राप्तिपूर्वकतया तत्र नित्यस्त्रीलिङ्गावित्यस्यावश्यकत्वाच्चेति भावस्तदाह अन्यथेति कैयटरीत्येति ॥** स्त्रियामित्येवेत्युक्त

मत आह इत्यादिष्विति उपक्रमानुरोधात् इत्यादिष्वप्राप्तिशङ्कायाक्तत्वासाख्याग्रहणप्रयोजनप्रदर्शनोपक्रमानुरोधात् तथाहि भाष्ये आख्याग्रहणं किमर्थम् नदी
संज्ञायामाख्याग्रहणं स्त्रीविषयार्थम् स्त्रीविषयावेव यौ नित्यं तयोरेव नदीसंज्ञा यथा स्यात् इह मा भूत् ग्रामण्ये सेनान्ये स्त्रियै इति अत्र कैयटः आख्याग्रहणसामर्थ्यान्नियम
आश्रीयते स्त्रियमेव या वाचक्षाते न तु लिङ्गान्तरयुक्तमपीत्यर्थः आख्याग्रहणप्रयोजनप्रदर्शकेऽस्मिन्वार्तिके विषयशब्दो नन्यभावे तद्द्योतक एवकारो व्याख्यानप
रभाष्ये एवकारार्थ एव तु नित्यशब्देनाख्यातः ग्रामण्ये इति ग्रामणीशब्दः क्रियाविषयत्वात्त्रिलिङ्गत्वात् स्त्रीविषयो न भवतीति स्त्रियामपि वर्तमानो न नदीसंज्ञो भवति
एवं भाष्यं व्याख्याय शङ्कते यद्येवमित्यादि प्रभृतीनामुभयलिङ्गानां मृद्वादीनाञ्च गुणवचनत्वात्सर्वलिङ्गानां स्त्रीविषयत्वाभावात् स्त्रियां इत्यतो ङिति ह्रस्वश्चेति नदीसं

तत्र सवर्न्नादिङितिह्रस्वश्चेत्यत्रैवंविधो नियमो नाश्रीयत इति समाहितम् क्रियाविषयत्वादित्यनेन प्रवृत्तिनिमित्तैक्यन्दर्शितम् यत्र प्रवृत्तिनिमित्तभेदस्तत्रैव वाचकशब्दभे
द विशेष्यभेदे लिङ्गभेदेऽपि च न तन्नङ्गे देऽपि शब्दभेदव्यवहाराभावात् ततः स्पष्टप्रतिपत्त्यर्थं ङ केवलस्य स्त्रीशब्दस्यानुवर्त्तनाद दोष इति चोक्तम् तदुक्तं ह्रस्वांशमात्र परत्वे
भाष्यमेव साधकमतीयत आह यूस्त्र्याख्याविति नदाहेति ह्रस्वघटितवाक्यस्य नित्यस्त्रीलिङ्गभिन्नेऽपि प्रवृत्तिरित्येतदाहेत्यर्थः सवर्न्नोपक्रमभाष्यग्रन्थस्यात्र दीर्घ
घटितवाक्ये नुवर्त्तयत्स्त्र्याख्य पदन्तन्नित्यस्त्रीलिङ्गबोधकाविति यथा स्त्रीशब्देऽर्थकमिति कटप्रुवे ब्राह्मण्यै इत्यत्र नदीसंज्ञा नेति भाव: वंतमतक ङितीति सूत्रे नुवर्त्तयत्स्त्र्याख्य
वन्तन्स्त्रीवाचकाविति तन्मात्रार्थकशब्दाधिकारानुरोधात्तच्च ङिन्दाश्रित्राङ्ग विशेषणमिति कटप्रुवे ब्राह्मण्यै इत्यत्र विकल्पो भवत्येव ङितीत्यत्रैवं विधो नियमो नाश्रीयते
इत्युक्तिरुभयसाधारणी मूलन्तु प्राचामनुरोधेन परममूलन्तूभयसाधारणमत सवर्न्नङितिह्रस्वश्चेति प्र... तीकमुपादाय ह्रस्वघटितवाक्ये दीर्घघटितवाक्ये चैतदितिभाष्य

स्त्रीविषयावेवयो नित्यमितिभाष्यस्वारस्येन लिङ्गान्तरविशिष्टार्थानभिधायकत्वरूपस्य नित्यस्त्रीत्वस्यैतेनोक्तेरिति भाव: इदन्तोमतेऽपीति पूर्वभाष्ये
सर्वोभिन्नक्रम: नित्यमेवयो स्त्रीविषयावित्यन्वय: नित्यमेवान्यस्य पदान्तरं विनापीत्यर्थ इति इत्यर्थ इति कृत्याशयं सव्याचष्टे इत्यादीनाच्
व्यार्थस्य स्त्रीत्वमिति तेषां पदान्तरं विनापि स्त्रियां वर्त्तमानत्वेन व्यावर्त्याभाव इति भाव: आख्याग्रहणमपहायेति नित्यत्वात्यकमपहायेत्यर्थ:
स्त्रीशब्दमात्रमिति स्त्र्याख्यपदं स्त्रीबोधकावित्येतन्मात्रार्थकं निष्कृष्य पूर्वोक्तार्थमपहाय संबध्यत इत्यर्थ: ॥ प्रदीपोद्योतेऽउक्तम् लिङ्गान्तरविशिष्टेति

अत्र प्रवृत्तिनिमित्तैक्य इत्यस्याकथनेन यत्र प्रवृत्तिनिमित्तभेदस्तत्र शब्दस्य वाचकभेदः सवान्तीति ध्वनितम् तेन कैयटेन इदन्तसम्मतार्थस्यलाभोपायमाह पूर्वभाष्य इति।
स्त्रीविषयावेवयो नित्यमितिभाष्य इत्यर्थ: व्याचष्टे प्रकाशयति शब्दार्थ एव शब्दवाच्य एव सवन्न्वकेवलस्यापि शब्दस्य प्रयोगो यथा स्त्रीत्वस्य प्रतीतिस्तथेष्वादिमात्रप्रयोगेऽपि
भवतीति भाव: व्यावर्त्याभाव इति व्यावर्त्यस्याभाव इत्यर्थ: तन्मतेन व्यावर्त्यन्तु श्रीति कोशात्स्त्रि स्त्र्यादिति नियद्यपि सम्भवति तथापि वार्त्तिकेन प्रथमलिङ्ग ग्रहणं स्त्रीत्वयनेन तु द्
वीरमिति स्वलप्वादिकं व्यावर्त्यं स्त्रोध्यम् इत्याशयस्तदुक्तनेतावारुचिर्ध्वनिता उक्तभाष्यार्क्तीति नादृशार्थाप्रतीतिरिति ह्रस्वघटितवाक्येऽपि स्त्र्याख्य पदमेव सम्बध्यते ननु
स्त्रीत्येकदेश एव आत एव स्त्र्याख्याविति सूत्रे ह्रस्वयोग्रहणमिति पक्षे शाकटयेइत्यत्र गुणेन प्राप्तो नित्यदीसंज्ञा याघिसंज्ञा या बाधितत्वादिति शङ्कां कृत्वा यूस्त्र्याख्यौ नदी

ङिति ङिति चेयङ्‌वङ्‌स्थानौ यूवान्त्र स्त्रीनदीसंज्ञौ न भवतः ततः ह्रस्वौ ह्रस्वौ स्त्र्याख्यौ यू ङिति नदीसंज्ञौ भवतः इयङ्‌वङ्‌स्थानौ वा नेति निवृत्तम् ततो घिर्घिसंज्ञौ भवतः स्त्र्या
ख्यौ यू ह्रस्वौ ङितीत्युक्तम् सतत्पक्षे घिनदीसंज्ञयोरेकविषयत्वादेकसंज्ञाधिकारात्पर्यायेण प्रवृत्तौ शकट्यै शकटये इति भवति सर्वं योगविभागेन समाधाय ह्रस्वदीर्घयोर
विशेषेण नदीसंज्ञां विधाय तस्याः ह्रस्वयोर्घिसंज्ञा बाधिका तस्यां नित्यं प्राप्तायामियं ङिति विभाषारभ्यत इति योगविभागाभावमाश्रित्योक्तम् सतस्मिन्भाष्यग्रन्थे ह्रस्वघटित
वाक्येपि स्त्र्याख्यपदस्यैव सम्बन्धः कृतो न त्वेकदेशस्येति केवलस्त्रीपदमात्रानुवृत्तिर्न युक्ता सर्वं सति मूला सङ्गतिः प्राप्नोतीत्यत्र योजनायाह नित्यत्वार्थकमिति परत्वादित्यत्र वि
शेषाकाङ्क्षानिवृत्तये त्वाह ङेराम इति नच परत्वादौत्वेपि पुनः प्रसङ्गविज्ञानन्यायेन ङेराम् इत्यनेनैव सिद्धमितीदुद्भ्यामिति व्यर्थमिति वाच्यम् पुनः प्रसङ्गविज्ञानन्यायानित्यत्व
ज्ञापनार्थं तस्य सत्वात् तेन सकृद्गताविति नापूर्वमिति बोध्यम् ननु रादेशविषये विशेषचिन्तायामपीति स्वरूपस्य जसि रादेशो बलवत्त्वोद्गुणस्य परत्वादित्यर्थके नजसि शरद।

परत्वादिति ङेराममपेक्ष्येति भावः तिस्रश्चतस्र इति इदं प्रियतिस्रा वित्यादेर्मपर्यन्तस्येति भाष्योदाहृतस्योपलक्षणम् बाध्यसामान्येति इदं चत्र।
त्वङ्क्रोष्टुरित्यत्र भाष्ये स्पष्टम् बाध इति अनन्तरस्येति न्यायाश्रयणेऽन्यस्यैव बाधः स्यादिति बोध्यम् ननु यत्रानेकविधिं प्रति येन नाप्राप्तन्यायाप
वादत्वं निर्णीतम् तत्र व्यवस्थापकाभावेऽपवादाद्व्याप्तिर्न्यायाः प्रवृत्तेश्च भावस्य नकेनापि येन नाप्राप्तिरिति चेन्न किमिदं येन नाप्राप्तिन्यायेन पू
र्वसवर्णदीर्घापवादस्तया प्रथमाद्वितीयामात्रविषयमुत्तरत्र उदित्यपवादस्तया पञ्चमीषष्ठी॥ श्चोगुणपरत्वादित्यनेन सिद्धिर्भविष्यतीत्याशयेनाह इदमिति
इदं मूलस्थम् आदिना प्रियचतस्रावित्यस्य सङ्ग्रहः इदं चेति बाध्यसामान्यचिन्ताश्रयणञ्चेत्यर्थः मूले विशेषचिन्तापक्षे यो दीर्घस्तयो बाधउक्तः सकेवलमध्येऽपवाद
न्यायमात्राश्रयणपक्षे यदि त्वनन्तरस्येति न्यायस्यापि प्रवृत्तिश्चिन्त्यते तदाप्याह अनन्तरस्येतीति अथ विशेषचिन्तायामपि रादेशविषयताव्यापकविषयताकत्वन्त
कस्याप्यस्तीति येन नाप्राप्तिन्यायविषयताया अभावात्सर्वेषामस्य बाधः सिद्ध एवेति बाध्यसामान्यचिन्ताश्रयणं व्यर्थमित्याशङ्क्य ते नन्विति येन नाप्राप्तेति परिभाषा
यां येनेत्यस्य यद्धर्मावच्छिन्नकार्येणेत्यर्थः एवञ्च परस्परत्वावच्छिन्नकार्येऽवश्यं प्राप्ते आरभ्यमाणया तद्बाधप रूपसामान्यबाधे प्राप्ते व्यवस्थापकन्यायविशेषस्य सत्त्वा
द्भवति यथा तथात्र नास्ति कुत्रापि शास्त्रे स्वविषयताव्यापकविषयताकत्वमन्यस्याभावादिति भावः समाधत्ते किमिदमिति अयम्भावः लक्ष्यानुरोधेन प्रकृते व्याप्तिपक्षआ

सप्तमिन्यक्षे लक्षणस्य भेदेनैकैकलक्षणेन येन नाप्राप्तिन्यायस्य निरूपणं तु शक्यमिति गुण[illegible]इति गुणस्य परत्वादित्यर्थः आप्राप्ति विनिशेषः वक्तव्य इत्यस्य पूर्वविप्रतिषेधेने
ति शेष इति तदभिप्रायः बाध्यसामान्यचिन्तेति एतेन तस्य वार्त्तिकस्य बाध्यविशेषचिन्तायामारम्भः क्वेतद् इति न पूर्वविप्रतिषेधाभिप्रायकत्वं तस्येति सूचितम् किन्त्व भाष्ययोरे
कवाक्यत्वोपपत्तये शरीरे ज्ञादृत्यस्य बाध्यसामान्यचिन्तयेत्यादौ पूरणीयमित्यवयुक्तमित्याह बाध्यसामान्येति क्लिष्टं च्चेतीति एकेन हेतुना सर्ववाधसिद्धावनेक हेतुनामस्य क
ल्पनं क्लिष्टमित्यर्थः अश्रुतत्वादिति अङ्गस्याश्रुतत्वात् तस्यान्यस्याश्रुतत्वेन च तु विशेषणत्वेन विशेष्याकाङ्क्षानिवृत्तेरनाकाङ्क्षत्वेनासम्बन्धादिति भावः ननु स्त्रियामन्य
पदार्थत्वेन समुदायस्य स्त्रियां वृत्तिर्न त्ववयवयोः स्त्री च तु शब्दयोरिति स्त्रियां वर्त्तते यश्चेत्यसङ्गतमतो भावं व्यनक्ति अजहदिति त्रिशब्देनापीति अपि नाङ्गस्य समुच्चयः

मात्रविषयसुतरूक्तो डीति गुणापवादत्वया सर्वनामस्थाने डि मात्रविषयमिति संज्ञायेत्व्यवस्थाकांक्षया तन्न्याय प्रवृत्तेः सूपपादत्वात् तन्निर्मूलत्वमि
ति अस्मिन्नादेशो वक्तव्यो गुणपरत्वादित्येतत्सूत्रस्थवार्तिकं मूलमिति न वाच्यम् बाध्यसामान्यचिन्तामाश्रित्य तत्रत्याख्यानस्य त्वत्सूत्रे भाष्ये ध्वनित
त्वेन तस्य दृढमूलत्वाभावात् बाध्यसामान्यचिन्ताश्रयणे एव तस्य मूलत्वौचित्याच्चेत्याह क्लिष्टं चेति नाङ्गस्येति तस्याश्रुतत्वात् स्त्रियां वर्त्तते यश्चेति
अजहत्स्वार्थायामन्यपदार्थस्य त्रिशब्देनाप्युक्ततया तस्य स्त्रियां वृत्तिः न चेदं स्त्रीत्वं पदान्तरसापेक्षतया बहिरङ्गमिति वाच्यम् त्रिशब्देन सर्वत्र स्त्री
रूपार्थप्रतिपादनेन तात्पर्यग्राहकस्यापेक्षितत्वया अन्तरङ्गाभावादिति भावः [illegible] स्त्रियां तत्र च वर्त्तते इति पुंनपुंसकयोर्वर्त्तते इत्यरुक्तविरुद्धमिति
भावः अजहत्स्वार्थापक्षेत्विति गुणोक्तार्थे रुचिध्वनिता॥ नच स्त्रीनिष्ठसङ्ख्यासमर्पकयोरित्यर्थेन नयोः स्त्रियामित्येतद्विशेषणवैयर्थ्यमिति वाच्यम् स्त्रि
यां वर्त्तमानयोरित्यर्थस्य तदङ्गस्येदर्शनेन तद्रीत्यास्य दोषस्याभिधानात् अन्तरङ्गत्वस्य गतस्य वाच्यार्थगतं वा स्त्रीत्वं तत्रैवादेशो न तु पदान्तरसन्निधानजन्यप्रतीतिविषया
स्त्रीत्वदृश्याश्रयिका माशङ्काम् निराचष्टे न चेति बहिरङ्गमिति एतेनान्तरङ्गस्य पुंस्त्वं नपुंसकत्वं च न देवकार्यस्य प्रयोजकम् न तेनादृशम्बहिरङ्गमतएव पञ्चाजीत्यत्र नटा
विति सूचितम् तात्पर्यग्राहकान्तरानपेक्षप्रतीतिविषयत्वमन्तरङ्गत्वं तच्च स्त्रीत्वेनासीत्याशयेन तदुक्तिं निरस्यति त्रिशब्देनेत्यादिना ननु कथम् पुंनपुंसकवृत्तितासङ्ग
च्छतामिति मूलासङ्गतिः यदि पुंनपुंसकवृत्तित्वाभावस्यादेशप्रवृत्तौ निमित्तता स्यात्तदा पुंनपुंसकवृत्तित्वाभावाभावाभिन्नस्य पुंनपुंसकवृत्तित्वस्यादेशाभावप्रयोजक

विशेषोपादानमफलमितिभावः समुदायस्वरकत्वेन स्त्रीयां यद्यपि वृत्तिस्तथापि त्रिशब्दमात्रेण पर्याप्तसम्बन्धेन स्त्रीवाचकत्वम्प्रकृते च नाह्शी विवक्षाभिप्रेतेत्याशये नशङ्कते यद्यपीति तुल्यमिति प्रियत्रिरित्यादावुक्तयुक्तिद्वयकृतभेदाभावद्दृत्यर्थः स्पतेन ग्रन्थे नयचित्यादिनायत्प्रसादकारमतं दर्शितं तन्नदेवयुक्तन्नतु मूलोक्तमिति दर्शितम् ॥ःः॥ नन्विकोचीति सूत्रेऽज्ग्रहणाभावेऽस्यामादौ नुमः प्रवृत्तिस्वीकारे याद्दृष्टापत्तिः सत्यपि नुमितल्लोपसम्भवादित्यनेन दर्शितासा न युक्ता पञ्चत्रपुभ्यामित्यादौ परत्वान्नुमि तस्य लोपेऽपि स्वरविधानलोपस्यासिद्धत्वेनानिगन्तत्वाद्दिगन्तकालेत्यादिसूत्रविहितस्वरानापत्तेस्तस्मात् पञ्चेति प्रकृतिस्वर इति सिद्ध इति शेषः अन्तरङ्गत्वादिति नुमागमापेक्षयान्तरङ्गत्वादित्यर्थः नुमो विभक्तिसापेक्षत्वेन बहिरङ्ग इति भावः एतच्च नुमइगन्तत्वविघातकत्वमभ्युपेत्योक्तम् नन्वकृतव्यूह

पंचत्रपुभ्यइत्यादौ समुदायभक्तो नुम् नावयवस्येगन्तत्वविघातक इति स्वान्तोत्तरपदादिगुत्वप्रयुक्तपूर्वपदप्रकृतिस्वरोऽन्तरंगत्वात्पूर्वमेवस्व रप्रवृत्तेश्च अकृतव्यूहपरिभाषा चानित्या अतिराभ्यामित्यत्र पिनुमं बाधित्वा परत्वादात्वं वृद्धौ त्वेयत्र वृद्धिशब्देन विहितवृद्धेरेव ग्रहणात् न पूर्वविप्रतिषेधेन नुमिति शंक्यम् प्रियतिसृभ्यामित्यादावपि नुमः परत्वात्तिस्रादेशस्य ऐनेन निर्दिश्यमानस्य त्रिशब्दस्याव्यवहितत्वादादेशो न स्यादित्यपास्तम् सुचीनामित्यादौ नुम् त्विरिति पूर्वविप्रतिषेधेन सकृद्गतिन्यायेन नुमोऽप्राप्त्या नत्वे न्द्दीत्तिति नियमाद्दीर्घो न स्यादिति न शक्यम् बहुभिः कुलैरित्यत्र नुमिषट्ट्वेऽपि मत्युपोतममित्यस्य प्राप्त्या तदभावेऽपि बहुशब्दस्यान्तोदात्ततया न स्वरे विशेषः ॥ यदि भावयतार्हि पूर्वस्वरो न भ

विष्यतीत्याशङ्कायामाह अकृतेति अनित्या क्त्वोरिति सूत्रे सतुक्ग्रहणादिति शेषः तथा चासिद्धमिति परिभाषया नुमः पूर्वस्वरो भविष्यतीति भावः नन्वेवमप्यतिराभ्यामित्यादौ नुमः समुदायभक्ततयाऽवयवस्यैशब्दस्य हलादिविभक्तिपरत्वाभावादात्वं न स्यादत आह अतिराभ्यामित्यत्रेति नन्वाकारस्य वृद्धिसंज्ञकत्वेन पूर्वविप्रतिषेधेनादौ नुमागम एव स्यादित्याशङ्कां वारयति वृद्धाविति उक्तरीत्या प्रियतिसृभ्यामित्यत्र तिस्रादेशप्रवृत्तिशङ्कां वारयति प्रियेति नन्वेवमपि सुचीनामित्यादौ पूर्वविप्रतिषेधेन नुटि सति नुमागमेन लोपे तस्यासिद्धत्वादिन्नन्तत्वेन दीर्घो न स्यादिति शङ्कां वारयति सुचीति तथा च लक्ष्यानुरोधेन सकृद्गतिन्यायस्यैवप्रवृत्त्यादौ वर्धिर्ह्रासो भविष्यतीति भावः बहुभिरित्यत्र नुमागमेन लोपेऽपि तस्यासिद्धतया नान्तसङ्ख्यावाचकत्वेन षट्त्वात्षट्त्रीति स्वरापत्तिरिति शङ्कां वारयति बहुभिरित्य

षष्ठेपि नलोपस्यासिद्धत्वात्षट्त्वेपि तदभावेपीति अजग्रहणसत्त्वे तदभावेपीत्यर्थः अन्नोदात्तत्वेति फिट्त्वेनेत्यादिः उत्तरार्थम् तृतीयादिष्विति सूत्रार्थम् युक्त-
त्वात् स्वरितत्वाकल्पनेन तत्रैव पाठस्य युक्तत्वादिति शेषः अन्यत्र भाष्यादौ ननु निषेधानित्यत्वेन प्रियतिसृ शब्दे यदि तिस्रादेशस्तदा — तथैवान ङ्पि स्यादत
आह तथैवेति सन्निपातपरिभाषाया अनित्यत्वे प्रकृते ज्ञापकान्तरं नोपन्यस्तमिति चकारासङ्गतिरत आह चोहेतावित स्थानग्रहणस्यार्थस्योपलक्षणत्वाभि
प्रायेण व्याचष्टे इयङादीति तेन उपलक्षणत्वस्य सूचनेन निषेधसिद्धिरिति श्रियाविन्यादावियङः स्थितेः सत्वादिति भावः उपलक्षणत्वे मानन्तु यूस्त्याख्याविति सूत्र-
स्य भाष्यमेव तत्र हि स्त्र्यर्थे प्रध्ये इत्यादौ आसमन्ताद्ध्यायतीत्यर्थके अवयवस्य स्त्रीविषयत्वादित्यर्थे अवयवस्त्रीविषयत्वासिद्धमिति चेदियङ् स्थानस्य निषेधो यण्स्थाने
पि स्यादवयवस्येयङ् स्थानत्वादित्याशङ्क्य सिद्धन्त्वङ्गरूपग्रहणात् यस्याङ्गस्य इयङुवङौ भवतस्तस्येदङ्ग्रहणमिति न चैतस्याङ्गस्य इयङुवङौ भवत इत्युक्तम् वामि
अत्र केचित् वाचिद्धस्वश्चेत्येकयोगस्य वक्तव्ये वामि ङिति ह्रस्वश्चेति सूत्रद्वयकरणं किमर्थमिति चिन्तनीयमिति अत्राहुः श्रियै श्रिया इत्यादावाट् सम्पादकत्वयानदी

नचोत्तरार्थम् तत्रैव कर्तुं युक्तत्वादित्यन्यत्र विस्तरः प्रियतिसृ इति तथैव भाष्ये उदाहृतत्वेन नानडिन्तलुमतेति निषेध एवेति बोध्यम् अनित्यत्वे
प्रमाणमाह नपासेति चोहेतौ षष्ठीसमास इति इयङादिस्थित्यधिकरणत्वेन क्वचिद्दृष्टाविन्यर्थस्तेन हे श्रीरित्यादौ निषेधसिद्धिः॥ ७ ॥

संज्ञायाश्चरितार्थाया श्रीणामित्यत्र नुट्प्रयोजकत्वन्न स्यात्सन्निपातपरिभाषाविरोधादिति सुदत्यावि त्यादौ नद्यृतश्चेति कवापत्तेश्चेति पर आह परेतु सूत्रद्वयकरणमुभयोः
सूत्रयोर्विभिन्नव्यवस्थासिद्धये इति कल्प्यते वामीति सूत्रवृत्तावङ्गस्य स्त्रीत्वे स्त्रीत्वेव ङितीति सूत्रन्तु यदा ह्रस्वौ प्रवर्तेते तदा ह्यियङुवङ्स्थानिनोः ह्रस्वस्य च तद
ङ्गस्य च स्त्रीत्व एव न चैवं सति श्रीशब्दात्क्विनि लुपि च श्रियै ब्राह्मणाय श्रियै ब्राह्मणायेति न स्यात् इयङ्स्थानिनः पुंस्त्वादिति वाच्यम् लुपि युक्तवदित्यनेन प्रत्यया
र्थे निष्टलिङ्गप्रयुक्तकार्याभावस्यातिदेशात् एवञ्च प्रत्ययार्थनिष्ठयत्पुंस्त्वन्तत्प्रयुक्तस्याङ्गस्य स्त्रीत्व एवेति नियमप्रयोज्यस्य विकल्पाभावस्याभाव एव यथा च त्वाः
पश्येत्यत्र प्रत्ययार्थनिष्ठपुंस्त्वाभावातिदेशेन नत्वाभावो भवति तद्वत् न चैवञ्च त्वन्त्वाम्भिरूप इति भाष्यीयप्रयोगस्याप्यसङ्गतिः विशेषणानाञ्चाजातेरित्यनेन विशेषणे
पुंस्त्वाभावातिदेशस्य प्राप्तेरिति वाच्यम् मनुष्यलुपि प्रतिषेध इत्यनेन प्रतिषेधात् एवञ्च विशेष्यस्य न्यायप्राप्तयत्पुंस्त्वन्तदवच्छिन्नसामानाधिकरण्यादभिरूपपद

प्रयोजनान्यथासिद्धिप्रदर्शनन्तु शिष्यबुद्धिवैशद्यार्थमेतदेव परिभाषाया आवश्यकत्वाभिप्रायेण तत्सूत्रव्याख्यानशेषे उदात्तनिर्देशात्सिद्धमित्युपसंहारः कृतो भगवता
तयापरिभाषया हंसोऽव्यसकदित्यत्र दोषपरिहारस्तु न सम्भवति अन्त्यसदेशानन्त्यसदेशयोर्युगपत्प्राप्त्यभावेन तस्याः प्राप्त्यभावात् नच हंसइत्येतस्मिन्द्वये याशीति रू
त्वात्तयैव हंसशिरासीत्यत्र दोषाभावसिद्धेः नन्त्यविकार इति परिभाषायास्तत्र सञ्चारो विफल इति वाच्यम् सामेति सूत्रस्य यथाशास्त्रतार्थस्वाभिप्रायकत्वात् पारिभाषिका
स्यस्य अन्त्यात् व्यवहितपूर्वस्य श्रीपायेत्यत्र सन्निपातपरिभाषया दोषाभावप्रतिपादनं यत्परममूले कृतन्तदुपपादनमवर्णमाश्रित्येत्यादिना मूले कृतन्तन्नोपपद्य
ते यादेशोषजोव्यसह्रस्वाकारस्य दीर्घेणैव निवर्तनात्तस्यासत्त्वेनातो धातोरित्यनेन तदनिवर्तनादतो भावव्यनक्ति ह्रस्वत्वविशिष्टमित्यादिना ॥ ॥ तत्र श्रीपायेत्यत्र अ

यादेशः तदन्त्यत्वेनत्र यद्यपि कष्टायेति निर्देशप्रापितदीर्घेण ह्रस्वत्वांशो निवर्तितस्तथाप्यवर्णत्वमादेशेनुवर्तते तदपि चेल्लोपेन निवर्त्यते तर्हि
परिभाषाविरोधः स्पष्ट एवेति भावः साध्य इति गाधातोः ष्ट्रे गुणेनाकारे आद्ध धातुकोपदेश इत्व त्वाभावादतो लोपाभावेपि परस्रूपेण सामगास्त्
सिद्धे गायोष्टकः कित्करणाल्लिङ्गादाकारस्य गुणो नेति व्यर्थं तत्रेग्ग्रहणमिति भाष्ये उक्तम् कैयटेनेति सामगायेत्यत्रासनिटकः कित्त्वे सका
देशस्य पूर्वान्तवत्त्वेन ग्रहणादाकारस्य धात्ववयवत्वेनातो लोपः स्यात् कित्वे त्वातो लोप इत्याल्लोपे धात्वनवयवत्वादप्रवृत्तिरित्याशङ्क्य सन्निपात
परिभाषया कित्वेपि नातो लोप इति तेन प्रतिपादितम् शब्दकौस्तुभे इति पूर्वोक्तभावस्तत्रोक्तः ॥ ॥ वर्णत्वम् आत्वजातिः अनुवर्तते अस्ति ग्रहणा

दिति पूर्वान्तवद्भावलभ्य धात्ववयवत्वस्यातः परस्मिन्नित्यनेनाकारे ऽतिदेशादित्यर्थः दत्वा शङ्केति तद्यात्रया चरितार्थ एरकः कित्वङ् कथमाकारस्य गुणो नेत्यर्थे ज्ञा
पकस्य विषयतीति भावः सन्निपातपरिभाषयेति एतत्परिभाषाप्रवृत्तिस्त्वोसरीत्यैव अकित्वेपीति एतेन कित्वस्य ज्ञापकतोपपादिता कौस्तुभोक्तरीत्योक्तज्ञापकताद
स्वरड्यति परेत्विरादिना व्याप्यात्वजातीति व्याप्या ऽत्वजातिर्यस्मिन्नित्यर्थः यादेशो लोपस्यानिमित्तमित्यर्थः परिभाषया न लभ्यते जातिः पदार्थ इति पक्षेत परस्त्र
स्य जातिपक्षप्राप्तसवर्णग्रहणवारकं त्वस्यैव सत्वेन यत्र यत्र तत्परकरणं तत्र सर्वत्र व्याप्यजातिनिर्देश एव बोध्यते सवर्त्रप्रकृतेडे थेद्ध्यस्य प्रवृत्तौ यादृश व्याप्य
जातिविशिष्टसन्निपातो निमित्तं तस्य दीर्घेणैव निवर्तनात् हि घातकत्वं न लोपस्यास्तीति भावः ननु परिभाषायाः सन्निपातलक्षणो विधिः स्वनिमित्तसन्निपातस्य

साक्षात्परस्परयायद्विधानकत्वस्यानिमित्तमित्यर्थोस्त्विति परिभाषाप्रवृत्तिः स्यादेवेत्यत स्तत्परिभाषार्थमाह सन्निपातपरिभाषायाश्चेति परिभाषाघटकतत्पदस्य यच्छब्द
सकाङ्क्षत्वेनयच्छब्दार्थि सन्निपातनिमित्तककार्यमग्निमकार्योपजीव्यप्रवृत्तत्वस्यतस्यनिमित्तस्यतादृशमग्निमङ्कार्यविघातकत्वेनेत्यर्थस्यावलभ्यते सवत्रत्वतमूलो
मारीतिमादायपरिभाषायाः सञ्चारः किन्तुयजादिप्रत्ययत्वावच्छिन्नसन्निपातनिमित्तोदीर्घोलोपेनिमित्तन्नभवेतीत्येवपरिभाषायाः प्रवृत्तिर्भवतीत्याशयः ननुलु
कः सर्वापेक्षया बलवत्त्वसिद्धान्तसिद्धतया तुल्यबलत्वेन पूर्वविप्रतिषेधेनेत्ययुक्तमत आह अन्तरङ्गेति मूलासङ्गतिम्परिहरति अन्येति तत्र भाष्ये अन्तर
नान्यायसञ्चारेणैवसमाधानमुचितन्तुविप्रतिषेधशास्त्रेणेति ध्वनितम् मूलासङ्गतिं शेषपूरणेनपरिहरति द्वितीयेति ननुपुंवद्भावेनपुंसियत्कार्यं विहितन्तद्

भेदेन्तु व्याप्यात्वजातियजादिसन्निपातनिमित्तो दीर्घोनस्वसन्निपातविघातकस्योपनिमित्तं सन्निपातपरिभाषायाश्च सन्निपातलक्षणविधि
प्रवृत्तेः प्राक् तन्निमित्तभूतोयः सन्निपातः संबंधस्तद्विघातकस्यस्यातिरिक्तस्यस्त्वयमनिमित्तमित्यर्थ इत्याहुः पूर्वविप्रतिषेधेनेति अन्तर
ङ्गानपीत्यस्योपलक्षणमिदम् अन्तरत्यवार्तिकानुरोधेनत्वेन दुक्तत्यदादिभ्यश्चेति वक्तव्यमितिद्वितन्त्रवार्तिकम् नकुत्वमितिस्यादिति द्वि
तीयैकवचने इतिशेषः प्रथमैकवचनेतुसकुत्वमितिस्यादिति बोध्यम् तुमन्हस्वयोरिति पुंसिविहितस्यभावस्यातिदेश्यस्याभावात् ह्रस्वा
नुमोनिषेधोतिदेशसामर्थ्याद्व्याप्तिन्यायाश्रयणाच्चेतिभावः नविषयस्येतिस्वरस्यतुन्ननिषेधोभिन्नकर्तृकत्वात् विषयपदेननपुंसकत्वाभा
वेपितत्प्रवृत्त्यङ्गीकाराच्च नुमोभावादित्यिह्रस्वाभावेननाभावाभावाच्चेयङिति भावः उपसर्जनह्रस्वस्यचेति ॥ ﴾ भावस्वत्वलभ्यतेनत्वभावातिदेश इत्यत
आह पुंसीति अभावव्यातिदेशेहेतुमाह व्याप्तिन्यायादिति स्वराभावस्याप्यतिदेशोभविष्यतीति शङ्कांवारयति नवितिभिन्नेति पाणिनिभिन्नशान्तनवकर्तृक
त्वादित्यर्थः ननुपाणिनिनायथाऽऽयामन्त्रेतिसूत्रेणान्याचार्यविहितप्रत्ययानुवादेनापादेशविधानङ्कृतन्तथात्रान्यविहितस्वराभावस्याप्यतिदेशः स्यादत
आह विषयपदेनेति ह्रस्वान्तस्यस्त्रीविषयस्येत्यतोविषयपदानुवृत्त्यैवसिद्धेपुनर्विषयपदोपादानसामर्थ्येनातिदेशिकत्त्विङ्गान्तरयागापत्तस्यप्रवृत्तिरित्य
र्थोभविष्यतीतिभावः न्यूनतामपिहर्तुमाह ह्रस्वाभावेनेति एतेननुमोऽभावेपिपरत्वान्नाभावेनेयङादेशस्यवाधापत्तिरिति कस्यचिदुक्तिः प्रत्युक्ता ॥

उपसर्जनह्रस्वस्यैव यथाबाधस्तथोपपादयति ईयसइत्यादिना प्रत्यासत्त्या तत्रपाठात्तच्छेषत्वस्य स्फुटितिप्रतीतिरित्येव प्रत्यासत्त्या तदेवतद्वार्तिकमेव सवर्त्त्रानुपूर्व्या त्यासत्त्यवात्रनत्वर्थमेदन्तीयसोबहुव्रीहेर्नेतिवचनन्निर्मूलमितिशङ्कानवकाशेतिसूचितम् अन्यान्नसाधकन्निरस्यति नचेति व्यर्थमिति सवर्त्त्रतृतीयादिष्विति सूत्र स्यपुंवदितिपदद्वयत्रापितथास्त्विति भावः वार्तिकेष्विति सतिद्विशेषोपादानेनसूत्रेषुलाघवगौरवविचारार्थंवार्तिककारस्यभाष्यकारस्यचप्रवृत्त्या तत्रतथाकल्पनमुचित मितिध्वनितम् अत्र ञ्याद्दुरित्युपादानविषये तदिति पुंवद्वचनमित्यर्थः तेनतादृशभाष्येण अस्य उपक्रान्तदीर्घत्ववचनस्य ननुदीर्घत्वविधायकवचनस्याप्युभयवा

ईयसोबहुव्रीहौपुंवदितिहिभाष्येपठितंईयसः परस्यस्त्रीप्रत्ययस्यबहुव्रीहौ विद्यमानस्यपुंवत् पुंविषयस्यईकारस्ययथानह्रस्वस्तथास्यापीतितद र्थः ईयसंतोहिद्वितीयः स्त्रीप्रत्ययस्तदन्तान्तेपुंवदितितुनार्थः बहुव्रीहेः पुंवत्त्वेपिउपसर्जनस्यश्रेयसीशब्दस्यस्त्रीप्रत्ययान्तत्वानपायेनोपसर्जन ह्रस्वस्यदुर्वारत्वापत्तेः एवंचप्रत्यासत्त्यास्त्रीप्रत्ययनिमित्तकगोस्त्रियोरित्यस्यैवतेनाभावातिदेशइतिभावः तदेवाथतोऽत्रपठितंनचनेत्यवसिद्धेपुं वद्वचनंव्यर्थम् वार्तिकेषुलाघवगौरवविचाराभावस्यतत्रतत्रभाष्येध्वनितत्वादितिबोध्यम् इत्याद्दुरिति अत्रारुचिबीजंतुईयसश्चेति सूत्रेभा ष्येईयसउपसर्जनस्त्रीप्रत्ययस्यदीर्घत्वंवक्तव्यम् बहुश्रेयसीपुंवद्वचनात्सिद्धमित्युक्तम् तेनास्यनपुंसकह्रस्वनिवृत्त्यर्थत्वंलभ्यते अन्य थावचनेनवचनप्रत्याख्यानासंगतिः मतमनुमतेनपुंसकह्रस्वनिवृत्त्यर्थमावश्यकत्वादितियुज्यतएव तेनास्यप्रत्याख्यानंदीर्घत्वंहिप्रत्यासत्त्योप सर्जनह्रस्वत्वापवादः सामान्यतोह्रस्वमात्रापवादत्वेहिप्रत्याख्यानासंगतिरितिदिक् पूर्वं विप्रतिषेधपरभाष्यमिति ॥ ॥ धकन्त्वमस्त्वित्यतआह दीर्घ त्वंहीति प्रत्यासत्त्या उपसर्जनपदोपादानरूपप्रत्यासत्तिनिमित्तेन प्रत्याख्यानपरभाष्यप्रामाण्येनपुंवद्भावबोधकवचनस्थलेनप्रत्यासत्तिर्विवक्षिता अन्त्रतुसावि वक्षितेतिभावः नचैवमपुंवद्भावेनह्रस्वमात्रबाधवज्जश्शसोः श्रियावित्यादिबाधोपिस्यादितिबहुश्रेयसीनौबहुश्रेयसीनीत्यादिरूपाणामसिद्ध्यापत्तिरितिवाच्यम् ह्रस्व प्रकरणेपाठेनतत्स्वभावबाधकत्वस्यैवकल्पनात् अतएवाह हीति मूलेपूर्वविप्रतिषेधेति वृद्धौत्वेतिपूर्वविप्रतिषेधसूचकभाष्येत्यर्थः ॥ ७ ॥ ७ ॥

ननु यत्नोदात्तादिशब्दोच्चारणन्नैव भेदप्रतीतिर्यत्र तेषां शब्दानामनुच्चारणन्तत्र यत्नाभावादविवक्षेति चेदुक्तं ऊमित्यत्र उदात्तादिशब्दोच्चारणाभावादनुनासिकोच्चारणे
ऽपि निरनुनासिकः स्यादत आह उञ ऊँमिति एतेन उदात्तादिशब्दोच्चारणमेव न यत्नः किन्तु प्रयत्नाधिक्यमेव विवक्षितमिति यत्र प्रयत्नाधिक्याभावस्तत्राविवक्षाऽन्यत्र तु
विवक्षैवेत्यवज्ञाप्यशरीरमित्यनुनासिकस्य ऊमित्यस्योच्चारणं विवक्षार्थमभवतीति भावः अत एव वचनसामर्थ्याद् उदात्तनिपातनङ्करिष्यत इत्यादीनामुपपत्तिः सर्वेषाम् सर्वेव्याख्या
हृणाम् ननु यदि निपातनस्थले विशेषोच्चारणमेव विवक्षाहेतुस्तदा पथ्यादीनामन्यस्यानुनासिकत्वात्तदनुरूपेऽनुनासिकयवोच्चारयितव्ये निरनुनासिकोच्चारणमेव विवक्षा
भावहेतुर्भविष्यतीति प्रश्लेषो व्यर्थ इत्यत आह भेदकत्वेपीति दोष इति स्यादिति शेषः ननु तत्परसूत्रे प्रत्ययग्रहणानुवृत्तिरस्तु तस्य च भाष्यमानभिन्नबोधकत्वात्स्त्विति नानु

उञ ऊँ इत्यत्र नासिकाव्यापारेण केशाधिक्येनोच्चारणादानुनासिक्यं विवक्षितमिति सर्वेषां समासस्य भेदकत्वेऽपि तत्परसूत्रस्यानणि विध्यर्थत्वाद्दोषः
तत्राप्रत्ययग्रहणानुवृत्तौ मानाभावादित्यपि बोध्यम् अननुवर्तित्वाच्चेति एवं च तत्र सूत्रे तत्संबंधे मानाभावः एवञ्च भेदकत्वेऽपि तत्परसूत्रस्यान
णि विध्यर्थत्वाद्दोष इति भावः नान्यथेति एवं च गुणानामभेदकत्वेऽपीत्युपक्रम्य तादृशयुक्तिरसंगतेति भावः सूत्रे शेषे शिल्पादिति सवर्णग्रहणाप्राप्तेरि
ति भावः तद्विशिष्टस्येति अ इति स्थानिश्रवणात्तदन्तविध्याद्यभावाच्चेति भावः अयस्मिन्नः स्त्रियामित्येषः एवं च ऋकृपूरित्येषते निषेधेनापि वारयि
तुं शक्य इति भावः योन्यश्चेति योन्य इति सूत्रमित्यर्थः चादिलोपः श्वा श्वामिति तदन्तग्रहणादिति भावः न भवतीति न च टिलोपेन विभक्तिनिमित्तको
ऽन्यत्रापि तत्प्रवृत्तिरिति वाच्यम् प्रकृतोदाहरणे विभक्तिनिमित्तत्वमात्रेण तत्प्रवृत्तेः॥ नासिकस्य प्राप्तिरत आह नत्रेति तत्र तत्परसूत्रे तथा तत्परसूत्रमन

णीव विधीयमाने विविध्यर्थमस्त्विति भावः एवञ्च तस्य तत्रानुवृत्य भावस्य भाष्यकारसम्मतत्वेच तत्संबंधे अप्रत्ययग्रहणसम्बन्धे भेदकत्वेपि शुद्धैकव्यक्त्युच्चारण
स्य भेदकत्वेपीत्यर्थः आमादृश्युक्तिः सर्वेषां सङ्ग्रहप्रतिपादकशब्दानुच्चारणरूपा उक्तिः निषेधादाकारेणानुनासिक इत्यसङ्गतम् निषेधस्य प्राप्तिपूर्वकत्वेन प्रकृते प्राप्ते
रेवाभावेन तथाभिधानमसङ्गतमित्याह सवर्णेति मूले तद्विशिष्टस्येति घटकत्वसम्बन्धेन तथकारविशिष्टसमुदायस्येत्यर्थः अनयोक्तं दन्तविधिना समुदायस्य प्राप्तिमाह
तदन्तेति विभक्ताविति परिभाषाया यस्मिन्कार्ये विभक्तिरेव निमित्तन्तत्रैव प्रवृत्तिरित्याशङ्काम् निराचष्टे नचेति अन्यत्र विभक्तिभिन्ने प्रातिपदिकप्रकृतिकःशादि विभक्ति

अत एव नावैतैव परिभाषायाः प्रवृत्तिसत्त्वादेव श्व्युवेत्यादेरिति श्व्युवेत्यादि शब्दनिमित्तस्य नगोश्व्निति निषेधस्य सम्प्रसारणस्य चेत्यर्थः श्रुत्यादूर्ध्वादि प्रथमस्यो
दाहरणं युवतीः पश्येत्यादि द्वितीयोदाहरणम् द्वितीयविधायक सूत्रे ऽतिप्रसङ्गपरिहारायाल्लोपोन इति सूत्रादनद्व्यस्यापकर्षेणानाश्रयणीयः श्रुत्येत्यादौ निषे
धस्यानिवृत्तये सा परिभाषा ऽवश्यमाश्रयणीया तथैव निर्वाहादिति भावः अत्रोभयोरपि सूत्रयोर्विभक्तौ परतः प्रवृत्तिमात्रेण परिभाषायाः प्रवृत्तिः सूत्रेत्यः पन्थाद्
ति मघात्यस्वीकारे युवोरनाकाविति सूत्रभाष्ये विभक्ताविति परिभाषायाः प्रयोजनकथनावसरे पथी मथीइत्यत्रात्वनत्युदाहरणत्वेनोपन्यस्तन्नतः परेण न के
वलः पथिशब्दः स्त्रियामस्तीत्युक्तन्तदस्य पथीशब्दस्य स्त्रियां सत्त्व सम्भवाद्विरुध्यत इति चेन्न सतदज्ञानतासकदेशिनातथोक्तत्वात् ततो भगवता स्त्रयथी
त्युदाहृतम् केवलस्त्रियांत्वभावेपि तदन्तस्य सम्भवतितत्र प्रयोगद्वन्ताश्रयः नचैतदाचारक्विपापि सम्भवतीति वाच्यम् हलन्तेभ्य आचारक्विपोनभिधानात् यद्वा न केवले

अत एव युवोरनाकाविति सूत्रे भाष्ये श्व युवेत्यादेः परिभाषाफलत्वेनोपन्यासः सङ्गच्छते परत्वादित्यभ्युच्चयः न चाभिव्यक्तपदार्थाद्वतिन्यायेनक
थमत्वाचादीनां प्रवृत्तिः तस्य न्यायस्य यद्वकार्यविषयत्वेन तत्परकरणादनित्यत्वे न चेह प्रवृत्तेः नचनकेवलः पथिशब्दः स्त्रियामस्तीति युवोरनाका
विति सूत्रस्थभाष्यप्रामाण्यादेभ्यः क्वजन्तेभ्यः क्विपोनभिधानमिति वाच्यम् स्त्रीप्रत्ययाप्रवृत्यात्तदङ्गीकारेप्यस्तेः विभक्तौ लिङ्गविशिष्टाग्रहणमि
त्येतत्प्रयोजनकथनावसरे हि भाष्ये तदुक्तम् नयणिति ननु तदभावेपीयङ् दुर्लभः॥ त्यस्यस्त्रीबोधकप्रत्ययान्तो नेत्याशयः कल्पः वक्तृतोऽटिति प्रती
यमानतदर्थविरोधादेतदसङ्गतमिति अस्याप्यभिधानेनदृढ्मानमिति बोध्यम् ननु समवलस्थले व्यवस्थापकत्वम्परत्वस्य नित्यानित्ययोस्तु तथात्वविरहात्कथन्तत्र
परत्वस्य नियामकत्वमतस्त्राह अभ्युच्चय इति अर्थवादवाक्यवत्प्रकर्षमात्रतात्पर्यकस्तथा वा दोनत्तु स्वार्थतात्पर्यकइतिभावः अभिव्यक्तेतिन्यायस्य सामान्यतः प्रवृत्त्य
भिमानः शङ्कां निरस्यति नचेति स्वीयसिद्धान्ताभिप्रायेणाह तस्येति प्राचीनरीत्या ऽऽह तत्परकरणादिति पूर्वोक्तार्थं द्रढयितुं शङ्कासमाधाने करोति नचेत्यादिना स्त्रीप्रत्य
याप्रवृत्त्येति एतेन स्त्रीप्रत्ययस्तत्रत्वानिकोनास्तीत्यर्थः सूचितस्तथा च तादृशस्त्रीप्रत्ययान्तो नास्तीति फलितम् मूलेपथ्यिति वाविस्पष्टन्त्यादिशकुल्त्वेनेशेर्न्यर्द्दस्येव सिद्धे इतो रि राम
द्वचनमृभुक्षिन्नर्थमिति पूर्वग्रन्थविरोध इति पुनर्वाच्यम् ऋभुक्षिन्नर्थमित्यस्यैतदुपलक्षणत्वात् स्पृनिमित्तकविधावित्यर्थमात्राभिप्रायिकामाशङ्कां निरस्यति न

अनरूप नलोपः स्वविति सूत्रे सुत्वतद्व्याप्यधर्मावच्छिन्नविधेरेव ग्रहणादेव षत्वइति कर्तव्यइति शेषः असिद्धत्वन्नेति स्वविधावसिद्धत्वस्यापूर्वविधित्वन्नेत्यर्थः एतेन षत्वविधिः परेण नलोपशास्त्रनलुपूर्वमिति कथं षत्वे कर्तव्ये नलोपासिद्धत्वस्य प्राप्तिरिति परास्तम् अस्यग्रन्थस्य स्वरादिविधौ यथानियमत्वन्नशास्त्रविधावपि तदेकवाक्यतया नियमत्वमेवेत्याशयात् तच्च नियमत्वं सुब्विधिशब्दस्य सुत्वतद्व्याप्यधर्मावच्छिन्ननिमित्तकविधावित्यर्थकत्व एव सङ्गच्छत इति तात्पर्यम् तस्याः अङ्गवृत्तपरिभाषायाः अत्वदुर्वारमिति एतदवयवस्य ह्रस्वेकारस्य सन्निपातपरिभाषयेति इयङादेशेदृत्वावच्छिन्नस्य सत्वन्निमित्तन्त्वे येङादेशप्रवर्तत एव यस्यपूर्वेकारस्यात्वस्यातदात हि घातः स्यष्ट एवेति भावः मतान्तरङ्गस्वएडुयति नचेति प्रकृतीत्यादेः पथ्यादि प्रकृतिसर्वनामस्थानरूपप्रत्ययविशेषापेक्षत्यर्थः यणविधौचेवर्णान्त धात्वादि रूपसामान्यस्याजादिप्रत्ययरूपसामान्यस्याचापेक्षेति यणन्तरङ्ग इति भावः यत्र विशेषापेक्षशास्त्रनिमित्तत्वं सामान्यापेक्ष

सुब्विधावन्तर्वर्तिविभक्त्याश्रयनलोपस्यासिद्धत्वेनइवर्णान्ताङ्गाभावादिति वाच्यम् सुत्वतद्व्याप्यधर्मनिमित्तकसुब्विधेरेव ग्रहणात् अत एव दण्डिन्यादौ नुमत्वेन नलोपस्यासिद्धत्वम् नचन्यादेशेऽप्यङ्गवृत्तपरिभाषयानेयङ् तस्याश्चानित्यत्वात् नचेयङि कृते ऽत्वन्दुर्वारं सन्निपातपरिभाषयाऽस्यानित्रित्तत्वं हि घातकबाधेनादोषादिति भावः नच प्रकृतिप्रत्ययविशेषापेक्षन्यापेक्षयान्तरङ्गत्वाद्यणेवस्यादिति वाच्यम् प्रातिपदिकस्याप्यत्र प्रकृतित्वेन यणप्रकृतितन्निमित्तव्याप्यत्वाभावात् ॥ अधिकस्याप्यपेक्षासत्वेनवदिरङ्गत्वव्यवहारः प्रकृते तु नथानेत्याशयेनाह प्रातिपदिकेति अत्र श्रोत्यइत्यत्र प्रकृतित्वेन सर्वनामस्थानप्रकृतित्ववत्वेन हलादेः सोः यणप्रकृतीति यणादेशशास्त्रोक्तप्रकृतित्वतत्रत्यनिमित्तप्रत्ययत्वव्याप्यत्वाभावादित्यर्थः एतेन सामान्यापेक्षशास्त्रनिमित्तत्वनिष्ठव्यापकतानिरूपितव्याप्यत्वाभावः सूचितः विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गमित्यस्य तु यत्र सामान्यापेक्षे विशेषापेक्षशास्त्रीयनिमित्तस्य ततोऽधिकस्य चापेक्षा तत्रैवोक्तव्यापकतानिरूपितव्याप्यतायाः सत्वात्प्रवृत्तिरित्यभिप्रायः परिभाषायामतादृशार्थबोधिकायाः प्रवृत्तिस्तु रुदादिभ्यः सार्वधातुक इत्यत्र रुदि तत्र हि रुदादित्व सार्वधातुकत्वं च निमित्ततावच्छेदकम् तत्र सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं प्रत्ययस्य प्रत्ययत्वज्ञानं चावश्यकमिति या सुडन्तरङ्गः एतन्निमित्ततावच्छेदकधातुत्वप्रत्ययत्वरूपसामान्यधर्मनिष्ठव्यापकतानिरूपितव्याप्यता रुदादित्व

हलादेरपितन्निमित्तत्वेन+मू० ६ शास्त्रनिमित्तत्वस्य व्याप्यतत्रैव सामान्यापेक्षे+टी० ६

सार्वधातुकत्वयोरस्ति वस्तुतस्तु तत्र नित्यत्वाद्यासुडित्येव ॥ ॥ नत्वन्तरङ्गत्वात् विशेषस्य व्याप्यत्वेन तद्व्यापकस्यानुमानेनोपस्थितावपि तस्य निमित्तत्वे मानाभा
वादत एव भाष्यकृतैतादृशान्तरङ्गबहिरङ्गभावस्यासिद्धपरिभाषाप्रवृत्तौ हेतुतानोक्ता न भाष्यानुक्तत्वमात्रन्नादृशान्तरङ्गबहिरङ्गभावस्यानाश्रयणे बीजङ्किन्तु भाष्यान्
रमपि तत्र बीजमित्याह नदोः सः सावितीति तत्र हि विभक्तित्वरूपसामान्यधर्मावच्छिन्ननिमित्तकसत्त्वं नदोरिति तु साविति विशेषापेक्षमिति यथाश्रुतार्थकथानुपपरि
भाषया त्वसा अन्तरङ्गतया पूर्वं प्रवृत्ता तन्त्यस्यैव भविष्यतीत्यनन्त्ययोरिति व्यर्थं स्यात् स च योगविभागे न गुरुभूतेन तत्प्रत्याख्यानमपि त्वथास्यादुक्तरीत्या अनन्त्यस्यैव सिद्धे
रिति भावः सर्वत्रेति स च सुप्तिङ्सुके यदनानुदात्तङित इति सूत्रे लादेशानां पूर्वं प्रवृत्तये सर्वोक्तेत्यभिप्रायेण यत्तु आचार्यत्वात्मके सुब्विधौ नलोपस्यासिद्धत्वेनस्यात्वे पन्थ्या
दिनिरूपमिति तन्न सुपि यो विधिर्नकारेण स समया प्रतिबध्यते तस्यैव तत्र ग्रहणात्स्वरसाहचर्येण तादृशस्य पूर्वमुपस्थितत्वात् थोन्थ इत्यस्य प्रवृत्तिप्रतिबन्धकात्

नदोः सः साविति सूत्रे अनन्त्ययोरित्युक्त्या तत्प्रत्याख्यानाय भाष्यकृता दस इति योगविभागकरणेन च तादृशान्तरङ्गत्वस्य सर्वत्रानाश्रयणाच्चे
ति बोधनात् सावात्वस्येति त्यादेशस्याप्युपलक्षणम् यदि वैजात्यान्नात्राति देश इति ब्रूते तत्राप्याह पन्थ्या इति त्यादेशेति आत्वस्याप्युपलक्ष
णम् नात्वादीति न च नपदान्तेति निषेधः अनान्ततया नः क्ये इति नियमेन संज्ञाविधौ नलोपासिद्धत्वेन चेकारान्ते पदत्वाभावादेतेन पदान्तत्वा
दिकोः सवर्णे इति दूरे अत्वाच्च दुर्वारमित्यपास्तमिति भावः आश्रितत्वादिति ॥ पलम्भेनात्वमात्राभिधाने न्यूनत्वमत आह त्यादेशस्येति वैया
त्यादिति धार्ष्ट्यादित्यर्थः नात्रातिदेश इति अस्ति च एकदेशविकृतन्यायप्रवृत्तिरप्यनिष्टेति न ज्ञायतेः वस्तुतस्तु तदयुक्तम् नान्तप्रकृत्यनुकरणे यिनान्तानां स्यथ्यादीना
मित्यत्र मानाभावेन विकृतावयवनिबन्धनकार्याभावेन तेन न्यायेन पथिन् शब्दत्वातिदेशस्य दुर्वारत्वात् न्यूनतापरिहाराय आह आत्वस्येति निषेध इति पदस्यान्तः पा
दान्त इत्यर्थाभिप्रायेणेयमाशङ्का अनान्ततयेति सम्प्रतीत्यादिः पदत्वाभावादिति कार्यकालपक्षाभिप्रायेणेदम् न चाकडाराधिकारस्थपदसंज्ञाविषये यथोद्देश
पक्षस्यैव स्वसिद्धान्ते सत्त्वेनेदमसङ्गतमिति वाच्यम् यत्र तदधिकारीयसंज्ञाद्वयप्रसक्तिस्तत्र यथोद्देशस्यैवाश्रयणमिह तु न तथेत्याशयात् अत्र उक्तरूपेषु वस्तुतस्तु
सुपदे अन्तः पदान्त इति भाष्यकारीयोक्त्या परपदस्याजादेशस्यैव स्थानिवत्त्वस्य तेन सूत्रेण निषेधादेतत्सर्वं प्राचीनरीत्येति न कापि क्षतिरिह तद्रीत्या ग्रन्थसङ्गमन

सखीयतेः सख्युरितिभाष्यकारोक्त्यभिप्रायेणाह तत्प्रकृतिकेति यण् एरनेकाचिति यण् अकारलोपस्यस्थानिवद्भावादाह क्यजेति अधुनायणत्तु इकोयणचीतिबो
ध्यः नचास्मिन्कर्तव्ये ङिन्निमित्तकयल्लोपस्य बहिरङ्गासिद्धत्वं स्यादिति वाच्यम् बहिरङ्गपरिभाषाया अनित्यत्वात् लोपापत्तिः लोपो व्योरिति लोपापत्तिः नचस्थानिवद्भाव
यलोपे तन्निषेधात् पूर्वविधित्वाच्च निमित्तकस्य त्विति यणादेरिति शेषः इदङ् स्त्रावुपसङ्ख्यानमितिवार्तिकाभिप्रायेण अन्यथाङस्निमित्तकस्य वल्परत्वन्नास्तीति लोपः
स्यप्राप्तेरेवाभावेनेदमनुपपन्नं स्यात् वार्तिकमप्याख्यानेतुवेरपृक्तस्येति सूत्रे वेरिति योगं विभज्य तत्र व्योरित्यनुवर्त्य विप्रत्ययान्तयोर्व्योरिति व्याख्यानेन लोपो बोध्यः।
स्थानिवत्त्वेहीति क्यजल्लोपस्येत्यादिः व्यवधानादिति तेनैव व्यवधानादित्यर्थः तन्निमित्तकः ङस्निमित्तक इत्यर्थः तस्माज्ज्ञाप्यप्रामाण्यात्क्यजाद्यल्लोपे स्थानिवद्भा

**तत्प्रकृतिक सख्युरितिरूपे ङस्निमित्तो यण् क्यजकारनिमित्तकत्वेहि ङिन्निमित्तकलोपापत्तिः ङस्निमित्तकस्य तु बहिरङ्गत्वेनासिद्धत्वान्न**
**लोपः स्थानिवत्त्वेहि व्यवधानात्तन्निमित्तकोपि न स्यात् अनुकूललक्षणेति अत्वादिप्रवृत्तिप्रतिबन्धकन्यायानामनित्यत्वेनैतद्विषये**
**प्रवृत्तिबोधकत्वयेति भावः विशेषयितुमिति विशेष्यसाकाङ्क्षत्वात्तस्येति भावः तत्सामर्थ्याच्चेति तस्येत्यनेन विशेषणसामर्थ्यादित्यर्थः सं=**
**ख्याशब्दे तदन्तत्वासम्भवादिति भावः इहेति अनुवृत्तमिति शेषः सङ्ख्यापरमिति यद्यपि सङ्ख्यासु बहुगणवतुडतिष्वपि तदसंभवस्तथापि लोके सं॰**
**ख्याप्रकारकबोधजनकाः पचादय इत्यतत्त्वेन विवक्षिता इति बोध्यम् किमसिद्धत्वेनेति नल्लोपेकृते पीत्यादिग्रन्थप्रतिपादितेनेति भावः बाधेद**

वप्रवृत्तिरावश्यकीति भावः आत्वादिति आदिना ऽत्वस्थादेशयोः सङ्ग्रहः न्यायानामिति अभिव्यक्तेति न्यायस्येत्यर्थः न्यायानामिति बहुवचनं स्थानिवद्भावसङ्ग्रहाय एवञ्च
कौस्तुभमिति न सार्वत्रिकम् किन्तु क्वौ विधिस्त्रीत्येव तुत्तथेत्यपि बोध्यम् मूले स्त्रीलिङ्गनिर्देश इति बहुव्रीहौ तु नरस्त्रीलिङ्ग निर्देश इत्यर्थः अतएवाह विशेष्येति सं
ख्यापरमित्यत्र यः सङ्ख्याशब्दः स एतच्छास्त्रीयसंज्ञापरो भविष्यति कृत्रिमाकृत्रिमन्यायात् तथाचनतद्बोध्यार्थस्य सान्तत्वमित्याशङ्क्य यद्यपीति तत्त्वेन संज्ञित्वेन विव
क्षिता इतीति उभयगतिरिह भवतीति परिभाषयेति शेषः प्रतिपादितेनेति स्त्रीप्रत्ययप्रकरणस्थेनेति शेषः मूले बाधेदढ इति अत्र बाधेदढ इति छेदः तत्र तत्प्रा
तीयप्रसिद्धिविषयबाधस्यानुपयोगादाह दूषणमिति॥

नन्वविशेषणस्य विशेष्यसम्बन्धित्वात्सर्वत्र ससम्बन्धिकत्वमत आह नित्यमिति नित्यसापेक्षस्थले समासस्य प्रवृत्तौ बीजं दर्शयति सापेक्षस्येति ततः वाक्यात् पूर्वोक्तेति
ऽर्थसाधकमाह तदेवाहेति व्यपेक्षालक्षणसामर्थ्यस्य वाक्ये ऽसम्भवादाह आकाङ्क्षेति तथा चैतादृशस्थले बोधो भवत्येवेति न वृत्तिप्रतिबन्धः गुर्वादीनिति गुरुकुले
ति समुदायावयवत्वङ्गुरोः समुदायजन्यशाब्दबोधीयविशेष्यतानिरूपितविषयताश्रयत्वात् एवञ्चैतादृशस्थले चैत्रादिपदार्थस्य धर्मिपारतन्त्र्येण कुलेनान्वयस्वीका
रेण यद्यपि निर्वाहः संस्पृश्येत्यक्षरस्वारस्यन्त्वोपपद्यते तथापि स्पष्टप्रतिपत्तये आह तद्द्वारकेत्यादि गुरुद्वारकसम्बन्धश्च स्वीयगुरुत्वाद्यात्मरूपो बोध्यः वस्तुतस्तु नित्यसा
काङ्क्षत्वमेव नैतादृशी साऽन्वयेऽपि वृत्तिप्रयोजकम् किन्तु गमकत्वमेवेत्यन्यत्र निरूपितम् इहोपसर्जनस्यान्तपदस्य न तथात्वादाह भायदमिति नित्यसाकाङ्क्षत्वमेवे

अवयवेनेति ज्ञान्तपदावयवेन षकारणकारेणेत्यर्थः समुदायेन ज्ञान्तपदेन ससंबंधिकः नित्यं संबंध्यंतरसापेक्षो यथा गुर्वादिः सापेक्षोपी
ति सापेक्षस्यासमासेऽपि ततो बोधाभावो बीजम् न च नित्यसमासपक्षे तद्बीजमस्तीति भावः तदेवाह वाक्यवदिति व्यपेक्षा आकांक्षा अवयवानुगु
र्वादीन् संस्पृश्य युज्यते इत्यस्य तद्द्वारकसंबंधेन युज्यत इत्यर्थः उपसर्जनम् ज्ञापदं न ससंबंधिकम् न संबंध्यंशे नित्यसाकांक्षम् साकांक्षो नि
त्यसाकांक्षः दूषितत्वम् प्रजाभूस्यादि समप्रकृतेऽपीति अन्तशब्दस्य उपदेशकालप्रतीतनित्यसाकांक्षत्वेति भावः संज्ञिपरत्वेत्यादि संख्यापदा
स्येत्यादिः अन्तग्रहणसमाससंपादनद्वारान्यपदार्थबोधकत्वेन तत्संपादकमिति भावः किंचान्तग्रहणस्य तदर्थत्वेन तस्य विशेषणतया सन्नम्यन्त

नादृशस्थले समासप्रयोजकमित्येतेन दर्शितम् नित्यसाकाङ्क्षत्वन्त्वसम्बन्धविषयकोत्थिताकाङ्क्षाप्रयोजकत्वम् एतेन यादृशस्थ(त्वेन च पूर्वनिपातापत्तिः॥
लेनोत्थिताकाङ्क्षा किन्तु त्वाप्यात्तत्र न समास इति दर्शितं भवति राज्ञः पुरुषस्य धनमित्यादौ यथा मूले सङ्ख्येत्यस्येति अन्तपदाभावे ज्ञा इत्येव यद्युच्येत तदा पदान्त
रसन्निधानाभावेन बहुव्रीह्यर्थस्यालाभः स्यात् ज्ञापदोपादानसामर्थ्यादिदम्पदं षकारनकारान्तस्त्रीशब्दबोधकमिति यदि ब्रूषे तर्हि तादृशशब्दमात्रस्य ग्रहणापत्तिः स
वस्त्वानिषड्डादिशब्देऽतिप्रसङ्ग इत्यन्तपदं सूत्रे सार्थकम् एतदेवाह अन्तग्रहणमित्यादिना तत्सम्पादकम् आकृष्टस्य संख्यापदस्य तदन्तत्वासम्भवेन तस्य तत्संज्ञिप
रत्वसम्पादकम् ननु स्वरितत्वं संख्यापदस्य कल्प्यताम् शब्दाधिकारश्च कल्प्यत इति प्रक्रान्तसूत्रेऽन्तपदाभावेऽपि तत्सम्पादनीयार्थलाभेऽन्तपदमुक्तार्थगमकं भविष्यतीति १५८

तदर्थत्वे उपदेशकालेइत्यर्थकत्वे पूर्वनिपातप्रकरणस्यानित्यत्वेप्याह उणादीनामिति नन्वेवंसत्युपदेशग्रहणं कर्तव्यमिति वार्तिकासङ्गतिरतआह उपेति स्वप्र
त्ययेति षकारनकारान्तप्रकृतिकेत्यर्थः ननुमयाप्येवंरूवचनमतआह त्वयापीति हलीत्यस्यापकर्षेप्रमाणमाह हलीत्युभयोरिति नुटिकृते कथंसन्निपातपरि
भाषाप्रवृत्तिरतआह नान्तत्वेत्यादि ननुसन्निपातपरिभाषायाअनित्यत्वादाचमितिस्वीकारोव्यर्थः इष्टस्याष्टानामित्यस्यप्रकारान्तरेणसिद्धेरित्याशङ्क्यनिराच
ष्टे नचेति वाच्यमितिपरेणान्वयः सन्निपातपरिभाषयाऽप्राप्तिरिति नान्तसन्निपातेनषट्संज्ञायांनुटिसतिभसंज्ञाप्रतिबन्धेनपदसंज्ञाप्रवृत्तिस्ततोनलोपस्यप्रा

उणादीनामव्युत्पत्तिपक्षेप्रत्ययानांसमुदायानांचोपदेशाभावेनतदुक्तार्थासंगतेश्चेत्यपिबोध्यम् उपदेशग्रहणंकर्तव्यमितिवार्तिकस्यतुस्वप्र
कृतिकप्रत्ययोपदेशकालेक्ष्णांतेत्यर्थस्तुयातुसमासान्तपदार्थभूतस्योपदेशकालस्यतथान्वयोवक्तुमशक्यइतिस्पष्टमेवेतिदिक् हलीत्यपकर्ष
णंतद्गीति हलीत्युभयोःशेषइतिभाष्योक्तेरितिभावः सन्निपातेतिनांतत्वप्रयुक्तषट्संज्ञकसंनिपातेनजातस्यनुटस्तद्विघातकत्वमितित
स्याःप्राप्तिः अनित्यत्वादिति मचनुटिनोपधायाइतिदीर्घेनलोपेनाष्टानामित्यस्यसिद्धेः किम् नित्यत्वेन नचनलोपस्यापिसन्निपातपरि
भाषयाऽप्राप्तिः नलोपस्यासिद्धत्वेनतद्विषयेतदप्राप्तिरितिवाच्यम् कृन्मेजन्तसूत्रभाष्येसन्निपातपरिभाषादोषनिरूपणावसरेहेगौरी
त्यादौसंबुद्धिलोपेपिस्थानिवत्त्वेनह्रस्वनिमित्तसन्निपातविघाताभावात्तत्रातिव्याप्तिपरभाष्यासंगतेः सन्निपातस्याशास्त्रीयत्वान्नस्थानिव
त्वमितिचेत्तत्रासिद्धत्वमपिकथमितिविभावयकिञ्च पूर्वत्रकर्तव्येतदसिद्धत्वेपितत्रकृतेनतस्यासिद्धत्वेमानाभावः॥ ऽऽप्राप्तिरितिपरम्परयानुड्विषयेस

न्निपातपरिभाषाप्राप्तिरितिभावः असिद्धत्वेनेति सन्निपातपरिभाषायाः कृन्मेजन्तसूत्रभाष्येपठितायाः सपादसप्ताध्यायीस्थत्वादितितद्दृष्ट्यासन्निपातविघातक शास्त्रा
सिद्धत्वेनेत्यर्थः अत्रासिद्धत्वड्कस्यविभावादृष्ट्याउक्तसन्निपातनिमित्तकनुड्विधिदृष्ट्येतिवितर्कोदूषणमथमपक्षेदोषमाह कृदिति प्रत्ययलक्षणसूत्रस्यनियमार्थत्वप
क्षाभिप्रायेणाह स्थानीति अभावादित्यन्तस्यासङ्गतोहेतुत्वम् तत्रगौरीत्यादौभाष्येति नदीह्रस्वत्वंसंबुद्धिलोपस्येतिभाष्यत्यर्थः यदिदोषनिरूपणपरभाष्यसङ्गमनायतत्रा
शास्त्रीयत्वंस्थानिवद्भावरूपातिदेशस्याप्रवृत्तौहेतुस्तर्हीहापिनलोपस्यासिद्धत्वातिदेशः कथमितिपरिभाषादृष्ट्याऽसिद्धत्वमप्रयोजकमितिभावः द्वितीयेआह किञ्चेतित

पूर्वस्मिन् काले स्वस्य नुट्प्रवृत्त्युत्तरकालिकप्राप्तिकत्वेन लोपशास्त्रस्य नुट्प्रत्यसिद्धत्वस्याप्राप्तिरेवेति सन्निपातपरिभाषाया अनित्यत्वेनैव न लोपो वाच्य इति चेन्न लोपस्यासिद्धत्वेन परिभाषाया अनित्यत्वाद्दावमिति युक्तमिति भावः नन्वेवं षट्संज्ञाया अपि कृताकृतप्रसङ्गित्वेन नित्यतया नित्यत्वादित्यसङ्गतमत आह कार्यकालपक्ष इति तथा च षट्संज्ञाया नुडेकवाक्यतापन्नत्वेन तत्कालप्रवृत्तिकतया आत्वे कृते न षट्संज्ञैकवाक्यतापन्नस्य नुप्राप्तिरिति कृताकृतप्रसङ्गित्वमधुनात्वस्यैवेति तस्य नित्यत्वम् न च नित्यादप्यन्तरङ्गस्य बलवत्त्वमित्यपरनिमित्तकत्वेन षट्संज्ञान्तरङ्गात्वात्वात् आत्वं भविष्यतीति वाच्यम् कार्यकालपक्षे षट्संज्ञाया नुडेकवाक्यतया तस्य च प्रकृतिप्रत्ययोभयसापेक्षतया आत्वसमलक्षतया षट्त्वमपि वहिरङ्गमित्याशयात् ननु कार्यकालपक्षे नस्यासिद्धिश्चेत्तर्हि यथोद्देशपक्ष एवास्त्विति या शङ्का तन्निराचष्टे मूलेन चेति सुलभेति तथा च नुड् विष्यतीति शेषः नुड्विधायकशास्त्रस्य नाल्विधित्वमिति चेत्तत्राह षट्संज्ञाया इति अल्विधित्वमिति तथा चैतत्पक्षेऽपि हलीति प्रवृ

**अन्यथा हलीत्यस्यात्रासंबंधे परत्वादित्यस्यानन्वयः नित्यत्वाच्चेति कार्यकालपक्षे संज्ञायास्तत्रैकवाक्यतया षड्ङ्गात्वयोर्बहिरंगत्वं समानमिति भावः अल्वि[illegible]विति अत्र षट्संज्ञायामल्विधित्वेन तन्मूलककार्याणामप्यल्विधित्वमित्यभिमानः यदि तु नान्तसंख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षड्त्वस्य स्थान्यल्धर्मत्वाभावेन तत्प्रयुक्तकार्यस्य नुडादेरपि नाल्विधित्वमिति स्थानिवत्त्वेन एकदेशविकृतन्यायेन च नुट् स्यात् भवति हि मुख्ये कार्यकालपक्षे तत्सिद्धिर्हलीत्यनुवृत्तेः फलमिति बोध्यम् श्रुतहलादौ अनुमितजश्शसोः ॥ ७ ॥ ७ ॥**

तत्सूत्रेऽपकर्षव्यमिति भावः अभिमानपदसूचितामरुचिं स्फुटयति यदि त्विति अत्र रूपस्येत्यन्तस्य परिचायकषट्त्वस्य तु विशेषणत्वेन स्थानिवद्भावस्य षट्त्वबुद्धिसम्पादकतायापेक्षा न तु तादृशविशेषणविशिष्टषट्त्वसम्पादनायेति विशेषणतयाऽलाश्रयणमस्त्येवेति न शङ्क्यम् स्थानिवत्त्वेनेति सर्वे सर्वपदादेशा इति न्यायेनादेशाकलयनया स्थानिवत्त्वेनेत्यर्थः तदभावेऽप्याह एकदेशेति एतेन षड्मात्रसन्निपातनिमित्तक इह नुट् स च न सन्निपातपरिभाषाया इह प्रवृत्तिसम्पादकः आत्वनालोपयोः षड्ढाविधानकत्वादिति मूलोक्तस्य सन्निपातपरिभाषाया अनित्यत्वस्य नोपयोग इति ध्वनितम् तत्सिद्धिरिति अष्टानामित्यस्य सिद्धिरित्यर्थः हलीत्युभयोः शेष इति भाष्यमपि कार्यकालपक्षाभिप्रायकम् अनुवर्ततामिति अनुपश्चादिति सम्बन्धस्येत्यर्थः जश्शसोरिति तथा चेदं ज्ञापकं सामान्यापेक्षं सामान्यप्रमाणानामप्यप्रमाणत्वादिति भावः ॥

पर्यवसितार्थाभिप्रायेणाह ह्रस्वेऽन्तोदात्तेति सावकाशस्येति कार्यकालपक्षेऽनान्तत्वेन षट्संज्ञायात्राप्राप्त्या षट्त्रीत्यादेरप्राप्त्या सावकाशस्येत्यर्थः षट्स्वरस्य पञ्चभि-
रित्यादौ चरितार्थः अप्रवृत्तेरिति न्मष्टनद्भ्य इति सूत्रस्याप्रवृत्तेरित्यर्थः कार्यकालपक्षमभिप्रेत्यैव समाधत्ते दीर्घेति न्यायानित्यत्वस्यापीति एवञ्च तस्यानित्यतया तद्प्रवृत्तौ पु-
नःप्रसङ्गविज्ञानन्यायस्येह प्रवृत्तेरिति भावः ननु पूर्वोपपादितरीत्याऽष्टाभिरित्यस्य दीर्घग्रहणव्यावर्त्यतासिद्धेस्तद्वैकल्पिकत्वज्ञापकत्वङ्कथमिति चेन्न यावता वि-
नाऽनुपपत्तिस्तस्य सर्वस्य ज्ञाप्यत्वमिति न्यायेनोभयत्र दीर्घग्रहणस्य ज्ञापकत्वात् अत एवाह अपीति अत्रेदम्बोध्यम् यद्युभयोर्ज्ञाप्यता स्वीक्रियेत तदा लाघवाभावात् ह्र-
स्वस्य षट्संज्ञासत्त्वेऽप्यात्वस्यैव वैकल्पिकत्वे च तज्ज्ञापकमस्तु एतावतापीष्टार्थसिद्धिर्भवतीति पूर्वोक्तरीत्या दीर्घग्रहणं वैकल्पिकत्वे ज्ञापकङ्कार्यकालपक्षे यदि तु ह्र-
स्वोद्देशपक्ष एवाश्रीयते तदा हलीत्यस्यात्वविधायकसूत्रेऽपकर्षेण कार्ये एवञ्च लाघवम्भवतीत्याशयेनाह यद्वेति अत्र षट्संज्ञायाम् पक्ष एवेत्येव कारणसकृद्गतिन्या-

ह्रस्वव्यावृत्त्यर्थमिति ह्रस्वेऽन्तोदात्तव्यावृत्त्यर्थमित्यर्थः व्यर्थं स्यादिति न तु ज्ञापितेऽपि व्यर्थमेतत् अष्टाभिरित्यत्र सावकाशस्याष्टनद्भ्य इति सूत्रस्याष्टा-
भिरित्यत्र परत्वात्कृत्स्युपोत्तममित्यनेन बाधे सकृद्गतिन्यायेन पुनरप्रवृत्तेरिति चेन्न दीर्घग्रहणेनैव सकृद्गतिन्यायानित्यत्वस्यापि ज्ञापनात्
यद्वा अत्र यथोद्देशपक्ष एवाश्रीयते तत्रात्वस्य बहिरङ्गतया प्राक् षट्त्वे जाते नान्तसंख्यावाचकत्वसमानाधिकरणधर्मरूपस्य षट्त्वस्यालधर्मत्वाभावे-
नस्वरादेरल्विधित्वाभावात्स्थानिवद्भावेन एकदेशविकृतन्यायेन वाकारान्तस्यापि षट्त्वे न तत्रापि कृत्स्युपोत्तममित्यस्य प्राप्त्याष्टन्स्वरस्यातदप- ((वादत्वात्

यानित्यत्वस्य ज्ञापनस्य षट्संज्ञा भवतीति कल्पनस्य च निरासः अस्मिन्पक्षेऽष्टनो दीर्घादिति दीर्घग्रहणस्यात्ववैकल्पिकत्वमात्रांशे ज्ञापकता कल्प्याव
हिरङ्ग तथा विभक्त्युत्पत्त्युत्तरकालिकतया प्रागिति विभक्त्युत्पत्तेरिति शेषः जात इति ततो विभक्तिस्तत आत्वमिति प्रक्रियात्र एवञ्चाष्टाभिरित्यत्रापि षट्त्रीति सूत्रस्य प्रा-
प्त्याऽष्टनद्भ्य इति सूत्रस्य चरितार्थ्येनापवादत्वेनाष्टाभिरित्यत्रेवाष्टभिरित्यत्रापि स्यादिति दीर्घग्रहणमिति भावः स्वरादेरिति षट्त्रीति ― कृत्स्युपोत्तममिति च विहितस्व-
रादेरित्यर्थः आदिनाऽष्टानामित्यत्र नुटः परिग्रहः स्थानिवद्भावेनेति सर्वे सर्वपदादेशा इति न्यायेन समुदायस्यादेशत्वकल्पने यः स्थानिवद्भावस्तेनेत्यर्थः एकदेशवि-
कृतन्यायेन वेति न हीदानीन्नान्तत्वस्यापेक्षा किन्तु षट्त्वमात्रस्य इत्यञ्च विकृतावयवत्वस्य नान्तयनमित्येकदेशविकृतन्यायस्य प्रवृत्तिर्भविष्यतीति भावः॥ ७ ॥

ननु विभक्त्युत्पत्तेः प्राक् षट्संज्ञा न फलमत आह तत्रपक्षे ननु कृतान्त्वेपि वेत्यष्टनन्ता ऽष्टाविंत्यत्रापि लुक् स्यादत आह औ शुविधिसामर्थ्यादिति एवमिति औ शु विधिसामर्थ्याद-
ष्टाविंत्यत्र लुगभाव इत्यर्थः अष्टाविंत्यत्र द्वितीयाबहुवचने व्यपवर्गाभाव इति अन्तरङ्गत्वादेकादेशे षट् संज्ञ कार्यस्त्वाभाव इत्यर्थः अप्रवृत्तेरिति अस्य ध्वनितत्वादित्य-
न्वयः एहीत्यत्रेति तत्र भाष्ये गोहावेहीति प्रयोगे गोहावेहीति स्थिते आङः परत्वमिहीत्यस्येति तिङ् तिङ इति प्राप्तस्य निघातस्य लोड् गत्यर्थलोटा युक्त इति च निषेधमा-
शङ्क्य कान्दत्वेन समाहितम् कैयटश्च तत्र नित्यत्वादेकादेशे निघातप्राप्तिमाशङ्क्य एवं विधभाष्यविचारात्पूर्वं सन्धिकार्याप्रवृत्तिरनुमीयत इत्याह नेन्द्रस्य परस्ये-
ति सामान्यापेक्षज्ञापकमिति तदाशयः एतज्ज्ञाप्यति दीर्घग्रहणस्य ज्ञापकतापरभाष्येत्यर्थः पाठादन्तोदात्तत्वमिति अन्यथान्त्रः सङ्ख्यायाइत्याद्युदात्तत्वं स्यात् तत्र अष्टा

तत्रपक्षे भविष्यति किंचिदनेन प्रयोजनमित्यभिसंधिमात्रेणैव संज्ञाप्रवृत्तेः प्रगृह्यसंज्ञाप्रकरणे कैयटेनोक्तत्वात् स्पष्टं चेदं षट्संज्ञासूत्रे ऽष्टनो
दीर्घादिति सूत्रे च भाष्यकैयटयोः आकारान्तस्य षट्त्वेपि औ शु विधिसामर्थ्यादष्टाविंत्यत्र लुग्न नन्वेवमष्टाविंत्यत्राष्टन् स्वरस्य चारितार्थ्यम् ह-
लादित्वाभावेन षट्स्वरस्य तत्राप्राप्तेः न चैकादेशे व्यपवर्गाभावः स्वरात्पूर्वं संधिकार्याप्रवृत्तेः एहीत्यत्राङ् निमित्तनिघातसिद्धये यद्धितु परा-
मिति सूत्रे भाष्य ध्वनितत्वादिति चेन्न एतज्ज्ञाप्यप्रामाण्यादेवाष्टन् शब्दस्य घृतादिपाठादन्तोदात्तत्वेनैकादेश उदात्तेनोदात्त इत्येव तत्रान्तोदात्त
सिद्धेः ननु प्रियाष्टाभ्यामित्यादावष्टन् स्वरः सावकाशः षट् स्वरविधायके विहितविशेषणाश्रयणेन समासे गौणेन तदप्राप्तेः अत एव चतुरः शसीति
सूत्रे स्त्रियां प्रतिषेधो वाच्यः चतस्रः पश्य चतसर्याद्युदात्तनिपातनात्सिद्धम् तन्निपातनेपि चतसृणामिति विभक्तिस्वरः सिद्धः षट्त्रीति ॥

विप्यत्र नन्विति एवमपीतिशेषः षट्स्वरविधायके षट् संज्ञकात्परत्वमाश्रित्य प्राप्तस्वरविधायकसूत्रद्वये अत एव विहितविशेषणाश्रयणादेव वाच्य इति अन्या-
या शसि कृतान्तोदात्तत्व क चतुर्शब्दस्य स्थाने च तस्मादेशोप्यन्तोदात्तः स्यान्तथा चोदात्तयणो हल्पूर्वादिति स्वरः स्यात् यदि तु शब्दान्तरप्राप्त्योभयोर्नित्यत्वेन स्वरवि-
धायकशास्त्रात्परत्वात्त्रि चतुरोरित्यस्याचिर अत इत्यस्य च प्राक् प्रवृत्तिस्तस्य स्थानिवत्वेन चतुर्शब्दत्वाच्चतुरः शसीत्यस्य प्रवृत्तौ तकाराकारस्योदात्तत्वं स्यात् आद्युदा राम
त्त निपातनादिति समासत्वात्सूत्रे ऽन्तोदात्तपाठकर्तव्ये चतसृ शब्दावयवचकारस्योदात्तस्य पाठादित्यर्थः ननु वार्तिकारम्भे चतुरः शसीत्यस्यैवाप्रवृत्तिः निपातनेनतुत्तस्य सर्वे

तन्निपातनेनेपीति अपिर्वोत्तिकारम्भसमुच्चायकः विभक्तिस्वरः विभक्तेरुदात्तत्वम् निपातेनेहीति निपातनस्य सर्वबाधकत्वेही त्यर्थः चतसृशब्दादिति एतत्सम्बन्ध्यजादिवि
भक्तिवारकतयैव तस्य चारितार्थ्यमस्ति यदि निपातनस्य सर्वबाधकत्वं तदा तद्व्यर्थमेव स्यादिति अयम्भावः षट्त्रिचतुर्भ्य एकवचनद्विवचनेन भवत एव षड्भ्यो जश्
शसोर्लुगेव अन्याः सर्वा हलादिविभक्तय एव त्रिचतुरोर्जसि तु न प्रयोजनम् अन्वेच्छन्दसीति सूत्राद सर्वनामस्थानग्रहणस्य षट्त्रीति सूत्रे ऽनुवर्तनात् त्रीनित्य
त्र शसि तु एकादेश उदात्तेनेति सिद्धम् तिस्रः पश्येत्यत्र तूदात्तयणद्व्येव सिद्धम् चतुरः पश्येत्यपि न व्यावर्त्यं चतुरः शसीत्यस्यारम्भात् तस्माच्चतस्रः पश्येत्येव व्यावर्त्य
मिति यदि निपातनस्वरस्य सर्वबाधकत्वं तदा तद्वैयर्थ्यं स्पष्टमेव एतेन प्रकारेण निपातनस्वरस्य विभक्तिस्वराबाधकत्वज्ञापितं चतसृणामित्यत्र विभक्तिस्वरः सिद्ध इति अ

षट्त्रीति सूत्रे हलादिग्रहणेन निपातनस्वरस्य विभक्तिस्वराबाधकत्वज्ञापनात् आद्युदात्तनिपातनेहि हलादिग्रहणानर्थक्यम् नह्यन्यद्धलादिग्रहणं प्रयो
जयति अन्यदतः चतसृशब्दादिति भाष्योक्तं सङ्गच्छते अन्यथा प्रियाष्टान इत्यादेः संभवेन तदसङ्गतिः अष्टौ परमाष्टावित्यादेरेकादेशस्वरेण सि
द्धेः नच कदष्टावित्यादि व्यावर्त्यसंख्या प्रकारकसंख्येयविशेष्यकबोधजनकतयान्तरपदार्थप्रधानसमासे समुदायस्यापि षट्त्वात् स्पष्ट
चेदं सर्वादीनीत्यत्र भाष्ये ततो विहितत्वाच्चेति वाच्यम् एतज्ज्ञाप्यप्रामाण्येन तदनभिधानादिति चेन्न एतज्ज्ञापकपरभाष्यप्रामाण्याद दृष्ट।
नडूत्यस्यापि विहितविशेषणाश्रयणेन समासः प्रवृत्तेः प्रियाष्टादीनामनभिधानस्य षट्संज्ञासूत्रे भाष्ये स्पष्टत्वाच्च तिसृभ्यो जस इति सूत्रस्थेनो
पसमस्तार्थमेकदृजिभाष्येण तुल्यन्यायात् षट्स्वरस्यापि तदन्तेप्रवृत्तेरुक्तत्वाच्च ॥ ८३ अन्यथा विहितविशेषणानाश्रयणे तदसङ्गतिः नह्यन्यदिति ग्रन्थासङ्ग

तिः अष्टावित्याद्यपि न व्यावर्त्यमित्याह अष्टावित्यादि नचेति वाच्यमिति परेणान्वयः कदष्टावित्यस्य प्रदर्शनमव्ययपूर्वपदप्रकृतिस्वरस्यात्र प्रवृत्त्या एकादेशस्वरेण।
सिद्धिप्रदर्शनाय ततः षट्संज्ञकात् एतज्ज्ञाप्येति चतुरः शसीत्यत्रोक्तभाष्येत्यर्थः तदनभिधानम् कदष्टावित्याद्यनभिधानम् एतज्ज्ञापकेति दीर्घग्रहणस्य ज्ञापकतापर
भाष्येत्यर्थः वस्तुतस्त्वेतत्सर्वमभ्युपेत्य वादेन सिद्धान्ते त्वनभिधानमेवेत्याह प्रियाष्टादीनामिति तिसृभ्य इति तत्र हि जसग्रहणं किमर्थमिति प्रश्ने तिसृके तिकान्ययान्तम्
उदाहरणमुक्त्वा जसग्रहणमनर्थकमन्यत्राभावादित्युक्तम् अस्य नित्यबहुवचनान्ततया तदन्ययोरभाव एव शसि तूदात्तयणेत्येव सिद्धम् अन्याः सर्वा हलादयस्त

परस्मिंश्चतुर्ण्यदृत्येवभविष्यति त्रिसृकेत्यपिनप्रयोजनम् सध्येऽपवादन्यायेनत्रिसृभ्यइत्यस्यानुदात्तौसुप्पित्तावित्येतद्बाधकतयानित्स्वरेणत्रिसृभ्यइत्यस्यबाधोभविष्य तीत्युक्त्वाउपसमस्तार्थमेकेजसोग्रहणमिच्छन्ति अतितिसृौ अतितिसृः इतिजसग्रहणस्यव्यावर्त्यंन्दर्शितम् यद्यपिवार्तिकस्थजातन्त्वएडितन्तथाप्याचार्यान्तरसंवादेन जसग्रहणस्यप्रयोजनम्भाष्यकारोऽभिहितवान् तच्चप्रयोजनंविहितविशेषणसत्वेनोपपद्यतइति परत्वमेवनियामकमिति जसग्रहणाभावेविभक्तेरुदात्तत्वस्याजसग्र हणसत्वेनुतस्याप्रवृत्तौसमासस्वरबाधकाव्ययपूर्वपदप्रकृतिस्वरबाधकेना तेरकृत्यइत्यनेनातेः परमकृदन्तम्पदशब्दश्चान्तोदात्तइत्यर्थकेनान्तोदात्तत्वेकृतेउदा त्तस्यऋकारस्ययणादेशेउदात्तस्वरितयोर्यणिस्वरितस्त्रीकारोऽकारश्चभवति तुल्यन्यायादिति यथात्रिसृभ्योजसइतिसूत्रस्यप्रवृत्तिविषयेव्यवस्थातद्वत् अपिनात्रश्छन्स्वरस्य परिग्रहः नन्वेवंविहितविशेषणाश्रयणबोधबोधकोक्तभाष्यस्यकागतिरतआहचतुरइति वार्तिकम् विभक्तिस्वरभावश्च हलादिग्रहणादित्येतत् दूष्यमितिजसग्रहणस्योपसमस्ता।

चतुरःशसीतिसूत्रस्यन्तुवार्तिकंजसग्रहणानर्थक्यमन्यत्राभावादिति त्रिसृभ्यइतिसूत्रस्यवार्तिकवदेवदूष्यं सकृदितिचमुख्यार्थकमितिदि क् प्रतिपदोक्तमितिसंयोगादिलोपसाहचर्यात्लत्वस्यैवेतिभावः प्रत्याख्यातमिति तदेकवाक्यतयाऽत्रानित्यत्वेनणत्वाशेषे तिपदोक्तपरि भाषासाहचर्येपरिभाषयोरप्रवृत्तिरितिभावः॥ ऊर्थत्ववदत्रसूत्रेहलादिग्रहणस्यापिसमस्तेप्रियत्रीनित्यादौप्रयोजनलाभादूष्यम् नन्वेवमेकेइत्युक्त्या

तस्यसिद्धावुक्तिलङ्कथमतआह सकृदितीति दिगिति दिगर्थस्तुचतुरःशसीतिसूत्रस्यस्त्रियांप्रतिषेधोवाच्यइतिवार्तिकमपिनकार्यम् चतस्रः पश्येत्यत्रस्वररेफादे शयोःप्राप्तौपरत्वाद्रेफादेशेतस्यस्थानिवत्वेनव्यवधानात्तकाराकारस्यस्वराप्राप्तेः नचरेफस्यैवस्वरोभवत्विति वाच्यम् हलस्वरप्राप्तौव्यञ्जनस्याविद्यमानवद्भावात् नचस्थानिवद्भावस्यस्वरेकर्तव्येनिषेधोभविष्यतीतिवाच्यम् स्वरदीर्घयलोपेषुलोपाजादेशस्यैवस्थानिवद्भावनिषेधात् एवमाद्युदात्तयोस्त्रिचतुरोरान्तरतम्यादाद्यु दात्तसिद्धेः आद्युदात्तनिपातनमपिनकार्यम् हल्डीत्यस्यापकर्षस्तु प्रतिपत्तिलाघवार्थेति वर्णग्रहणेप्रतिपदोक्तपरिभाषायाअप्रवृत्तिवादिमतेऽप्याह संयोगादीति तदे कवाक्यतया प्रत्याख्यानेकवाक्यतया अत्रसूत्रेणग्रहणस्यसत्वपक्षेयत्तुणग्रहणसंज्ञापूर्वकविधेरनित्यत्वबोधनायेतितदुर्भवानीत्यत्रणत्वन्न सर्वंपदान्तस्ये तिसूत्रमपिनन्वाद्वितिनमनित्यमित्येतद्बोधनद्वारासार्थकम्॥

तेनदं प्राणित्यं स्यासिद्धिरित्याहुस्तन्नयुक्तमित्यतआह प्रत्याख्यानेनचेति फलान्तरेति निरुक्तेत्यर्थः णत्वग्रहणप्रत्याख्यानस्य भाष्यानारूढत्वादाह णग्रहणेति कैयटा
ध्वनितेति प्रागुक्तरीत्या कैयटध्वनितप्रत्याख्यानेत्यर्थः अत्र कैयटेत्युपादानमस्तिच बोधनायातएवाह वक्तव्यइति प्रागिति पूर्वत्रइत्येतन्निरूपणावसरेइत्यर्थः
प्रत्याख्यानेति पञ्चमीसमासस्येत्यादिः तत्सम्भवतीति अनिट्त्वसम्भवतीत्यर्थः विकल्पितेट्त्वेन तन्निपतीति विकल्पितेट्त्वेन नसुवादान्तेति सूत्रेणविकल्पेनेट्

प्रत्याख्यानेनत्वस्यष्टार्थमेवतयोरुपादानंनतुफलान्तराभिनिवेशः कार्येइति सूच्यते प्रत्याख्यानासंभवेनेति उक्तरीत्या भाष्यध्वनित णत्वग्रह
णेत्यादिः णग्रहणेनिवा पञ्चमीसमासेति अपरविधाविति वक्तव्यमित्यत्वः परस्मिन्निति सूत्रस्य वार्तिकव्याख्यानावसरे कैयटेनध्वनितेत्यर्थः।
वक्तव्यमदयुक्तमितिप्राङ्निरूपितम् तद्प्रत्याख्यानमभ्युपेत्यापिसमाधत्ते फलैक्यायेति प्रत्याख्यानस्यायुक्तत्वध्वनयन्पञ्चमीसमास
पक्षेलक्ष्यसिद्धिंशंकते निष्ठायामिति सेट्ग्रहणादिति तत्रहि सेट्ग्रहणन्नानिट्व्यावृत्त्यर्थम् णिजन्तात्तदसंभवात् नचत्तपेः सनीवंतिति इड्विक
ल्पात्संज्ञपितइत्यादौ यस्यविभाषेतिइणिनषेधेनतत्संभवतीतिवाच्यम् यस्यविभाषेत्यत्रैकाचइत्यनुवृत्तेः अन्यथादरिद्रातेरपिसनिविकल्पितेट्
त्वेनदरिद्रितइतीणनस्यात् वादान्तसूत्रेञ्चप्तादिनिपातनेनेड्भावस्यणिलोपस्यापिनिपातनाच्च तस्मात्तद्योगविभागेनकालावधारणार्थम् इ
दिक्तेसवर्णिलोपेनतुततःप्रागिति अन्यथाकारितमित्यादौपरमपीटंवाधित्वानित्यत्वाण्णिलोपेएकाचइतीणिनषेधः स्यादितिपूर्वस्माद्वि
धेस्थानिवत्त्वप्राप्तस्यनिषेधोणिचाव्यवधानादितिभावः यदित्वेकाचउपदेशइत्यत्रविहितविशेषणपक्षेसेटीतिचिन्त्यप्रयोजनमित्यु
च्यते तदाप्रविगणय्येतिभाष्योदाहरणादेवतदनित्यत्वम् अन्यथाल्लोपस्यस्थानिवत्त्वाल्ल्यपिलघुपूर्वादितिणेरयादेशोनस्यात् ल्यपीतिसूत्र
प्रशमय्येत्यादौच स्थितार्थमितिदिक् ॥ ग्लाधातावदभावेणिजन्तात्तत्सम्भवतीति तदभावइत्यर्थः सेड्ग्रहणमसतत्वसामर्थ्यात्पूर्वसूत्रेणाप्यनिणिलोपइत्यतआ

ह वादान्तेति सिद्धान्तमाह यदित्विति विहितविशेषणपक्षइति सतत्त्वप्राङ्निरूपितम् भाष्योदाहरणादिति प्रगदय्यप्रस्तनय्येत्यस्याप्युपलक्षणम् अल्लोपस्यस्था
निवद्भावेन व्यपदेशिवद्भावेनतस्यैवलघुपूर्वत्वमाश्रित्यणेरयादेशइतितुनसत पूर्वविस्यसावधिकत्वेनाकारस्यसम्भन्नयश्रवणात्तादृशव्यवहारासम्भवात् नापि

सूत्रद्वयेति प्रसङ्गादाह तत्रेति तत्र डस विधायकवचनबाध्यसूत्रयोर्मध्ये पृथगिति कोटिद्वयेनेत्यर्थः ॥ः॥ समुदायोच्चारणमिति धातूपपदसमुदायोच्चारणमि
त्यर्थः तत्र प्रथमसूत्रे प्रतिपादितानान्त्रयाणाम्मध्ये सूत्रे श्वेतवहशब्दे ऽकार उच्चारणार्थः कर्मणि प्रत्यय इति श्वेतैरुह्यत इत्यर्थः उक्थ इति साम विशेषबोधक इ
ति शेषः शंसेः प्रत्यय इति कर्त्तरीति शेषः अस्य शंसेः तस्यरोः सतेनान्येषान्निपातनमिति ध्वनितम् विशेषविधिनिषेधयोः शेषनिषेधाभ्यनुज्ञाफलकत्वमिति न्या
यात् दाश्रृदानइति पुरोदास्यतइति विग्रहः उक्तभाष्यादिति उक्थशस्शब्दस्येत्यादिभाष्यादित्यर्थः परस्य शङ्कान्निराचष्टे नचेति रुत्वइति हादीनामिति शेषः वृद्धि

समुदायोच्चारणमलाक्षणिकानांनिपातनार्थं तत्र श्वेतशब्दे कर्तृवाचिन्युपपदे वहेः कर्मणि प्रत्ययः उक्थे कर्मणि करणे चोपपदे शंसेः प्रत्ययो
नलोपश्च अस्य नलोपेपि न वृद्धिः उक्थशस्शब्दस्य सामान्येन तु सिद्धान्तस्य निपातनं क्रियत इति भाष्येण तत्र तदभावस्यापि निपातनात्
दाश्रृदानइत्यस्मात्पुरः पूर्वकात्प्रत्ययः कर्मणि दाशआदेर्डत्वञ्चेति वहियज्योरिति शंसेरप्युपलक्षणमिदम् किञ्चोक्तभाष्यादुक्थशा
सित्युच्चारणमपि प्राचामसंगतम् नच डस्त विधेयः अवयाः श्वेतवाः पुरोडाश्चेति पदान्तविषये रुत्वे रूपसिद्धेरिति वाच्यम् रुत्वे अतः पर
त्वाभावेनोत्वानापत्तौ श्वेतवोभ्यामित्याद्यसिद्ध्यापत्तेः अप्रवृत्तेरिति ननु पदान्तविषयत्वात्सरूपन्यायेन ण्विनप्युक्तिनिपातनं चेदसुभ
योरत एव प्रकरणे ऽवयाइति सूत्रस्य पाठः अन्यथा डसन्ते सजुषो रुरिति रुत्वे सिद्धे दीर्घमात्रस्य निपातनात्तत्प्रकरण एवोक्तं स्यादिति चे
न्न डस्तत्कर्तव्यः किं प्रयोजनं वैयर्थ्यं क्रियते वैयर्थ्यं निपातनमवयाः श्वेतवाइति तन्नवक्तव्यं अवश्यं तद्वक्तव्यं डसारंभेपि सम्बुद्धौ दीर्घार्थम् त
र्हि डस्तन्वक्तव्यः डसपि वक्तव्यः श्वेतवोभ्यामित्यर्थमिति भाष्यविरोधात् ॥ 5) रुत्वे ण्विन्प्रत्ययनिमित्तिकासिद्धेवेति भावः पदान्त एव निपातनेनाप
दान्ते श्वेतवाहावित्यादौ दोषाभावादाह वृद्धाविति प्रकाशकारोक्तिसमर्थनायाह नन्विति उभयोः ण्विनन्तडसन्तयोः अत एव ण्विनः सत्वादुभयोर्निपातनादिव
अन्यथा ण्विनो सत्वे तत्प्रकरणे दीर्घप्रकरणे वैयर्थ्यन्निपातनमिति हादीनामेव रुत्वविधानार्थमित्यर्थः नन्वेति डसैव रूपस्यासिद्धत्वादवयाइति निपातनन्नक
र्तव्यमित्यर्थः तद्वक्तव्यम् निपातनं वक्तव्यमित्यर्थः ॥ अन्यथापदान्ते वा सरूपन्यायेन ण्विनोपि सत्त्वे तस्य निपातनस्य अत्र डसविषये नन्वेवं सति रुत्वस्यासि

ह्यादीर्घप्रकरण एवतत्सूत्रमपठनीय मतआह रुप्रकरण इति मात्रपदेन दीर्घनिरासः तद्दिष्टत्वात् सूत्रकृद्दिष्टत्वात् नन्वेवमुक्तरीत्या श्वेतवोभ्यामित्येतन्न स्यादत आह श्वेतवोभ्यामितीति उक्तभाष्यानुसारि सिद्धान्तिमतमाह केचित्त्विति श्वेतवहादीनामित्यनन्तर पदाध्याहारेण तन्निरूपितसम्बन्धार्थिका षष्ठी अत एवाह एतत्सम्बन्धि न इति ननु डस्तु त्यतिवेलायामदत्वङ्गश्च मतन्त्राह तदन्त इति अत एव डसो रिवनादेशत्वादेव एवञ्चेति तस्य सूत्रस्यापवादविषय एव प्रवृत्तेरिति भावः मूलदेसद्

अन्यथा रिवन्यक्षे कृत्वार्थमपि तस्यावश्यकत्वेन संबुद्धौ दीर्घात्त्यमिति भाष्यस्य निर्दलतापत्तिः तस्मादत्र वार्तिककृन्नयेवासरूपाप्रवृत्तिः कादिष्विव व्यवस्थितविभाषया गीकार्या रुप्रकरणे सूत्रं तु सूत्रकृताडसो रुकरणात्कृतम् रिवन्नन्ते रुत्वमात्रस्यैव तद्दिष्टत्वात् श्वेतवोभ्यामिति प्रयोगं तु सूत्रकृन्न जानात्येवेति स्पष्टं भाष्यविदाम् केचित्तु रिवनन्त्यादेशो डस् श्वेतवहादीनां डस्पदस्येति वार्तिकादेतन्सं वधिनो रिवनः प्रत्ययस्य डस् तदन्ते पदत्वस्य भावित्वेद इति तदर्थः अत एव वृत्तिकृता रिवनं प्रकृत्य श्वेतवाड्स्तुदा हृतमेवञ्च वासरूपस्यात्र विषयराव नेत्याहुः पूरत्वादिति नित्यत्वं तु नात्वस्य शब्दान्तरस्य प्राप्तेः सत्वस्यादिति उभयोरपीति भावः असोला क्षणिकत्वे नात्वसन्तस्योत्स्य न प्रवृत्तिः न च प्रत्ययविशेषापेक्षस नापेक्षयान्तरंगतयात्वे रूपसिद्धेरव्यर्थता दृशान्तरंगत्वस्य शास्त्रेनाश्रयणज्ञापनार्थत्वादत एव भाष्ये ईदृशमन्तरंगत्वं न क्वाप्याश्रितम्। पुनः प्रसंगेति कृताकृतप्रसंगित्वमात्रेण नित्यतायां सापि स्कवचाशब्दान्तरप्राप्त्या ऽनित्यत्वमभ्युपेत्य प्रवृत्तं भाष्योक्तं समाधिमाह सकृदिति अनन्त्ययोरित्येतदेव सकृद्गति न्यायज्ञापकमिति तदाशयः न्याय्यत्वादिति तस्यैवेत्यर्थः॥ इति न चासस्तुद्धेः पुरः स्फूर्तिकत्वात् तदुपेक्षा नोचितेति वा

च्यम् सत्यप्यन्त्यस्य सत्वे हल्ङ्यादिलोप रुत्वविसर्गैरिष्टस्य रूपस्य सिद्धेः न चात्व सन्तस्येति दीर्घापत्तिरिति वाच्यम् प्रतिपदोक्तस्यासन्तस्यात्तु साहचर्येण ग्रहणात् ननु नित्यान्तपरस्य बलवत्त्वमत आह नित्यत्वमिति एकस्यैव सत्वमित्यत्र नियामकाभावादाह उभयोरपीति सामान्यापेक्षस्यान्तरङ्गत्वाभिमानिनः शङ्कान्निरावेष्ट नचेति तादृशान्तरङ्गत्वस्य सामान्यापेक्षान्तरङ्गत्वस्य न्यूनतामपरिहर्तुमाह कृताकृतेति पूर्वोक्तरीत्यास्त्वनित्यत्वेप्याह शब्दान्तरेति अभ्युपेत्येत्यनेनोक्तस्य कृताकृ तप्रसङ्गित्वस्याश्रयणे लाघवमिति दर्शितम् तदाशयः भाष्याशयः॥

या.र.
टी.भै.
१५५

ननु यदि जात्याती त्यत्र जादेशे कृतेपि अतो दीर्घो यञीति दीर्घः स्यात् हि जानातीत्यत्र ध्वादित्वाद्ध्रस्वत्वमाशङ्क्य दीर्घनिर्देशसामर्थ्यान्न ह्रस्व इत्युक्तम् तद्विरुध्यत इति चेन्न त
स्य ग्रन्थस्याङ्गवृत्तपरिभाषाज्ञापनद्वारा न ह्रस्व इत्यर्थात् अतो दीर्घो यञीति सूत्रीय ग्रन्थविरोधोद्भावनमन्यकृतं स्वमतेनासीत्येतदुक्तं सुपक्रमते नत्विति तत्सम्बन्ध्या
दिति टिसम्बन्ध्यादित्यर्थः अन्त्यस्य पदस्य टेरनन्त्यस्य पदस्य च अन्त्यर्थादिति भावः हेत्वन्तरमाह वाक्येति क्रमसम्बन्धेति वाक्यस्य टेरिति सूत्रे क्रमसम्बन्धेत्यर्थः य
थातदस्याग्रस्तथा दर्शयति तेनेति पदस्येति अवह्निशेषः नन्वान इति तपरकरणेन प्लुतव्यावृत्तिर्भविष्यतीत्यत आह तपरकरणेनेति अन्तस्यैव त्रैपादिकस्यासिद्ध

नन्वनेन दीर्घैप चामिभो इतिवदज्ञानाम्भो इत्यादावनन्त्यस्यापीति प्लुतो न स्यादत आदित्येवसिद्धे तत्र दीर्घग्रहणस्य प्लुतनिवर्तकत्वान्नचानन्त्यस्य
पदस्य टेरिति तदर्थोक्तं यं पचामी त्यादौ तस्मात्प्लिरिति वाच्यम् दीर्घग्रहणसामर्थ्येनान्त्यविषये सवृत्तस्वबाधात् वाक्ययोः क्रमसंबन्धस्यागेमा
नाभावात् तेनवाक्यस्यानन्त्यस्य पदस्य प्लुतः स्यादन्त्यस्य पदस्य टेरित्यर्थः तपरकरणेन तु न प्लुतव्यावृत्तिः प्लुतस्यासिद्धत्वादतएव गोः पूरित्यादौ
दीर्घः अन्यथा तस्यापीदुदिति तपरत्वसामर्थ्यादप्रवृत्त्यापत्तिः दीर्घग्रहणात्तु तत्सामर्थ्यादसिद्धत्वस्यापि बाधः आकारान्तरप्रश्लेषेण वारणं तु क्लि
ष्टं अस्तु वा तदुपायान्तरमिति चेन्न ऊठ् ज्ञापकपरभाष्यप्रामाण्यात् प्लुतस्यत्रानिष्टत्वे वैकल्पिकत्वेनेष्टोविषये प्लुताप्रवृत्तेः अतो दीर्घ इत्य
स्य दीर्घग्रहणं हलि लोप इति सूत्रेह लशि तिवक्तव्ये लोपग्रहणवत्स्वत्वेन नार्थसाधकमिति दिक् निर्देशेनेति अन्यथा त्यादाद्यत्वे सत्वं तस्या

नित्वतपरकरणेन तद्व्यावृत्ते रेव दीर्घः वौरूपधाया इति दीर्घः ननु दीर्घविधायकशास्त्रस्यापि प्लुतस्यासिद्धत्वात्कथं नेन तद्व्यावृत्तिरत आह दीर्घ इति भावः
ग्रहणेनेति क्लिष्टमिति तत्र तात्पर्यग्राहकाभावेन स्वकल्पनया तथा कल्पनङ् क्लेशकरमित्यर्थः ननु लाघवमेव तात्पर्यग्राहकं भविष्यतीत्यत आह अस्त्वेति उ
क्तज्ञापकेति ज्ञाजनोर्जेति दीर्घनिर्देशस्य ज्ञापकतापरभाष्येत्यर्थः अन्यथोक्तरीत्या दीर्घग्रहणस्यावश्यकतया ज्ञापकतापरभाष्यविरोधः स्पष्ट एवेति भावः तत्र प
चामि अजानामीत्यादौ वैकल्पिकत्वादिति तदुक्तम्भाष्ये सर्वः प्लुतः साहसमनिच्छता विभाषा कर्तव्य इति नन्वेवं दीर्घग्रहणस्य वैयर्थ्यं स्यादत आह अतो दीर्घ राम.
इत्यत्रेति अस्य नार्थसाधकमित्यत्रान्वयः यथा तदनेकपदघटितसूत्रे पदलाघवगौरवविचारसंवसुखो मात्रा गौरवन्तु क्वचिदेवदुष्टमित्यर्थबोधकन्तथेदम् १५५

सत्वेनेति दीर्घग्रहणस्येति शेषः वस्तुतस्त्वत्रत्यन्दीर्घग्रहणस्य ज्ञापकत्वप्रदर्शनपरम्मूलम्भाष्यस्य ज्ञापनपरैकदेशिमतानुसारेण अतएव भाष्येपि वृत्ते गुणप्रतिषेध उक्तः एतन्वक्तव्यो भवतीत्येवन्तस्य प्रयोजनमुक्तन्तत्वसाधारणलक्ष्यसिद्धिरूपमितिदिगित्यनेनदर्शितम् ॥ ०॥ वाचनिकत्वइति परिनिष्ठितस्येत्यस्येतिशेषः ज्ञाप्यकोटिप्रविष्टत्वेप्याह ज्ञापकद्वयेति अभ्यमिति छेदस्यैव मुख्यतान्ध्वनयितुमाह स्पष्टन्त्विदमिति अतएव अभ्यमिति छेदस्यैव मुख्यत्वादेव नन्वङ्वृत्तपरिभाषया एतस्यानिवृत्तिः सिद्धेत्यकारोच्चारणसामर्थ्याद्दीर्घः स्यादतआह अङ्गवृत्तपरिभाषेति द्वयोरितिनिर्देशवदिदमपितदनित्यत्वे ज्ञापकमितिभावः

वाचनिकत्वे गौरवं ज्ञापकद्वयशैथिल्यं चापरिहृतमित्यत आह अनित्यत्ववलेति अनुवृत्त्यर्थमिति स्पष्टमेतद्भाष्येऽन्यैव अभ्यमितिच्छेदस्यैव मुख्यत्वं ध्वनयन् शाकतेनचेति अन्यथाऽभ्यम्यसेटिलोपस्यैवागीकारेण शाकायानिर्दिष्टत्वस्पष्टमेव अतएव युष्मदस्मदोरितिसूत्रेनचादेशेषु हलादिरस्तीतिभाष्यसंगच्छते एत्वनिवृत्त्येति अंगवृत्तपरिभाषाऽनित्यत्वबोधनद्वारेतिभावः एवंच पररूपेणबाधान्तस्य णदीर्घइतितात्पर्यम् वैयर्थ्यमिति अकारस्याकारविधिवैयर्थ्येनान्त्यस्यैवाकारेऽतोगुणेचसिद्धंतत्वे त्यादीति व्यर्थमेवशिष्टत्वमित्यर्थः नचपररूपबाधनार्थमेवादेरत्वविधानंस्यादितिवाच्यम् विधिबाधापेक्षयादेः परस्येतिपरिभाषाबाधस्यन्याय्यत्वात् आदेशेति आदेर्विधानेप्यादेशत्वसंपादनेनयाचनिवृत्त्याशेषेलोपार्थं मकारविधानंचरितार्थमितिआदेः परस्येत्यस्यबाधमानाभावेनसर्वादेशार्थंशित्वमितिभावः नचयोऽचिङन्सीत्यत्रैवयत्वनिरासशेषेलोपोसिद्धावितिवाच्यम् पर्युदासएकवचनत्वादिनासादृश्यग्रहणापत्तेः युष्मदस्मदोरित्यात्वस्यप्राप्तेश्च हलादाविति परिशेषसिद्धोऽर्थस्तत्रेतिभावः॥ ७॥ एवञ्च परिभाषायाअनित्यत्वबोधनद्वाराऽकारोच्चारणस्यच रितार्थत्वेच वैयर्थ्येनेति एवञ्चादेः परस्येत्यस्यानुपस्थितिरित्यत्रतात्पर्यम् लक्षणैकचक्षुष्कशङ्कांवारयतिनचेति न्याय्यत्वादिति गुणेत्वन्याय्यकल्पनेतिपरिभाषाबाधोन्यायानुगृहीतएवेतितात्पर्यम् शित्वस्ययथाचरितार्थ्यन्तम्प्रकारमाह आदेरित्यादिना उक्तप्रयोजनान्यथासिद्धिवादिनः शङ्कान्निरस्यति नचयोऽचीति एकवचनत्वादिनेति आदिनाङित्वपरिग्रहः एवञ्च युवयोरित्याद्यसिद्धिरितिभावः प्रसज्यप्रतिषेधपक्षेत्वाह युष्मदस्मदोरिति नन्वात्वं हलादिहेतुकमितिकथन्तस्यप्राप्तिरतआह हलादाविति योचीत्यजग्रहणपरिशेषसिद्ध

॥ विश्वतीयत आह॥

एतेनेति कल्पितार्थवत्त्वस्य ग्रहणेन ल्यप्प्रत्ययस्यापि भावाभिधायकतया तस्य यादेशे स्थानिवद्भावेन क्त्वान्तत्वात्कः सिद्धिरिति भावः ननूक्तपदशब्दार्थाभिन्नस्त्रिर्नास्ती
त्यतस्य सिजादयो न स्युरित्यत आह सिजादीनामिति सोपि च्लिरपि यवन्त्वमूलस्त्रित्यमिति —— भावः इत्यस्य इत्याकारविधानस्य भाष्यविरोधादिति ज्यायानित्यत्रे
यसन्त्रादेर्लोपप्रकृतेर्दीर्घे सति व्यर्थं यदाकारविधानात्तस्य स्वविषये चारितार्थ्यं न स्यात्लोपदीर्घयोरङ्गसम्बन्धित्वाभावेन परिभाषायास्तत्र प्रवृत्तिर्न स्यादिति परिभाषा
ज्ञापकत्वपरभाष्यविरोधः स्पष्ट एवेति भावः ननु ससुट्कस्य स्थानित्वेन निर्देशसामर्थ्यादित्यनुपपन्नं वक्ष्यमाणरीत्या गौणआवत्त्वेन ससुट्कनिर्देशस्य चारितार्थ्या
दत आह अयमभावइति इतिसूत्रार्थ इति भाष्यकारीयसिद्धान्तरीत्या इति सूत्रार्थः तेन प्रसज्यमानतादृशसमुदायस्य स्थानित्वकल्पनेन नकेवलमत्रैवेयं रीतिः

एतेन क्त्वाद्यन्तस्य क्त्वाद्यादेशे प्रकृतिप्रत्ययसमुदायस्य स्थानित्वमस्तीति नुड्न स्यादित्यपास्तम् सिजादीनां कल्पितोप्यर्थो नास्तीत्यत आह सिच्च ङा द
यश्चेति चोत्यार्थेन सोप्यर्थो वा नित्यत्वे दुराग्रह इति ज्यादादीयसदृत्यस्य ज्ञापकत्वपरभाष्यविरोधादस्य दुराग्रहत्वम् अकारान्तत्वाभाव इति ससुट्क
निर्देशाभाव इति शेषः निर्देशसामर्थ्यादिति अयं भावः सामः प्रसंगेन आकमिति सूत्रार्थः तेनास्सकारयोरत्र विषयेऽत्यन्तमप्रयोगो वोध्यते स्था
न्यादेशाभावविषये सर्वत्रैवमेव यथार्द्धधातुकविषयेऽस्तेरप्रयोगो भुवः प्रयोगश्चास्तेरित्यनेन प्रतिपाद्यते न तु सतो निवृत्तिः शब्दानित्यत्व प्रसंगा
त् किन्तु प्रसक्तबुद्धेरेव निवृत्तिः तत्र सकारबुद्धेः प्रकृते सा प्रतिक्याअसंभवाद्भाविन्या ग्रहणं सकारोच्चारणसामर्थ्यादिति भाष्ये स्पष्टम् तन्निवृ
त्तिश्चाभावात् अत्र साम स्थानित्वोक्त्या ऽकमि स्थानिवत्त्वेन साम्त्वमेव नत्वाम् त्वमतएवातित्वाकमित्यादौ प्रत्यययोतरपदयोरिति सूत्रभा

किन्तु स्थान्यादेशभावविषये सर्वत्रेत्याशयमकटयति यथेत्यादिना अत्रेकोयणचीत्यस्यैव दृष्टान्तत्वेनोपादाने कर्तव्ये ((ष्योदाहृते आकमनुडभावौ सिद्धौ
आर्द्धधातुकाधिकारीयादेशस्य प्रदर्शनं समुदायादेशत्वेनाष्टाध्यायीपाठेन च पुरः स्फूर्तिकतयेति बोध्यम् न तु सतो निवृत्तिरिति आदेशेन विद्यमानस्य स्थानिनो निवृ
त्तिर्नेत्यर्थः प्रसङ्गादिति निवृत्तेर्ध्वंसरूपतया विद्यमानस्य ध्वंसकल्पने घटादिपदार्थवदनित्यत्वापत्तेरिति भावः प्रसक्तबुद्धेरिति स्थानित्वेनाभिप्रेतस्येत्यादिः एवा
स्त्वबुद्धिनिष्ठनिवर्त्यनिवर्तकभावस्य बुद्धिविषये आरोपः सर्वत्र कल्प्य इति भावः प्रकृतार्थमाह तत्रेति बुद्धिद्वयमध्ये नन्वेवमपि कथमकृते तद्बुद्धिनिवृत्तिरत आ

…र्थेति प्रकृतसूत्रद्वयार्थः उक्तार्थस्यावश्यकत्वं ध्वननायाह अतएवेति उक्तार्थाङ्गीकारादेवेत्यर्थः ननु प्रयोगे त्र्यामस्य बसत्वेन कथं साम: स्यानित्वकथनसङ्गतिरत आदेशस्येति परोक्तं दूषयितुमुपक्रमते
तत्र यत्रेति अत्रारोपस्य फलन्तु यत्र मुख्यता तत्राकमादेशे कृते सुटः प्रवृत्तिर्नुड्भावस्य लाभस्त्वधिकइत्याशयेनाह आदेशस्येति परोक्तं दूषयितुमुपक्रमते
…नीति व्याख्यानमिति लक्ष्यानुसारित्रिचतुर्युष्मदस्मद्ग्रहणे व्यर्थग्रहणं शब्दविशेषणन्द्रष्टव्यमिति भाष्यकारोक्तानुसारि नियामकमित्यर्थः अर्थपरत्वाश्रयणेऽ
त्वयानुपपत्तिरिति तु नेत्याशयेनाह द्वयोरेकस्येति वाच्योऽर्थइति सूत्रद्वयस्येत्यादिः अभिमानेनेदमिति एतेन साक्षान्नोचितेति ध्वनितम् जहत्स्वार्थानुत्त्रैवय
त्वरूढिर्विरोधिनीति सिद्धान्तात् नचवृत्तौ सङ्ख्याविशेषस्याभानेन द्वित्वैकत्ववाचकत्वमसङ्गतमिति वाच्यम् यत्र सङ्ख्याविशेषणभाने साधकाभावस्तत्रैवत

अम्येव साम्त्वस्याहार्यारोपेणादेशः आदेशस्याम्त्वाभावाच्चात्र न नुडिति नच यत्र भावी सुट् तत्रैवायं साम आभाविच्चस्य सर्वथा दुरुपपादत्वादि
तिभाष्यविरुद्धकल्पनानर्थैवेति दिक् किन्त्वर्थपराविति व्याख्यानमत्र शरणम् द्वयोरेकस्य वचने बोधने समर्थयोर्युष्मदस्मदोरिति वाच्योऽर्थः।
त्वमावेति जहत्स्वार्थावृत्त्यभिमानेनेदम् सामर्थ्यादेव तद्बाधादिति उभयगतिरिह शास्त्रे भवतीति संख्यासंज्ञासूत्रस्थभाष्योक्तेश्चेति तत्त्वम् अ
त्वयाद्वयोरेकस्मिन्नित्युक्तेवयुष्मदस्मदादिविशेषणतया सिद्धेर्वचनग्रहणसार्थक्यं दुरुपपादमिति बोध्यम् बाधादिति आकमुत्पत्तिकाले
ऽन्यल्लोपाभावेन सुटोऽसत्त्वादिति भावः नचैतज्ज्ञापकत्वेति सर्वनामत्वाभावादिति भावः योग्यताबलाच्चेति ॥ (/) थाइहनुसङ्ख्याभासकस्यादेश

स्य तद्भावस्यवासत्त्वात्साभासत एवेति विशेषात् यत्तु द्वयोरेकस्मिन्नित्युक्ते सन्निहितत्वात्तयोर्युष्मदादिविशेषणत्वापत्तिरतो वचनग्रहणन्तथा च कृत्रिमयोरेवग्रह
णमिति विपरीतमपि सम्भाव्यत इति मूलोक्तञ्चिन्त्यमिति मतन्तत्खण्डयितुमाह उभयगतिरिहेति अन्यथा उक्तप्रकारानङ्गीकारे मूलोक्तस्यैवादरे युष्मदादिविशे
षणत्वञ्चोक्तभाष्याद्वचनग्रहणसत्त्वेपि नतु तदन्तविशेषणत्वमिति बोध्यम् मूलेन स्यानिविशेषणमिति तदाहि स्मदृसाहित्यावच्छिन्नस्योद्देश्यत्वस्यानया
चोद्देश्यताप्रसिद्धिः स्यादिति तात्पर्यमाह बाधादिति बाधमुपपादयति आकमिति द्वन्द्वनिर्देशरूपतृतीयप्रकारसत्त्वशङ्कान्निराचष्टे मूलेनचस्तडामोरिति
योग्यताबलादिति साहित्यान्वययोग्यताबलादित्यर्थः ॥

त्रेकृपरिभाषोपनिष्ठत्तदृत्ती कोगुणवृद्धीति सूत्रार्थमाश्रित्य वृद्धिर्यस्येति सूत्रे पोक्तपरिभाषोपनिष्ठेत तथाच यत्समुदायाद्यजभिन्नेकस्थानिका वृद्धिरिति सूत्रार्थः स्यात

थाचैपगवादिशब्दस्यैव वृद्धिसंज्ञाप्रवृत्तावौपगवीयइत्यादि सिद्धावपि शालीयादिसिद्धिर्न स्यादिति भावः वक्ष्यमाणरीत्या मूलासङ्गतिपरिहारायाह अस्येति अस्य रथे

त्यारस्य सिद्धिरित्यन्तग्रन्थस्येत्यर्थः तैः प्रक्षाशब्दाद्धिः उक्तम् वृद्धिर्यस्येति सूत्रे उक्तमिति शेषः यद्यप्यनूद्यमानविशेषणेष्विति तेन नोक्तं तथाप्यन्यथानुपपत्त्या तथा कल्प्य

तद्गतितदर्पितदनुमतमेवेति भावः ननु निष्प्रयोजनकानुवादो नोचितोऽत आह अनेनेति तादृशोक्तानुवादेन तत्र सूत्रे वृद्धिर्यस्येति सूत्रे यतस्यैव स्थानेग्रहणस्यैव अत्र

च प्रकृतसूत्रेच सवम् अनूद्यमानविशेषणेष्वित्यभिप्रायकमनुवादइत्येवम् यदि स्थानेग्रहणस्य ज्ञापकता तदा साक्षादनूद्यमानविशेषणनियामिका नेत्यर्थो भवि

ष्यति तथासति प्रकृतानुपयोगः इकोयणचीत्यादौ दोषश्च स्यात् अनूद्यमानविशेषणाविशेषनियामिकाऽसानेतितदर्थश्चेत्तदा स्थानज्ञापकसाध्यत्वमिति पूर्वापरवि

सिद्धिरिति अस्यतैरुक्तमिति शेषः अनेनात्र सूत्रेणतस्यैव ज्ञापकत्वं वर्णयतोऽत्रचैवं वदत एव पूर्वापरविरोध इति भावः यदित्वं तरंगत्वेन

स्थानसंबंधलाभइत्यर्थः षष्ठीस्थानेइत्यत्र भाष्ये स्पष्टइति स्थाने ग्रहणं व्यर्थमेव तस्य परिभाषालभ्यत्वाभावेन ज्ञापकासंभवात् वृद्धसंज्ञा

यामिकृपरिभाषात्वपस्थितिस्तु मालादीनांचेति ज्ञापकात् तद्धि प्रस्थे वृद्धमिति पर्युदासे प्राप्तेऽऽरभ्यते अनुवादइति चनिर्मूलम्॥ ७ ॥

शेषत्वेनेति भावः इतिभावइत्यत्र यदित्तीतित्तस्यध्वनितमिति शेषः शेषपूरणेफलमाह यदीत्यादिना स्थानसम्बन्धलाभः स्थानपदार्थनिरूपितसम्बन्धलाभः भाष्ये स्पष्ट

इति तत्रहि यद्यपिलोकेवहवः सम्बन्धाइत्यस्तथापि शब्दस्य शब्देन कोन्योऽभिसम्बन्धो भवितुमर्हति अन्यदतः स्थानात् यद्यप्यानन्तर्यादयोपि सम्बन्धास्तथापि तस्ये

वान्तरङ्गत्वाद्ग्रहणमिति प्रतिपादितम् अस्तेर्भूरित्यादौ स्थानपदार्थनिरूपितसम्बन्धार्थकत्वषष्ठ्या इत्यत्र स्थानिवदादेशइत्यनइतिच सूत्रज्ञापकमप्यस्ति ज्ञापका

संभवात् ज्ञापकत्वासम्भवात् ननु यदि सा परिभाषा न स्वीक्रियते तदा वृद्धिर्यस्येत्यत्र पूर्वोक्तानुपपत्तिरेवेत्यत आह वृद्धसंज्ञायामिति ज्ञापकादिति प्रस्थेऽवृद्धमित्यने

नप्रस्थशब्दे उत्तरपदे परे कर्क्यादिवर्जितमहद्धस्वपूर्वपदमाद्युदात्तमित्यर्थकेन मालाप्रस्थइत्यत्राद्युदात्तत्वे सिद्धे मालादीनामिति सूत्रे वृद्धार्थमारभ्यं यत्तद्रूपद्वा

पकादित्यर्थः सर्वस्तोदीचामिति सूत्रे स्थानेग्रहणं स्पष्टार्थमेव षष्ठीस्थानइति सूत्रेन्तु निर्दिश्यमानस्यादेशा भवन्तीति परिभाषायत्ता भायेति बोध्यम् निर्मूलमिति यं

॥ नेदपरिभाषानज्ञापकसाध्यानदानिर्मूलमित्यर्थः भा
ष्येकारांगुक्तत्वस्यसत्वेबाधकमविदृष्टव्यम् ॥

माचान्त्वादशोद्धोपस्यतस्यकारानिरतआह यद्वेति तत्र वृद्ध संज्ञायाम् तस्याः इक्परिभाषायाः विधौ परिभाषोपतिष्ठत इत्युक्तसूत्रद्वयविषयकमेवेत्यत्र साधकमाह अस सवेति तस्यानिर्मूलत्वात्तदुभयविषयकत्वादेववेत्यर्थः विभाव्यतइति तथाचापीत्यस्यककारविशेषणत्वेपिनिर्दिष्टपरिभाषयारथकत्वादावदोषस्वेतिभावः ननुय यनुवादेपिनिर्दिष्टपरिभाषाप्रवृत्तिस्तदाप्यापीत्यस्याकारविशेषणत्वस्वीकारेकिंबीजमतआह सन्नीति आदिपदेन साक्षाद्दिध्युद्देश्यत्वप्रयुक्तप्राधान्यस्यपरिग्रहः ॥ ६ ॥ मू लेस्यवीयइत्येवोक्तत्वात्तुतत्र हेतुरूपात्तदूनितत्र हेतुमाह विधेयस्येति श्रुतेनेति श्रुतानुमितयोः श्रुतसम्बन्धोबलीयानिति परिभाषयातथाप्रतिपादनादितिभावः ननूक्त कारमात्रस्यप्रत्ययत्वाभावात्प्रत्ययस्यविशेष्य त्वमेवास्तु कादितितु विशेषणत्वदन्तपरमस्त्वित्यतआह कान्ताद्दिति तादृशार्थेकत्यनेसर्विकेत्यादावकचिपूर्वसूत्र

यद्वाइक्परिभाषाचपरिभाषयोर्विधीयतेइत्यध्याहारात्तत्रतस्याअप्रवृत्तिरनुवादेइतिचतद्द्वियमेव अतएवाल्लोपोनइत्यत्रयजादिस्वादि परइत्यस्यान्विशेषणत्वेपिकव्यवधानलाभ इतिष्यङः इतिसूत्रभाष्यध्वनितसंगच्छतइतिविभाव्यते तदासन्निहितत्वादिनैवापीत्यस्याकारविशे षणतेतिबोध्यम् तदृतिस्यवीयइति विधेयस्यासिद्धत्वेनतद्विशेषणासंभवादितिभावः स्यनापाकमेवेति श्रुतेनान्वयसंभवेऽश्रुतेनान्वयायोगा दितिभावः तस्यविसंवादमप्याह रथेत्यादि तास्यत्वाभावादिति कांतात्प्रत्ययादितितुनार्थः क्षिपकादीनानिषेधस्यवैयर्थ्यापत्तेःअपवादेइति। येननाप्राप्तिन्यायेनवाधकविषयेतेनैवन्यायेनवाध्यवाधसिद्धेरितिभावः प्रत्ययस्थेकेइति प्रत्ययेकीत्येवयुक्तम् तयासयोरितिज्ञापका। त्कादौप्रत्ययेइतिनार्थइतिवोध्यम् सवचाप्यरस्यप्रत्ययस्यककारात्पूर्वस्यचात्मइदित्यर्थः ॥ ७ स्याचारिताथ्र्येपिकारिकेत्यादावव्याप्तिः स्यादतस्तदन

विधिने वस्तुतःप्रत्ययस्यविशेषणत्वमेवाभिमतम् क्षिपकादीनान्त्विति सूत्रारम्भसामर्थ्यादित्याह क्षिपकादीनामिति तेषामिकारादेशनिषेधकस्यक्षिपकादीनाञ्चे तिसूत्रस्येत्यर्थः तेनैवन्यायेनयेननाप्राप्तन्यायेनवस्तुतइदानीमित्वन्निरवकाशत्वेनैकादेशस्यवाधकम् येननाप्राप्तन्यायस्यतु तत्रकौण्डिन्यन्यायमूलकतया तस्ययत्रोत्सर्गप्रवृत्त्युत्तरमपिप्रवृत्तिस्तत्रप्रवृत्तेःस्वीकारादिति तद्विषयतायाइहाभावइतिवोध्यम् वाधकत्वमुभयथेतिसाधर्म्यादेवमुक्तम् मूलेप्रत्ययेकेइ ति क्वचित्पाठःसत्वयुक्तःकेतिसमुदायस्यप्रत्ययस्यत्वात्तादृशार्थकत्वेसत्यपिसर्विकाकारिकेत्यादावप्राप्तेः किन्तुबहुषुप्रत्ययस्थेकेइत्येवपाठः तत्रापिलाघवाद् इ प्रत्ययेकीति व्यधिकरणेसप्तम्यौ नतुसमानाधिकरणे अतस्तदादिविधिशङ्कैवनास्ति अतएवतयासयोरितिचरितार्थम् तथाचप्रत्ययइतिककारस्यविशेषणमेव

सामर्थ्यात् कीत्युक्तिसामर्थ्यात् तत्रकपरत्वमव्यवहितत्वसामानाधिकरण्यविशिष्टपूर्वत्वात्मकम् अकारव्यवधानांशेतुगतिस्तकैवदिस्वादकस्यापीति अपिनाआजन्तपरिग्रहः सूत्रेपचिति प्रक्रियोक्तिरियम् साहचर्यानाश्रयणेविनिगमनाविरहादुभयोर्ग्रहणमितिभावः सङ्गृहीतइति तथाचनोभयोर्ग्रहणमाङ्गृहीतिभावः वर्णयतीति चौरादिकाद्वर्ण धातोर्ण्यन्तात्ण्वुल् सूत्रेऽत्राहुरिति प्रकाशकृत् तदुक्तिशेषः स्थानेशब्देजागरूकइति स्थानेशब्दोविधावितिपरिभाषाज्ञापकत्वेनस्थापितइत्यभिप्रायेणेत्युक्तिः वस्तुतस्तु पूर्वोक्तरीत्यातस्यानावश्यकत्वादाह स्थानेपदेति स्थानेइतिपदइत्यर्थः भवत्स्वयकपूर्वस्थानिकाकारस्येतिवाक्यार्थः यकपूर्वत्वञ्चाव्यवहितमेवगृह्यते यकौपूर्वौयस्या इतिविग्रहेउत्तरार्द्धविकलायास्तस्मादितिपरिभाषायाअनुवादेप्युदात्तस्वरितयोरित्यादाविवप्रत्यासत्त्यासमानार्थकत्वेऽपितदर्थकत्वात् तेनकाशराशब्दात्स्वेकुत्स्यायांवा

तत्रसामर्थ्यादापूपरत्वांशेककारव्यवधानंसोढव्यमेवेतिभावः विग्रहइति दक्षिणापश्चादितित्यक् अन्यथा दिग्वाचकस्यापिग्रहणेचेनसाहचर्येणा गेमानाभावः संगृहीतः इष्टाभावादिति अकचः सत्वादितिभावः आकारविशेषइति वर्णयतिआच्छादयतीतिव्युत्पत्तेः जागरूकइति स्थानेपदाभावेप्यनन्तरत्वात् स्थानसंबंधस्येवलाभइत्यपिबोध्यम् प्रतिपदोक्तस्येति स्त्रियामित्यधिकृत्यविहितस्येत्यर्थः विशिष्यतदनुपादानात्कथंतल्लाभ इतिचिंत्यम् स्वकेतीति तद्भाष्यादावदर्शनादयुक्तम् शुभंयाःविद्युत्ततःकइति नदीसञ्ज्ञासूत्रस्थभाष्यप्रामाण्यादिदंतेभ्यः क्विपोनभिधानाद्विज्ञुक्तः तत्रभ्रमरव्याविति परेआदंतलक्षणोविज्ञुक्तोनतुक्विपइत्याहुः कैयटस्तुशुभंयातिक्विप् शुभमितिनिपातः अज्ञातादौकः केणइतिह्रस्वइत्याह सूत्रेपिध्वनितमिति स्वशब्दस्यात्तोविशेषणमित्यादिनाभवत्यनेनग्रंथेनेतिभावः स्विकायामिति स्वाशब्दादयंतत्राशिषिकेकेइत्वंसाधु ॥ ७ ॥

केइत्वस्यविकल्पोनविहितस्याटावादेरितिशेषः लक्षणप्रतिपदोपरिभाषाघटकस्यप्रतिपदोक्तस्येत्यस्यसाक्षादुच्चारितस्य मतञ्चव्यानुवादेनवाविहितस्येत्यर्थइत्याशयेनाह विशिष्येति नतुक्विप्प्रत्ययस्वयाधातोर्वक्तुसूचितइत्याशङ्क्य कान्तिरस्यातिनदीसंज्ञेति नत्रहि नसूत्रभाष्येहि तथाच यथानन्तकात्स्वसत्वाद्विज्ञुक्तस्तथाऽत्रापिकान्तस्वत्वाद्विजेवोचितः लोकेचोदृशानामनभिधानम् कैयट इति उक्तभाष्यविरोधस्याऽरुचिरनेनध्वनिता ध्वनने कत्राकाङ्क्षायामाह स्वशब्दस्येति ननुस्वशब्दस्यात्मीयवाचिनः सर्वनामत्वादकचित्तद्विशिष्टाद्यापः सत्वेसर्वनाम्नः स्याड्ढ्रस्वश्चेतिस्यादिति स्विकायामित्यनुपपन्नमतआह स्वाशब्दादिति तथाच कान्तस्यासर्वनामत्वेननेहस्या

ह्रस्वत्वपक्षे विकल्पस्योपपत्तिमाह बह्विति मूले अत एवेति पुनक्तिरिति सूत्रमभिव्याप्यानुपसर्जनादित्यधिकारस्य सत्त्वादेव गृह्यमाणेति श्रुतानुमितयोरिति न्यायादिति
भावः नात्र दोष इति बहुयुवा शालेत्यत्रापि व्याप्तिरूपो दोषो नेत्यर्थः नन्वेवमनुपसर्जनाधिकारवैयर्थ्यमत आह अनुपसर्जनेति सहि बहुकुरुचरादित्यादौ ङीपः प्रवृत्तिवा
रणायारब्धः यदि स्त्रियामिति गृह्यमाणस्यैव विशेषणं स्यात्तदा टितः स्त्रियामवर्तनान्ङीपः प्राप्तिर्नास्तीति तदधिकारो व्यर्थः स्यादिति यावत्ताविनेति न्यायेनोभयोरपि ज्ञाप्यत्व
मिति भावः अदोषादिति नचेत्याद्युक्तदोषाभावादित्यर्थः अत एव स्त्रियामित्यस्य स्त्रीप्रत्ययप्रकृतित्वाभिमतविशेषणत्वादेव यदि श्रुतविशेषणत्वमेव स्यात्तदा वनस एव श्रुतत्वा
त्तद्विशेषणत्वं स्त्रियामित्यस्य स्यादित्यत्र वस्तुतस्य स्त्रियामवर्तनाद् गौरचेत्यस्य प्रवृत्तिर्न स्यादिति भावः न केवलं तस्यानुरोध एव स्त्रियामित्यस्य स्त्रीप्रत्ययप्रकृतित्वा

ह्रस्वपक्ष इति बहुजसखट्वाजस इत्यत्र स्यायां कपि सुपो लुकि प्रत्ययलक्षणेन भागद्वयस्य सुबन्तत्वात्समाससंज्ञायां समासान्ता इति शास्त्रबलात्
कवतस्यैव समासत्वेनोपसर्जनस्त्रीप्रत्ययान्तसमासरूपप्रातिपदिकाभावात् गोस्त्रियोरिति ह्रस्वत्वाभावे केण इति ह्रस्वत्वे च न कपीति निषिद्धे
आपोऽन्यतरस्यामिति ह्रस्वे कपः प्राग्वर्तिनः खट्वशब्दात्परस्यापो भाषितपुंस्कादिहितत्वेन तत्स्थानिकाकारस्यायं विकल्पः ह्रस्वाभावे तु बहुख
ट्वाकेनेति भावः प्राञ्च आहुरिति न च स्त्रियामित्यस्य गृह्यमाणविशेषणत्वान्न दोषः अनुपसर्जनाधिकारेण तदन्तविधेः स्त्रियामित्यस्य स्त्रीप्रत्य
यप्रकृतिविशेषणतायाश्च ज्ञापनेनादोषात् अत एव धीवानमतिक्रान्ता अतिधीवरीति सिध्यति प्राधान्येन तद्विशेषणतायाः न्याय्यत्वाच्च ।
अनुपसर्जनादिति तु गृह्यमाणस्यैव विशेषणम् अत एव कौम्भकारेयसिद्धिः अन्यथा कुम्भकारेयोऽप्यापद्येत ————— ॥ भिमतविशेषणताभात्पयेत्रा

इकः किन्तु प्रधानाप्रधानयोः प्रधानानुरोध एव प्रबल इति न्यायोऽपि स्त्रियामित्यस्य तत्त्वे नियामक इत्याशयेनाह प्राधान्येनेति साक्षाद्विध्युद्देश्यत्वेनोपात्तनिष्ठप्रकारतानि
रूपितविशेष्यत्वरूपमस्य प्राधान्यं द्रष्टव्यम् नन्वेवमनुपसर्जनादित्यपि प्रधानस्यैव विशेषणं स्यादिति बहुकुरुचरेत्यस्य तद्व्यावर्त्यत्वानुपपत्तिरिति तदधिकारस्य तद
न्तविधिज्ञापकत्वानुपपत्तिरत आह अनुपसर्जनादिति त्विति विशेषणमिति अनुपसर्जनादित्यस्य तदन्तविधिज्ञापकता परभाष्यप्रामाण्यादिति शेषः अत एव अ
नुपसर्जनाधिकारेण तदन्तविधेर्ज्ञापनादेव सिद्धिरिति तन्मात्रस्य सिद्धिरित्यर्थः व्यतिरेकप्रदर्शनमुखेनोक्तार्थं द्रढयति अन्यथेति अन्यथा तज्ज्ञापित तदन्तविधेर्भा

अपिशब्दोत्रेष्टसिद्धिसमुच्चायकः साचतदन्तविध्यभावेकेवलात्कारशब्दान्ङीप्यप्यनुपसर्जनस्त्रीप्रत्ययेतदादिनियमाभावेनसमुदायस्यस्त्रीप्रत्ययान्ततयातन्नो
ढकिवोध्या नचसमुदायस्यस्त्रीप्रत्ययान्तत्वेपिनप्रातिपदिकत्वमितिवाच्यम् तत्प्रातिपदिकादित्यस्यासम्बन्धात् अन्यथाङ्याप्ग्रहणस्यैतदर्थमावश्यक
तया ऽन्यार्थत्ववर्णनपरङ्याप्सूत्रस्थ भाष्यविरोधःस्यादितिआशयरूपमुपपादयति कुम्भेनेत्यादिना समासेपीति अपिशब्दोयङ्कारस्येत्यनन्तरं द्रष्टव्यः तेनकारशब्द
स्यसमासात्मकसमुदायस्यच्चप्रातिपादिकत्वलाभः तदर्थस्यापीति अपिशब्दःसमुदायपरामर्शकः एकार्थीभूतस्यापीति अस्यतस्येत्यत्रान्वयः विशिष्टस्यङीप् विशिष्टस्यत
स्य कारिशब्दस्य अयोगस्यतदर्थेनायोगस्य अपत्यार्थेनसहेत्यादिः वकुमशक्यत्वादिति अजहत्स्वार्थवृत्तिसद्भावात् जहत्स्वार्थत्वेतुतत्रैवयत्नरूढिविरोधिनीतिसिद्धान्ता
त् तेनापियोगे तदर्थेनापत्यार्थेनयोगे एवक्त्वोभाभ्यामत्रत्ययोत्पत्तिसम्भवदत्याशयेनाह कदाचिदिति विशिष्टस्यसमासात्मकसमुदायस्य ननुकुम्भेनैकार्थीभूतस्यतस्य

कुंभेनसमासेपिकेवलस्यकारस्यप्रातिपदिकत्वेनतदर्थस्यापिस्त्रीत्वेनयोगात् ततोङीपिकुंभेनैकार्थीभूतस्यापिविशिष्टस्यापत्येनयोगेतस्यायोगस्यव
कुमशक्यत्वात्तेनापियोगेकदाचित्ततोढकिविशिष्टस्यतन्निरूपितत्वागत्वाभावेनकुंभशब्दोकारवृद्ध्यनापत्तेः निष्कृष्यएकार्थीभावस्यैवप्रत्ययोत्पत्ति
निमित्तत्वेनमानम् समुदायेनैकार्थीभावेवयवेनापितस्यैवसत्वात् नचसमुदायान्ङीप्यपिअनुपसर्जनस्त्रीप्रत्ययेतदादिनियमाभावेनकदा
चित्कारीशब्दादापत्तिस्तवापीतिवाच्यम् एतदधिकारसामर्थ्ये नैवतदादिनियमाभावेनाधिकस्यैवकार्यवोध्यते ननुन्यूनस्येत्यदोषादिति ॥

कथमपत्येनयोगोऽतआह निष्कृष्येकेति नमाननिमित्ति अतएवतद्धितार्थेत्यनेनोत्तरपदेपरेसमासविधानंसङ्गच्छते अतएवचयेनविधिरितिसूत्रेप्रत्ययग्रहणपरिभाषा
याःप्रयोजनङ्गार्ग्यायणःपरमगार्ग्यायणइत्युपात्तम् ङ्याब्ग्रहणपरिभाषात्वत्रनप्रवर्तते ङ्यन्मात्रग्रहणाभावात् कस्यचिच्छङ्कान्निरस्यति नचेति एतदधिकारसामर्थ्येन अ
नुपसर्जनाधिकारसामर्थ्येन नतुन्यूनस्येति तदाशयः चातुर्थिकस्यानुपसर्जनादित्यत्तत्प्रयोजननिरूपणपरप्रधानेनतदन्तविधिर्यथास्यादित्येतद्भाष्यस्याशयः नचतदन्त
विधावपिव्यपदेशिवद्भावेनकारीशब्दस्यास्तन्तान्तत्वात्कुम्भकारेयोदुर्वारइतिवाच्यम् एतदधिकारसामर्थ्यादसहायएवव्यपदेशिवद्भावप्रवृत्तेः तत्तएवस्त्रस्यचेत्यापा
नप्रत्ययग्रहणपरिभाषयाऽधिकस्यैवव्यावृत्तिर्नतुन्यूनस्येतितुयुक्तमेव अतएवकस्यगोत्रापत्यमित्यर्थेइञियस्येतिलोपेपि यूनिफक्सिद्धिः ननुकुम्भेनसमासेपिकेव

मूलेऽन्यथेति ङीन्विधायके जातेरित्यस्याऽननुवृत्ताविव्यर्थः पुंयोगेपीति ङीषस्वाधित्वापरत्वादिति शेषः नन्वेवसति फलविशेषः अजन्ताङ्डीनि समुदायस्याद्युदात्तत्वमेव भविष्यति ङीषि तु सति शिष्टप्रत्ययस्वरेणान्तोदात्तत्वमिति विशेषस्य स्पष्टत्वात् तत्रेष्टापत्तिन्निराचष्टे दृश्यत इति इत्यर्थः इति तात्पर्यार्थः ननु टिड्ढेति सूत्रस्यानुग्रहणे नाज्यन्ताङ्डीष्यप्यौत्सीत्यादेः सिद्धौ शार्ङ्गरवेति सूत्रेऽनुग्रहणस्य वैयर्थ्यमत आह अनेनैवेति अपत्यस्त्रीति गोत्रापत्यं स्त्रीत्यर्थः एतेन गोत्रञ्च चरणैः सहेति जातित्वमस्तीति सूचितम् मूले इत्यनेकमिति नचक्रौञ्च्य इत्यादावपि लक्ष्यभेदेनानेकवाक्यताऽस्त्येवेति वाच्यम् तत्र सङ्ग्राहकवाक्यस्यैकत्वमिह तु तस्य नानात्वमित्याशयात् अत एव पञ्चाग्न्यादित्यत्र न ङीप् नचैवमिति एवम् आपिशलमधीते आपिशलेत्यस्य व्यावर्त्यस्य लाभे व्याख्यानेनेति मूलोक्तरीत्याऽनुपसर्जनादित्यस्य प्रयोजनमुक्त्वा एतदपि नास्ति प्रयोजनम् स्त्रियामिति वर्तनेनाणं विशेषयिष्यामः स्त्रियां योऽण् विहितः एवमपि काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्ना तामधीते का॰

**पुंयोगेपि स्यादिति दृष्यते तु ङीषित्यर्थः प्रत्युक्त इति अनेनैव सिद्धे तत्राजग्रहणं तु उत्सस्यापत्यं स्त्रीत्यत्र जातिलक्षणङीष्बाधनार्थमिति बोध्यम् अत्रहीति नचैवमनुपसर्जनाधिकारस्य चरितार्थ्यं मूलोक्तमदंतविधिज्ञापकतानुपपत्तिरिति वाच्यम् तस्यानुसारिव्याख्यानेन स्त्रियामित्यस्य गृह्यमाणविशेषणतया प्रितहारणसम्भवात् तस्मात् कुरुचरेत्येव तद्यावत्यंत च्च तदंतविधिं विना नोपपद्यत इति तज्ज्ञापकत्वं स्त्रियामित्यस्य प्रकृतिविशेषणत्वज्ञापकत्वं चेति बोध्यं तत्करणे तद्यावृत्तिरपि अनेनैवोपसर्जनपदे नोभयोरपि ग्रहणमित्याशयात्॥** शार्ङ्गरवी ब्राह्मणी अत्र प्राप्नोति नैष दोषः अध्येत्र्यामभिधेयायामणईकारेण भवितव्यम् पञ्चाध्येत्र्यामभिधेयायामण् लुप्तः सः यश्च श्रूयते उत्पन्न स्तस्मादीकार इति पुनर्न भविष्यतीति भाष्य इत्युक्तग्रन्थमूलकव्याख्यानेनेत्यर्थः तस्मात् उक्तरीत्या तद्वारणात् सत्त्वेति तस्य तद्व्यावर्त्यत्वं त्वेत्यर्थः नन्वेवमुक्तरीत्या तस्य तदन्तविधिज्ञापनेपि स्वविषये चारितार्थ्यं त्वत्पादमिति कथं ज्ञापकत्वमत आह स्त्रियामित्यस्येति तत्करणे तद्व्यावृत्त्यर्थमनुपसर्जनादित्यस्य करणे एतद्व्यावृत्तिरपीति आपिशलाकाशकृत्स्नाप्रत्ययोरपीत्यर्थः अनेनैवेति प्रक्रान्तेनानुपसर्जनाधिकारेणेत्यर्थः ननु प्रातियोगिसमर्थकमुपसर्जनपदं शास्त्रीयोपसर्जनबोधकमिति कथं व्यावृत्तिरत आह उपसर्जनेति कृत्रिमा॰ कृत्रिमत्यायोत्रानुपसर्जनाधिकारप्रयोजनप्रदर्शनपरभाष्यप्रामाण्येन बाध्यत इति भावः इत्याशयादिति मूलस्येति शेषः ॥ ७ ॥ ७ ॥ ७ ॥

अण् कार्यमित्यत्राण्रूपं कार्यमित्यर्थस्य भ्रमवारणायाह ङीवित्यर्थ इति इदमुपलक्षणम् अणो ह्यच इति फिञ् सिद्धिरपि प्रयोजनम् एतेन यद्ङीप् सिद्धिरेव प्रयोजनं
तदा स्वातन्त्र्येण ङीप् विधानेन न सिद्धे ज्ञापनस्य नोपयोग इति परास्तम् न च क्रुञ्चादिभ्यो लाघवादणेव कार्यः किमनया कुसृष्ट्येति वाच्यम् ज्ञापकसिद्धस्यासार्वत्रिकत्वेन
कात्र त्वस्य सिद्ध्यर्थमेव मभिधानात् शार्ङ्गरवेत्येवेति एवं तान्त्रिकी लिङ्क इत्यत्रौतन्त्यदोपादानेन यत्र प्रथमान्तार्थात् क्रौञ्चार्थेन तत्रैवाण् कार्यमित्यपि बोधितमत एव शीलि
कामी तिवार्तिकस्य मांसशीला मांसकामेत्याद्येवोदाहृतम् मूले ऽनस्येवेति अपत्यशब्दस्यापत्याधिकारविहितपरत्वादेव अयजिति अयमकारो ऽनुनासिकस्तस्येत्संज्ञ
या निवृत्तिरिति बोध्यम् अकारप्रश्लेषस्य फलमाह तद्धातिकेति एवञ्च तद्धातिकप्रत्याख्यानपरं भाष्यमेवापत्यशब्दस्यापत्याधिकारविहितपरत्वे मानमिति दर्शितम् ननु
स्य लन्त्र्यस एव यघकारस्य प्रश्लेषस्तदाभिजिदिति सूत्रविहितयञन्तान्ङीबनापत्तिरत आह अभिजिदिति स्त्रियामित्यनुवृत्तेरिति व्रातच्फञोरित्यादिः साच म।

अण् कार्यमिति ङीवित्यर्थः तान्त्रिकीलिङ्क इत्युक्ते तादृश्यां प्रहरणमिति णेदांडे स्येवन्त्र कारः प्रश्लिष्ट इति तद्धातिकप्रत्याख्यानायेति शेषः अभिजि
द्विदभृदित्यादिसूत्रे ऽस्त्रियामित्यनुवृत्तेस्तस्य गोत्रार्थकत्वेपि न तत्र ङीप् सिद्धान्ते पीष्टः संघाकेति सूत्रे एतज्ज्ञाप्यप्रमाण्यादेकानुबन्धकपरिभाषा
यास्त्रप्रवृत्त्या गर्गादियञ एव ग्रहणमिति भावः एवमिति अकारः प्रश्लिष्ट इत्यर्थः प्रातिपदिकसंज्ञार्थमिति तत्फलं च ङीषिति भावः न च लिङ्गविशि
ष्टपरिभाषया तत्सिद्धिः एतत्सूत्रस्थैतत्समाधानार्थकभाष्यप्रामाण्येनास्याः स्त्रीप्रत्ययप्रकरणे ऽनुपस्थितेः सामर्थ्यादेवेति अप्राति पदिकत्वेपीति भावः

एड् कञ्जुत्या कार्या गोत्रार्थकत्वेपीति किमत्र मानमिति चेत् तत्सूत्रभाष्यग्रन्थ इकमेवं तथाहि मन्त्रादिगोत्रमिति वक्तव्यम् अस्य गोत्रत्व प्रयुक्त ङ् कार्यम् ॥ उच्चारणार्थ इति
वर्तीति तदर्थः किम्प्रयोजनम् आभिजितकः आभिजित्यस्यायमित्यत्र गोत्रचरणादिति वुञ् यथा स्यात् न च्वाकर्तुं शक्यम् गोत्रादयस्थार्थिको गोत्र एव भवति अत्र भाष्ये वुञ
एव फलत्वेनोक्तो न तु ङीप् एतेन गर्गादिभ्यो ऽयञित्यत्रैवाभिजिदिति सूत्रे ऽप्यकारप्रश्लेष इति वदन्तः परास्ताः पीष्ट इति एवञ्च स्त्रियायञेव सत्त्वात्तीति न तत्र ङीपः सम्भा
वना किन्तु गोत्रार्थबोधकत्वादिदं शाङ्गारवलक्षणङीनवचनेति न तत्राकारस्य प्रश्लेषः स्त्रियामित्यस्यासम्बन्धेपि ननु गर्गादिभ्य इति सूत्रे ऽकारस्य प्रश्लेषे सङ् घाङ्कैतिसूत्रे ऽ
स्य ह्यनुबन्धकत्वाद्ग्रहणं न स्यादत आह सङ् घाङ्कैतीति एतज्ज्ञाप्यमिति सङ् घाङ्कैतिसूत्रे गार्गो घोषः गार्गो ऽङ् इत्युदाहरणपरभाष्यैस्त्यर्थः अभिजिदित्यस्यापत्याधिकारपठितभि

क्षितः प्रातिपदिकाधिकारार्थम् नैतदस्ति प्रयोजनम् निरकरणसामर्थ्यादेवात्रेकारो भविष्यतीति भाष्येऽर्थः अस्याः लिङ्गविशिष्टपरिभाषायाइत्यर्थः ॥ ॐ ॥ तेनश्चकारस्योच्चारण
र्थत्वेन तदकारस्याविवक्षितार्थत्वे रेफ    परस्याकारान्तत्वाभावेनादेशो न स्यादिति भावः उच्चारणार्थत्वे मानन्तु फढखच्छ घामिति निर्देश एव अत्र ढक इतिफिनोप्युपलक्षण
म् मूलेपि नोनिरकरणादिति श्रयायनादेशावयवस्य नस्येत् सञ्ज्ञास्यात्तदाऽनेनैवर्न्नित्यादिरित्यस्य प्रवृत्तिसिद्धौ फिनोनिरर्थकत्वस्यादितिभावः ननुत्रायनो निरकरणसामर्थ्यात्फि
नोनस्यनेत्वमिति वैपरीत्यमेव कुतो नेत्यत आह असञ्जातेति असञ्जातविरोधात्सञ्जातविरोधस्य संकोचस्यौचित्यइति न्यायेऽर्थः नसञ्जातो विरोधो वैयर्थ्यशङ्कया विरोधो
यस्यतस्येत्यर्थः उत्तरकालिकप्रतीतिविषये यदीत्सञ्ज्ञा न तदा प्राथमिकप्रतीतिविषय फिनि मितार्थ नकारोच्चारणं व्यर्थमिति शङ्का भवतीति तत्रेत्सञ्ज्ञाप्रापकशास्त्रसंकोचएवोचि
तइति भावः एवञ्च माहेश्वरसूत्रान्त्यासमस्ततः यत्निरकरणत्वसामर्थ्यादिति फलितम् अल्पवयसि प्रथमवयसि अपिनाऽनूढासमुच्चयः एवञ्च याऽल्पवयस्का ऊढा चेत्ता
स्यात्तादृशप्रयोगदर्शनेनास्य प्रथमवयसः प्रवृत्तिनिमित्तकत्वमावश्यकम् नन्वेवंसति वृद्धकुमारीत्येवम्प्रयोगोनस्यादिति भाष्ये दृश्यते तस्य कथमुपपत्तिरित्यत आह ॥

तेन    ढक आदेशसिद्धिः निरकरणेति असञ्जातविरोधन्यायसहकृतेत्यर्थः नन्विति अल्पवयस्यूढायामपि प्रयोगादिति भावः गौणइति पुंसाऽसंप्र
योगरूपसादृश्यादिति भावः द्विगोरित्यादिति द्वाभ्यां शताभ्यां क्रीता द्विशतेत्यादौ निषेधश्चरितार्थः अत्रद्विकनोलुक् कंवल्यमिति ॥    ७    ॥

मूले वृद्धकुमारीति गौणः लाक्षणिकः लक्षणाप्रयोजकसम्बन्धमाह पुंसाऽसम्प्रयोगइति कौमारयौवनवृद्धत्वात्मकानि त्रीणि वयांसि यथाहुः पितारक्षति कौमारे भर्तारक्षति।
यौवने पुत्रस्तु स्थविरे भावेन स्त्रीस्वातन्त्र्यमर्हतीति केचित्तु बाल्यमध्यत्ववृद्धत्वात्त्रीणि आषोडशाद्भवेद्बालो यावत्क्षीरान्नवर्तकः मध्यमः सप्ततिं यावत्परतो वृद्धउच्यतेइ
त्याहुः आयुषश्चतुर्भागैश्चत्वारीत्यन्ये यथाहुः आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम् तृतीयेन तपस्तप्तं चतुर्थे किं करिष्यतीति वयस्यचरमइति वार्तिकं सर्वथाऽरब्धव्यमे
वेतिबोध्यम् ननु पञ्चाश्वेत्यत्र यदि ठगन्तत्वान्ङीप् प्राप्तिस्तदा निषेधवैयर्थ्यमत आह द्वाभ्यां शताभ्यामिति आदिना पञ्चानामजानां निमित्तं धनपतिसंयोगइत्यर्थे गोद्व्यचइति
यतोऽध्यर्द्धेति लुकि पञ्चाजेत्यस्य सङ्ग्रहः अपरिमाणेति सूत्रे परिमाणशब्दः पारिभाषिकस्यार्थस्य बोधकः यथाहुः ऊर्द्ध्वमानङ् किलोन्मानं स्यात्परिमाणन्तु सर्वतः आयाम
स्तु प्रमाणं स्यात्संख्या बाह्यान्तु सर्वत इति अतएव द्वे वर्षे भूता द्वाभ्यां शताभ्याङ् क्रीता द्विवर्षा द्विशतेत्यादौ निर्यङ्माने द्विहस्ताभित्तिरित्यादौ च निषेधस्य सिद्धिः ॥ ७ ॥

नन्वेवंसत्युन्मानवाचकोविलकाम्वल्यश्ब्दोनोपादेयावपरिमाणत्वादेवसिद्धेरतआह अपरिमाणेति ननुप्रस्तस्यशब्दस्यतदन्तपरतयाश्रुतत्वादित्येतन्मात्रोपादानेनकथ
मिष्टसिद्धिरतआह अवान्तरेति तत्काले अवान्तरवाक्यार्थवोधकाले अयम्भावः येनविधिरित्यस्यप्रवृत्तिविशेषणज्ञानाधीना तज्ज्ञानन्त्ववान्तरवाक्यार्थवोधोत्तरमेव
ति मानाभावइति प्रत्युतनिराकाङ्क्षत्वमत्रप्रतिवन्धकमस्तीतिवोध्यम् अपिशब्दोपादानेइहतुनस्यादित्युत्तरवाक्यासङ्गतिरतआह इहैवेति तथाचापिमदसत्त्वार्थइति
भावः तिर्यगितिप्रकृतग्रह्यादिः आयामपरिच्छेदकत्वेनप्रमाणवाचित्वादितिभावः मूलेआयामपरतया आयामपरिच्छेदकपरतया आरोहतः उच्छ्रायात् परिणाहतः वि

अपरिमाणत्वेप्येतयोर्ग्रहणंनियमार्थम् उन्मानस्यचेद्धिस्तकंवल्ययोरेवेति तेनान्यत्रउन्मानेद्विपलीद्विनिष्कीत्यादिसिद्धिः अनन्तत्वादिति अ
वांतरवाक्यार्थवोधोत्तरंयेनविधिरित्यस्यप्रवृत्तेस्तत्कालेऽज्ञातत्वात्तेनैवसंबंधेजातेपश्चात्तदंतविधावपिपुनर्व्यापारेमानाभावइतिभावः इ
हापीति इहैवेत्यर्थः सिद्धान्तादिति षोडशहस्तप्रमाणइत्यर्थकाण्डशब्दस्तिर्यङ्मानमितिनतस्योर्द्ध्वमानत्वमितिभावः प्रमाणवत्तत्सर्वो
ति परिच्छेदकेवतत्सर्वेत्यर्थः तत्स्वभावादितिरतिस्वभावादित्यर्थः द्वयसचोलुगिति तस्यायंभावः आयामोदैर्घ्यंतच्चद्विविधम् तिर्यगूर्द्ध्वचोन्मा
नंचतुलादावारोप्ययेनमीयतेतदिदंचविनिगमनाविरहादिति प्रमाणवाचित्वाभावेनेतितिर्यङ्मानस्यैवप्रमाणत्वात् तिर्यङ्मानस्यैवा
यामपदेनप्रमाणलक्षणेग्रहणंनतूर्द्ध्वमानस्यउर्द्ध्वमानंकिलोन्मानमित्युक्ते — रितिभावः द्विगोर्लुगित्यत्रापिप्रमाणेद्वयसजनुवर्ततेसर्वेति
तात्पर्यम् प्रमाणत्वेनप्रसिद्धाइति तिर्यङ्मानत्वेनप्रसिद्धाइत्यर्थः शमादीनामूर्ध्वाधरदिगवस्थितवस्तुपरिच्छेदकत्वेपितिर्यगवस्थितव
स्तुनोपिपरिच्छेदकत्वात्तत्वेनप्रसिद्धिरस्तीति ॥ ऽ।स्तारात् अतएव आयामपरिच्छेदकस्यापरीमाणार्थत्वादेव येनकर्षादिना इदन्त्वऊर्द्ध्वायामपरिच्छेदकत्व
रवञ्चास्यहिरूपत्वमितिफलितम् ननुपुरुषशब्दस्यप्रमाणवाचित्वाभावेनत्यसङ्गतम्पूर्वग्रन्थविरोधादतआह तिर्यङ्मानस्यैवेति इत्युक्तेः इतिपृथगुक्तेः ननुश्लोक
वार्तिकेप्रमाणेलद्वयसज्भिन्नवाक्यत्वेनतन्त्रकृतेर्निर्वाधनतयातदुक्तिरदुष्टैवेत्यतआह द्विगोरिति शमादीनामपुरुषतुल्यत्वशङ्कांवारयति शमादीनामिति शमशब्दोहस्त
वाची पाणिः शमः शयोहस्तइत्यमरोक्तेः यच्च शावः शमः पाणिरिति पाठात्तराच्च आदिनाऽङ्गुल्यादीनाङ्ग्रहणम् वस्तुतोपीति अतएवद्विशमीद्विशमेति तत्ररूपद्वयम्भवति

वस्तुत आद्ये लुगप्राप्त्याद्विशमहद्यसी त्येव तत्वेन नियेज्ञानत्वेन अनुगववितस्तिद्धो दशाङ्गुल इति प्रसिद्धिः पुरुषशब्दस्य तु ऊर्ध्वाधरदिगवस्थितवस्तुमात्रपरिच्छेदक त्वेन क्वचिदपि न प्रमाणवाचकत्वम् ॥ ❁ ॥ प्रयोगासिद्धिरिति लुको वैकल्पिकत्वे योक्तप्रयोगासिद्धिः आद्यपदयोः समर्थानां प्रथमादित्यनयोः नयोः प्रत्ययविधावुप युक्तत्वे नायोग्यत्वादत्रासम्बन्ध इति भावः असम्बन्धादिति सन्नियोगशिष्टन्यायोऽत्रासाधक इति भावः दृष्टान्तप्रदर्शनेन कथितस्य दार्ढ्यं भवतीत्याशयेनाह शम इत्यादाविवेति सामर्थ्यं स्पष्टयति नियतवेति सामर्थ्यात् तदुपादानसामर्थ्यात् इदमपि वक्तव्यमित्यादिना मूलोक्तमपि उपादानसामर्थ्यमेव नास्तीत्याह वस्तुत इति

अन्यथेति न च प्रमाणे लइत्यत्र समर्थानां प्रथमादित्यतो वेत्यनुवृत्तेस्तत्प्रयोगसिद्धिः आद्यपदयोरननुवर्तनेन वेत्यस्याप्यसंबंधात् लुक् स्यादिति शमद्दत्यादाविवेति भावः सामर्थ्यादिति नियतावस्थितवस्तुपरिच्छेदकत्वेपि सामर्थ्यात् प्रमाणपदस्य परिच्छेदकमात्रपरत्वमिति । भावः लुगप्राप्तिप्यत इति इदमपि त्याशयवर्णनमात्रम् वस्तुतस्तु द्वौ पुरुषौ प्रमाणमस्या इत्यर्थेन दस्य परिमाणमिति ठक्षत्रो वाध्य इति तु किशास्त्रस्य चरितार्थ्यात्तदाक्षेपेन मानम् तत्र हि परिमाणशब्देनोत्तर सूत्रानुरोधेन परिच्छेदकमात्रग्रहणमितितत्त्वम् नादेशेनेति अ नग्वऊ धर्मानकारो लिंगाधिकार इति वार्तिकस्तोत्तम् एतेन लाक्षणिकत्वादस्यानोल्लोपोन इति न स्यात् कुंडोध्न्यादिस्थाचारक्विपि आत्मनेपदार्थं चङकार इत्यपास्तम् अत्र भाष्यवार्तिकप्रामाण्येनानुग्रहणे प्रतिपदोक्तपरिभाषया आचारक्विबभावस्य च तदंते आत्मने पदाभावस्य वा कल्पनात् ॥ ७ आर्हादिति सूत्रे परिमाणस्यापारिभाषिकमेवेत्याशयेनाह ठक इति उन्मानस्याग्रहणमितिमतेनाह ठञिति उत्तरसूत्रेति सङ्ख्यायाः सं ज्ञासंघेति सूत्रेत्यर्थः संख्या वाह्यात्तु सर्वं तदयुक्तं तद्वाचकस्यापरिमाणवाचकत्वात्सामानाधिकरण्यानुपपत्तिरन्यथा स्यादिति भावः अतस्य वषष्टिर्जिवित परिमाणमस्य षा ष्टिक इत्यस्य सिद्धिः मूलस्य पूर्वपक्षदार्ढ्यायाह आन्स्वेति नादेशेन सिद्धत्वादेव एतेन उक्तार्थस्य वार्तिककारसम्मतत्वेन न स्यादिति एतेनाकारोच्चारणस्य फलमुक्तम् । ङकारोच्चारणस्य फलमाह कुण्डोध्न्यादिभ्य इति एतेनेत्येतदर्थं स्पष्टयति अत्रत्येति अनुग्रहण इति अर्थवत्परिभाषावदिति शेषः नङभावकल्पनमात्रेणोपपत्तौ क्विबभाव कल्पनमनौचितमित्याशयेनाह आत्मनेपदेति मूले सुमङ्गलीरियमिति अत्र सुमङ्गली इत्युदाहरणं बोध्यम् सुमङ्गलीरियमिति ङीप्रत्ययानन्तरसङ्गादुच्चारितम् क्वचित्तु

उक्तरूपमित्यस्य स्तुनीतिरूपमितिनार्थः ङीपस्त्वा प्राप्तेरत आह नान्तमिति एवञ्च नान्तत्वाभावेन ङ्न्नेभ्य इत्यस्य न प्राप्तिरिति भावः एतदेवोपपादयति णिचीत्यादिना त
दभावः नान्तरूपाभावः स्वरङ नकारोक्तिं निरस्यति नचेति नेष्ठवद्भावेनेति यदिष्ठ निष्ठद्दष्टन्तस्याति देशात्वेनेन क्रियते न स्तद्धितटिलोपस्तु नद्द ——————
ष्ठेष्ठेरित्यस्यैव प्रवृत्तेः परत्वाद्भिष्ठइत्यादौ दर्शनात् निषिद्धमिति प्रकृतिभावेहितस्य प्रवृत्तिर्भवतीति निषेधफलसम्पत्त्या निषिद्धमित्युक्तम् नच प्रकृतिभावेनैव नस्तद्धितइ
त्यस्यापि प्रवृत्त्यभावे सिद्धे न स्तद्धित इतिनद्दष्ठ इति हेतूपन्यासोऽयुक्त इति वाच्यम् येननाप्राप्तन्यायेन प्रकृतिभावस्यटेरिति सूत्रबाधकत्वस्यैव निर्णयात् एवञ्च प्रकृतिभा
वादिलोपासम्भवान्नान्तस्य लाभ इति सूक्तञ्चिन्त्यमिति तदाशयः अस्य मतस्य प्रकृतिभावस्यटेरिति सूत्रमात्रबाधकत्वमिति मतस्य यदि प्रकृतिभावष्टेरित्यस्यैव बाधक
स्तदानेकाजित्येव सिद्धे प्रकृत्यैत्येतदुपादानस्य वैयर्थ्यमिति भावः प्रकृतिभावस्य सर्वबाधकत्वादेवाल्लोपो न इत्यल्लोपोपि तद्विषये नेति प्रतिपादितम् प्रकृत्येत्येतदुपादान

उक्तंरूपमिति नांतंरूपमित्यर्थः णिचिनस्तद्धितइतिटिलोपे तदभावः स्पष्ट एव नच नस्तद्धितइति टिलोपो नेष्ठवद्भावेन टेरिति तु प्रकृत्यैका
जितिनिषिद्धमिति वाच्यम् अस्यन्नाम धातो दूषयिष्यमाणत्वात् अङ्गनुयतोक्तम् सुख्यमेतदिति नस्तद्धितइत्यस्यापि प्रकृतिभाव इति षपूर्व
ति प्रकृत्यैकाजिति सूत्रभाष्ये ध्वनितत्त्वेन पूर्वं टिलोपाभावेपि संप्रसारणे वाणादागमिति पररूपात्पूर्वं टिलोप इति तस्य दोलभ्यम् ॥ ७ ॥

सामर्थ्यात्तद्विषये न्यायाप्रवृत्तिरित्याशयः अत एवाह नस्तद्धितइत्यस्यापीति अपिना टिलोपसामान्यसङ्ग्रहः षपूर्वेतीति तत्रहि किमिदं षपूर्वादीनां पुनर्वचनम् अल्लोपा
र्थमाहोस्विन्नियमार्थम् कथं वा अल्लोपार्थं कथं वा नियमार्थम् यद्यविशेषेण अल्लोपटिलोपयोः प्रकृतिभावस्ततो विध्यर्थम् अथहि अणिटिलोपस्यैव प्रकृतिभावस्ततो निय
मार्थमिति भाष्ये उक्तम् तत्र कैयटः प्रकृत्यैकाजित्यादिः प्रकृतिभावः प्राकरणिकान् निकार्याणि भेदेनापेक्ष्यरन्न भेदेन वेति पक्षद्वयोपपत्तिरित्याह अविशेषेणेति अल्लोपटिलो
लोपसमुदायमपेक्ष्य प्रकृतिभावो विधीयते भेदेनस्यनेन बाध्यविशेषचिन्तोक्ता तदा अनन्तरस्येति न्यायाट्टिलोपस्यैव प्रकृतिभाव इति पक्षः अस्मिन्पक्षेऽल्लोपो न इति सिद्धे
नियमार्थम् यदि बाध्यसामान्यचिन्ता तदा प्रकृतिभावस्य सर्वबाधकतया अल्लोपस्यापि प्रकृतिभावेन निवृत्तौ प्राप्तायां विध्यर्थमिदं सूत्रम् अत्र भाष्ये अल्लोपटिलोपयो
रिति बाध्यसामान्यचिन्ताभिप्रायेणोक्तं तदा न स्तद्धितइत्यस्यापि प्रकृतिभावेन निवृत्तिरिति युक्तमेव अत एव नैकाजिति नास्ति प्रकृत्यैकाजितीति तत्रहि प्रकृत्यैकाजिति कि

मिद्धेमेयस्तु आहोस्विदविशेषेण किञ्चातः यद्यविशेषेण स्वौरवीश्रौवमधुनाअत्रापिप्राप्नोति तद्धितसामान्येप्रकृतिभावविधानादत इनिठनाविति स्वरवशब्दयोरिनौप्रकृति
भावेसतियस्येतिलोपाप्रसङ्गःश्रौवमित्यत्र श्वुनोविकारावयवयोःप्राण्यञ्जि कृतेनत्तद्धितइतिटिलोपोनप्राप्नोति अधुनेत्यत्रइदमः इशादेशोऽधुनाप्रत्ययश्चेति यदाप्रक्रियातदाय
स्येतिलोपाप्रसङ्गइतिपूर्वपक्षेएकाक्षरात्कृतोजातेःसंख्यायाञ्चनतौस्मृताविप्यनेनस्विरिवनोरनभिधानम्प्रतिपाद्यश्रौवमित्यस्यश्वन्शब्दादञिद्वारादित्वादैजागमस्य।
टिलोपस्यचप्राप्तौपरत्वादैजागमेप्रकृतिभावस्याप्राप्तौपुनःप्रसङ्गविज्ञानादिटिलोपस्यप्रवृत्त्यासिद्धिमुक्त्वाऽधुनेत्यत्रसंप्रत्ययकस्यस्थानेनिपातनङ्गयत्तदुक्त्वातस्यासि
द्धिरुक्ता तत्रान्यथासिद्धिप्रदर्शनेनसूत्रस्यप्रत्याख्यानेप्यारम्भपक्षेप्रकृतिभावस्यनत्तद्धितइतिटिलोपबाधकत्वंश्रौवमित्युदाहरणप्रदर्शनेन ध्वनितमित्यर्थः तस्यना।
न्तरूपस्य तदुक्तमिति तदेतदभिप्रेत्योक्तमित्यर्थः एकदेशविकृतन्यायेनेति स्थानिवद्भावेनेत्यर्थः अनेनकथञ्चिदित्युपादानेन एषाम् क्विवन्तानां क्विवन्तानाम् भज्येतेति

तदुक्तंसंप्रसारणटिलोपयोरिति अन्यत्रक्विवंतात्त्वौ अनुनासिकस्येतिदीर्घेपि एकदेशविकृतन्यायेनान्त्वमितिसंप्रसारणंभवतीतिभावः
कथंचिदिति अनेनारुचिःसूचिता तद्बीजमेषामनभिधानम् अन्यथानुपसर्जनादितिसूत्रस्यतदंतविधिज्ञापकताभाष्योक्ताभज्येत किंचा
चक्षाणकर्त्रादिरूपार्थस्यापिश्वशब्दार्थत्वेनतस्यानुपसर्जनत्वादस्त्येवङीषःप्राप्तिःअभिव्यक्तेति न्यायस्तुपदकार्यविषयएवेतिभावः इत्याहुरि

यद्यस्याभिधानंस्यात्तदैतद्द्वारकतयातदधिकारस्यप्रकृतसूत्रेचरितार्थतयावैयर्थ्याभावेनज्ञापकताभज्येतेत्यर्थः अभिधानमस्त्वित्याह किञ्चेति आचक्षाणकर्त्रादिरू।
पार्थस्य आचक्षाणरूपोयःकर्त्रादिरूपोऽर्थस्तस्य श्वशब्दार्थत्वेनेति यःशिष्यतेसलुप्यमानार्थाभिधायीतिन्यायेन श्वन्शब्देनैवश्वकर्मकाख्यानकर्तुःप्रतिपादनादि
तिभावः एवञ्चदृष्टान्तदार्ष्टान्तिकयोर्वैषम्येनोपसर्जनत्वान्ङीषभावइत्युपादानविरुद्धमितितात्पर्यम् नन्वभिव्यक्तेतिन्यायेनेताहशस्यश्वन्शब्दस्यगणपठित
शब्देनबोधनेपितताेङीष्नभविष्यतीत्यतआह अभिव्यक्तेति हृस्वनद्यापइतिसूत्रस्थभाष्यप्रामाण्येनहलन्तेभ्यआचारेक्विवभावाच्चेदृशानामनभिधान
मित्यपिबोध्यम् मूलेउत्तरार्थमिति नित्यञ्छन्दसीतिसूत्रार्थमित्यर्थः॥

प्रा. र.
टी. भै.
१७६

अत्रेति आहुरिति कथने अतिरिक्तप्रातिपदिकमात्रस्येति तत्र हि कानि पुनरस्य योगस्य प्रयोजनानीत्युपक्रम्य वाध्या वाधिकाश्च संज्ञा दर्शिताः तन्मध्ये पायाः परा अनव
काशाश्च मा सा पूर्वाः सावकाशाश्च वाधन्ते इत्युक्त्वा अथैव प्रातिपदिकम् गुणवचनञ्च गुणवचनसंज्ञकञ्च भवत्यर्थवदित्युक्तम् अत्र च कारोपादानेन प्रातिपदि
क गुणवचनसंज्ञयोः समावेशो दर्शितः ततः समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गा जातिरिति क्रमेण दर्शिताः तत स तत्र वक्तव्यमित्युक्त्वा सङ्ख्या सङ्ख्या सङ्‌सं
ज्ञा वक्तव्या दुःखवद्भुसंज्ञका वक्तव्या का पुनरद्भुसंज्ञा षट्संज्ञा सकृद्व्यापनिवेशीनी संज्ञा सकृद्व्यापनिवेशिनी संज्ञा इत्येतच्च वक्तव्यम् किमर्थमिदमुच्यते यथान्यास
एव भूयिष्ठाः संज्ञाः क्रियन्ते सन्ति चैवात्र काश्चिदपूर्वाः संज्ञाः अपि च यतेनानुपूर्व्येण सन्निविष्टानां बाधनं यथा स्यात् गुणवचनसंज्ञायाश्चैताभिः संज्ञाभिर्बाधनं यथा
स्यादित्युक्तम् एवञ्च क्रमेण बाध्यबाधकभावे पाणिनेरपि सम्मतिमाह अत्रार्थ इति न चैवं सति राजपौरोहित्यादौ समाससंज्ञया गुणवचनसंज्ञाया बाधात् कथं ष्यञिति
वाच्यम् ब्राह्मणादित्वात् ननु बहुशब्दस्य वा नो गुणवचनादिति सूत्रभाष्योक्तगुणलक्षणाक्रान्तत्वाद्गुणवचनत्वमस्त्येवेत्यत आह सत्त्व इति सत्त्वे निविशतेऽपैति पृथग्

अत्राक्वचित् वीजं तु आकडारसूत्रस्थभाष्यविरोधः तत्र हि समस्तकृदन्ततद्धितसर्वनामजातिसंख्यासंज्ञाशब्दातिरिक्तप्रातिपदिकमात्रस्य गु
णवचनसंज्ञा कृता बहुशब्दस्य संख्या अत्रार्थे बहुग्रहणमपि मानम् सत्त्वे निविशत इत्यादि गुणलक्षणमपि तदेकवाक्यतापन्नमित्यन्ये।

जातिषु दृश्यते आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुण इति गुणलक्षणमप्याकडारसूत्रस्थगुणवचनलक्षणैकवाक्यतापन्नमिति संख्या ऽत्र प्रपञ्चितम् ॥
सत्त्व यास्य गुणवचनसंज्ञया बाधः स्यादेवेति भावः सत्त्वे निविशते द्रव्ये निविशते प्रवर्तते अपैति द्रव्यस्य सत्त्वेऽपि [illegible] नाशो भवति एताभ्यां विशेषणाभ्यां संज्ञायाजा
तेश्च निरासः न हि संज्ञा जातिश्चाश्रयस्य द्रव्यस्य सद्भावे परक्तादिशब्दवाच्यवत्कदाचिन्न प्रवर्तते कदाचिन्नेति पृथग्जातिषु दृश्यते जात्याश्रयेषु पृथग्भिन्नेषु भि
न्नाश्च शब्दो दृश्यते एतेन सर्वनाम्नो निवृत्तिः यथा शुक्लादिगुणनीत्यापि गोत्वाश्रयेषु शुक्ल इत्येवं शुक्ल इति व्यवह्रियते नैवं सर्वनामशब्दाः सर्वञ्जातिरूपय
द्द्रव्यावन्तद्वाचकस्य द्रव्यशब्दस्य घटपटादिषु विभिन्नजातीयेषु प्रवृत्तिदर्शनेऽपि कदाचिदपैतीत्येतन्नास्ति तेनतस्यापि निरासः आधेयः यत्नेन निष्पाद्यः यथा रक्ता
दिगुणा आश्रयसद्भावेऽपि यत्नेन निष्पाद्या भवन्ति एतेन संख्याया निरासः अक्रियाजश्चेत्यनेन कृदन्तनिरासः क्रियाबोधकधात्वर्थवाच्यार्थप्रवृत्तिनिमित्तकत्वस्य रक्तादिश

तेषां ङ्क्रियाजत्वं प्रसिद्धमेव सोऽसत्वप्रकृतिरित्यनेन सत्ववाचकप्रकृतिभिन्नइत्यर्थकेन समासतद्धितान्तयोर्निरासः यद्वा ऽद्रव्यस्वभावइतितदर्थः यथाद्रव्यस्यासमवा।
यिकारणान्तुसंयोगनिवृत्ते नाशस्तथायोनभवतिसद्वति अन्यत्रभाष्यप्रदीपोद्योते प्रपञ्चितमिति यथासम्भवंविशेषणानांसार्थक्यमुपपाद्यतस्यलक्षणस्यैकदेशयुक्तित्वङ्क्षि
तमित्यर्थः तथाहि आधेयश्चाक्रियाजश्चेत्येवलक्षणकार्यमाधेयइत्यनेनानित्यत्वस्याक्रियाजश्चेत्यनेननित्यत्वस्यलाभेसति नित्यानित्यवृत्तिजातिमत्वमित्येववक्तव्यम्।
नचैवन्तादृशसत्ताजातिमत्वङ्क्रियायामपिवर्ततइत्यतिव्याप्तिरितिवाच्यम् द्रव्यावृत्तित्वेनापिजातेर्विशेषणात् एतेनैवसर्वगुणसङ्ग्रहे सत्वेनिविशतेइत्यायुक्तिर्विफलेति तत्
द्भाष्यमेकदेशयुक्तिरतएव तथापाठेत्तरन्तेषांविशेषणानांव्याख्यानेनसार्थक्यन्तप्रदर्शितम्भगवतामूलेइत्येकइति यच्चयस्मात्पापकृतान्वधारीन्तूलं मते तथानन्त्वद्रुमपी
ति भाष्याक्षरस्वारस्यविदःअपरेतुतद्भाष्यमुपलक्षणमित्याशयेनजन्यजनकभावात्मकोपिपुर्यागोग्राह्यइतिमेनिरेतन्मतन्दर्शयति वस्तुनस्त्वित्यादिना देवकीव्याख्यानेति

व्यर्थमेवेति उत्तरार्थमितिवदतामत्तेइतिशेषः गौणीवृत्तिरिति लक्षणेत्यर्थः नत्वेषागौणी सादृश्यसंबंधमूललक्षणायाएव गौणीत्वात् इतिस्पष्ट।
मेव इङश्चेतिसूत्रइति अपादानेस्त्रियांघञउपसंख्यानंतदन्ताच्चवाङीषितिमन्त्रो क्तम् उपेत्याधीयतेस्मादितिविग्रहः दीर्घोच्चारणेति नचेन्द्रश।
ब्दादाचष्टाणिचिटिलोपेइन्द्राणीतिसिद्धर्थंतत् अदन्तत्वाभावेनतत्राप्राप्तेः पदविभज्यन्तेइति तत्रनकारोच्चारणसामर्थ्याच्छ्रुतक्रमानुरोधेनच
पूर्वमाकारस्ततोअनुगितिबोध्यम् ॥७॥ जनपदशब्दादित्यत्रत्वनुनायन्देवकस्यजनपदवाचकत्वाभावात् न्यूनतापरिहारायाह उत्तरार्थमितीति सादृश्यसम्बन्ध
मूलेति बहुव्रीहिः लक्षणाहि शक्यतावच्छेदकारोपात्मिका तत्रसादृश्यसम्बन्धोयत्रमूलन्तत्रैवलोकेगौणीतिव्यवहारइतिभावः प्रसादेति सूत्रेखण्डयतिपत्विंत्यादिनातत्र
अजादिइतिलुप्तपञ्चम्यन्तम् दीर्घोच्चारणस्यपरोक्तरीत्यासार्थक्यंइ खण्डयति नचेति तत् दीर्घोच्चारणम् अदन्तत्वाभावेनेति नचब्रह्माणीत्यत्रतत्सिद्धिस्तात्पर्यकदीर्घो
च्चारणसामर्थ्यादतइत्यधिकारोपिबाध्यतामितिवाच्यम् प्रतिलक्ष्यंलक्षणभेदेननान्तप्रकृतिकब्रह्माणीत्यस्यसाधकवाक्येऽतइत्यधिकारबाधेप्यन्यत्र तद्बाधेमानाभावइ।
त्याशयात् ननुपदविभागेपिपूर्वमनुगागमस्ततोऽन्त्यस्याकारादेशइत्येवप्रक्रियाकुतोनेत्यतआह तत्रेत्यादि तत्र अनुक्रियमाणागमो तरमाकारादेशः स्यात्तदानकारस्यैवादेशः।
स्यादितिनकारोच्चारणवैयर्थ्यापत्तिरितिभावः नन्विन्द्रादिशब्दे फलाभावादाकारादेशाभावेनतेष्वेवनकारोच्चारणन्चरितार्थमित्यतआह श्रुतक्रमेति यथाधिन्विकृण्व्योर

सूत्रोदाहरणेष्वनक्रमानुरोधेनादेशस्यप्रवृत्तिरादौभवतितथेन्द्राणाश्रीयतइतितात्पर्यम्॥ ॐ॥ ननुह्रस्वाकारादेशस्यविधेयत्वेनब्रह्मन्शब्दान्त्यनकारस्यनिवृत्तौनेनसह
पररूपेपिअनुगागमाकारेणसहसवर्णदीर्घेणरूपस्यसिद्धौदीर्घाकारस्यविधानवैयर्थ्यमित्यतआह स्पष्टार्थमिति सामर्थ्यात्पररूपबाधकत्वनापेक्षयादीर्घादेशेतत्त्वं कुर्ङ्क्व
नोदेतीतिभावः उक्तइति प्रकाशकृतेतिशेषः पररूपप्रसङ्गादिति यद्यपिब्रह्माणीत्यत्राकारादेशेनसिद्धिस्तथापिभवतैवेन्द्रादिशब्देष्वाकारादेशस्याकल्पनेनसूत्रोक्तापर
रूपापत्तिरिन्द्रादिशब्देष्वित्यतआह इन्द्रादिशब्दइति अकारोच्चारणेसन्दिग्धमतआह अनुकीतीति यत्तुनुगागमे ऽनोलाक्षणिकत्वेनाल्लोपोनइत्येतन्नस्यादिति सूत्तन्द्वि
त्वमित्याहुस्तदुक्तिन्निरस्यति अल्लोपोनइत्यत्रेति सूत्रभाष्येति ऊधसोनङित्यनङ्गाधिकारइत्येतद्व्याख्यानावसरेप्रतिपादितमेतत् अकाराभावे स्थ नुकाकाराभावे अ

स्पष्टार्थंदीर्घाकारआदेशउक्तःप्रसंगादिति इन्द्रादिशब्देइतिभावः अकारोच्चारणेति अनुकीतिशेषः अल्लोपोन इत्यस्यबाधेनेति अल्लोपो
नइत्यत्रलक्षणप्रतिपदोक्तपरिभाषायाअप्रवृत्तेर्बहुव्रीहेरूधसइतिसूत्रभाष्यसंमतत्वया ऽकाराभावे ऽवश्यप्राप्तस्याल्लोपोनइत्यस्यबाधेनाका
रोच्चारणस्यचारितार्थ्यादित्यर्थः नभविष्यतीति सर्वचनत्तद्बाधार्थमकारोच्चारणमितिपररूपस्यतेनबाधइतिभावः पररूपबाधनार्थमिति अ
ल्लोपबाधने नचरितार्थस्यपररूपबाधकत्वेमानाभावेनेन्द्रशब्देपररूपबाधनायाकारोच्चारणस्यावश्यकत्वेनतदुक्तकल्पनानवकाशेतिभा
वः ङीपिति इंद्रवरुणेतिसूत्रन्तुइन्द्रीत्यादिव्यावृत्त्यर्थमुदात्तनिवृत्तिस्वरेणचस्वरेनविशेषइतिभावः सुगुत्पत्तेरिति टाबुत्पत्तेश्चेत्यपिबोध्यम्

वश्यप्राप्तस्येति पररूपस्यतुनावश्यप्राप्तत्वमिति तद्बाधेमानाभाव इतिभावः सर्वञ्च आगमलिङ्गकारोच्चारणसामर्थ्येनाल्लोपाप्रवृत्तिसि(बहुलग्रहणादिति॥
द्धेरित्यर्थः तद्बाधार्थम् अल्लोपबाधार्थम् पररूपस्येति स्वाभावे प्राप्तस्यापीत्यादिः तेन अकारोच्चारणेन अल्लोपबाधनेनेति स्वाभावे ऽवश्यप्राप्तिकस्याल्लोपस्यबाध
नेनचरितार्थस्याकारस्यसत्वेनुवाणोदाङ्मितिन्यायेनैकादेशात्पूर्वम्प्राप्तस्याल्लोपस्यबाधनेनेत्यर्थः नचासमाननिमित्तकत्वात् कथंवाणपरिभाषाप्रवृत्तिरितिवा
च्यम् अङ्गसम्बन्धित्वाङ्गस्यचप्रवृत्तेःस्वीकारात् त्वदुक्तेति प्रकाशायुक्तपूर्वोक्तेत्यर्थः ननुयथाब्रह्माणीत्यस्यसिद्धिः कृतातथैवेन्द्राणीत्यादिसिद्धाविन्द्रवरुणेतिसू
त्रस्यवैयर्थ्यमतआह इन्द्रवरुणेतीति इन्द्रीत्यादिव्यावृत्त्यर्थम् पुंयोगेप्राप्तस्येन्द्रीत्यादेर्व्यावृत्त्यर्थम् यत्तुसूत्रारम्भेइन्द्राणीत्यन्तोदात्तमिन्द्रमानयतीतिरीत्यातत्सा

धनेतुङीवन्तत्वेनानुदात्तान्तत्वमिति स्वरेपि विशेषइतितन्त्रेत्याशयेनाह उदात्तनिवृत्तिस्वरेणेति वस्त्रेणक्रीतादिति विग्रहस्यत्वे ऽलौकिकविग्रहवाक्येसुबुत्पत्तेः प्राक्स
मासेपिटाबुत्पत्यनन्तरंयदि समासस्तदावस्त्रक्रीतीत्यस्यासिद्धिरतआह टाबुत्पत्तेरिति सबन्त्वेगतिकारकोपपदानामितिवचनेसुबुग्रहणं स्त्री प्रत्ययस्याप्युपल
क्षणम् ॥ वचनान्तरानारम्भकृतलाघवन्दर्शयति तत्रैवेति बहुलग्रहणादेवेत्यर्थः गणपाठे सुखादिप्रदर्शनाभावादाह सुखादयश्चेति दुःखादयइत्यत्रादिना
आन्त्रअलीकादयोविवक्षिताः तथाचजातिकालसुखादिभ्यइत्यत्रगणपाठाप्रदर्शनेपिसुखादिभ्यइतिसूत्रेयेनिदर्शितास्तेऽत्रग्राह्याइतिभावः लिङ्गानाञ्चनसर्वभागित्येवङीषीयल्लक्षणमितिभ्रमवारणायाह सकृदित्यन्तमिति तत्रलक्षणेआख्यातपदन्नलिङान्तपरमित्याह तत्रैति लिङ्गानाञ्चेतिचशब्दनिर्ग्राह्यस्यनन्तरस्थे
तत्सवगतिकारकेत्यादेरनित्यत्वेनाप्रवृत्तिरितिभावः सुखादिभ्यइति सुखादयश्चसुखादिभ्यः कर्तृवेदनायामित्यत्रपठिताः सुखदुःखतृप्तकृच्छ्रा
दयः सकृदाख्यातनिर्ग्राह्येत्यत द्वितीयंलक्षणंतत्राख्यातुमुपदेशइत्याशयेनाह सकृत्स्यामित्यादि ब्राह्मणत्वमप्येवन्तस्यैतृपितामहादी
त्स्मृत्यहमितिबोध्यम् इयंचनाकृतिग्रहणाद्ब्राह्मणक्षत्रियाद्याकारस्यसम त्वादितिबोध्यम् बाधतेइति गोत्राणीतिशेषः प्रतीकमादाये
ति औपगवीत्यस्यगोत्रानन्तरापत्यसाधारणत्वेनविशिष्यतद्व्यक्तिरूपेस्येत्यर्थः एतेनजातिलक्षणेएकोगोत्रेइतिसूत्रस्थभाष्यप्रामाण्येनपा
रिभाषिकगोत्रस्यैवग्रहणम् ॥ ॐ ध्यं उपदेशइति कथनमित्यर्थः परसमूलेजातेरस्त्रीतिसूत्रेद्वितीयलक्षणलस्यप्रदर्शनावसरे वृषलीतिप्रदर्शितन्तेन
ब्राह्मणत्वन्नजातिरितिभ्रमः स्यादतआह ब्राह्मणत्वमप्येवमिति अपिनाक्षत्रियत्ववैश्यत्वयोर्ग्रहणम् वक्ष्यमाणदोषस्यप्रसक्तेरभावायाह गोत्रेति गोत्रार्थकेऽणीत्यर्थः
एकोगोत्रइतिसूत्रस्थभाष्यविरोधेनापत्यप्रत्ययान्तइत्येतन्मात्राभिधानपरसमूलेकृतन्तदयुक्तमितियत्केनचिदुक्तन्तदयुक्तमित्याह एतेनेति परसमूलस्यापिभा
ष्यसम्मतरीत्याव्याख्यानेनेत्यर्थः जातिलक्षणे जातेरस्त्रीतिजातिलक्षणे भाष्यप्रामाण्येनेति तत्रहिगोत्राद्यूनिप्रत्ययोभवतिस्त्रियान्तुलुगिति न्यासेऔपगवीमाणवि
केत्यत्राण् योऽनुपसर्जनमित्यनुपसर्जन —— लक्षणईकारोनप्राप्नोतिमाभूदेवभणन्तादनुपसर्जनादित्येकदेशिनोक्तेतदभ्युपेत्यदहतर्हिऔपगवीभार्यःजा
तिलक्षणः पुंवत्त्वस्यप्रतिषेधोनप्राप्नोति माभूदेवम् वृद्धिनिमित्तस्येत्येवम्भविष्यति सर्वतर्हिग्लुचुकायनीभार्यइत्यत्रदोषइत्यनेननपुत्रापत्यप्रत्ययान्तेऽजातित्वादोषा
धानङ्गतम् तत्रऔपगवीमाणविकेत्यत्रटिड्ढेतिसूत्राज्जातेरिति सूत्रस्यपरत्वात्तस्यैवप्रवृत्त्यभिधानेकर्तव्येटिड्ढेत्येतदभिधान ॥ ४ ॥ १ ॥ ६ ॥ ३ ॥

मपत्यसामान्यस्यजातिलक्षणे ग्रहणेविरुध्येत सवर्ञ्जातिलक्षणपुंवत्त्वस्यप्रतिषेधेनप्राप्तोतीत्यपिविरुध्येत् नन्वेवमवन्तीत्यत्रानन्तरापत्यप्रत्ययान्तेवृद्धेत्कोसलेत्यनेन ञ्यङिन्तस्य स्त्रियामवन्ती त्यनेनलुकि इतोमनुष्यजातेरिति ङीषित्यनुपसर्जनादितिसूत्रभाष्येउक्तन्नविरुध्येतेत्यतआह अवन्तीत्यादेरिति गोत्रत्वारोपेणेति यथाम्बत्याम्नद्रोणायनित्वारोपस्तद्वत् यूनितुनगोत्रत्वस्यारोपः नन्वपुवैवनगोत्रमितिनियमस्यप्रदर्शनात् प्राचीनोक्तम् प्रकाश कृदुक्तम् अदुष्टमिति सकोगोत्रइत्यत्रपारिभाषिकस्यग्रहणेपिप्रकृतेपारिभाषिकस्यैवगोत्रत्वेमानाभावइतितदाशयः किञ्चात्रतैः साधारण्येनोक्तंतत्रतुविशिष्येति तेषाम्पूर्वापरविरोधोपिदोषः खण्डनकृतालिङ्गविशिष्टपरिभाषयेति सूत्रोक्तमर्थेनोव्याख्यायखण्डितन्तन्नयुक्तमित्येतद्बोधयितुंतदुक्तमनूद्यदूषयति यत्त्वित्यादिनावैपरीत्येनान्वयोत्रबोध्यः अयम्भावः यत्रप्रकृतौप्रातिपदिकत्वस्यलिङ्गबोधकप्रत्ययान्तत्वस्यचसत्तातत्रतादृशसमुदायस्यतयापरिभाषयाग्रहणम्बोध्यते।

अवंतीत्यादेर्गोत्रत्वारोपेणजातित्वमिति प्राचीनोक्तमदुष्टमित्यपास्तम् लिंगविशिष्टेति यत्तुलिंगबोधकप्रत्ययान्तत्वरूपलिंगवैशिष्ट्यस्यप्रातिपदिकत्वस्यचलाभायपूर्वान्तत्वपरादित्वयोरावश्यकत्वेननोभयतआश्रयणेन्तादिवत्त्वाभावान्नात्रेयमितितन्नइन्द्राणीत्यसिद्ध्यापत्तेः तस्मात्प्रातिपदिकत्वोपयोगोनकश्चिन्नापिलिंगविशिष्टप्रातिपदिकस्येति॥ ✓ यथापञ्चीदण्डिनीत्यादौसद्भावउभयोरस्तीतितत्समुदायस्यप्रातिपदिकग्रहणेनग्रहणम्भवतीति नात्रेति कुमारीत्यत्रतथानास्तीत्यर्थः अत्रहि पूर्वान्तवद्भावंविनाप्रातिपदिकत्वस्यपरादिवद्भावंविनालिङ्गबोधकप्रत्ययान्तत्वस्यचसत्तानास्तीत्युभयोरावश्यकतयाउभयतआश्रयणेनान्तादिवदितिनिषेधः प्रवर्ततइति यत्रनपूर्वान्तत्वपरादिवत्त्वयोरुपयोगस्तस्यग्रहणम्परिभाषयाभवतीति भवदुक्तमिन्द्राणीत्यादौनास्ति अत्रस्त्रीप्रत्ययान्तसमुदायेप्रातिपदिकत्वन्नास्तियत्रचप्रकृतिभागेप्रातिपदिकत्वमस्तितत्रतादृशप्रत्ययान्तत्वन्नास्ति अन्तशब्दस्यचरमावयववाचकत्वात् इन्द्राणीत्येतदेकदेशाभावोदाहरणोपलक्षणन्तेनदण्डिनीत्यादेरपिभवदुक्तरीत्याग्रहणन्नस्यादितिप्रातिपदिकग्रहणइतिपरिभाषानिष्फलास्यादितिभावः तस्मात्परिभाषयायस्यसमुदायस्यग्रहणम्भवताबोधनीयन्तस्यैवग्रहणाभावापत्तिसद्भावात् उपयोगइति परिभाषायाः प्रवृत्तिकोटावित्यादिः नन्वन्तशब्दोनसर्वत्रचरमावयवस्यैवबोधकोस्ति अतोत्रानस्येत्यादौ व्यभिचारात् किन्तुसमीपवाच्यपि तथाचपरिभाषाघटकंयद्विशिष्टपदन्तस्यान्तपरत्वेपितदर्थः समीपइत्येव सबन्धंगृह्यतेयेन।

तद्ग्रहणम्प्रातिपदिकस्यग्रहणम्प्रातिपदिकग्रहणमिति समासाश्रयणेन प्रातिपदिकवाचकः शब्दो बोध्यते तस्मिन् लिङ्गबोधकप्रत्ययः समीपोयस्य तद्ग्रहणमनया परिभाषया
बोध्यत इति नेन्द्राणीत्याद्यसङ्ग्रह इत्यत आह नापीति इदम्भवदुक्तं तादृशपाठसत्वे। तु शक्यं वस्तुतो यत्परिभाषायाः कृत्यं तदाह तथेति दिगिति दिगर्थस्तु प्रातिपदिकग्र
हणादिति सप्तमीकर्त्तर्थे व्यत्ययेन प्रातिपदिकपदञ्च प्रातिपदिकत्वतद्व्याप्यान्यतरधर्मविशिष्टपरम् तथाच प्रातिपदिकत्वतद्व्याप्यान्यतरधर्मविशिष्टस्य ग्रहणं यत्र शास्त्रे
तेन लिङ्गबोधकप्रत्ययविशिष्टस्य ग्रहणं बोधनम्भवतीत्येव परिभाषार्थ इति न कुरूरित्यत्रादिवत्प्रयोग इति कुरूरित्यस्य साधुत्वन्तु लिङ्गविशिष्टपरिभाषया भवती
तिभ्रमः किन्त्वन्तादिवच्चेति सूत्रे योगविभागेन आदिवद्भावादितिपदं यदर्थकन्तदाह सूत्रे यत्तु व्याचख्युरित्यादिना तदपि तादृशव्याख्यानमपि क्लिष्टम् आदिशब्दस्या
द्यावयववाचावच्छिन्नबोधकत्वस्यायं नोटकितावित्यत्र क्लृप्तस्य त्यागेन क्लिष्टमित्यर्थः स्वपरग्रन्थेति स्वस्य व्याख्यातुर्यः परग्रन्थस्तद्विरोध इत्यर्थः काएडेकुड्येइत्यत्र यथा

परिभाषायां पठ्यते तया प्रातिपदिकत्वतद्व्याप्यधर्माणां लिङ्गप्रत्ययविशिष्टेति देशाच्चेति दिक् ननु सप्तम्यधिकरणे चेति निर्देशेन विभक्त्यका।
देशस्यानवत्वाभावज्ञापनादुत्सर्गस्यासार्वत्रिकत्वाच्चह्रस्वस्य सत्वप्रधानेस्वप्रवृत्तेश्चकाडे इत्यादौनदोषातआह श्वश्रूरित्यत्रेति वचनमिति
वृत्त्यादिपठितमित्यर्थः उपमानाभावादिति॥ ॐ प्रसज्यप्रतिषेधाश्रयेण भवता सुबुत्पत्त्यापत्तिरूपो दोषो वार्यते तथा कुरूरित्यादावपि सुब्भावापत्तिः स्यादित्या

ह उक्तरीत्येति प्रक्रियाव्याख्यानपरप्रकाशग्रन्थे यथा न स्वपरग्रन्थविरोधात्मको दोषस्त्वापततीति याशङ्क्यते तन्निति ज्ञापनादित्यन्तेन मूलोक्तप्रकारमुद्भाव्य सिद्धान्तरी
त्याह उत्सर्गेत्यादि असार्वत्रिकत्वादिति गमकसद्भावसवतत्प्रवृत्तेः स्त्रीकारादितिभावः सत्वप्रधानतावेति ह्रस्वो नपुंसके यत्तस्येति न्यासे नसिद्धं प्रातिपदिकग्रहणं सत्व
प्रधानप्रातिपदिकत्वार्थमितिभावः सूत्रेत्वावश्यकत्वाच्चेति तथाच लिङ्गविशिष्टपरिभाषा सन्त्वात्स्यावश्यकतयातयैव कुरूरित्यस्यापि सिद्धावादिवद्भावादितिकथन
स्य नोपयोग इतिभावः परोक्ता श्वश्रूरित्येतत्साधकरीतिमनूद्य दूषयति यच्चेति भाष्ये तादृशवचनानुपलम्भादाह इत्यादीति मूले अंतोपीति अतः श्वशुरः श्वश्र्वेतिनिर्देशा
त् अपि नाऊङ् सन्निहितत्वस्य तमुच्चायकः ज्ञापकस्तत्रस्य भाष्यस्वारस्यात्तु श्वशुरशब्दादूङि श्वश्रूशब्दस्य सिद्धिरितिन किन्त्वव्युत्पन्नोयमिति तत्र ङ्याब्ग्रहणङ्कि
मर्थम् न प्रातिपदिकादित्येव सिद्धम् न सिध्यति अप्रत्यय इति प्रातिपदिकसंज्ञायाः प्रतिषेधः प्राप्नोति यद्येवङ्याब्ग्रहणे हेतुः स्यूङ्ग्रहणमपि कर्त्तव्यम् तावपि हि प्रत्य

यौ तिग्रहणे तावद्वार्तम् तद्धितः प्रातिपदिकमिति प्रातिपदिकसंज्ञा भविष्यति ऊङ्ग्रहणे चापि वार्तम् उवर्णान्तादूङ् विधीयते तत्रैकादेशः एकादेशकृते पूर्वस्यान्तवद्भावात्प्रा
तिपदिकसंज्ञा भविष्यति एवमूङ्ग्रहणस्याकर्तव्यतोक्ता यदि मूले करीत्याः स्येसिद्धिस्तदा तत्रोङ्कारिद्गाभावेनैतदर्थमूङ्ग्रहणस्यावश्यकत्वेन पूर्वान्तवद्भावेनत
स्यानावश्यकत्वप्रतिपादनं विरुध्येतेति ॥ ॐ ॥ ननु वस्तुत उपमानसत्वादुपमानाभावादित्यसङ्गतम् किञ्चोत्तरपदे इति सूत्रे उपमानेति शब्दोनोपात्त इत्युपमानाभावादित्य
सङ्गतमत आह उपमाउपमानमिति उपमानशब्दे भावे ल्युडिति ध्वनितायोपमा उपमानमित्युक्तम् अत एवाह सादृश्यमिति ननु करभोरूरित्यत्रोदाहरणेपीवरशब्दस्यो
पमावाचकस्याभावादुपमायाः कथम्प्रतीतिः तस्येवादिशब्दसत्वएव प्रतीतेरत आह तस्येति सादृश्यस्येत्यर्थः एवञ्च करभोरूरित्यत्र सादृश्यान्तर्भावेन वृत्ति स्वीकारादु
पमायाः प्रतीतिरस्ति करभोपमोरूरित्यत्र तु सादृश्यस्य समासवाच्यत्वन्नास्तीति भावः मूलस्योपमानशब्दः करणल्युडन्त एवास्त्वित्याशयेनाह यद्वेति प्रतीत्यभावादिति।

उपमा उपमानं सादृश्यं तदभावात्तस्य समासावाच्यत्वादित्यर्थः यद्वोपमानत्वेन प्रतीत्यभावादित्यर्थः शफोरूरित्यत्रापि सादृश्यमूलकः शफत्वा
रोपेन तु तत्प्रतीतिरिति भावः एवञ्च करभोरुशब्देपि आरोपविवक्षायामूङ् न भवत्येवाऽनेन करोरुभिरिति व्याख्यातम् एकेइति तस्य भाष्यानु
क्तत्वात्साधुत्वेन नियामकतेत्यरुचिरत्र ङीषिति अत एव न प्राच्येति सूत्रे योधेयादिग्रहणं चरितार्थं तद्धि पार्श्वादियौधेयादिभ्यामणञाविति
स्वार्थिकाञन्तस्येति प्राप्तलुकोनिषेधार्थं तत्फलञ्चाञन्तात्ङीन्यथास्यात् ठगन्तत्वात्ङीप्माभूदिति नरशब्दादिति ॥ ॐ पूर्वपदार्थस्येत्यादिः एवञ्चौ

पमीयते ऽनयासा उपमा उपमानत्वम् सादृश्यमित्यर्थः तद्बोधकम् उत्तरपदं प्रातिपदिकमत्र नास्ति यादृशस्थले समासस्य सादृश्यान्तर्भावेण शक्तिस्तत्रैष्यते सूत्रस्य
प्रवृत्तिः उवर्णान्तादित्येव वक्तव्ये उत्तरपदग्रहणेन पूर्वपदस्याक्षेपात्तत्र पूर्वपदस्योपमावाचकत्वं तत्रास्य सूत्रस्य प्रवृत्तेरिति भावः यत्तु खण्डनकृदाह शफोस्तु रोमावि
वसंश्लिष्टत्वादुपचारादितिचिन्त्यम् उपचारेपि पूर्वपदस्योपमानवाचित्वाव्याघातात्पूर्वसूत्रेणैवसिद्धो हशफग्रहणवैयर्थ्यमतः संहितवाचकः शफशब्द इति तन्ने
त्याशयेनाह शफोरूरित्यत्रेति एवञ्च शक्यतावच्छेदकस्यारोपोत्र न तु सादृश्यान्तर्भावेण वृत्तिरिति न पूर्वसूत्रस्य प्राप्तिः एवञ्च पूर्वत्रारोपस्य सिद्धौ च करोरुभिरिति
व्याख्यातमिति विवकरेवकरेण करोरुभिरिति माघस्य पद्यइति आदिः तस्य संज्ञा पूर्वक इति वचनस्य न नियामकतेति यद्धि वचनं भाष्यकारसम्मतं तस्यैव साधुतानि

अत एवेति सूरसेनीत्यत्राति व्याप्तिवारकतया तादृशव्याख्यानस्यावश्यकत्वादेव तद्धियो धेयादिग्रहणं हि अणञाविति इति सूत्रेण विहितेत्यर्थः तत्फलम् निषेधस्य फलम्
ढगन्तत्वादिति शुधाभ्रुकाशब्दाभ्यां द्व इति सूत्रविहितढकः सत्वात् यदि त्वञो लुक् स्यात्तदा वर्णप्राधान्ये प्रत्ययलक्षणाभावेन ङीप् स्यादिति भावः ॥ ॥ नृनरयोरित्यत्र न
रशब्दोपादानाभावेपि नारीति रूपं नृशब्दोपादानमात्रेण सिद्धम् नरीति रूपव्यावृत्तिस्तदुपादानस्य फलमित्यपि न पुंयोगेनस्यैदुवीरत्वादित्याक्षिप्य समाधत्ते यद्यपीत्यादिना पुंयो
गे नरीति प्रयोगोपि दृश्यते किन्नरीणां नरीणामिति जातिमन्त्रेति अत्र मात्रपदेन पुंयोगस्य व्यवच्छेदः नृशब्दावयवऋकारस्य यथा ऽलोन्त्यपरिभाषया वृद्धिर्भवति तथा
नरशब्देपि प्राप्नोतीत्याक्षेपमूलेन नन्विति तत्र स्थानेन्तरतम इति सप्तम्यन्तपाठभिप्रायेण समाधानवादिमतमनुवदति यत्त्वत्राहुरित्यादिना अन्त्याकारस्य वृद्धौ यदि यस्येति
चेत्यनेन तस्य लोपस्तर्हि वृद्धिविधानं व्यर्थमिति तत्सामर्थ्याल्लोपस्य बाधोस्त्वित्याक्षिपति नन्विति यद्यलोन्त्यपरिभाषैकवाक्यतया ऽन्त्यस्य वृद्धौ तत्सामर्थ्याल्लोपस्य बा ॥

यद्यपि नृशब्देन नारी सिद्धा नरी च पुंयोगे दृष्टा तथापि नरत्वजातिमात्रप्रतिपादने ङ्यां नरीत्यस्य वारणार्थं नरग्रहणं बोध्यम् ननु वृद्धिविधान
सामर्थ्याद् लोपबाधेत आह गुणेत्विति अलोन्त्यपरिभाषाबाध एव न्याय्य इति भावः अन्तरंगत्वेनेति सामर्थ्याद्बाधो ह्यनुचितः न्यायप्राप्तबा
धस्तूचित एवेति भावः कथंचिदिति ॥ ५) धस्तदा साक्षाद्विधिशास्त्रस्य बाधस्तदपेक्षया लोपस्यादौ प्रवृत्तावपि यो ऽन्तरतमो ऽवशिष्टावयवस्तस्य स्थाने वृद्धिर्भ
विष्यतीत्याशयेनाह गुणेत्वन्यथेति गुणे गुणीभूतशास्त्रे परिभाषारूपे ऽन्यायस्याप्रवर्तनस्य कल्पना उचितेति शेषः तथाप्यादौ वृद्धेरेव प्रवृत्तिः स्यात्तस्याश्च सामर्थ्यान्निवृ
त्तिर्न स्यादिति भावेन समाधत्ते तन्नेति अन्तरङ्गत्वे सन्नियोगशिष्टत्वमत्र हेतुः एवञ्चादौ वृद्धेरन्तरङ्गाया अन्तरतमपरिभाषा ऽलोन्त्यपरिभाषाभ्यामेकवाक्यतया प्रवृत्ति
स्ततो लोपस्य यदि प्रवृत्तिः स्यात्तदा वृद्धिविधानवैयर्थ्यमिति सामर्थ्यात्परस्यापि लोपस्य बाधेन वृद्धेः श्रवणं स्यात् न त्वत्र केवलान्तरङ्गपरिभाषाया एव प्रवृत्तिः किन्तूक्तयोर
पीति न्यायप्राप्त एव लोपस्य बाधः सामर्थ्यादिति तात्पर्यम् कथञ्चिदित्युक्तं तात्पर्यमाह सन्नियोगशिष्टेति तथा च वस्तुतः सन्नियोगशिष्टत्वेपि यदि तस्यानङ्गीकार
स्तदा ङ्गीशः स्यादेव तथा च परलोपात्तत्पूर्वान्तरतमपरिभाषापेक्षया परत्वेन बलवत्या ऽलोन्त्यपरिभाषयैव वृद्धेरेफस्थानिकत्वे नियामिका स्यादित्यनिष्टापत्तिः नन्वा
न्नगुणेत्वन्यथेति पूर्वोक्तन्यायेनालोन्त्यपरिभाषाया अप्रवृत्तिः कल्प्यते ऽन्तरतमपरिभाषा तु प्रवर्तत इति तदेकवाक्यतया नकाराकारस्य वृद्धिः स्यादितीष्टसिद्धिरेव

सन्नियोगशिष्टत्वान्नयीकारेणेत्यर्थः + मू० ७ पं०

आह मूलेत्त्रापिचेति नतुस्थानिनमिति कुमार्यत्रेत्यादौ दीर्घस्य स्थाने यणादेशः स्थानेन्तरतमे इति सप्तम्यन्तपाठेन स्यात् तादृशपाठे स्थानिनः सङ्कोचादिति सपाठो नोचितः
किन्तु स्थानेऽन्तरतम इति प्रथमान्तपाठ एव तथा चानन्तरतमादेशस्य निवृत्तिरित्यादेशसङ्कोच एवेति भावः एतावता यदुक्तरीत्याऽलोन्त्यपरिभाषाया बाधमभ्युपे
त्यान्तरतमपरिभाषयापि नेष्टसिद्धिरित्यभिहितम् वस्तुतस्तु परोक्तागुणेत्वन्यायेनिरीतिरेव प्रकृतेऽयुक्ता परिभाषयोः समत्वात्किन्तु परत्वमलोन्त्यपरिभाषाया इति सैव
प्रवर्तते त्याशयेनाह किन्त्विति ननु परिभाषयोर्गुणगुणिभावोऽत्र न केनाप्युक्त इति कथमेवं वदसीत्यत आह तद्व्याख्यात्रिति प्रकाशव्याख्यातृग्रन्थानुसारेणेत्यर्थः यद्यात
त्त्वे द्वोऽत्र वृद्धिस्थायाः प्रक्रियाया बोधकः स एवञ्च प्रक्रियाया व्याख्यातृणां ये ग्रन्थाः प्रकाशप्रदीपादयस्तदनुसारेणेत्यर्थः परोक्तम्प्रकारं सन्दूष्य युक्तं समाधानमाह अत्रे

तत्कथमिति स्थानेन्तरतम इति सप्तम्यन्तपाठस्य भाष्ये कुमार्यत्रेत्यादौ यणनापत्त्या दूषितत्वादिति भावः परिभाषयोरिति तद्व्याख्यातृग्रन्थानु
सारेणेदं तैर्हि अलोन्त्यस्येत्यस्यैव बाधो नत्वन्तरतमपरिभाषाया इति व्याख्यातम् व्याख्येयमिति नृनरयोरित्यावर्तते एकत्र पंचम्यर्थे षष्ठी ता
भ्यां ङीन् तु नरेऽकारस्य वृद्धिरित्यर्थ इति भावः अत एव वानरशब्दे नातिप्रसङ्गः यतो नरशब्दान्ङीन् नदीयरेफान्तसंबन्ध्यकारस्यैव वृद्धिविधा
नात् वानरे नरस्यानर्थकत्वात् तेन ङीनिति निबोध्यं तदाहाधिकमिति अमरोक्तिरिति तत्रस्त्रीत्वबोधे ईकारसमभिव्याहारस्तत्रं केवलाकारान्तपुत्र
शब्दस्तु पुंस्त्वविशिष्टस्यैव बोधकः अत एव सपुत्र इत्यत्र न संदेहः पुमांसं पुत्रमाधेहीत्यादौ पुंस्त्वेन विशेषणं त्वतिशयितपुंस्त्वबोधनायेति भावः।

दमित्यादिना लुसेति यस्येति चेति सूत्रेण लुप्त इत्यर्थः एवं व्याख्याने यस्मात्प्रत्ययस्य विधानं तस्य स्थानित्वेन निर्देशो न जात इति वानरशब्देऽतिप्रसङ्ग इ ऽचिन्त्यमिति
त्यस्येवेत्याह यद्देति मूलोक्ताभ्यां प्रकाराभ्यां वृद्धिरूपादेशस्य स्थानिनो निष्कर्षेऽपि प्रत्ययविधानावधेरलाभ इत्यत आह नृनरयोरित्यावर्तनादिति अत एव द्वितीयपक्षात्र
स्थायमप्यकारान्तपुत्रशब्दस्य प्रयोगापत्तिरत आह तत्रेति पुत्रशब्द इत्यर्थः पुत्रशब्दनिष्ठ ईकारसमभिव्याहार ईकाराव्यवहितपूर्वोच्चरितत्वम् पुत्रशब्देन स्त्रीत्वबोधे
तत्त्वनियामकमित्यर्थः पुत्रशब्देनेति स्त्रीत्वबोध इत्यस्यादिः अत एव केवलाकारान्तस्य पुंस्त्वविशिष्टप्रतिपादकत्वादेव ननु भवदुक्तार्थस्वीकारे पुमांसं पुत्रमाधेहि

॥५६॥

णि श्नगौ पुमांसमिति विशेषणोपादानमनर्थकमापद्येतेत्यत आह पुमांसमित्यादि अतिशयितपुंस्त्वम् पराक्रमाति शयः एवञ्च स्त्रियामपि वृत्तिरकारान्तपुत्रशब्दस्यैव।
परं तु स्त्रीत्वं बोधनीये स्त्रीप्रत्ययसमभिव्याहारो द्योतक इति सिद्धम् अत एवाह मूलेपत्वत्रेत्यादिना इदन्तु चिन्त्यमिति इदं वक्ष्यमाणम् खण्डनकारोक्तम्बिन्ता वी।
जमाह चिन्ताबीजन्त्विति पुंशब्देभ्यः पुंवाचकशब्देभ्यः ङीनन्तेतत्पुरुषे ङीनन्तोत्तरपदकतत्पुरुषकृते सूत्रपुत्रीत्यादाविति शेषः ननु पुत्रीशब्दः पुत्रशब्दाभिन्न एव
वेत्यत आह सिद्धेति उदात्तत्वमिति भवतीति शेषः उदात्तनिवृत्तिस्वरेण टित्वान्ङीपि कृते अनुदात्तस्य च यत्रोदात्तलोप इत्यनेनेत्यादिः यत्तु कश्चित् पुत्रङादेशपक्षे सू
त पुत्र्यादि नीत्वमसिपापे इति प्रयोगे सानुबन्धकत्वाद पुत्रस्य नादिन्याक्रोश इति सूत्रेन ग्रहणमित्येव चिन्ता बीजमिति तदपेशलमित्याह नादिन्येति आदिनी श।

चिंता बीजन्तु सूतादि पुंशब्देभ्यः परे ङीनन्ते तत्पुरुषे पुत्रः पुंभ्य इत्यनेन पुंशब्दात्परपुत्रशब्दान्ततत्पुरुषे पुत्रस्यादिरुदात्त इत्यर्थके न लिंगा वि।
शिष्टपरिभाषया पुंशब्दोकारोदात्तत्वं पुत्र ङादेशे तु न तत्प्रवृत्तिः सानुबंधकत्वाद तत्रोदात्तनिवृत्तिस्वरेणान्तोदात्तत्वमिति नादिन्याक्रोशे।
पुत्रस्येत्यस्य पुत्र टि अप्रवृत्तिस्तन्न फलं एतत्संबंध्यश्च परस्य परस्मादिनी शब्द परत्वासम्भवात् तत्रटः स्थानिवद्भावेन दुहितृ शब्दत्वेपि न ष
ङिति निषेधात् न स्वस्त्रन्तेभ्य इति ङीपू मात्र बाधकत्वात् टित्वसामर्थ्याच्च इदञ्च वार्तिकं तत्पुरुष एव प्रवर्तते कारे सत्येति सूत्रे उपसंख्याना
त् तञ्चान्यासंभवात् पूर्वोत्तरसाहचर्येण च तत्पुरुष एव एतेन बहुव्रीहौ ङीवर्थमिदमित्यपास्तम्॥ इपरत्वासम्भवादिति ङीपा त्र व्यवधानेन येन नाव्यव

धानन्यायेन रेफाकारमात्रव्यवधानस्य वत्तस्य प्रवृत्तेरिति भावः ननु पुत्र ङादेशपक्षे सूत पुत्रीत्यत्र स्थानिवद्भावेन दुहितृ शब्दत्वान्न षड्इति निषेधः स्यादत आह पुत्र इति
ऋन्नेभ्य इतीति येन नाप्राप्तन्याये नेत्यादिः ननु टापोपि निषेधसिध्यर्थं तत्र पद संज्ञकेभ्यः स्वस्त्रादिभ्यश्च यस्मात् मिति प्राग्व्याख्यातमिति टिद्वत्स्यापि निषेधः स्यादेवे
त्यतस्त्वाह टित्वसामर्थ्यादिति कारे सत्येति सूत्रस्य तत्पुरुष एव प्रवृत्तौ साधकमाह तच्चेति कारे सत्येति सूत्रन्त्वित्यर्थः पूर्वोत्तरेति वाचंयमेति स्येन तिलेति सूत्र योरित्यर्थः ए
तेनो प्रजनीयाकन्येत्यस्यसम्भवादन्यासम्भवादित्यसङ्गतमिति तत्परास्तम् साहचर्यस्य बलवत्वप्रयोजकत्वायादर्शनात् एतेन उक्तरीत्या सूतोग्रस्यस्य वार्तिकस्य
तत्पुरुषसमासस्यैव प्रवृत्तेरेव बहुव्रीहौ ङीवर्थमिति सूतादुहिता यस्यादिति बहुव्रीहौ ङीवर्थमित्यर्थः यद्येतद्वार्तिकन्नस्यात्तदा सूतापुत्रीयस्येत्येवं विग्रहे समासो वा:

डीवर्थे मित्यप्यसङ्गतमित्याह उपसर्जनत्वेपीति सूत्रे ङित्करणसामर्थ्यादिति ष्यङोङित्करणसामर्थ्यादित्यर्थः एतज्ज्ञापकमाह यङश्चाप्यत्रेति प्रकारान्तरेणाप्युक्तार्थो नामितिन्यायस्यात्राप्रवृत्तिमाह द्योतकत्वादिति स्त्रीप्रत्ययस्य द्योतकत्वादित्यर्थः द्योतकविषये हौ ब्राह्मणावित्यादौ पञ्चकस्त्रातिपदिकार्थे पञ्चिद्वित्वसंख्यायाः प्रकृत्या भिधानेपित्तत्र समुच्चयस्य दर्शनादिति भावः तेन अनुक्तानामिति व्याख्यानेन ग्रामटिकेति अल्पो ग्रामो ग्रामटिकेत्यत्र ग्रामशब्दादिकच्प्रत्ययस्य प्रयोगः इदम् बहुवच नोपादानेनानुक्तानां सङ्ग्रह इत्येतत् ननु टापः आगधिकारकरणोड्डीवाद्यवयवङकारस्यात्तद्धितइतिनिषेधादित्संज्ञानस्यादत आह डीवादिष्विति ननु खुद इतिसूत्रे ङकारोच्चारणे गौरवमत आह टीवादयइतिङकारस्य स्थाने टकारस्यैवोच्चारणमस्त्वित्यभिप्रायः टावादिनां तद्धितसंज्ञायां तदन्तप्रातिपदिकत्वापत्त्या फिषोन्तउदात्त इत्यन्तोदात्तत्वापत्तिरित्याशङ्कां वारयति तद्धितान्तेतिनन्वेवं सति सर्वनामधातुजमाह निरुक्ते व्याकरणे शकटस्य तोकमिति शाकटायनमते सर्वत्रैव प्रकृतिप्रत्ययविभाग

दितउपसर्जनत्वेन तत्र ङीपो प्राप्ते श्चेति दिक् ङित्करणसामर्थ्यादिति यङश्चेत्यत्र सामान्यग्रहणविधानार्थे ङित्करणसामर्थ्यादित्यर्थः द्योतकत्वाच्चेत्यपि बोध्यम् अनुक्तानामिति तेनाल्पार्थे ग्रामटिकादयः साधवः इदं भाष्ये न दृश्यते टापः प्रागिति डीवादिषु ङस्येत्संज्ञानु चुटू ङ इति सूत्रकरणेन सेत्स्यति टीवादयएव वा तेसंतु तद्धितान्तत्वात्प्रातिपदिकत्वेपि फिट्स्वरेण प्रकृतिप्रत्ययविभागशून्येष्वेव तत्प्रवृत्तिः पकार षकार भिन्नानुबंधवैयर्थ्यापत्तेश्च अतएव सिद्धान्ते लिङ्गविशिष्टपरिभाषया नात्र फिट्स्वरः टापप्रत्ययो विजातीय इकारानुबंधश्च नकार्यं इत्यपरंत्वा घवम् टिल्लोपस्य नस्तद्धितइत्यनेनैव सिद्धेः यस्येति लोपइति औङः श्यामिति वार्तिकस्याप्युपलक्षणम् ओर्गुणेति नचैवम् ग्रहणं ङीवादिषु तद्धितकार्याभाव ज्ञापनार्थं तेन पङ्ग्वीत्यादौ वोर्गुणो नेति वाच्यम् कुरूरित्यादिसिध्यर्थं स्त्रीप्रत्ययेषु तदन्तभावज्ञापने आसुरायणीत्यादौ॥

सम्भवात्तादृशसमुदायस्याप्रसिद्धिरत आह पकारेति पकारषकाररूपौ यौ भिन्नानुबन्धौ तत्करणसामर्थ्यादित्यर्थः यदि सर्वत्र फिट्स्वरः स्यात्तदानोदात्तत्वमेवस्यादि ति तयोर्वैयर्थ्यं स्पष्टमेव अतएवतादृशेष्वेव फिट्स्वरस्य प्रवृत्ति स्वीकारादेव सिद्धान्ते यूनस्तिरिति सूत्रात्प्रागेव पाठरूपसिद्धान्ते टापः प्राकृतद्धिताधिकारकरणे लाघवान्तर मप्याह टाप्प्रत्ययइति यस्येति चेति सूत्रे ईकारग्रहणाभावे औङः श्यामिति वार्तिकमपि न कार्यमित्याह औङ इति इद्ग्रहणमिति यस्येति चेति सूत्रे इद्ग्रहणमित्य र्थः ईद्ग्रहणेन ईकारादौ स्त्रीप्रत्यये एव साजात्यात्तद्धितकार्याभावकल्पने कुरूरित्यादौ तद्धितकार्यापत्तिरतः स्त्रीप्रत्ययत्वेन साजात्यमादाय ज्ञाप्यं वचनं स्वीकार्यम्

तथाचाव्याप्तिरित्याह कुरूरित्यादीति अतएव लपः प्राकृतदधिकाराकरणादेवेदिगिति दिगर्थस्तु ईद्ग्रहणेनाच्छूपः स्त्रीप्रत्ययेन तद्धितकार्याभावो ज्ञाप्यतानावलेवा।
सुरायणीत्यादिसिद्धिर्यद्यपि भविष्यति तथापि ज्ञापकसिद्धवचनानर्थकल्पनापेक्षया यथाश्रुतमेवलघ्विति योगार्थमात्रवृद्ध्यायामतिप्रसक्तमत आह आत्मानमि।
तीति मूलेउभयथेति शत्रन्तस्य क्तिप्रत्ययान्तस्य च सत्वेपि यौवनमिति भस्याढइति पुंवद्भावः अनयोरयं विशेषः शत्रन्तादुदितश्चेति ङीप् क्तिप्रत्ययान्तात्तु कृदि
कारादिति ङीष् आद्येशतुरनुम इत्यस्य प्रवृत्त्यान्तोदात्तत्वमिति वृत्तिकृन्दूषयति भिक्षादीति अतएव पूर्वोक्तरीत्या युवतीत्याकारकस्य शब्दद्वयस्य स्वीकारादेव
ननु यूनस्तिरिति सूत्रात्प्राक् तद्धिता इत्यस्य पाठेन कार्यः लिङ्गविशिष्टपरिभाषयैव सिद्धेरत आह युवतिशब्द इति दिगिति दिगर्थस्तु कृन्नेभ्य इति ङीपि यूनीशब्दोपि
साधुरिति कश्चित् तन्न येननाप्राप्तिन्यायेन यूनस्तिरित्यस्य कृन्नेभ्य इति सूत्रापवादत्वात् क्तेनपि ङीपि लिङ्गविशिष्टपरिभाषयाऽस्य प्राप्तेरिति इति स्त्रीप्रत्ययविव

क्येपिपस्येति लोपानापत्तेरतएव दंरिद्रतीत्यादौ टिलोपो नेति दिक् मिश्रीकरोतीति आत्मानमिति शेषः दिगिति दिगर्थस्तु पाठस्य विकाराभावमा
त्रतात्पर्यकत्वे रथ्यादीनामप्यभावापत्तिः अतएव युवतीकरनिर्मथितं दधीत्यादिप्रयोगसिद्धिः युवतिशब्दे लिंगविशिष्टपरिभाषयैव प्रातिप
दिककार्ये सिद्धेत्र तद्धिता इत्यधिकारो लिंगविशिष्टपरिभाषाऽनित्यत्वज्ञापनार्थ इति दिक् ॥ इति स्त्रीप्रत्ययाः ॥ नीलरूपवदिति प्रत्ययस्था
दिति सूत्रस्थेनासुबन्त इति भाष्यप्रयोगेण क्वचिल्लाघवानादरस्यापि सूचनात्कर्मधारयान्मत्वर्थीयोपि क्वचिदिति ज्ञापनान्नेतत्प्रयोगानुप
रणम् ॥ श्रीगणेशाय नमः अथ स्वौजसमौडित्यादिना विहितानां प्रत्ययानामर्थविशेषे व्यवस्थां दर्शयति प्रातिपदिकार्थेति मूले मात्रशब्द ऽऽ पत्तिरिति बोध्यम्
स्येति अत्र शब्दशब्दोपादानेन नायं मात्रच् प्रत्यय इति स्पष्टयति अस्वपदविग्रह इति मयूरव्यंसकादिसमासस्य विभाषाधिकारीयत्वेपि मात्रशब्दस्य शब्दशक्ति
स्वभावाद् नित्यविषयत्वमेवेत्येवमुक्तम् अतएव कार्त्स्न्यार्थकमात्रशब्देन घटमात्रं रूपवदित्यादौ सर्वे घटा इति वृद्धानां विग्रहः इदमपि सूत्रद्वयायोग एव प्रवर्तते
तिङ्समानाधिकरणे प्रथमेति वार्तिकोक्तेः ननु न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इति वचनं वृत्तिद्वयाकल्पनमूलकमस्ति यथा नीलघटम्भूतलमि
त्येव प्रयोगो न तु नीलघटवदिति मत्वर्थबहुव्रीहिणैव विवक्षितार्थलाभात् बहुव्रीहिश्चेदित्युपादानात्तु क्वासपर्वानित्यादि भवत्येव अत्र क्वासपर्वशब्दस्य कर्म

धारयसंज्ञकस्य जातिविशेषावच्छिन्ने रूढिः बहुव्रीहिस्तु नताद्यजातिविशेषावच्छिन्नप्रतिपादकः सर्वञ्चात इच्चनविरोधान्नीलरूपवदित्यनुपपन्नमत आह नील। रूपवदितीति भाष्यप्रयोगेणेति तत्रहि असुपइति किम्बहुव्रीहिः नविद्यते सुपसुवत यस्मिन्नङ्गे तदसुविति आहोस्विन्नसुप् असुपिति तत्पुरुषइति वितर्क्य यदि विग्रहे असुवतोऽङ्गस्येति बहुव्रीहिकेस्य तेत्वन्न प्राप्नोतीत्युक्तम् आपिपरे यदङ्गमविद्यमानसुवन्तकं तदवयवाकारस्य प्रत्ययस्य कात्पूर्वस्येत्वमिति सूत्रार्थस्यतदा नीनिष्यतेः तत्र लाघवानादरेण स्पष्टप्रतिपत्त्यर्थं बहुव्रीहेर्मतुपि असुवतइति दर्शितमिति लाघवानादरो भाष्यसम्मतएवेति भावः नामार्थयोरित्यस्य नाम्न अर्थो विति समासकृत्याऽभेदः संसर्गः प्रतिपाद्यतइति वाच्यन्तदनुपपन्नम् पुष्पवन्तपदार्थयोः सूर्याचन्द्रमसोरभेदाप्रतीतेरत आह नामार्थश्चेत्यादि नचनाम्नोरर्थौ नामार्थौ तयोरिति षष्ठीतत्पुरुषोऽस्त्विति वाच्यम् एतावभेदैकत्वसङ्ख्यायायन्तं विनाभानस्यान्यत्र सिद्धान्तितत्वेन द्विवचनानेन समासासम्भवात सम्बन्धस्य संब धिनोपत्र भेदस्तैत्रवा विशिरइत्युपपत्तयेऽङ्गीकारइति सिद्धान्तात्कथमभेदः संसर्गइत्याशङ्कते यद्यप्यभेदइति औपाधिकभेदेनेति दिवसाद्यवच्छिन्नो राहुशब्दार्थो

नामार्थयोरिति नामार्थश्च नामार्थश्चेत्येकशेषः अभेदसंसर्गइति यद्यप्यभेदो न संसर्गः राहोः शिरइत्यादौ वौपाधिकभेदेन षष्ठ्युपपादनं।
स्य भाष्येक्तत्वात्तथापीतरसंबन्धानवच्छिन्नविशेष्यविशेषणभावसंसर्गस्य तेन शब्देनाभिधानान्न दोषइति बोध्यम् व्युत्पन्नेरिति॥ ७ ॥

घट्याद्यवच्छिन्नः शिरःशब्दार्थइति कल्पनयाऽवयवावयविभावरूपसम्बन्धोपपादनेनेत्यर्थः किन्त्वाभेदो यदि संसर्गस्तदा नीलो घट इत्यत्र नील शब्दान्नियमे। न षष्ठी स्यादिति तादृशवाक्योच्छेदापत्तिः नचैवंसति समानाधिकरणाधिकारे समासविधानानुपपत्तिरितिवाच्यम् विशेषणवाचकप्रातिपदिकात्षष्ठीसत्त्वेपि विरुद्धविभ क्त्यर्थान् वरुद्धत्वे सत्येकविशेष्यकप्रतीतिजनकत्वरूपसामानाधिकरण्योपपादनसम्भवेन तस्य सार्थक्यात् अतएव तक्षकस्य सर्पस्येत्यादौ समानाधिकरणेन षष्ठी। समासनिषेधस्याप्युपपत्तिः किन्त्वाभेदस्य संसर्गत्वे कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानम्भावप्रत्ययेनेति सिद्धान्ताद्राजपौरुष्यमित्यादौ भावप्रत्ययेन सम्बन्धस्यैव नी लोत्पलत्वमित्यादावपि सम्बन्धाभिधानापत्तिः नचाभेदसंसर्गः प्रथमावाच्यएवेति भ्रमितव्यम् धात्येन धनवान्नीलङ्घटम्पश्येत्यादावपि तदभिधानदर्शनात् सं बन्धानवच्छिन्नेति यत्राभेदः संसर्गइति व्यवहारस्तत्र विशेषणतायाः सम्बन्धानवच्छिन्नायाः सम्बन्धघटकतया भानेन सम्बन्धानवच्छिन्नविशेषणविशेष्यभावएव।

पदार्थयोः संसर्गत्वेनव्यवह्रियतइतिभावः अयमपिविशेषणतावच्छेदकविशेष्यतावच्छेदकधर्मभेदमूलकारोपितआश्रययोर्भेदोयत्रतत्रैवसंसर्गतयाभासते तेनघटोघट
इत्यादिन प्रयोगः॥ ॥ तादृशसम्बन्धस्यभानेदृष्टान्तमाह नीलमुत्पलमिति प्राप्तोदकोग्रामइत्यादौतादृशनियमेव्यभिचाराशङ्कांनिरस्यति मूलेनचेति षष्ठ्यर्थैव
हुव्रीहिश्चित्रगुरित्यादौतज्जन्यबोधश्चित्राभिन्न गोसम्बन्धीत्याद्याकारकस्तत्र पूर्वपदार्थस्योत्तरपदार्थेतादृशसम्बन्धस्यविशेषणतानियामकत्वदर्शनादषष्ठ्यर्थेद
ति अत्रउक्तनियमे अव्यभिचारादितिवीररूपस्यपूर्वपदार्थस्योत्तरपदार्थेतादृशसम्बन्धेनविशेष्यतयाभानस्यदर्शनादितिभावः प्राप्तोदकादाविति ग्राममुदकंयमिति
वाक्याद्ग्राममकर्मकाप्तिकर्तृउदकमितिबोधः समासात्तूदककर्तृक प्राप्तिकर्मेतिरीत्याबोधस्तत्रोदकस्यप्राप्तौकर्तृतयान्वयदर्शनेनव्यभिचारइत्यर्थः व्यपेक्षारूपस्यसाम
र्थ्यस्यसत्वेसमासइतिमतमाश्रित्यकृतामाशङ्कांनिराचष्टे नचेति क्तप्रत्ययस्येति वक्ष्यमाणेनभावप्रधानमाख्यातमितिवचनेनप्रत्ययार्थकर्तुःप्रकृत्यर्थक्रियायांविशे

नीलमुत्पलमित्यादौतथाऽदर्शनादितिभावः अषष्ठ्यर्थबहुव्रीहाविति अत्रषष्ठीपदंसमस्याऽप्युपलक्षणम् वीराःपुरुषायस्मिन्नित्यत्राप्य
व्यभिचारात् सर्वत्रप्राप्तोदकादावित्यर्थः नचव्यपेक्षावादेऽपिप्राप्तपदादिविषयेपचतीत्यादौक्तप्रत्ययस्यप्रत्ययार्थप्राधान्यस्यदृष्टत्वात्त्यागेनविशे
षणविशेष्यभाववैपरीत्यस्यसिद्धतयाप्रकारीभूतकर्त्रोदकस्याभेदेनैवान्वयात्नाव्यभिचारइतिवाच्यम् नामजन्यप्रतीतिविशेष्ययोरेवान्वयः

षणतयाभानस्यानुभवसिद्धत्वादिति यद्यपिकृदन्ततद्धितान्तजन्यबोधेप्रकृत्यर्थनिष्ठप्रकारतानिरूपिताप्रत्ययार्थनिष्ठाविशेष्यतातथापि ⁽⁽सत्यभेदेनैवेति॥
तिङन्तजन्यबोधेप्रत्ययार्थोविशेषणतयैवभासते उक्तवचनबलात् तद्वदितिजन्यबोधेपिविशेषणविशेष्यभावस्यवैपरीत्यंकल्प्यते विशेषणविशेष्यभाववैपरीत्य
स्वभवतामपिक्तसमेव चित्रगुरित्यादौविग्रहवाक्यजन्यबोधस्यगोपदार्थमुख्यविशेष्यकस्यसमासजन्यस्यतुगोविशेषणकान्यपदार्थमुख्यविशेष्यकस्यदर्शनात्
प्रकारीभूतकेति गत्यर्थाकर्मकेत्यनेनकर्तरिक्तप्रत्ययस्यविधानात् उक्तदृष्टान्तेनप्रकृत्यर्थस्यविशेष्यतयाभानस्वीकारेप्रत्ययार्थस्यतत्रविशेषणत्वेनतत्रान्वितउद
कशब्दार्थोविशेषणमितिनव्यभिचारइतिभावः नामार्थयोरितिव्युत्पत्तौनामपदंस्तवनपरमेवेतिस्फुटीभविष्यति सर्वत्रतज्जन्यबोधविशेष्यताधुनाकर्तृविशिष्ट
प्राप्तिक्रियायांसम्पन्नेति तादृशाङ्क्रियायामेवान्वयोवाच्यः सचभवतापरित्यक्तइतिव्यभिचारोदुरुद्धरः विशेष्यस्यैवग्रहणेसाधिकाचगोनित्यापरस्तुप्रसृरितिवाक्य

स्यप्रामाण्यापत्तिवारणाय स्वीकृतायापदार्थः पदार्थेनान्वेतिनतुपदार्थैकदेशेनेतिव्युत्पत्तिः सैवेत्याशयेनदूषयति नामजन्येत्यादिना ॥ ः ॥ इत्येतत्सिद्धइति सत्येनेयं व्युत्पत्तिर्यद्यपि लौकिकीतथापि सहकारित्वेनाश्रीयतेनामजन्यप्रतीतिविशेष्ययोर्भेदसम्बन्धेनापिराज्ञः पुरुषइत्यादावन्वयोभवतियद्यपि तथापियत्रसामानाधिकरण्यन्तत्राभेदेनैवभेदसम्बन्धेनाप्येतादृशस्थलेतत्स्वीकारेराजापुरुषइतिवाक्यादपिस्वत्वसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारताकबोधापत्तिरितिभावः परोक्तरीत्याक्तप्रत्ययार्थकर्तुर्विशेषणत्वमभ्युपगम्याप्युक्तरीत्यान्वयबोधानुपपत्तिर्दर्शितावस्तुतः प्रत्ययार्थस्यविशेषणत्वमवनकिञ्चिदत्रसाधकमित्याशयेनाह पचतीत्यादौतिङामिति अयम्भावः श्रूयमाणानामनेकतिवादीनाङ्कर्त्रादौशक्तिकल्पनापेक्षयाम्प्रत्ययानुपूर्व्यानानात्वाच्छक्ततावच्छेदकतानानाधर्मेकल्पनीयेतिगौरवन्नत्वत्तिभूतैकानुपूर्व्यवच्छिन्नधातोरेवशक्तिः पञ्चसुकल्प्यतेचेल्लाघवम्भवति तिङन्तुद्योतकमेवेतिकालइवद्योत्यः कर्तातत्रविशेषणमित्यस्तु अतएवाधोक्अत्तेदइत्यादौधातुमात्रादपिकर्तृविशेषणकधात्वर्थक्रियाविशेष्यकबोधोपपत्तिः द्योत्यार्थस्यविशेषणताचहेतुमतिचेतिसूत्रभाष्यस्पष्टा अतएवक्रियामिति।

पदार्थः पदार्थेनेत्येतत्सिद्धो नियमइतिनामजन्यप्रतीतिविशेष्ययोस्तथान्वय नियमस्यव्यभिचारइत्याशयात् पचतीत्यादौतिङान्त्योतकतयाप्रत्ययार्थप्राधान्यत्यागेपि अत्रतत्यागेमानाभावइत्यन्ये प्राप्तावुदकस्यकर्तृतयान्वयः क्तस्यकर्मणिलक्षणेतिनयुक्तम् अन्यपदार्थस्यदुरुपपादत्वा

सूत्रभाष्येस्त्रीत्वस्यटाबादिवाच्यत्वपक्षेतस्यप्राधान्यापत्तौद्विवचनाद्यनुपपत्तिरुक्तानतुस्त्रीत्वस्यप्रत्ययद्योत्यत्वपक्षे यत्रतुप्रत्ययार्थप्राधान्यं सएकार्थीभावेतित्येसाधकमस्तितत्रतुतस्यविशेष्यत्वमेव एवञ्चतयोरेवेतिकर्तरिक्तादितिगत्यर्थाकर्मकेत्यादिशास्त्रबलात्क्तप्रत्ययसमभिव्याहारेतस्यकर्तुर्विशेष्यत्वमेवोचितमिति ननुनात्रप्रत्ययार्थप्राधान्यस्यत्यागः प्रत्ययस्यकर्मणिलक्षणया अभ्युपगमाद्विशेषणीभूतक्रियायाङ्कर्तृतासंबन्धेनोदकस्यान्वयइतिनानुभवसिद्धशाब्दबोधानुपपत्तिरितियत्केनचिदुक्तन्तद्दूषयति प्राप्तावुदकस्येति दुरुपपादत्वादिति भवदुक्तरीत्याकर्मणोन्यपदार्थत्वेनाभिप्रेतस्यप्राप्तपदेनैवलाभादितिभावः एवम्बहुव्रीह्युपजीव्यस्यैकधर्मिविशेष्यकबोधजनकत्वस्यभवदुक्तरीत्यात्यागेनबहुव्रीहिसमासानुपपत्तिरपिद्रष्टव्याएकार्थीभावेनेति वाक्येपृथगर्थबोधकत्वेनदृष्टानाम्पदानामेकशक्त्याविशिष्टविषयैकोपस्थितिजनकत्वमेवैकार्थीभावः सएवात्रसमर्थः पदविधिरितिशास्त्रादाश्रीयते ॥ ७ ॥ ७ ॥

व्युत्पत्तयः नामार्थयोरित्यादयः भिन्नोपस्थितिविषयाः विभिन्नशब्दाभ्यां जनितायाभिन्नशक्त्योपस्थितिस्तद्विषयाः [illegible]कार्थीभावा भ्युपगमेन व्यभिचारइति तत्पुरुष सवव्यभिचारदर्शनाद्बहुव्रीहिपर्यन्तानुधावनं व्यर्थमितिभावः अत्रेदम्बोध्यम् अपेक्षावादेव्यपष्ठ्यर्थेबहुव्रीहौ व्यभिचारप्रदर्शनं इतिवाक्ययोः समानार्थबोधकत्वमिति नियमस्यत्यागेन वस्तुतस्तु तादृशनियमानुरोधेन प्राप्तोदकेत्यादिसमुदायाद्वाक्याच्च प्राप्तिकर्त्रभिन्नोदककर्मस्यैवबोधः अतएवपूर्वोत्तरपदयोः सामानाधिकरण्यए वविहितबहुव्रीहिसमासस्योपपत्तिः अतएवप्राप्तभार्य इत्यादौ प्राप्तिकर्माभिन्नभार्याकर्तृत्वेनैतिबोधात्प्राप्तापदभार्यापदयोः सामानाधिकरण्यात्पुंवद्भाव स्यसिद्धिः उदका दौकर्तृतानिरूपकत्वबोधेपि विशेषणीभूतक्रियायान्तु स्यैवसाम्बोध्यम् शिरबोध्यस्तदृशिवत् शाब्दबोधस्तुविशिष्टे आरोपेणोपपाद्य इतिशब्देन्दुशेखरेस्पष्टम् मू लेनापि निपातार्थइति व्यभिचारइतिशेषः यथाघटः पटश्चेत्यत्रचशब्दार्थसमुच्चये पटस्यनिरूपितत्वसम्बन्धेनान्वयदर्शनात् तेषाम् निपातानाम् सवर्ञ्चपटस

सर्वचैवैवोपस्थितिर्व्युत्पत्तयश्चभिन्नोपस्थितिविषया इतिनदोषइतिभावः एतेनराजपुरुषइत्यादौव्यभिचारः राजपदार्थपुरुषपदार्थयोः स्वस्वा मिभावेनैवान्वयः संबंधित्वलक्षणायानुमानमित्ययास्तम् नार्थेति घटश्चेत्यादौ समुच्चयस्य घटे भेदसम्बन्धेनान्वयादितिभावः द्योतकत्वेति घट पदेनैवविशिष्टस्योपस्थितिरितितत्राप्यन्वयस्याभावइतिभावः अतएवानुभूयतेइत्यादौ सकर्मकत्वम् ॥ [illegible]सुचितः पटशब्दार्थस्यतस्य घटे भेदे

नान्वयान्नव्यभिचारइतिभावः एवञ्चघटः पटश्चेत्यादौ पटस्य घटे न संसर्गो यत्रतत्रान्वयबोधइतिव्यवहारेणनानुपपत्तिरितिभावइति अतएव निपातानान्द्योतका नाभ्युपगमादेव सकर्मकत्वमिति प्रकृते भूधातुरन्वितुपसर्गसमभिव्याहारादनुभवानुकूलव्यापारबोधकइतिस्वार्थफलव्यधिकरणव्यापारबोधकत्वात्सकर्मकत्व मित्यर्थः केचित्तुनिपातानांवाचकत्वेपिनानुभूयतेसुखमित्यादौ धातोः सकर्मकत्वस्य सुखादेः कर्मत्वस्यचनानुपपत्तिः स्वस्वयुक्तनिपातान्यतरार्थफलव्यधिकरणव्या पारवाचकत्वस्यसकर्मकत्वरूपत्वात्कर्मत्वस्याप्युक्तान्यतरार्थफलसम्बन्धित्वेनोद्देश्यत्वरूपत्वात् एवञ्चसुखादेर्धातुयुक्तनिपातार्थफलसम्बन्धित्वात्कर्म णित्वकारसिद्धिरितिचेन्न वैकुण्ठमधिशेतेहरिरध्यासितामूनयइत्याद्यसिद्धिप्रसङ्गात् वैकुण्ठादेर्भवदुक्तकर्मत्वस्यासम्भवात् तस्मादेतच्छास्त्रीयकर्मसंज्ञा[illegible] कार्थान्वय्यर्थकत्वंसकर्मकत्वमेतच्छास्त्रबोधितकर्मसंज्ञकत्वङ्कर्मत्वमित्येवयुक्तम् धात्वर्थान्वयित्वविवक्षायान्द्योतकत्वमेव तदर्थितिरिक्तनिपातानांवाचकत्व

अतएवाव्ययं विभक्तीत्यादि सङ्गच्छते एवञ्चानुभूयते सुखमित्यादावेतच्छास्त्रीयकर्मसंज्ञाया उपपत्तये । निपातस्य द्योतकत्वमेव वक्तव्यं शरीरे क्लेशो दीर्घ्याद् द्दरि
बन्न सन्निवेशाद् अपि विशेषणविशेष्यवाचकपदयोरेकविभक्तिकत्वोपपत्तये द्योतकत्वमेव घटः पटश्चेत्यादावपि वाचकत्वस्वीकारे निपातार्थयोर्भेदसम्बन्धे
नान्वयबोधस्याव्युत्पन्नतया द्योतकत्वमेव युक्तम् सङ्गच्छते इत्यादौ तु वाचकत्वे तु नानुपपत्तिरित्यन्यत्र विस्तरः । अन्ये तु घटः पटश्चेत्यादौ चार्थे पदार्थे र ।
न्वयोपपत्तये वाचकत्वपक्षेऽपि निपातातिरिक्त नामार्थयोर्भेदसम्बन्धेनान्वयबोधोऽनुपपन्न इति निपातातिरिक्तत्वं नाम्नि विशेषणं देयमिति वदन्ति तन्मूलमा
ह निपातातिरिक्तत्वेनेति अन्यदन्यस्य विवीजत्वेनादृशास्य लेद्योतकत्वस्वीकारे गौरवोपपत्तौ निपातातिरिक्तत्वविशेषणदाने गौरवमिति मूले सिद्धान्तेऽपीति परिमा
णाधिक्ये प्रथमेति सिद्धान्त इत्यर्थः देवतार्थकेत्यादि प्रथमान्तात्प्रातिपदिकाद्देवतासम्बन्धिन्यर्थे । णिनिसास्य देवतेति सूत्रार्थो देवतायाः प्रत्ययार्थत्वम् नन्वेक

निपातातिरिक्तत्वेन विशेषणाद्दोष इत्यन्ये देवतार्थकेति आमिक्षां देवतायुक्तां वदत्येवैषन्न हि तत्र इति मीमांसकमते इति शेषः एकार्थीभाववा
दिनामस्माकं तु विशिष्टोपस्थित्या तत्रापीदृशान्वयो दुर्लभ एव द्रोणो व्रीहिमानयेत्यादि तु अनभिधानान्न सर्पिः कुडवमात्रमित्यादौ षत्वविकल्पोऽपि
व्यवस्थितविभाषयानेति दिक् ॥ ७ देशान्वयस्वीकारे देवताविशिष्टं देयस्य प्रत्ययार्थः तदस्वीकारे तु देवता देयञ्च प्रत्ययार्थ इति विभिन्नशक्तिः स्वीकार्या अत ।

एवाह आमिक्षामित्यादि वस्तुतस्तु तन्न स्वमतमित्याह एकार्थीभाव इति ननु द्रोणो व्रीहिरित्यादौ परिमाणरूपप्रत्ययार्थे द्रोणादेस्तस्य च व्रीह्यादावन्वयोपगमे द्रोणपदव्रीहिपद
योः सामानाधिकरण्याभावेन व्रीहिपदार्थस्य क्रियायामन्वयाति कर्मत्वविवक्षायां द्रोणो व्रीहिमानयेत्यादिप्रयोगापत्तिरत आह द्रोणो व्रीहिमिति अनभिधानादिति प्रातिपदि
कार्थेति सादृश्येन समानविभक्तिकनामार्थयोर्भेदेनान्वयविवक्षायामेव परिमाणाधिक्ये प्रथमायाः स्वीकारात् एवञ्च प्रथमान्तार्थस्य द्रोणाभिन्नपरिमाणस्य प्रथमान्ता
र्थे व्रीह्यादौ भेदेनान्वयेऽपि व्रीहिपदस्य तिङ् सामानाधिकरण्यादभिहिते प्रथमा तिङ् समानाधिकरणे प्रथमेति वार्तिककारोक्तेः नन्वेवं सर्पिः कुडवमित्यादौ कुडवाभिन्नप
रिमाणस्य सर्पिः पदार्थेऽन्वयादि सुसाः सामर्थ्य इति षत्वापत्तिरत आह सर्पिरिति द्विगितिदिगर्थस्तु तिङ् समानाधिकरणे प्रथमेति वार्तिके कवाक्यतया तीले घट इत्यादावु
भयत्र प्रथमायाः साधुत्वोपपत्तये समानविभक्तिकनामार्थयोरभेदान्वयादुभयत्र तिङ् सामानाधिकरण्यं यथा तथा यत्र परिमाणाधिक्ये प्रथमा तत्रापि परिमाणे वर्तमाना

त्प्रातिपदिकाद्यत्र प्रथमा तत्रापि तत्साहचर्यान्नामान्तरार्थे भेदसम्बन्धेन नान्वयः किन्त्वभेदेनैवेति ॥ ॐ ॥ द्रोणो व्रीहिमानयेत्यस्यनापत्तिरिति सिद्धान्तार्थमाह वस्तुतस्त्वि
ति परिमाणे वर्तमानात्प्रातिपदिकाद्यत्र प्रथमा तत्रापि परिमाणत्वेन परिमाणम्प्रकृत्यर्थे प्रकारतया भासत इति द्रोणः खारीत्याढकमित्याद्येवोदाहरणम् एतेभ्यः परि
माणाभिन्नो द्रोण इत्याद्याकारकः एव बोधः यत्र च तिङन्तम्पदन्त श्रूयते तत्राप्यस्तिर्भवन्तीपरः प्रयुज्यमानोऽप्यस्तीति भाष्योक्तेरस्तीत्यस्याध्याहारेण तिङ्सामानाधिकर
ण्यम् हरीतकीं भुङ्क्ष्व राजन्मातेव हितकारिणीमित्यादिरसाधुरेव न च तिङ्सामानाधिकरण्ये एव चेत्प्रथमा तदाऽधिकरणशक्तिप्रधानेभ्य उच्चैरादिभ्यः कथम्प्रथमा
सिद्धिः तिङ्सामानाधिकरण्याभावादिति वाच्यम् अव्ययादाप्सुप इति ज्ञापकात्तदुपपत्तेः तिङ्समानाधिकरणे प्रथमैवेति नियमाद्वा ननु द्रोणादिशब्दानाम्परिमाणत्वे
न परिमाणमपि वाच्यमिति प्रातिपदिकार्थे प्रथमेत्येव सिद्धे परिमाणग्रहणमनर्थकमित्याशङ्कान्निराचष्टे नचेति द्रव्ययोरेवेति एवकारेण लिङ्गव्यवच्छेदः यद्यपि पञ्च

वस्तुतस्तिङ्समानाधिकरणे प्रथमेति लक्षणैकवाक्यतया परिमाणेत्यस्य परिमाणे वर्तमानात्प्रातिपदिकादित्येवार्थः न च प्रातिपदिकार्थत्वात्सि
द्धिः प्रवृत्तिनिमित्ततदाश्रयद्रव्ययोरेवात्र प्रातिपदिकार्थपदेन ग्रहणात् द्रोणादिपदानां च द्रोणत्वाद्येव प्रवृत्तिनिमित्तम् परिमाणत्वेन परिमाणन्तु
लिंगवद्विशेष्यान्वय्येव द्रोणः परिमाणमिति तु द्रो ब्राह्मणावित्यादिवदुपपन्नम् ॥ ९ कप्रातिपदिकार्थः यथापि प्रकृतसूत्रे प्रातिपदिकार्थपदेन द्वयोरेव ग्रह

णम् एवञ्च प्रातिपदिकार्थमात्रे प्रथमेत्यस्योदाहरणम् उच्चैर्नीचैरित्याद्यलिङ्गा स्त्री पुमान् नपुंसकमिति लिङ्गप्रवृत्तिनिमित्तकन्त्व कृष्णः श्रीः ज्ञानम् तटः तटी तटमित्या
दीनि च लिङ्गाधिक इत्यस्य अथ परिमाणग्रहणस्य सार्थक्यमाह द्रोणादिपदानामिति द्रोणत्वाद्येवेति लाघवादित्यादिः एवकारेण तादृशाखण्डोपाधिसमानाधिकरणत्वे
न प्रतीयमानं यदियत्ताविशेषावच्छिन्नधान्यादिपरिच्छेदकत्वं तस्य प्रवृत्तिनिमित्तघटकत्वस्य व्यवच्छेदः एतेन द्रोणत्वादिना प्रतीयमानेऽर्थे यत्परिमाणत्वेन परिमा
णम्भासते तस्याधिक्यात्प्रथमासिद्ध्यर्थम्परिमाणग्रहणमिति ध्वनितम् यद्यपि परिमाणन्तदर्थस्तथापि तस्याभेदेन द्रोणत्वावच्छिन्ने द्रोणादिशब्दजन्यप्रतीतौ विशेषण
तया भानम् ननु यदि द्रोण इति शब्दमात्रात्परिमाणाभिन्नो द्रोण इति प्रतीतिः स्यादौक्तार्थानामप्रयोग इति न्यायाद् द्रोणः परिमाणमिति प्रयोगानुपपत्तिरत आह द्रोणः प
रिमाणमिति त्विति इतिवदिति तत्र यथा द्विवचनेन द्वित्वस्योपस्थितिरस्ति यद्यपि तथापि सम्भेदेनान्यतरवैयर्थ्यमिति न्यायेन द्विशब्दप्रयोगस्योपपत्तिस्तथा परिमाण

खंडोपाधिः+मू॰८

शब्दस्यापि प्रयोग उपपद्यते इदमत्रबोध्यम् धान्यपरिच्छेदके परिमाणन्तु सर्वत इति लक्षण लक्षिते परिमाणविशेष एव द्रोणादिशब्दानां प्रयोगः तदुक्तम् अष्टमुष्टि भवेत्किञ्चित्किञ्चिदष्टौतु पुष्कलः पुष्कलानि तु चत्वारि आढकः परिकीर्तितः चतुराढको भवेद्द्रोण इत्येतन्मानलक्षणमिति धान्यपरिच्छेदक एवैषाम्प्रवृत्तौ मानंतु प लञ्च कुडवः प्रस्थ आढकौ द्रोण एवच धान्यमाने बुधैर्ज्ञेयाः क्रमशोमी चतुर्गुणा इति आढकद्रोणशब्दावर्द्धचौदी तदुक्तममरसिंहेन अस्त्रियामाढकद्रोणौ खारी वाहो निकुञ्चिकः कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथगिति पलन्निकुञ्चिक मुष्टिः कुडवस्तच्चतुष्टयम् चत्वारः कुडवाः प्रस्थश्चतुः प्रस्थमथाढकम् अष्टा ढको भवेद्द्रोणो द्विद्रोणः सूर्प उच्यते सार्द्धः सूर्पो भवेत्खारी द्विसूर्पो गोण्युदाहृता तामेव भारञ्जानीयाद्वाहो भारचतुष्टयम् शुष्कस्येष्विदस्मान्द्विगुणन्द्रवेषु स्विति सूत्रे परिमाणग्रहणमुन्मानप्रमाणयोरप्युपलक्षणम् अतः एव तुलादिशब्देभ्यः प्रथमासिद्धिः ननु लक्षणया साध्वित्यनुपपन्नं लक्ष्यार्थानामनियततया प्रातिपदिकज न्यनियतोपस्थितिकत्वस्यात्रासत्वादत आह लक्षणाचेति तथाच यस्य पदस्य लक्षणया वाक्यार्थबोधजनकता तत्पदशक्यतावच्छेदकस्यारोपो लक्ष्ये अतो भव द्रोणत्वादि चेयत्ताविशेषावच्छिन्नयत्तादि परिच्छिन्न धान्यादि परिच्छेदकत्व समानाधिकरणो धर्मो द्रोणः खारी आढकमित्येवं तदुदाहरणं भाष्यो क्तं साधु द्रोणो व्रीहिरिति तु सिंहो माणवक इतिवल्लक्षणया साधु लक्षणा च शक्यतावच्छेदकारोप एव ॥ इतीति कल्पनीयम् स चारोपो मुख्यार्थबाधज्ञा नानन्तरमिति मुख्यार्थबाधज्ञानमस्याः कारणम् मुख्यार्थसम्बन्धग्रहश्च तथा लक्षणा च स्वरूपसती हेतुर्न तु शक्तिवज्ज्ञाता शाब्दबोधहेतु पदपदार्थसम्बन्धत्वस्यैवरूतित्वा त् गङ्गायाङ् घोष इति वाक्याद् गङ्गा तीर घोष इत्येव बोधः तदुक्तं काव्यप्रकाशे मुख्यार्थबाधे तद्योगरूढितोऽर्थप्रयोजनात् अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिये ति अत्र मुख्यार्थबाधादित्रितयं हेतुः आरोपिता क्रिया आरोपितो व्यापार इति तद्व्याख्यातारः एवञ्च मुख्यार्थबाधज्ञानञ्च मुख्यार्थोपस्थितिसाध्यमिति मुख्यार्थ स्य प्रथममुपस्थितिः यदा देव भवति तच्च पदं स्वार्थ एव — प्रथमतः संस्कारमम्भवतीति पदेष्वेव लक्षणा सिंहो माणवक इत्यत्र मुख्यार्थस्य सिंहस्य क्रौर्यादियोग्य णाल्लसजातीयगुणानाम्माणवके दर्शनेन सिंहत्वस्य तत्रारोपो भवति सिंह इति पदञ्च स्वप्रवृत्तिनिमित्तरूपप्रातिपदिकार्थ एव संस्कारमम्भवति यथा तथा द्रोणो व्रीहिरित्यादावपि व्रीहौ द्रोणत्वारोपानन्तरं द्रोणाभिन्नो व्रीहिरित्याकारकबोधः एवं एतेष्वारोपितद्रोणत्व वान्व्रीहिरित्याद्याकारक एव बोध इति केचित् ॥

तन्न कचनस्त्रस्यातिवदनमित्यादिस्यच्चमत्काराभावापत्तेः एतेन द्रोणाभिन्नपरिमाणपरिच्छेद्यो व्रीहिरिति बोधोपपत्तये देवनार्थकतद्धितादिदर्शनोपादानम
युक्तमिति ध्वनितम् सत्वञ्च प्रवृत्तिनिमित्ततदाश्रययोरेव प्रातिपदिकार्थपदेन ग्रहणस्य सिद्धेश्च अलिङ्गाः अव्ययानि लिङ्गं प्रवृत्तिनिमित्तकाः लिङ्गमेव प्रवृत्ति
निमित्तं येषां ते स्त्री पुमान् नपुंसकमिति यथा अन्ये सर्वे ऽलिङ्गाः श्रीः ज्ञानमित्यादयः उपलक्षणमिति तेन यौतवन्दु वयस्माष्यमित्यादि सङ्ग्रहः तद्ध्वनयन् द्रोणा
भिन्नपरिमाणपरिच्छेद्यो व्रीहिरिति रीत्या शाब्दबोधस्तत्तैलक्षण्यानादरं ध्वनयन् तद्ध्वेति तज्जन्यनियतोपस्थितिकत्ववत्त्वेत्यर्थः प्रवृत्तिनिमित्ततदाश्रयरूप
लिङ्गस्याप्युपलक्षणम् तेन यत्र दारानित्यादौ लिङ्गस्यापि नियमेन प्रातिपदिकजन्यनियतोपस्थितिकत्वं तत्र प्रातिपदिकार्थे प्रथमेत्यनेनैव प्रथमासिद्धिः परिमा

एवं च प्रातिपदिकार्थ इत्यस्य अलिङ्गा लिङ्गप्रवृत्तिनिमित्तकाश्चोदाहरणम् अन्ये सर्वे लिङ्गाद्याधिक्यस्य परिमाणग्रहणं परिच्छेदकमात्रोपलक्ष
णम् तद्ध्वनयन्नाह सत्तावदेव सुवचमिति नियतोपस्थितिकत्वमिति तद्धृच्च प्रवृत्तिनिमित्ततदाश्रयरूपम् परिमाणं च प्रातिपदिकांशे लिङ्गप्र
त्ययविशिष्टांशे तु लिङ्गम्महत्त्वादिकं च न तो नियतोपस्थितिकमिति तत्सर्वं तदर्थत्वेन गृह्यते लिङ्गोदाहरणं तटस्तटी तटमिति बोध्यम् अकारान्त
प्रातिपदिकात् कस्यापि नियमेनानुपस्थितेस्तस्य तदर्थत्वाभावात् सा न स्यादिति न च लिङ्गविशिष्टपरिभाषया सिद्धिः यथान्यासे प्रातिपदिका
र्थशब्देन प्रवृत्तिनिमित्ताश्रययोरेव ग्रहणेन लिङ्गग्रहणेन तन्मात्राधिक्यस्यैव ग्रहणेन हिमानीत्यादौ महत्त्वस्याधिक्यसत्त्वेन तदसिद्धिरित्या
शयात् द्रोणादिशब्देभ्यः परिमाणस्यापि नियतोपस्थित्या तदपि तदर्थ एवेति तेभ्यः प्रथमासिद्धिः ॥ ग्रहणस्यानावश्यकत्वं स्पष्टयति परिमाणञ्चे

ति प्रातिपदिकार्थ इत्यस्य नियतोपस्थितिकमित्यत्रान्वयः यदि द्रोणादिशब्दजन्योपस्थितौ लिङ्गस्यापि नियमेन भानं तदा तेभ्योऽपि प्रातिपदिकार्थ इत्येव सिद्धमित्याशयेना
ह लिङ्गप्रत्ययेति यत्र लिङ्गबोधकप्रत्ययविशिष्टाद्गर्भो गौरीत्यादौ लिङ्गमात्रमधिकं बुध्यते तत्र तावन्मात्रस्य यत्र तु प्रयोगमहत्त्वादिकमपि यस्मात्प्रथमा विधीयते तज्जन्य
नियतोपस्थितिकमिति तत्रापि तावन्मात्रेणैव प्रथमायाः सिद्धिरिति भावः ननु लिङ्गग्रहणं तर्हि व्यर्थमेव स्यात्तत्राह लिङ्गोदाहरणमिति अत्र किमपि लिङ्गं न प्रातिपदिकज
न्यनियतोपस्थितिकमिति लिङ्गग्रहणं नैव ताद्दशेभ्यः प्रथमासिद्धिः ॥

मूलेयथान्यासइति प्रातिपदिकपदघटितन्यासइत्यर्थः लिङ्गग्रहणेनेति मात्रपदसहितेनेतिशेषः अर्थेलिङ्गेचेत्येतावन्मात्रोपादानेपियथान्यासेयत्परिमाणग्रहणोपाद नस्यफलन्तदन्यथासिद्धमित्याशयेनाह द्रोणादिशब्देभ्यइति प्रथमासिद्धिरिति एवञ्चपरिमाणग्रहणमनर्थकमितिशेषः तथावोधार्थम् द्रोणाभिन्नपरिमाणपरिच्छेद्यो व्रीहिरित्येतादृशवोधार्थम् स्पष्टैवेति एवञ्चमूलेयथाश्रुतसूत्राशयवर्णनपरमितिभावः मूलेयदित्वित्यादिनालिङ्गग्रहणमपिनकार्यमितिप्रतिपादितन्तत्रपूर्वेलक्षणारम्भ पक्षेशक्यार्थस्यार्थपदेनग्रहणन्नियमाश स्यप्रवेशोद्दिकञ्चप्रातिपदिकार्थइति पक्षस्तदालिङ्गग्रहणङ्कर्तव्यम यदिनियमांशस्यत्यागस्तिकस्प्रातिपदिकार्थइतिपक्षो र्थशब्दस्यवृत्तिविषयसामान्यपरइतिपक्षस्तदालिङ्गग्रहणन्नकार्यमितिप्रतीयते इतियत्केनचिदुक्तन्तदाशयाज्ञानेनेति ध्वनयन्नाह इदमिति इदम् लक्षणायावृत्तिश

यथान्यासेप्रातिपदिकार्थशब्देनप्रवृत्तिनिमित्ताश्रययोरेवग्रहणेनलिंगग्रहणेनतन्मात्राधिक्यस्यैवग्रहणेनहिमानीत्यादौमहत्त्वस्याधिक्यसत्वेनत दसिद्धिरित्याशयात् द्रोणादिशब्देभ्यःपरिमाणस्यापिनियतोपस्थित्यात्तदपितदर्थएवेतितेभ्यःप्रथमासिद्धिः परिमाणग्रहणस्यमूलोक्तार्थत्वेतुतथा वोधार्थतयावश्यकत्वेनैतावदेव सुवचमित्युक्तेरसंगतिः स्पष्टैवलक्षणाञ्चेति इदंस्वरूपकथननतुप्रकृतोपयोगिपदस्यस्वार्थेएवान्वाख्यातस्यप दान्तरसमभिव्याहारेलक्षणेतिसिद्धान्तात् लक्षणान्तर्भूतेति सादृश्यसंबंधमूलकलक्षणायाएवगौणीत्वमितिभावःपृथगेवेति मीमांसकमतरीत्ये दम् त्रिकम् ॥ ६) दृप्रतिपाद्यत्वप्रदर्शनम् प्रकृतोपयोगित्वाभावन्दर्शयति पदस्येत्यादिना स्वार्थेप्रवृत्तिनिमित्ततदाश्रयरूपे पदान्तरसमभिव्याहारेस्वार्था न्वयित्वेनाभिप्रेतोयोऽर्थस्तद्वाचकसमभिव्याहारेमुख्यार्थवाधग्रहसत्वेचेतिशेषः इतिसिद्धान्तादिति तथाचपदसंस्कारवेलायांलक्षणायाअवसरएवनास्तीति ल क्षणायागौण्याश्चवृत्तिशब्दवाच्यत्वव्यवस्थापनम्प्रकृतानुपयुक्तमितिभावः मूलकेति लक्षणानशक्यासम्बन्धरूपाकिन्तुशक्यार्थसम्बन्धज्ञानोत्तरञ्ज्ञायमानोयः शक्यतावच्छेदकारोपस्तद्रूपा तत्रपूर्वकालिकसंबन्धग्रहविषयः सम्बन्धोयदिसादृश्यरूपस्तदोत्तरकालिकारोपएव गौणीत्वेनव्यवह्रियते यथात्वन्यस्तदाल क्षणेत्येवव्यवहारइतिभावः मीमांसकरीत्येति अभिधायाःपदार्थान्तरत्ववत्तदनुपपत्तिज्ञानोत्तरंज्ञायमानज्ञानविषयस्यापिपदार्थान्तरत्वमिति तेषामपिमतेलक्ष णायामुख्यार्थवाधादिकन्नियामकमस्ति तत्रयदिसादृश्यात्मकसम्बन्धज्ञानम्पूर्वम्भवेतितदागौणीव्यवहारोऽन्यदाश्रुद्धेति ॥ ७ ॥ ७ ॥ ७ ॥

स्वार्थे प्रवृत्तिनिमित्तम् अस्य त्रिकपक्षस्य सतेन सूत्रारम्भे हि द्विकपक्षमाश्रित्यैव लिङ्गग्रहणस्य सत्त्वात्तदा प्रातिपदिकार्थपदेन प्रवृत्तिनिमित्तं तदाश्रययोर्ग्रहणमिति य
त्तन्मूलकाराभिप्रेतमेवेति ध्वनितम् सवञ्च अर्थशब्दमात्रस्योपादानेच शास्त्रबलेनेति नपुंसकशब्दस्य न पुंसकाभिधायकशब्दपरतया लिङ्गस्य यस्मात्स्वादयो
विधीयन्ते तदर्थत्वेन सूत्रे लिङ्गपदाभावेपि न क्षतिरितिभावः क्वचित्कुम्भः श्रीः ज्ञानम् गौरी मृडानी दारादित्यादौ क्वचित् तटस्तटीतटमित्यादौ तदाह तदभिप्रायेणाह
तदर्थत्वन्तज्जन्यबोधविषयत्वमात्रन्तच्च सर्वसाधारणम् ननु प्रकृतसूत्रभाष्यकस्यापि पदस्य प्रत्याख्यानात्तदुक्तायद्यपि प्रातिपदिकादिपदानामनावश्यकत्वस्य
लाभस्तथापि तेषामप्रत्याख्यानम्भाष्यविरुद्धमत आह प्रातिपदिकग्रहणस्येति सूत्रोपक्रमे सूत्रार्थकथनप्रारम्भे सतदग्रे प्रातिपदिकग्रहणस्येत्यस्य विधानार्थत्वमित्य॥

स्वार्थद्रव्यलिंगानि इत्याश्रीयत इत्यनेन सूत्रारंभेऽस्यानाश्रयणं ध्वनितम् सवं च लिंगस्यापि स्वमोर्नपुंसकादित्यादिशास्त्रबलेन प्रातिपदिका
र्थत्वात्तत्रापि प्रथमासिद्धिरितिभावः विचित्रत्वेपीति क्वचिल्लिंगस्य नियमेन भानं क्वचिदनियमेनेत्येवं विचित्रत्वेपीत्यर्थः तदाह नियमांशेति नियते
पस्थितिकइत्यत्र नियमांशेत्यर्थः इत्येवमारमिति प्रातिपदिकग्रहणस्य सूत्रोपक्रमे सर्वाविधेकवाक्यतयाऽव्ययेभ्योऽप्राप्तानेभ्यो विधानार्थत्वंव
दतात्द्वितश्चासर्वविभक्तिर्बहुष्वित्यादिसूत्रेषु अव्ययेभ्यः प्रकारान्तरेण विभक्तिसाधयतः प्रातिपदिकग्रहणप्रत्याख्यानं भाष्यकृता स्वादौ नाप्राति
पदिकात्स्वविधानेन कस्यार्थ इत्याकाङ्क्षायां यस्मात्स्वादिविधिस्तदर्थ इत्यस्य लाभ इतिभावः उपचारात् द्रोणत्वारोपात् इतिवदिति अन्नयथावा
हीके गात्वारोपणाद्वत वचनग्रहणप्रत्याख्यानोपायमाह सुकइत्यादि एतदनभिहितइति सूत्रे भाष्ये स्पष्टम् न्याय्यत्वादिति ॥ अत्रान्वयः द्व्येकयोर्द्विव
चनैकवचनइति सूत्रैकवाक्यतयाऽर्थे प्रथमेत्यस्य एकत्वे हि त्वबहुत्वे चैकवचनादीत्यर्थे अन्वयनियमपक्षेऽन्येभ्यः प्राप्तावप्यव्ययेभ्यस्तेषामप्राप्ताने भ्यः प्रथमासिध्यर्थं
प्रातिपदिकग्रहणविध्यर्थमित्यर्थः प्रकारान्तरेण सुकत्वादावेकवचनमेवेत्यादिरीत्याऽर्थनियमेन प्रत्याख्यातम् तत्फलस्यान्यथासिध्या प्रत्याख्यानप्रायम् आरोपादि
ति सवञ्च यस्यारोपविषयता तद्धर्मप्रकारिका प्रतीतिः शाब्दबोधरूपा भवतीति प्रत्याख्यानम्भाष्यसम्मतमेवेतिभावः भाष्ये स्पष्टमिति तत्र हि एको द्वावित्यादौ प्रातिपदिकेनो
क्तत्वाद्विभक्तिर्न स्यादित्याशङ्क्य व्यर्थतः समयाद्धि विध्यतीत्युक्त्या भगवता वचनग्रहणमपि प्रत्याख्यानप्रायमेव अर्थेन इत्यस्यानुवादकविभक्तेर्न्याय्यत्वमित्यर्थ इति कैय

इदम् अनन्वितार्थकेतियुक्तेराश्रयणम् यथान्यासइति वचनग्रहणस्यसत्वे अन्यथा तस्यानादरे दुर्वारइति राङ्ग्यामात्रइत्यनेनविधीयमानाप्रथमा सकादिषुद्वे
भ्योवचनवैपरीत्येनापिस्यादितिभावः सूत्रेसम्बोधनेचेतीति अर्थेप्रथमेतिप्रथमासम्बोधनाधिकेपिभविष्यतीति तस्यसूत्रस्यवैयर्थ्यात्तस्यज्ञापकत्वमित्यर्थः नचतेनसूत्रे
णप्रथमायाआमन्त्रितमित्यामन्त्रितसंज्ञाभवति तस्यसूत्रस्याभावेउद्देश्यतावच्छेदकरूपापरिचयात्कथन्तन्निर्वाहइतिवाच्यम् सम्बोधनञ्चामन्त्रितमित्येकयोगः का
र्यः प्रथमेत्यस्यानुवृत्तिश्च सम्बोधनेयाप्रथमातदन्तमामन्त्रितमित्यर्थः महासंज्ञाकरणेनप्रत्ययग्रहणेपितदन्तविधिः एवञ्चयोगविभागोव्यर्थइतितत्सामर्थ्येन ज्ञापक
त्वमित्यर्थः अत्रकेचित् स्वौजस्मौडिति सामान्यसूत्रेण सिद्धेऽर्थइत्येतन्नियमार्थम्प्रातिपदिकार्थएवप्रथमेति तेनप्रथमाया अर्थान्तरसम्बन्धनिवृत्त्याकर्मसम्बन्धाभा
वेसिद्धेयोगविभागकरणस्यज्ञापकत्वाश्रयणमयुक्तमिति तन्मतमनूद्यदूषयति नन्वित्यादिना अर्थइतिसूत्रवत्कर्मणीत्याद्यपिसूत्रन्नियमार्थमिति तत्रप्रत्ययनियमप

इदञ्चयथान्यासेपिआवश्यकम् अन्यथासकादिषुवचनविपर्ययोदुर्वारः स्यादितिभावः ज्ञापकेनेति ननुप्रातिपदिकार्थएवेतिनियमात्तदाधि
क्येऽप्राप्तौकिंज्ञापकेनेतिचेन्न यथाकर्मण्येवद्वितीयेतिनियमेन कर्मत्वाभावसमानाधिकरणार्थस्यैवव्यावृत्तिर्नतुतत्समानाधिकरणार्थान्तर
स्य अतएवगांदोग्धिपयइत्यादावपादानत्वादिशक्तिबोधेपिद्वितीयाभवति तथाप्रातिपदिकार्थाभावसमानाधिकरणार्थान्तरस्यैवव्यावृत्तिः स्यान्न

से व्यवस्थानथैवात्रापिस्यादित्याशयेनाह यथाकर्मण्येवेति कर्मत्वाभावसमानाधिकरणस्य कर्मत्वशक्तिप्रकारज्ञानासमानाधिकरणशक्त्यन्तरप्रकारकज्ञानविशेष्य
स्य नत्विति कर्मत्वज्ञानसमानाधिकरणशक्त्यन्तरज्ञानविषयस्यनव्यावृत्तिरित्यर्थः सामानाधिकरण्यञ्चैककालावच्छिन्नैकाधिकरणवृत्तित्वसम्बन्धेन तत्रार्थेऽत्रा
कडारादेकेति सूत्रस्थभाष्यम्मानमित्याह अतएवेति उक्तनियमादेवेत्यर्थः द्वितीयाभवतीति अपादानमुत्तराणिकारकाणिगान्दोग्धिपयइत्यत्रपरत्वात्कर्मसंज्ञेति
भाष्यमत्रमानमितिशेषः अपादानत्वादिशक्तिबोधेपीति विभागानुकूलव्यापारानुकूलव्यापारोदुहेरर्थः गोर्विभागावधित्वादपादानत्वम्प्राप्तम्प्रधानीभूतव्यापारप्रयो
ज्यविभागाश्रयत्वात्कर्तुरीप्सितिकर्मत्वम्प्राप्तमुभयविवक्षाच तत्रकर्मसंज्ञायाः परत्वात्सैवभवति तत्रशक्तिद्वयज्ञानयोः सत्वेपिननियमेनोक्तरीत्याव्यावृत्तिरितिभा
वः यथातत्रसूत्रेनियमस्तथाप्रातिपदिकार्थसूत्रेपिस्यादित्याह तथेति अत्रहिप्रातिपदिकार्थसत्वएवप्रथमानतुतदसत्वइत्याकारकोनियमःस्यात् तेनयस्यव्यावृ

तत्सत्वे प्रातिपदिकार्थत्वसत्वे इ भावइति सम्बोधनेचेत्यस्य ज्ञापकत्वंवर्णयतोभावइत्यर्थः तत्समानाधिकरणेति प्रातिपदिकार्थत्वसमानाधिकरणेत्यर्थः अपिरेवार्थः
अर्थान्तरइ कर्मत्वादिप्रत्ययनियमपक्षेतादृशनियमसामर्थ्यादन्ययोगव्यवच्छेदे नकर्मत्वाद्याधिक्यद्वयसम्बोधनाधिक्येपिसानस्यादितिसम्बोधनेचेतिसूत्रंविध्यर्थइ
यमितिभावः सजातीयापेक्षात्वान्नियमः स्यादित्याशयेनाह प्रातिपदिकार्थएवेति नचनिरर्थकाप्रसिद्धिः चवैतुहीत्यादिपादपूरणार्थानामनर्थकनिपातानाञ्चसत्वात्
नचेष्टापत्तिः धार्मिकोसिवैत्वमसुस्वप्नोनोजीत्यादौसपूर्वायाः प्रथमायाविभाषेत्यनेनआप्तेरेवफलत्वात् तत्सत्वेतु ज्ञापकसत्वेतु नदोषइति अनर्थकेभ्यः प्रथमायाअप्रा
तिरूपोदोषोनेत्यर्थः ननुपूर्वोक्तनियमस्वीकारपक्षेकस्मात्प्रातिपदिकार्थइतिपक्षेसङ्ख्याधिक्येप्रथमानस्यादतआह सङ्ख्याधिक्यइति सकावाक्यत्वादिति सकत्वा
दिविशिष्टप्रातिपदिकार्थेकर्मत्वादियोग्यार्थकप्रातिपदिकाच्चेदित्येवन्नियमादितिभावः अर्थनियममिति प्रातिपदिकार्थेप्रथमैवनद्वितीयादीत्येवंरूपोऽर्थनियममित्य

तत्सत्वेसवकर्मत्वादेरितिभावः नचप्रातिपदिकार्थाभावसमानाधिकरणार्थान्तरस्याप्रसिद्ध्यानियमव्यावृत्त्योप्रसिद्धिरितिनियमसामर्थ्यात्तत्समाना
धिकरणार्थान्तरस्यापितेनव्यावृत्तिरितिवाच्यम् प्रातिपदिकार्थएवप्रथमानतुनिरर्थकेइति तद्व्यावृत्तेरेवफलत्वात् तत्सत्वेतुकर्मादियोग्यार्थकप्रा
तिपदिका च्चेत्तद्धितस्वार्थेइत्यर्थान्नदोषः संख्याधिक्येतुभवत्येवएकयोरित्यादिभिरस्यैकवाक्यत्वात् वानेकत्वमात्रत्वमर्थनियममाश्रित्यमात्रग्र
हणंसंबोधनेचेति सूत्रलिंगादिग्रहणंच प्रत्याख्यातमितिदिक् जात्यादिरूपइति जात्यादिनारूप्यतइतिव्युत्पत्त्याजात्यादिधर्मविशिष्टइत्यर्थः ॥

र्थः तदानीं विभक्त्यन्तरस्यव्यावृत्तिनेत्यर्थान्तरसम्बन्धस्येति सम्बोधनेलिङ्गाधिक्येचप्रथमाभविष्यति कर्मत्वाद्याधिक्येतुकर्मादौद्वितीयाद्येवेत्येवंरूपनियमार्थेइ कर्म
णिद्वितीयेत्यादिसूत्रमिति द्वितीयाद्येवभवति दिगितिदिगर्थस्तुयद्यपिप्रत्ययनियमः सूत्रकारसम्मतस्तथाप्यर्थनियमपक्षेलाघवमित्ययमेवयुक्तइति मूलेसन्निति
वकेवलमिति सनवर्तमानइत्याकारायाप्रतीतिस्तद्विषयोभवति केवलपदार्थमाह नजात्यादिरूपइति अत्रैवपदादिपदन्तद्व्याख्यार्थमाह नलिङ्गसङ्ख्याकारकेति
मत्रनजात्यादिरूपइत्यस्यनजात्यादिस्वरूपइत्यर्थोपिसम्भाव्येतनचेष्टापत्तिः सन्नित्येववकेवलमित्यनेनविरोधात् तादृशप्रतीतिविषयस्यजातिस्वरूपत्वानपाया
इतआह जात्यादिनेति तथाचवर्तमानत्वमाधेयत्वन्धर्मिणिसत्तातयायद्भासतेइत्येवविवक्षितन्धर्मीतुनधर्मिणिसत्तयाभासतेइतितद्व्युदासइतिभावः॥ ७॥

ननु जात्यादीत्यत्रादिना ऽस्वरेड़ोपाधेरपि ग्रहणं स्यात् तथा च सर्वस्यैव जात्यादिविशिष्टधर्मिरूपतया लक्ष्याप्रसिद्धिरित्याशयेनाह ननूच्चैरादीनामिति तद्व्याचष्ट इति सन्नित्येन तद्व्याचष्ट इत्यर्थः सर्वत्र जात्यादिपदं लिंगादेरुपलक्षणम् लिङ्गादिविशिष्टोऽर्थो येन भवतीत्यत्र तात्पर्यमिति भावः न जात्यादिरूप इत्यस्य न लिङ्गादिविशिष्ट इत्येवार्थ इत्येतद्ध्वनयति मूले ऽव्ययार्थो हीत्यादिना अमुकलिङ्गादिरित्यत्रादिना संख्यायाः परिग्रहः अव्ययार्थः स्त्रीलिङ्गः पुल्लिंगो नपुंसकलिङ्गः एकत्वादियुक्त इत्येवं वक्तुं न शक्यते इत्यर्थ इति इति तात्पर्यार्थः सन्नित्येव केवलं भासते इत्यस्य प्रातिपदिकजन्यायां सन्नित्याकारिकाप्रतीतिस्तद्विषय इति अस्तिसामानाधिकरण्येन योभासते इत्यर्थो वा तत्र नाद्य इत्याह मूले उच्चैर्नीचैरित्यादीति न द्वितीय इत्याह अस्त्यादीति दुर्लभत्वादिति यदि अस्तिसामानाधिकरण्यं तदा कारकत्वं सम्पन्नमित्यसत्त्वार्थकत्वस्यैव हानिः स्यादिति भावः ननु नास्तिसामानाधिकरण्यमात्रेण सत्त्वार्थकत्वस्य हानिः स्वरादिषु स्वोऽस्ति स्वः पश्येत्यादिदर्शनात्तेषामप्यस्तिसामानाधिकरण्यस्य सुलभत्वादत आह न लिङ्ग सं।

ननूच्चैरादीनामाधारतात्वविशिष्टाधारताशक्तिर्वाच्येति तदप्रसिद्धिरित्यत स्तद्व्याचष्टे न लिंगेति देशकालादय इति अमुकलिंगादिरित्यर्थः ननु सन्नित्याकारकप्रतीत्यभावेऽपि अस्तिसामानाधिकरण्यं स्यादत आह अस्त्यादीति विरोधाच्चेति सन्नित्यनेन सामानाधिकरण्येन कारकत्वस्य दुर्वारत्वादिति भावः वाक्यशेषविरोधाच्चेति नासत्वे लिंगादेरपि संभवेन तद्विरोध इति भावः अव्याप्तेश्चेति ततः सन्नित्याकारकप्रतीतेरभावादिति भावः

इत्येति यद्यस्तिसामानाधिकरण्यं तदा तदर्थस्य कारकत्वमिति न लिङ्गेत्याद्युक्तिविरोधः स्पष्ट एव सर्वप्रकारेण स्वरादीनामस्तिसामानाधिकरण्यस्य वक्तुं शक्यत्वेऽपि चवाशब्दयोरुच्चैरादिशब्दानामधिकरणशक्तिप्रधानानामस्तिसामानाधिकरण्यं दुरुपपादमित्यविवोध्यम् ननु तैः प्रतिपादितायेऽर्थास्ते यदा समुच्चयविकल्पाधिकरणादिपदैः प्रतिपादिता भवन्ति तदाऽस्तिसामानाधिकरण्यमस्त्येवेत्यस्तिसमानाधिकरणार्थप्रतिपादकत्वं सर्वत्र सुलभमत आह पदान्तरेऽपि तस्य पदान्तरोपस्थितिमादायास्तिसामानाधिकरण्यस्य अव्यावर्तकत्वादिति सर्वत्रैव तस्य सत्त्वेन व्यावर्तकत्वाभावात् नासत्त्वे पदान्तरोपस्थापितस्य तस्यास्तिसामानाधिकरण्यसत्त्वे लिङ्गादेरपीति गृहस्योच्चैः पताकाऽस्तीत्यस्यार्थस्य विवरणे ऊर्ध्वदेशेऽस्तीत्यादौ ऊर्ध्वदेशनिष्ठाधिकरणतायाः प्रतिपादक उच्चैः शब्द इत्यादौ च पदान्तरोपस्थिताधिकरणतायां लिङ्गसङ्ख्ययोः सम्भवेनेत्यर्थः ननु यदि प्रातिपदिकार्थ इत्यस्याव्ययान्येवोदाहरणानि तदा कृष्ण इत्यादीनि कस्योदाहरणानि प्रातिपदिकार्थ इत्यस्य लिङ्ग इत्यस्य वा तत्र नाद्य

सेत्याह मूलेकृत्स्नइत्यादि अव्याप्तिमुपपादयति ततइतियोर्थः सन्निरूपेवकेवलमभ्यासत्तद्रूपस्य यतः सन्मात्राकारप्रतीतिर्भवति तस्य प्रातिपदिकार्थत्वमेत्यत्रप्रातिपदिकपदे
नग्रहणादितिभावः नद्वितीयस्येत्याह मूलेनचलिङ्गग्रहणादिति कृत्स्नत्वादेरिति भवदुक्तव्याख्याने नप्रातिपदिकार्थपदस्य सत्ताबोधकतयालिङ्ग इत्यस्य सत्तापेक्षयालिङ्ग।
मात्रयत्राधिकम्भासत इत्येवंवचननिष्पत्तिर्भवदुक्तरीत्यास्यात्तथाच कृत्स्नत्वादेरधिकस्य तज्जन्यबोधेभाने नतेष्वव्याप्तिरितिभावः ननुप्रातिपदिकार्थः सत्तेत्यत्र सत्तापद
म्प्रवृत्तिनिमित्तस्यैवबोधकन्तथुतत्ज्ञिन्नसत्ताबोधकमितिन भवदुक्तो दोषइत्यर्थमनूद्यदूषयति मूलेयदपिप्राचेति जात्यादीति आदिनोपाधिपरिग्रहः तथाचोच्चैरादौ।
नामूर्ध्वदेशनिष्ठाधारतावृत्त्याधारतात्वात्मकप्रवृत्तिनिमित्तप्रतिपादकतयानाव्याप्तिरित्याशयः इत्यन्वयइत्यनेन जात्यादीति निरपेक्षमितिचभिन्ने पद इति ध्वनितम् प्र
वृत्तिनिमित्तमात्रयज्जन्यबोधविषयोभवतीत्यर्थः स्यात्तथाचासम्भवइत्याशयेनदूषयति मूलेप्रवृत्तिनिमित्तहीति तन्मात्रबोधासम्भवमुपपादयति प्रकारतायाइति॥

अधिकव्यवच्छेदादिति कृत्स्नत्वादेः सत्तालिङ्गाभ्यामधिकस्यभानादितिभावः अलिङ्गेइति अलिङ्गसंख्यावेतौकेवलमसाश्रितंनिरपेक्षंलिङ्गादि
निरपेक्षंस्वार्थेजात्याद्याह मुरित्यन्वयः असंभवीप्रकारतायाविशेष्यनिरूपितत्वात् कारकादीयादिनालिङ्गम् सिद्धान्तादिति ओत्सूत्रेकैयटेस्फु
टमेतत् इदमेवयुक्तम्॥ ७ नचप्रातिपदिकजन्यनिर्विकल्पकेप्रवृत्तिनिमित्तमात्रस्यभानंस्यादितिवाच्यम् प्रातिपदिकजन्यज्ञानस्यस्मृतिरूपत्ताशाब्दबोधरूपता
वोभयथापिविशेष्यविशेषणोभयविषयकत्वस्यानपायादितिभावः कैयटेस्फुटमिति तत्रभाष्यकृताध्वनितं कैयटेनप्रकटीकृतमित्यर्थः तत्रभाष्येऽग्नदः अदःसमभवत्
अदोभवदित्यत्रप्रगृह्यत्ववारणायवार्तिककृता ओतश्चप्रतिषेधइत्युक्तेतस्यलक्षणप्रतिपदोक्तपरिभाषयासिद्धमित्यनेनप्रत्याख्याने एवमप्यगौर्गौः समभवद्गौर्भवदित्य
त्रप्राप्नोतीतिशङ्कायागौणमुख्यन्यायेनसमाधानंकृतंकैयटन्तद्विवादीकेवृद्ध्यात्वे भवतइतिपरेणपाङ्क्ति तेऽर्थाश्रयेसमदेवम्भवति शब्दाश्रयेचवृद्ध्यात्वइतिसमाहित
म् एतेनयत्रार्थविशेषपुरस्कारेणकार्यंविधीयते तत्रमुख्यार्थः प्रथमंबुद्ध्यारूढोभवति गौणार्थप्रतीतिस्तु पदान्तरसम्बन्धवेलायामिति पदकार्यविषयकत्वमस्यन्या
यस्येति ध्वनितम् कैयटेनतुस्पष्टतयैवोक्तम् अर्थाश्रयइत्यस्यलौकिकार्थवत्त्वयोग्यपदाश्रयइत्यर्थः मूलेसिद्धान्तादित्यनेनयत्रतस्यन्यायस्यप्रवृत्तियोग्यता तत्रतेन।
न्यायेनकार्यनिष्पत्तिर्वाच्याबस्तुतस्तुप्रकृते नप्रवृत्तियोग्यतैव नेतिध्वनितन्तदेतत्स्पष्टयति इदमेवेति इदमेव गौणमुख्यन्यायविषयत्वमेव॥ ७ ॥ ७ ॥

युक्तत्वे हेतुमाह विशिष्टेति अर्थबोधकतावच्छेदकानुपूर्वीविशिष्टेत्यर्थः गौणमुख्ययोरिति न्यायोऽर्थवद्ग्रहणपरिभाषामूलकः सा परिभाषा यत्र विशिष्टरूपोपादानं तत्रैव प्रव
र्तते तत्रैवार्थोपस्थितिसत्त्वेनोपस्थितस्यार्थस्य शब्दं प्रति विशेषणत्वसम्भवात् सत्तेनापदस्य प्रयोगानर्हत्वेन पदस्यैव पदान्तरार्थसम्बन्धवेलायां गौणार्थत्वावगतिरिति।
द्रोणादिपदानां स्वार्थे स्वसाधुत्वान्वाख्यानङ्क्रियेम् तदानीं तन्मूलभूतायाऽर्थवत्परिभाषायाः तद्विषयत्वेनैव नास्ति उपात्तविशिष्यार्थोपस्थापकं रूपं यत्र तत्रैव तस्याः प्रवृत्तेः
प्रकृतसूत्रे तु न तादृशरूपोपादानमिति परिभाषाग्रहणमनर्थकमिति ध्वनितम् वस्तुतस्तु परसम्मतगौणमुख्यन्यायप्रवृत्तिमभ्युपेत्य प्रातिपदिकसंस्कारवेलायान्तस्याः प्र
वृत्ते प्रवृत्त्यभावकथनमित्याशयेनाह द्रोणादिशब्दानामिति गौणत्वाभावादिति सदृशलाक्षणिकस्यैव गौणत्वादिति शेषः यदुक्तं सम्बोधनपदस्य क्रियाविशेषणत्वन्तत्र सा

: विशिष्टरूपोपादानाभावादस्या अप्रवृत्तिः द्रोणादिशब्दानां लाक्षणिकत्वेपि गौणत्वाभावाच्चेत्यपि बोध्यम् संबोधनपदमिति अत्र पुंजराजेना
ख्यातं सविशेषणं वाक्यमिति वाक्यलक्षणम् तत्रास्य क्रियाविशेषणत्वाभावे वाक्यत्वन्न स्यादिति समानवाक्य इति प्रकृतविहितो निघातो न स्यादिति
भावः वस्तुतस्तु सर्वसन्निधायकूलं तत्र निष्ठतीत्याद्यर्थकेन याति तिष्ठति कूलेइत्यादौ धनुष्यस्य क्रियाया विशेषणत्वाभावात् तद्घटितस्य वाक्यत्वानाप
तौ समर्थसूत्रभाष्यसम्मतनिघातस्य तत्रानापत्तिः तस्मात् सविशेषणमित्यस्य साक्षादन्यद्वारा वा यद्विशेषणं तत्सहितमित्यर्थो वक्तव्यः एतेन यत्तः
पदात्परस्य पदस्य निघातादयः क्रियन्ते तयोः परस्परान्वयनियम इत्यपास्तम् वस्तुतो व्रजानि देवदत्तेत्यादौ जानीहीति शेषः ॥ ५ धकमाह अत्रेति सवि

शेषणम् साक्षात्परम्परया च यद्विशेषणं तद्बोधकसहितम् तेन गभीरायान्नद्यां मौनीकीत्यस्यैकवाक्यत्वम् तत्र सम्बोधने चेति सूत्रविहितप्रथमान्तपदघटितसमुदाय
मध्ये अस्य देवदत्तेत्यादिपदस्य निघातो न स्यादिति आष्टमिकेनामन्त्रितस्य चेत्यनेन समानवाक्यस्थस्यामन्त्रितस्य पदात्परस्यैव निघातविधानादिति भावः व्रजानि दे
वदत्तेत्यस्मात् पुंजराजसम्मतो देवदत्तसम्बन्धिसम्बोधनविषयोऽस्मत्कर्मकङ्गमनमिति शाब्दबोधः तत्र साक्षात्क्रियाम्प्रति विशेषणन्तत्सहितस्यैवैकवाक्यत्वमिति
कश्चित् तन्नयुक्तमित्याशयेनाह वस्तुतस्त्विति एतेन उक्तसमर्थसूत्र ——— सम्मतनिघाताप्राप्तिरूपदोषेणनियमं इति समानवाक्ये इति वार्तिकं बोध्यं इति शे
षः यत्तु सम्बोधनविभक्त्यन्तस्य विधेयभूतक्रियायामेवान्वयः सम्मतनिघातस्य प्रयोजकोवक्ष्यमाणहरिग्रन्थस्वारस्यादेवन्न व्रजानि देवदत्तेत्यत्र व्रजनस्य विधेयत्वा।

भावेन कथमत्र निघातसिद्धिः फलत्वेन कथनमिति केचित्तन्न तेषि निघातसिद्ध्ये आह वस्तुतो व्रजानीत्यादि ॥ ॐ ॥ न दोष इति व्रजनस्याविधेयतया देवदत्तेत्यनेनान्वयाभावान्निघाताप्राप्तिरूपदोषो नेत्यर्थः अवबोधनरूपायाः क्रियाया विधेयत्वेन विवक्षितायास्तस्याः सम्बोध्यान्वयेन समानवाक्यत्वस्य सत्त्वात् न च जानीहीत्यस्य शेषत्वे तिङन्तद्वयघटितवाक्यस्यैकतिङ् वाक्यमिति परिभाषितत्वान्निघातोपयोग्येकवाक्यत्वं तदभावेन दोषस्तदवस्थ इति वाच्यम् जानीहीति शेष इत्यस्य व्रजानि देवदत्त इति समुदायस्य व्रजानि देवदत्त जानीहीत्यस्य योऽर्थः स तत्र त्वया निर्बोध्य इत्येकदेशन्यायेन तिङ्घटितत्वेन निघातस्य प्राप्तिरित्याशयात् अभिमुखीभव देवदत्त उद्देश्यकं मन्तव्यं प्राप्तकालाधिकरणकगमनकर्मकं श्रवणाविषयोऽज्ञानमित्याकारकोऽस्मात् शाब्दबोधः प्राप्तकाल इति गमनयोग्यस्य कालस्य प्राप्तिविवक्षायामित्यर्थः लोट् प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चेत्यनेन लोट् दिगिति दिगर्थस्तु यत्र विधेयभूतक्रियावाचकस्य पदस्य नास्ति केवलं सम्बोधनविभक्त्यन्तस्यैव प्रयोगस्तत्रापि तादृशक्रियावाचकपदाध्याहारेण शाब्दबोधः यथा मूर्खेत्यादौ अत्र सम्यगाचरेति पदाध्याहारे सति मूर्खोद्देश्यकं सम्यगाचरणं प्रेरणाविषय इति बोधो भवति सम्बोधनं त्वभिमुखीकर

तत्र व्रजनस्य कर्मत्वेन देवदत्तस्योद्देश्यत्वेनान्वयान्न दोषः प्राप्तकालेऽत्र लोडिति दिक् ॥

णम् तच्च प्रयोक्तृवचनार्थग्रहणे सादरत्वसम्पादनम् तत्फलं प्रवृत्तिनिवृत्ती सुखपरा इत्यादिकं तस्याभिव्यञ्जकम् सादरत्वसम्पत्त्यनुकूलो व्यापारश्च सम्बोधनविभक्त्यन्तशब्दप्रयोगस्य उद्देश्यतावच्छेदक रूपेण सिद्धस्य यदा ज्ञातो भवति तदा तद्भावच्छिन्नोद्देशेन क्रियाविधीयत इति सम्बोध्यतावच्छेदकरूपेण सिद्धत्वं सम्बोधनविभक्त्यन्तशब्दप्रयोगे नियामकमतो व्यवस्थैव राजन्युध्यस्व राजा भव युध्यस्वेत्यनयोः प्रयोगाः तदुक्तं हरिणा सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यत इति सिद्धस्य सम्बोध्यतावच्छेदकरूपेण सिद्धस्य अभिमुखीभावमात्रमित्यनेन फलनिर्देशः सुखपरा इत्यादिना सम्बोध्यतावच्छेदकावच्छिन्नो यदा फलवत्त्वेनानुमितो भवति तदा क्रियाविधीयत इति तदाह प्राप्ताभिमुख्य इति आभिमुख्यं सादरत्वम् प्राप्तमाभिमुख्यं येन स तथा अर्थः अर्थपूर्ण आत्मा सम्बोध्यः उष्ट्रमुखवत्समासः प्रयोक्तृवचनार्थज्ञानवान् क्रियासु बोधनीयक्रियासु विनियुज्यते प्रवर्त्यते स च स्वं सम्बोधनमभिमुखीकृत्याज्ञातार्थज्ञानानुकूलव्यापारानुकूलव्यापार इति फलितम् यत्र सम्बोध्यः सन्निकृष्टोऽचेतनो वा तत्र सन्निकृष्टत्वारोपेण चेतनत्वारोपेण च गौणः सम्बोधनविभक्त्यन्तशब्दस्य प्रयोग इति ॥

व्यापाराश्रय इति प्रधानधात्वर्थाश्रय इत्यर्थः + मू०७

किन्त्वतिङ्समानाधिकरणे प्रथमेति वार्तिकस्वारस्यात्प्रथमापि क्रियाजनकरूपकारकार्थिका विभक्तिः अत एव सहयुक्तेऽप्रधान इति सूत्रेऽप्रधानग्रहणस्याकर्त्तव्यत्व
मप्रधानग्रहणं शक्यमकर्त्तुम् नचैवम्पुत्रेण सहागतः पितेत्यत्र पितुरपि तृतीयापत्तिः उपपदविभक्तेः कारकविभक्तिर्बलीयसीति प्रथमा भविष्यतीत्यभिहितम्भाष्ये
उपपदविभक्तेरितिपरिभाषानुवाचनिकीति स्पष्टमन्यत्रेति दिक् इति प्रथमाविवरणम् अनेनेति व्युत्पत्तिप्रदर्शनेनेत्यर्थः अस्य सूचयतीत्यत्र व्याख्यानादित्यस्य तु रूढि
रित्यत्रान्वयः रूढ इति नचाभीष्टमीप्सितं हृद्यन्दयितं वल्लभं प्रियमिति कोशपाठाद्रूढिरेवाभिप्रेतेति वाच्यम् योगरूढेः स्वीकारात् अत्र मानन्तु वारणार्थानामीप्सितः
इति सूत्रस्थभाष्यमेव तथाहि किमुदाहरणम् माषेभ्यो गा वारयति भवेद्यस्य माषास्तस्य गावस्तस्य माषा ईप्सिताः स्युः ईप्सितशब्दस्याभिप्रेते रूढत्वाभिप्रायेण यस्य स्वामिनः पु
रुषस्य माषास्तस्यैव ईप्सिताः पूर्वोक्तमेवार्थं द्रढयितुमाह यस्य तु खलु गावो न माषाः कथं तस्य माषा ईप्सिताः स्युः तस्यापि माषा एवेप्सिताः ईप्सितशब्दः क्रियाशब्द आप्नो

इति प्रथमा आप्नोतेरित्यादि अनेन व्याख्यानात् क्रियाशब्दश्चात्रेप्सितशब्दो न त्वभिप्रेतपरो रूढ इति सूचयति आप्तुमिति संवद्धुमित्यर्थः केनेति
करणाकांक्षाप्रदर्शनम् विशेषणीभूतेनेति कर्तृपदार्थविशेषणीभूतेनेत्यर्थः उपस्थितं परित्यज्यानुपस्थितकल्पने मानाभावादिति भावः लभ्यत इति

यतेनत्र वारणक्रियया परकीया अपि माषा वारयितुमाप्तुमिष्टा भवन्तिमान      एतेने इयेभ्योऽसौ गा वारयतीति कैयटः माषास्वेवेत्यत्रैवकारो भिन्नक्रमः माषा ईप्सि
ता एवेत्यर्थः अत एव भाष्यकार आह आतश्चेप्सिताः यदेभ्यो गा वारयति पूर्वापेक्षया किञ्चिद्वैलक्षण्याभिप्रायेण पुनराह इह कूपादन्धं वारयतीति कूपेऽपादानसंज्ञा न प्रा
प्नोति नहि तस्य कूप ईप्सितः कस्तर्ह्यन्धः न प्राप्नोतीति अन्धसम्बन्धे सति कूपस्य न विनाशो नापि राजभयमिति प्रश्नः कस्तर्ह्यन्ध इति तस्य त्वनुकम्पायाः सद्भावात्तस्येप्सितत्वं
मन्यते तस्यापि कूप एवेप्सितः पश्यत्ययमन्धः कूपमाप्नुयादिति तस्यापीति वारणक्रियया आप्तुमिष्ट इत्यर्थः एतेन ईप्सितशब्दस्य क्रियाशब्दतया कूपस्यापि तत्संयोगाभा
वरूपफलाश्रयतया कूपस्येप्सितत्वमस्त्येवेति प्रघट्टकेन ईप्सितशब्दो यौगिक इति सूचितम् एकदेश्याह इहाग्नेर्माणवकं वारयतीति माणवकेऽपादानसंज्ञा प्राप्नोति सि
द्धान्त्याह कर्मसंज्ञा बाधिका भविष्यतीति ईप्सितमात्रसावकाशापादानसंज्ञा परत्वादीप्सिततमस्य कर्मसंज्ञया बाध्यत इति भावः करणाकाङ्क्षासत्त्वे तेनाप्नोतेः क
रणाकाङ्क्षामानाभावादिति यथा सोमेन यजेतेत्यत्र भावनायाः करणाकाङ्क्षायामुपस्थितत्वात्फलांशस्य करणत्वेनान्वयो भवति तथा प्रकृतेऽपि कारकाधिकारात्कर्तृग्रह

णस्यसूत्रे सत्वाच्च कर्तृकारककृतिव्यापारस्यैव तथान्वय इति प्रकृतधात्वर्थप्रधानीभूतव्यापारलाभ इति भावः ईप्सितपदेनेति ननु सूत्रस्थकर्तृपदेनेति पूर्वोक्तरीत्या वक्त॥
व्य ईप्सितपदेनेति पूर्वविरुद्धमिति चेन्न यथा वारणार्थानामीप्सित इति सूत्रे कर्तृपदाभावेपि कर्मणि क्तप्रत्ययस्येप्सित इत्यत्र सत्वात्कर्मणः कर्तृव्यापारजन्यफलाश्रयत्व॥
ज्ञानसत्वसवतदुपपत्तिरित्यध्याहारेण कर्तुर्लाभस्तथा प्रकृतसूत्रेपीप्सितपदेनैव विवक्षितार्थस्य लाभे कर्तृग्रहणं स्पष्टार्थमिति ध्वननायेत्थमभिधानात् ननु वारणेति
सूत्रे वारणेत्यस्य विशेषत उपादानात्तदर्थभूतो यः प्रधानीभूतो व्यापारस्तत्प्रयोज्यफलाश्रयस्यैव लाभाद्यवानामेवेप्सितपदेन ग्रहणमिति तेषामेवापादानसंज्ञा नत्वाक्षिप्त
कर्तृपदार्थसामान्यस्य यो व्यापारस्तत्प्रयोज्यफलस्य अन्यथोत्तरदेशनिष्ठसंयोगानुकूलव्यापारवतो गवादेर्यथा यवेभ्यो गां वारयतीत्यादौ कर्तृत्वसत्वात्तन्निष्ठव्यापारज
न्यफलाश्रययवादीनामपादानत्वप्रसक्तिस्तथा वारणकर्तुरप्याक्षिप्तकर्तृपदार्थतया तद्वृत्तिव्यापारजन्यफलाश्रययवादीनामप्यपादानत्वं स्यात् भक्षणादिफलानुकू॥
लव्यापारवत्वेन यथा गवादीनां कर्तृत्वं तथा परावृत्त्यादिफलानुकूलव्यापारवत्वाद्वारयितुरपि परावर्तयतीत्यत्र कर्तृत्वदर्शनात् तथा प्रकृतसूत्रेन धात्वर्थविशेषापा॥

सर्वं चेप्सितपदेन कर्तृव्यापारप्रयोज्यफलाश्रय उच्यते ॥

दानमिति माषेष्वश्वं बध्नातीत्यादौ गलाधः संयोगानुकूलव्यापारवतोऽश्वस्यापि आक्षिप्तकर्तृपदार्थतया तन्निष्ठव्यापारजन्यफलाश्रयमाषाणामपि कर्मत्वापत्तेर्वारणा
यान्यानधीनस्य कर्तुरेव कर्तृपदेन ग्रहणार्थं कर्तृपदमस्त्विति चेन्न प्रकृतसूत्रे प्रकर्षार्थकतमप उपादानात् प्रकृतधात्वर्थप्रधानीभूतव्यापारवत एवाक्षिप्तकर्तृपदे॥
न लाभसम्भवात् एवञ्च माषेष्वश्वं बध्नातीत्यत्र प्रकृतधातुर्बन्धधातुस्तदर्थो देशान्तरसंचारविरोधिशृङ्खलादिसंयोगानुकूलव्यापारस्तदाश्रयश्चैत्रादेराक्षिप्तकर्तृपदा॥
र्थत्वमिति कर्तृव्यापारप्रयोज्यफलाश्रय इति अत्र प्रयोज्यत्वनिवेशस्य फलं तु न साक्षात्प्रधानीभूतव्यापारजन्यफलस्यैव ग्रहणं किन्तु तज्जन्यजन्यस्यापि ग्रहणमिति सू॥
चनाय तेन यत्र माषभक्षणेन तुष्टिर्जायतामितीच्छया माषक्षेत्रे स्ववाम्वस्य बन्धनं तत्रापि माषेष्वश्वं बध्नातीति प्रयोगो दृश्यते अत्र प्रकृतधातुर्बन्धधातुस्तदर्थव्याप॥
रप्रयोज्यफलं गलाधःसंयोगोपि तदाश्रयत्वान्माषाणामपि कर्मत्वापत्तिरतः फलेपि प्रकृतधात्वर्थत्वं निवेशनीयमिति ध्वननमेव एवञ्च प्रकृतधात्वर्थव्यापार
प्रयोज्यप्रकृतधात्वर्थफलाश्रयस्यैवेप्सिततमपदेन ग्रहणमिति तदाश्रयस्यैव कर्मसंज्ञा भवति न चोक्तरीत्या फले प्रकृतत्वनिवेशनस्य प्रयोज्यनिवेशो एवं चास्॥

र्थेक्यं यदि तदा मन्मते धात्वर्थजन्यत्वमेव निवेश्यताम् फले प्रकृतत्वं त्यज्यतामिति वाच्यम् भाष्यपठितदुहादिभिन्नानां द्विकर्मत्वस्यानुपपत्तेः व्यापारद्वयार्थकत्वेनैवं तेषा
न्तस्योपपादनीयत्वात् तत्र यद्दुहिपच्योर्बहुलं सकर्मकयोरिति सृजियुज्योः श्यंस्त्वित्यस्योपपत्तिरिति तत्र दृष्टान्तमाह यथा तण्डुलस्य पचतीति अत्र प्रकृतो धातुः पचिरिति त
दर्थः पूर्वकालस्थितरूपादिनिवृत्तिपूर्वकरूपाद्यन्तरोत्पत्तिरूपफलानुकूलव्यापार इति प्रधानव्यापारप्रयोज्यप्रकृतधात्वर्थतादृशरूपाद्यन्तराश्रयत्वात्तण्डुलानाङ्कर्मत्वात्त
ण्डुलपदञ्च तण्डुलावयवलाक्षणिकम् घटस्य पचतीत्यादौ तु पिठरपाकवादिमते घटपदं घटपरमेव पीलुपाकवादिमते तु घटावयवलाक्षणिकम् भूतानि कालः प
चतीत्यादौ वैतत्स्यानिष्पत्त्यनुकूलव्यापारः पचधात्वर्थ इति यथायथमूहनीयम् नन्वेवन्तण्डुलपदार्थेकर्मत्वसिद्धावपि लोकस्य पचतीत्यादौ लोकादेर्न तादृशफलाश्रयत्व
मिति कथन्तेषाङ्कर्मत्वसिद्धिः न च लोकपदार्थाभेदेन फलवत्त्वसत्त्वात्स्यादेव कर्मत्वमिति वाच्यम् फलतावच्छेदकसम्बन्धेन फलाश्रयस्यैव कर्मत्वात् अन्यथा पर्वत
स्यापि कालिकसम्बन्धेन वह्निक्रियाश्रयत्वात्पर्वतस्य पचतीत्याद्यापत्तेः फलतावच्छेदकसम्बन्धश्च प्रकृते समवाय एवातआह फलस्यापीति स्वज्ञानस्य क्रियोत्पत्तिप्रयो

यथा तण्डुलं पचतीति फलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वात्कर्मत्वम् अत एव तत्समानाधिकरणे शोभनं पचतीत्यादौ कर्मत्वसिद्धिः वा
क्यभित्येति योगविभागेनेत्यर्थः संज्ञा विधीयत इति ॥ ॥ जकत्वात्फलस्य कारकत्वं बोध्यम् व्यपदेशिवद्भावेनेति अत्र मानन्तु ओजः सहोम्भसा वर्तत इत्यतो

वर्तत इति प्रकृतेनानुप्रत्यनुपूर्वमीपलोमकूलमित्यनेन द्वितीयान्तेभ्यः प्रत्ययविधानमेव अत एव प्रतीपं वर्तते प्रातीपिकमिति व्याख्यानं सङ्गच्छते अत एव फलस्यापि व्य
पदेशिवद्भावेन फलाश्रयत्वात्कर्मत्वस्य स्वीकारादेव एतेन क्रियाविशेषणानां कर्मत्वमिति वचनमुक्तयुक्तिमूलकमेव न त्वपूर्वमिति बोध्यम् एतच्च न सर्वदा किन्तु विवक्षाधी
नमन्यथा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र ज्योतिष्टोमपदात्तृतीयानापत्तिः स्यात् मम तु धात्वर्थफलस्य व्यपदेशिवद्भावेन फलाश्रयत्वविवक्षायां ज्ञानदा कर्मत्वं यदा तु भाव
नाम्प्रति भावनाभाव्यनिर्वर्तकत्वरूपपारिभाषिककरणत्वविवक्षा तदा करणत्वस्य सत्त्वेनाभेदेन तदन्वय्यर्थवाचकात्तृतीया भवति अत एव भाष्यकृता क्रियाविशेषणानां
कर्मत्वमिति वचनमपठितम् अपूर्ववचनसत्त्वे तु तेन बाधस्य प्राप्तेस्तृतीयाया अनुपपत्तिः स्यात् ननु वाक्यभेदेन संज्ञाद्वयविधानेऽपि संज्ञाद्वयसमावेशः कथमत आह योगवि
भागेनेति एतेन यदि योगविभागो न स्यात्तदा द्वितीयवाक्ये कारकस्येत्यस्यालाभः स्यान्न चैकयोगेऽनुवृत्तिर्भवतीति न्यायादिति ध्वनितम् कारक इति सप्तमी तु प्रथमार्थे इत्याशयः

तदुक्तम् कारकइत्यस्यकारकसंज्ञाविधायकत्वमुक्तम् एवमपि योगविभागेनसंज्ञाद्वयविधानेपि प्रथमवाक्ये ध्रुवमित्यस्योपादानंसज्ञिनिर्देशार्थम् पर्यायापत्तिरिति।
कारकसंज्ञयेत्यादिः परोक्तसंज्ञाद्वयसमावेशप्रकारन्दूषयति नचेत्यादिना अयंहि तेषामभावः व्यत्ययेनकारकइति सप्तमीप्रथमार्थे एव तथाचकारकमित्येवैकंवाक्य
म् तत्रसंज्ञिलाभस्त्वाक्षेपादिति इयञ्च सञ्ज्ञान्वर्था करोतीतिकारकम् निर्वर्तयतीत्यर्थः निर्वर्तनञ्च साध्यत्वेन प्रतीयमानक्रियायाएवेतिक्रियावाचकपदाक्षेपोभवि।
ष्यति द्रव्यगुणयोः पदान्तरसमभिव्याहारेणवार्थिकसाध्यत्वस्यप्रतीतिर्नतसाभवति क्रियायास्तुशब्दतःसाध्यत्वस्यप्रतीतिरितिशेषः तथाचक्रियायाजनकमित्यस्या
क्षेपाल्लाभइति योगविभागेनेति ध्रुवमपायइतियोगविभागेनेत्यर्थः अनुवृत्त्याकारकइत्यस्यानुवृत्त्याआक्षेपेमहासंज्ञाबलादाक्षेपेनटश्रुतमित्यादाविति अत्रनटशब्दात्कार
कवाचकादपिसम्बन्धसामान्यविवक्षायांषष्ठीङ्कृत्वाषष्ठीसमासः कर्तरिषष्ठीतुननटशब्दात् नलोकेतिनिषेधात् श्रुतशब्दादिनटेनश्रावितमित्यर्थविवक्षयाऽन्तर्भावित

तदुक्तंभाष्ये किमिदंकारकइतिसंज्ञानिर्देशइति वाक्यभेदंदर्शयति अपायेत्यादिना नन्वेवमप्येकसंज्ञाधिकारात्पर्यायापत्तिः नचक्रियाजनकानांसं
ज्ञिनामाक्षेपेणतेषांयोगविभागानुवृत्तिभ्यांविनापिकारकसंज्ञाविधानेनपर्यायेसिद्धे योगविभागेनानुवृत्त्याप्रतिवाक्यंसंज्ञाविधानंसमावेशार्थमिति
वाच्यम् आक्षेपेक्रियाजनकमात्रस्यसंज्ञापत्तौ नटश्रुतमित्यादौस्वरवारणायकारकादत्तेत्यादौस्वरितपाठाद्याश्रयणेऽधिकगौरवादित्यतआह पुनः

ण्यर्थस्तुधातोः किञ्च क्तोचसंज्ञायामित्यनेनगीतरूपेकर्मणिविवक्षितेक्तमत्वान्नोनिष्ठाचद्व्यजनादित्यनेननिष्ठान्तस्यद्व्यच आकारभिन्नआदिरुदात्त ॥कारकइति॥
इत्यर्थकेनाद्युदात्तः स्वरवारणायेतिसमासस्यान्तोदात्तत्वबाधकगतिकारकेतिकृदुत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्ते प्राप्तेतन्बाधित्वाकारकादत्तश्रुतयोरेवाशि
षीत्यनेन आशिषिसंज्ञायान्दत्तश्रुतयोरन्तउदात्तइत्यर्थकेनान्तोदात्तत्वम्प्राप्तंतद्वारणायेत्यर्थः स्वरितपाठेति कारकशब्दस्यस्वरितस्यपाठआश्रयणीयइत्यर्थः न
चकारकशब्दे ञ्नित्यादिर्नित्यमितिसूत्रेणाकारस्यस्थानेउदात्तेतदेकवाक्यतापन्नशेषनिघातेनरेफाकारस्यानुदात्तत्वेउदात्तादनुदात्तस्येत्यनेनस्वरितत्वन्तस्यभवत्येवेतिकथंमे
तद्दोषावसरइतिवाच्यम् स्वरितेनाधिकारइतिसूत्रघटकंस्वरितपदन्नसमाहारः स्वरितसूत्रबोध्यपरम् किन्तुदोषविशेषपरम् तादृशदोषविशिष्टरकारघटित।
स्यकारकशब्दस्यपाठः कार्यइत्याशयात् आदिपदेनअधिकः कारोऽधिकारः सचकारकाधिकारीयापादानादिसंज्ञाप्रवृत्तिरूपोयत्रास्तितस्यग्रहणङ्कार्यमित्येवंस्

पक्षस्यान्यत्राश्रितस्यपरिग्रहः कारकत्वन्तुनटशब्दार्थे ऽस्त्येव आख्यातोपयोगइतिसूत्रेउपयोगग्रहणप्रत्युदाहरणपरत्वेनास्योपन्यासस्येदृशस्थलेकरणात् तत्र हि उपयोगेकिम् नटस्यशृणोतीत्युक्तम् ननुकारकशब्दानुवृत्तिर्गृहस्यद्वाराद्वागतइत्यत्रगृहस्यापादानत्ववारणायचरितार्था किञ्चपुनः कारकेतिमूलात्तत्रैवपुनरनुवर्तमानस्यावृत्तिरित्यर्थः प्रतीयतेसत्यायुक्तः आवृत्तेर्व्यर्थत्वाद्दतआह विभक्तेष्वपादानेति एतेनतस्यमूलस्यविभक्तेषुपश्चादुच्चारितसूत्रेष्वित्यर्थइतिसूचितम् तदनुवादेनेति पूर्वसूत्रवदस्यापिकारकसंज्ञानिष्ठविधेयताशालिशाब्दबोधस्यजनकत्वेनेत्यर्थः अपायेध्रुवङ्कारकंसदपादानंस्यादित्येवंवचनकल्पनयेतितात्पर्यम् तत्र कारकसंज्ञायाविहितायास्तस्वपुनर्विधानेनतस्याअनुवादः सम्पद्यते वनोरचेतिसूत्रेण ङीब्रयोर्विधानेपिङीबनुवादेनेतिव्यवहारवत् केचित्तुपूर्वसूत्रविहितसंज्ञाविशिष्टस्योद्देश्यत्वकल्पनेनतदनुवादेनेत्युक्तमिति तन्न एकसंज्ञाधिकारबाधापत्त्यापर्यायत्वापत्तेः एवञ्चप्रकृत्यापवादविषयमितिन्यायेनोद्देश्यतावच्छेदककारकसंज्ञावैशिष्ट्यमपवादतत्तत्संज्ञाविधानकालेप्रसिद्धमितिशङ्कायाम्नवकाशोपिनचैवंसतियोगविभागोनकार्यः प्रथमार्थेसत्तम्यन्तस्यकारकइत्यस्योत्तरसूत्रेष्वनुवृ

॥ ॥ विभक्तेष्वपादानमित्यादिषुतदनुवृत्त्यातदनुवादेनविशेषसंज्ञाविधानादित्यर्थः

तिङ्कृत्वाऽपायेध्रुवङ्कारकंसदपादानमितिव्याख्यानङ्कार्यमिति समावेशोभविष्यतीतिवाच्यम् विधेयभेदेसतिवाक्यभेदस्यसर्वतन्त्रप्रसिद्धत्वेनफलतोयोगविभागएवपर्यवसानमितीदं योगविभागस्यकथनमित्याशयात् उत्तरसूत्रेकारकशब्दानुवृत्तिसामर्थ्यात्समावेशइतितुनयुक्तम् ब्राह्मणस्यपुत्रम्पन्थानम्पृच्छतीत्यादौक्रियान्वयिनाम्ब्राह्मणादीनामकथितञ्चेत्यनेनकर्मसंज्ञावारकत्वेनकारकइतिशब्दानुवृत्तेः सफलत्वात् अतएव सर्वथाऽपादानत्वादीनांयत्राप्रसक्तिस्तत्रकारकसंज्ञायाआख्यातोपयोगेइतिसूत्रेउपयोगपदेऽपादानत्वसत्त्वादकथितञ्चेत्यनेनकर्मत्वम्प्राप्नोतीत्याशङ्क्य दुह्यादिपरिगणनेनभाष्येसमाहितम् उपयोगाभावादपादानत्वमपिन नाट्यमुदाहरणन्नटस्यशृणोतीति यत्तुकैयटेनकारकसंज्ञायांविभक्तसूत्रेणसत्यस्यप्रयोजनन्नटश्रुतमित्युक्तन्नटश्रुतिर्नटश्रवणमित्यनयोरुपलक्षणमत्रहिकारकसंज्ञायाञ्चसत्ते समासस्यान्तोदात्तत्वसतितृतीयान्तानिकारकोपपदात्कृदित्युत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्तत्वमिति विशेषस्यस्पष्टत्वात् उभयोरपितिस्वरा लित्स्वराभ्यामाद्युदात्तत्वात् नटश्रुतमित्येवतुनयुक्तइ कारकसंज्ञायाःसत्वेऽसत्वेवात्रविशेषस्याभावात्तथाहितस्याः सत्वेगतिकारकोपपदादित्येतद्बाधकथाथादिस्वरेणान्तो

दात्तत्वस्य सत्त्वात्तस्यात्रासत्वेतु समासस्येत्यन्तोदात्तत्वबाधकयोः कृदुत्तरपदप्रकृतिस्वरथाथादिस्वरयोरप्राप्तावन्तोदात्तत्वस्यैव प्राप्तेः कैयटेनतु श्रुतेतिसमुदायस्य संज्ञात्व।
माशीर्विषयत्वबाम्युपेत्य कारकाद्दत्तश्रुतयोरेवाशिषीत्यन्तोदात्तत्वमपादानादिसंज्ञायाविषयेसत्वजायत इतिचस्वीकृतोक्रम् तत्रसंज्ञायामनाश्चितेति सूत्रात्संज्ञायामित्यनु
वृत्तेः वस्तुतस्तुमादृशसंज्ञायाअप्रसिद्धतयात्तस्योदाहरणस्योपलक्षणत्वमेवयुक्तमितिध्येयम् ॥ ॥ ग्रामेवासइति ग्रामवासेतिसप्तम्याअलुक्कृदुत्तरपदप्रकृतिस्वरश्चेति
अस्य समासस्येत्यन्तोदात्तत्वबाधकतत्पुरुषेतुल्यार्थेति पूर्वपदप्रकृतिस्वरबाधकस्यगतिकारकोपपदात्कृदिति सूत्रविहितकृदुत्तरपदप्रकृतिस्वरस्यप्राप्त्यावासशब्दस्यघ
अन्तत्वेनमध्योदात्तत्वमितिनार्थः गतिकारकेत्येतद्बाधकस्यथाथेतिसूत्रस्यप्राप्तेः किन्तु कृदुत्तरपदप्रकृतिस्वरप्रवृत्तेर्निदानस्यकारकत्वस्यसत्वेनथाथेत्यनेनान्तोदात्तत्वमि
त्यर्थः तत्रापिकारकादित्यनुवृत्तेः नचभीत्रार्थानाम्भयहेतुरित्यादावुक्तरीत्यायोगविभागासम्भवेनकथंसंज्ञाद्वयसमावेशइतिवाच्यम् तेषुकारकशब्दस्यावृत्त्याऽर्थाधिकारा

समावेशफलंतुग्रामेवासइत्यादावधिकरणत्वात्सप्तमीकारकत्वात्कृदुत्तरपदप्रकृतिस्वरश्चेतिबोध्यम् करोतीति क्रियाञ्जनयतीत्यर्थः तज्जनकत्वञ्चप्र
त्यासत्यातत्रैवान्वेतिक्रियान्वयिनइति तदन्वयप्रयोजकतज्जनकत्वाभाववतइत्यर्थः ब्राह्मणस्यपुत्रमिति अत्राकथितञ्चेत्यनेनपृच्छिकर्मपुत्र
निमित्तस्यकर्मत्वापत्तिः क्रियाजनकत्वन्तु नतस्य पुत्रेणान्यथासिद्धेः॥ वाक्यभेदेनसंज्ञाद्वयसमावेशइत्याशयात् क्रियामिति स्वभावतःसाध्यत्वेनप्रतीयमा

नाम्प्रधानीभूतव्यापारात्मकक्रियामित्यर्थः सचञ्चकारकस्यप्रत्यासत्यातत्रैवान्वयइत्याह तज्जनकञ्चेति ननुक्रियान्वयिनइतिमूलग्रन्थात्क्रियान्वयित्वङ्कारकत्वमिति प्र
तीयतेइतिमूलविरोधइत्यतआह तदन्वयेति यदिक्रियान्वयित्वङ्कारकत्वंस्यात्तदाकारकाणाङ्क्रियान्वयित्वमितिवाक्यस्योद्देश्यतावच्छेदकविधेययोरेकत्वेनघटोघटइति
वाक्यस्येवाबोधकत्वापत्तिरितिक्रियाजनकत्वङ्कारकत्वमित्येवयुक्तमितिभावः ब्राह्मणस्यपुत्रमित्यादिवाक्येऽतिप्रसङ्गमुपपादयति अत्रेत्यादिना निमित्तस्येति अनेनदुहादिप
रिगणनलभ्यस्योपयोगनिमित्तमित्यस्यसाचन्द्रनितम् अन्यथासिद्धेरिति अन्यथासिद्धस्यनकारणत्वम् अन्यथासिद्धिशून्यस्यनियतापूर्ववर्तिताकारणत्वमवेदित्यभियुक्तोक्तेः
अत्रान्यथासिद्धिरन्यम्प्रतिपूर्ववृत्तित्वमवइतिनपुत्रजनकत्वघटितधर्मेणपूर्ववर्तित्वस्याकल्पनात् किन्तुजनकम्प्रतीति तुरीया अवश्यक्लृप्तेतिपञ्चमीवा ब्राह्मणस्यपुत्रम्पन्थानं।
पृच्छतीत्यत्रप्रत्ययपदार्थः स्वर्गतिजिज्ञासाज्ञानानुकूलशब्दोच्चारणरूपव्यापारात्मिकाक्रिया तद्विशेषणज्ञानाश्रयत्वात्कारकत्वम्पुत्रस्यपश्यतुजिज्ञासाविषयत्वात्पृच्छिकर्म

त्वन्तदाश्रयेण स्वविषयकज्ञानाश्रयत्वम्ब्राह्मणस्येति स्वसमवेतज्ञानविषयत्वसम्बन्धेन कर्मयुक्तत्वम् एतेन प्रश्नक्रियाजनकत्वेन ब्राह्मणे कर्मत्वम्प्राप्नोतीति शङ्का निरस्ता॥ ॥ ॐ ॥ नन्वकथितञ्चेति सूत्रे ऽकथितशब्दोपादानेन यत्रापादानत्वादीनाम्प्रसक्तौ तदविवक्षा तत्र तस्य प्रवृत्तिरिति कथन्तस्य सूत्रस्य प्राप्तिरत आह अकथित ञ्चेत्यत्रेति न दप्राप्तौ अपादानत्वादीनामप्राप्तौ अत एवाकथितशब्दस्यासङ्कीर्तितपरता वक्ष्यमाणासाधुसङ्गच्छते सर्वथा तदविवक्षायामपि तस्य सूत्रस्य प्रवृत्तौ प्रमाणन्तु नटस्य शृणोतीत्यादौ सर्वथा तदविवक्षाविषये ऽस्य सूत्रस्य प्राप्तिमाशङ्क्य दुह्यादिपरिगणनेन समाधानपरम्भाष्यम् अत एव ब्राह्मणस्योक्तकारकत्वाभावादेव अस्य ब्राह्मणस्य पुत्रस्य तु जिज्ञासाविषयार्थज्ञानानुकूलव्यापारस्य पृच्छार्थतया तद्घटकज्ञानजनकत्वेन कारकत्वमस्त्येव एवञ्च पुत्रपदार्थस्याश्रयतया ज्ञाने ऽन्वयः स्वजनकत्वेन क्रियाजनकत्वेन एतान् कर्त्रादिरूपान् द्वितीयव्याख्यायाम्भाष्यसम्मतिमाह तदुक्तमिति सप्तम्यन्तार्थान्वय्याकाङ्क्षाशान्तये आह विषय इति अत्र विषयता नज्ञानादिसम्बन्धरूपा क्रिया

अकथितञ्चेत्येतत् प्राप्तापादानत्वाद्यविवक्षायां सर्वथा तदप्राप्तौ च प्रवर्तते अत एवास्य न क्रियान्वय इत्याह नन्विति करोतीति स्वजनकत्वेनैतान्व्यपदेशान् करोतीत्यर्थः तदुक्तम्भाष्ये यावत् ब्रूयात् क्रियायामिति तावत्कारक इति क्रियायां विषय इत्यर्थः विषयत्वञ्च जनकत्वेनेति बोध्यम् क्रियान्वयिनामिति क्रियान्वययोग्यतावच्छेदकक्रियाजनकत्ववतामित्यर्थः गृह्यत इति अत एव नटस्य श्रुतमित्यादौ न दोषः क्रियान्वयीत्यर्थ इति तदन्वययोग्यतावच्छेदकक्रियाजनकत्ववदित्यर्थः यथाश्रुतन्तु न युक्तम् कारकाणां भावनान्वय इति वाक्यस्य घटत्ववतां घटत्ववत्त्वेत्यनतुल्यतापत्तेः अत एव भाष्ये क्रियाजनकत्वमेव कारकत्वमुक्तम् तज्जनकत्वञ्चैषां तत्क्रियोपयोगिक्रियाश्रयत्वेनेति चोक्तम् ॥ ॐ यावतादृशविषयत्वाप्रसिद्धेः किन्तु जनकतारूपैव क्रियायामिति सप्तम्यर्थो निरूपितत्वम् न स्वजनकपदार्थैकदेशजनकतायामन्वयः ध्रुवमित्यादिसूत्राणामपाये यद् ध्रुवं क्रियाजनकमिति रीत्यार्थः कार्यः पूर्वकल्पवदत्रपक्षेन वाक्यभेदादिकल्पनेति लाघवमत्र पक्षे पूर्वोक्ताभिप्रायेण व्याचष्टे क्रियान्वययोग्यतेत्यादि अत एव स्वरितत्वप्रतिज्ञया कर्त्रादिषट्कस्य ग्रहणादेव नटश्रुतमित्यादावितिगीतद्वारा नटस्य क्रियाजनकत्वेपि उक्तषट्कभिन्नत्वेनातिप्रसङ्गो नेति भावः क्रियान्वयीति यथाश्रुत मूलन्दूषयति तदन्वयेत्यादिना तुल्यतापत्तेरिति उद्देश्यतावच्छेदकविधेयतयोरैक्येनाबोधकत्वापत्तेरित्यर्थः अत एव तस्य वाक्यस्यानर्थक्यापत्तेरेव तज्जनकत्वञ्च क्रियाजनकत्वञ्च अत एव कारक इति सूत्रभाष्ये करोति क्रियान्निर्वर्तयतीति।

व्युत्पत्तिप्रदर्शनेङ्क्तम् तत्क्रियोपयोगीति धात्वर्थक्रियोपयोगीत्यर्थः तदुपयोगित्वं क्रियानुकूलत्वावान्तरक्रियाबोध्या अतएव क्रियाजनकत्वरूपस्य कारकत्वस्य ग्रहणादेव क्रियान्वयः क्रियायामेवान्वयः तत्रप्रमाणम्परस्पराकाङ्क्षारूपन्दर्शयति क्रियाजनकमित्यादिना ननु सन्निहितेन सम्प्रदानेन महान्दे हीति शब्दोच्चारणादिरूपव्यापारेण दातुः प्रवृत्तिजन्यतद्वृत्तिस्यास्तु तज्जनकत्वमसन्निहितस्य तु तत्कथमत आह अविद्यमानस्येति स्वज्ञानद्वारा दातृसमवेतं यत्क्रियाहेतुभूतप्रवृत्तिपूर्वकालिकम्प्रदीयमिदन्द्रव्यन्तत्त्वाचवङ्क वत्यादीन्छाजनकज्ञानन्तद्द्वारा सर्वमेव क्रियाविशेषणानां शोभनादीनामपि बोध्यम् नच घटङ्करोतीत्यादौ घटादेः क्रियाजनकत्वन्नोपपद्यते तेषाङ्क्रियोत्तरकालिकत्वादिति वाच्यम् तद्विषयकस्मृतेः क्रियापूर्वकालिकत्वेन विषयेपि तत्क्रियापूर्वकालिकत्वव्यवहारात् सत्कार्यवादसिद्धान्ताद्वा नच्चैवमपि सर्वेषाङ्कारकाणां स्वस्वक्रियाजनने स्वातन्त्र्यात्कर्मणः कर्तृसंज्ञापि प्राप्नोतीति वाच्यम् स्वतन्त्रः कर्तेति सूत्रे कारक इत्यस्य सम्बन्धेन स्वातन्त्र्ये उक्तरूपात्मके लब्धे पुनः स्वतन्त्रपदोपादानं यस्य स्वातन्त्र्यमेव न तु पारतन्त्र्यमपि तद्व्यावृत्त्यर्थमित्याशयात् अत्रेदम्बोध्यम् यस्य यस्य ज्ञानं क्रियापूर्वकालिकन्तेषां सर्वेषाङ्कारकत्वमि ति

**अतएवैषां क्रियान्वयः क्रियाजनकमिति ज्ञाते कासां क्रियेत्याकांक्षोदये न क्रियायाजनकाकांक्षया च तत्रैवान्वयस्यौचित्यात् अविद्यमा। नस्य सम्प्रदानस्यापि स्वज्ञानद्वारा क्रियाजनकत्वमित्यलम् ॥**

ननु ब्राह्मणस्य पुत्रम्पन्थानम्पृच्छतीत्यत्र पुत्रज्ञानवत्कदाचिद्ब्राह्मणज्ञानस्यापि क्रियापूर्वकालिकत्वसम्भवादतिव्याप्तेः किन्तु क्रियान्वयित्वविवक्षापि प्रयोजिका क्रिया च धात्वर्थप्रधानीभूतव्यापाररूपैव कर्मणस्तु क्रियाजनकत्वम्फलद्वारा अधिकरणस्य तु कर्तृकर्मद्वारा यदि साक्षाज्जनकत्वमात्रं विवक्षितं स्यात्तदा ग्रामङ्गच्छति ग्रामे गच्छतीति प्रयोगद्वैविध्यासंगतिः स्यात् फलस्य क्रियान्वयस्वीकारस्तु प्राचामनुरोधेन धात्वर्थप्रधानव्यापारान्वयित्वञ्च न विशेषणतयैव किन्तु क्वचिद्विशेष्यतयापि अलसवपाचकस्य स्थितिरित्यादौ स्थितिक्रियाम्प्रति विशेषणत्वेपि पाचकस्य पुरुषस्य ग्राममित्यादौ कर्तृकारके ण्वुल्प्रत्ययोपपत्तिः एवञ्च कारकाधिकारपठितसंज्ञावत्त्वं यस्य तस्य प्रधानीभूतव्यापारान्वयित्वात्कारकपदेन ग्रहणम् ननु यथा कथञ्चित्क्रियान्वयिनामिति यत्तु तदधिकारपठितापादानादिसंज्ञकत्वमेव कारकत्वम् अन्यथा सम्बोधनान्तङ्कुतो याः कारकस्य यमो वर्तिरित्यत्र सम्बोधनान्तस्य एधगुपादानवैयर्थ्यापत्तिः क्त्वातुमुनर्थकप्रत्ययानां नाङ्कारकत्वापत्तिश्च एवम्प्रथमबाधन्तेपि नचेष्टापत्तिः द्विध्यान कर्ता र इत्यर्थे ध्यायतेः क्विपि द्विधियो द्विधि

यद्वत्यादौ ब्राह्मण वद्धीरित्यादौ च कारक पूर्वत्वेने रनेका च द्वितीयणापत्तिरिति केचित् तन्न कारकशब्दस्य करोतीति कारकमिति व्युत्पत्ते र्योग्यस्यैवदर्शनात् प्रथमान्तस्य कारकार्थत्वमिष्टमेव ब्राह्मणत्वमिष्ठन्यायेन संबोधनान्तस्य तु गतत्वात् कर्त्ता धातोः क्रियाभ्याहृति गणनार्थं त्वन्यत्तु क्रियाजनकत्वमेव मे वक्तव्यं तस्यापीतिन्न यणापत्ति रित्यशयेनाह अत्वमिति ननु पञ्चत्रक मस्प्रातिपदिकार्थ इति पक्षे प्रातिपदिकेन कर्मादावुक्तेपि यथा द्वितीयादि भवति तथा क्रियेतेकट इत्यादावपि स्यात् द्विवद्धं सुबद्धं भवतीति न्यायेन द्वौ ब्राह्मणावित्यादौ सम्भवस्यापि दृष्टत्वात् विभक्तिसमभिव्याहाराभावे कारक प्रतीत्यभावेन तत्र विभक्तौ नान्तरदर्थद्योतकत्वम् क्वचित्तु सत्यपि सम्भव इति न्यायेन द्योतक विषयेपि वाध्यवाधकभावः यथाश्मम् यातुइ श्यासीपुटः प्रापञ्च वाधइत्यत आह तैरेवेति तिङादिभिरेवेत्यर्थः तस्याः शक्तेः कर्मादिशक्तेः उक्तौ वाचकत्वेन द्योतकत्वेन वाङ्गूतलयावोधने उद्धृत कर्मणि वर्त्तमानात्प्रातिपदिकाद्द्वितीये ति रीत्या कर्मणि द्वितीयेत्यादि सूत्राणामर्थादिति भावः नन्वेवमनभिहित इति सूत्रन्तर्हि व्यर्थमेवस्यादत आह अनभिहितसू

तिङादिभिरिति तैरेव तस्याश्शक्तेरुक्तौ कटादि प्रातिपदिकस्योद्धृतत्वच्छक्ता वृत्तेः कर्मणि वर्त्तमानात्प्रातिपदिकादित्यर्थेपि तदनापत्तिरितिभावः अनभिहितसूत्रमपि त्वभिधानविषये प्रातिपदिकस्योद्धृतत्वच्छक्तौ वृत्त्यभावइत्येवतात्पर्यग्राहकमिति बोध्यम् सावकाशेति मात्रग्रहणेन कर्माधिक्ये प्रथमायाश्च प्रवृत्तेरितिभावः प्रतीयमानामिति अतएव तिङ समानाधिकरणे प्रथमेति वार्त्तिकन्यासस्संगच्छते अनावश्यकत्वादिति तदभिमानादि
: स्यर्थः संख्येति द्वोकयोः कर्मणि स्वौजसित्यादेरेकवाक्यतया ऽन्वये कर्मणीति सप्तम्या द्वोकयोरिति ॥ अत्रमपीति अभिधानविषये तिङादिभिर्यत्र बोधनन्त

द्विषये ननु कटङ्करोतीत्यादावपि प्रातिपदिकार्थ सङ्ख्यावात्प्रथमाप्राप्नोतीति कथं सावकाशत्वमत आह मात्रग्रहणेनेति संबोधनेचेत्यस्योपलक्षणमेतत् अतएव प्रतीयमान क्रियासत्वादेव अस्तिर्भवन्तीपरो ऽप्रयुज्यमानोप्यस्तीति न्यायस्याभियुक्तानुभवसिद्धत्वादिति भावः नन्वनावश्यकत्वकथनमसङ्गतमुक्तन्यायस्य जागरूकत्वादत आह तदभिमानेति सङ्ख्याया विभक्त्यर्थत्वमुपपादयति द्वोकयोरित्यादिना नच संख्यायानित्यपरतन्त्रतया सकत्वविशिष्टकर्मणीत्येवम्परतयैवार्थ उचित इति वाच्यम् कारकस्यप्रातिपदिकार्थत्वेन तत्र विभक्तिविधानानुपयोगात्सङ्ख्याया विशेष्यत्वकल्पनया तत्र विधानं युक्तमित्याशयात् यत्तु द्वोकयोरिति षष्ठीति तन्न वहुष्वित्यादिभिर्वैरूप्यापत्तेः

कथङ्कारादयादि: कार्तव्य: कर्त्रस्येत्रेणेति शेषपूरणेनोभयत्रप्राप्त्युद्भावनमेतत्॥ॐ॥ ननु कर्मण उक्तत्वान्न कर्मणि षष्ठीप्राप्तिरिति चेच्छृणु अनभिहिताधिकाराभावे कर्तरि कर्मणि यदेकत्वं तत्रङस्ङ्‌इतिरीत्यात स्यादिसूत्रस्यार्थात् सर्वत्रैवेतिनच्च सकर्मक धातुप्रकृतिक कृत्प्रयोगे भवदुक्तरीत्या यथेष्टमुभयप्राप्तिसत्त्वं न शाप्यकर्मक प्रकृतिक कृत्प्रयोगे चैत्रस्य शायिका मैत्रस्यासिके त्यादावुभयो: सत्वस्यैवाभावेन सर्वत्रैवेत्यसङ्गतमिति वाच्यम् वक्ष्यमाणरीत्या देशकालादिकर्मसत्त्वस्य तत्रापि सम्भवात् नच यत्र स्वार्थव्यापारकरणके शेधातोर्न वृत्तिस्तत्रैवाकर्मकधातुप्रयोगे नोभयप्राप्तिरिति वाच्यम् देश: कालो भावो गन्तव्यो ऽध्वा चेति वार्तिकात्सर्वत्र तथा कल्पनात् वैयर्थ्यापत्त्येति भवदुक्तरीत्याऽव च्छेदकावच्छेदेनोभयप्राप्तिसम्भवेन कर्तरि षष्ठीनिषेधस्य प्राप्त्याकर्तृग्रहणस्याव्यावर्त्यकतयोभयप्राप्तौ कर्मणीति सूत्रस्यानवैयर्थ्यापत्तिरित्यर्थ: भाष्यप्रामाण्येनेति इत्थं हि तत्र भाष्यम् आत्ममानइति किमर्थम् परमानेमाभूत् कृत्तेऽपि तत्र प्राप्नोति कुतस्तत् आत्मनइति कर्तरि षष्ठीमान् इत्यकारो भावे स्वकर्मकमानवत्परकर्मकमानोऽपि स्वकर्तृक एव भवति नैषदोष: आत्मनइति कर्मणि षष्ठी कर्तृकर्मणोरिति ननु च कर्तर्यपि तेनैव विधीयते तत्र कुत एतत् कर्म

अधिकाराभावे सर्वत्रैवोभयप्राप्तिविषयसत्त्वात्कर्मण्येव षष्ठ्यापत्तौ कर्तृकर्मणोरिति सूत्रस्य कर्तृग्रहणस्योभयप्राप्ताविति सूत्रस्य च वैयर्थ्यापत्त्या



ने स्वस्थेति सूत्रस्य भाष्यप्रामाण्येन॥ ॐ कर्मणि भविष्यतीति न पुन: कर्तरि सवन्नर्हि आत्मग्रहणसामर्थ्यात्कर्मणि विज्ञास्यते अत्र कैयट: आत्मशब्द: प्रत्यगात्मन: स्वरूपव्यावृत्तिङ्करोति तत्र पदि कर्तरि षष्ठी स्यादात्मग्रहणमनर्थकं स्यात् कर्तृसम्बन्धाव्यभिचारान्मननक्रियाया इति अत्र भाष्ये आत्मग्रहणसामर्थ्यात्कर्मणि षष्ठीप्रतिपादनात्तदुभयप्राप्ताविति कर्तरि निषेधेन तस्मादत्रोभयो: प्रयोगस्तत्रोभयो: प्राप्तिरिति सामर्थ्यपर्यन्तकथनेन कल्प्यते स्यादेतत् सङ्ख्याविभक्त्यर्थ इति नोचितम् कर्मणि द्वितीयेत्यादिसूत्रेषु कर्मणीत्यादिसप्तम्या: श्रुतानुमितयोरिति न्यायेन श्रुतद्वितीयादिभिरेव सम्बन्धस्य युक्तत्वात् सकत्वादिकं तु शास्त्रान्तरैकवाक्यतया लभ्यते किञ्च सङ्ख्याया: सङ्ख्येयपरतन्त्रतया विशेषणत्वस्यैव घटोऽस्ति पटोऽस्तीत्यादौ दृष्टत्वेनैकत्वविशिष्टे कर्मणीत्येवार्थ उचित: किञ्च स्वौजसमौडिति सूत्रेण द्वितीयाया: कर्मणि सिद्धतया कर्मणि द्वितीयेति सूत्रं नियमार्थमिति भाष्यसिद्धान्त: अतएव सुपाङ्मादयोऽप्यर्था: सङ्ख्या चैव तत्प्यातिङाम् प्रसिद्धो नियमस्तत्रेति भाष्य उक्तम् स च नियमोऽर्थे राम: स्यात्प्रत्ययस्यैवेत्यन्यदेतत् यत्तद्देशकालादिकर्मण: सर्वत्रैवाकर्मधातुप्रयोगे कर्मकधातुयोगे देश: कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वार्तिकात्सम्भव

प्रागभिहितम् तन्न तादृशवार्त्तिकानुपलम्भात् भावकालाध्वगन्तव्याः कर्मसंज्ञाश्चकर्मणाम् देशश्चेति भाष्ये उक्तम् तन्नदिश इत्युपादानेन यदा धात्वर्थकरणकव्यापने ऽर्थे धातोर्वृत्तिस्तदा तेषाङ्कर्मत्वस्य प्रसिद्धत्वं ध्वनितम् यदा तु जननादिरूपार्थमात्रस्य धात्वर्थत्वविवक्षा न तदा न तेषाङ्कर्मत्वम् अत एव समांसमां विजायत इति सूत्रव्याख्यानावसरे समायांसमायां विजायत इति विग्रहप्रदर्शनम्भाष्ये संगच्छते तादृशवार्त्तिकसत्त्वे तन्न द्वितीयायास्तत्र साधुत्वस्य बोधनेन तदसङ्गतिः स्पष्टैव नच केचित्कालादिभिरकर्मका इति भाष्यस्य तदसङ्गतिरिति वाच्यम् धातुमात्रस्य स्वार्थकरणकव्यापने वृत्त्या केचिदपि कालादिकर्मसम्बन्धाभाववन्तो नेति तदर्थात् सर्वत्र कालादिकर्मणाम्प्रयोगत्वे सामानाधिकरण्येन सत्त्वमित्यत्र तत्तात्पर्यम् एवञ्च सङ्ख्याविभक्त्यर्थ इति पक्षो न युक्त इति अत एव वक्ष्यति कारकविभक्त्यर्थ इति पक्ष इत्यादि ननु यत्रोभयोः प्रयोगस्तत्रैव चेदुभयप्राप्तिस्तदा कृत्यानामिति विभक्तसूत्रस्य यदुदाहरणं भाष्योक्तं ग्रामं आकृष्टव्या शाखेति तस्य कथमुपपत्तिरत आह आकृष्टव्येति आश्रयपदाध्याहारस्य प्रयोजनन्तु यत्राश्रयं प्रतिपाद्यन्तत्र कर्त्ताऽसमर्थ आकर्षणक्रियायां दुराकर्षा च शाखा च रज्जुसाना दर्शनकर्त्रा आकृष्यत इत्यर्थस्य

चोभयोः प्रयोगस्त्वोभयप्राप्तेर्वाच्यतया प्रकृते नोभयप्राप्तिरित्याशयात् आकृष्टव्या ग्रामं शाखेत्यत्र कृत्यानामिति विभक्तसूत्रस्य भाष्योदाहरणे आश्रयपदकर्त्तृपदे अध्याहृत्योभयप्राप्तिर्निरूप्या इत्यादाविति आदिना भेत्तव्यो लाभोऽश्वः कङ्क्यैतत् कारकमिति सर्वत्र विशेषणतया भानादेकत्वे ॥

प्रतिपत्तिस्तदैव तत्प्रतिपत्तिरिति इत्थम्भाष्यकारमतेनोदाहरणं संयोज्य मुनित्रयमतेनाह आदिनेति अकर्त्तरि च कारके संज्ञायामिति सूत्रे संज्ञायामित्यस्य प्रायिकत्वाल्लाभ इत्यत्र कर्मणि घञ् भवन्निष्ठव्यापारजन्यलाभाश्रयो जिज्ञासाविषयोऽश्वः क इति ततः शाब्दबोधः अत्राश्वपदादनभिहिताधिकाराभावे षष्ठी स्यात्संख्यायाः कर्मनिष्ठाया अनभिधानादतः सूत्रमावश्यकमिति सुपाङ्कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङामिति भाष्योक्तरीत्या कर्मादीनां विभक्तिवाच्यत्वे यथा वाक्यनिष्पत्तिस्तथाह सङ्ख्याया इति विभक्तिद्योत्यसङ्ख्याया इत्यर्थः विशेषणतया भानादिति नच घटपटादिशब्दप्रकृतिकविभक्त्यन्तशब्दजन्यशाब्दबोधे यद्यपि सङ्ख्याप्रकारको जायते तथापि सङ्ख्यावाचकेभ्यो यत्र विभक्तिस्तत्र सर्वत्र न विभक्त्यर्थसङ्ख्यायाः प्रकारत्वानुभव इति वाच्यम् आदशतः सङ्ख्या :सङ्ख्येये इति सिद्धान्तात्तेभ्यो विभक्तौ संख्यायाः प्रकारतास्यैव यत्र तु ब्राह्मणानां विंशतिरिति सङ्ख्यानार्थकशब्दादेकवचनन्तत्रापि विभक्तिद्योत्यमेकत्वम्प्रकृत्यर्थे तादृशसमुदाये प्रकारतया भासत एवेत्याशयात्

ननुसङ्ख्येयार्थकशब्दाज्ञावप्रत्ययेसति तज्जन्यशाब्दबोधेनसङ्ख्यायाःप्रकारत्वम् नचतस्मादिभक्त्यावेकत्वंपश्येत्यादौविभक्त्यर्थैकत्वप्रकारतयाभासतएवेतिवाच्यम्
तत्रापिप्रत्ययार्थसङ्ख्यायाः प्रकारार्थसङ्ख्यातोऽनतिरेकात् एवन्द्वैकयोरित्यत्रापिनसङ्ख्यायाः प्रकारत्वम् नचादश्चातः सङ्ख्याःसङ्ख्येयइतिसङ्ख्यायाव्ययेतिसूत्रस्य
सिद्धान्तविरोधइतिवाच्यम् तेषांसङ्ख्येयार्थकत्वन्तद्धुप्रसिद्धंसङ्ख्यार्थकत्वन्तुक्वचिदेवेत्याशयात् एवञ्चसर्वत्रैवसङ्गतमितिचेन्न सर्वत्रेत्यस्य नेकप्रयोगेष्वित्यर्थः
त् नत्वेकत्वस्याधेयतया एकत्ववद्घटकर्मत्येव व्याख्यानमुचितमित्यतआह वृक्षेशाखेतीति तत्रयथाशाखा यावृक्षावयवत्वेनसमवायिकारणतयाशाखैववृक्षस्याधा
रस्तथापिस्वनिष्ठाधारतानिरूपिताधेयतासम्बन्धेनसावृक्षनिष्ठेति तादृशसम्बन्धावच्छिन्नाधारत्वंवृक्षस्यविवक्षितमितिवृक्षइतिसप्तमीतथात्रापीतिभावः एवमन्य
त्रापिबोध्यम् एवंविवक्षयाप्रसिद्धस्यलौकिकप्रयोगस्योपपत्तिः कार्यानतुसर्वत्रेतिनशुक्लेवर्णेघटइतिनप्रयोगः किन्तुघटस्यशुक्लइतिघटेशुक्लइतिवाभवति एवञ्च
अधिकरणसप्तम्यङ्गीकारेच प्रत्याख्यातमित्यत्रहेत्वाकाङ्क्षायामाह न्यायेनैवेति उक्तार्थानामप्रयोगइतिन्यायेनेत्यर्थः नचद्योतकवाचकयोर्द्योतकयोःसमुच्चयोर

पत्कर्मेत्यर्थः वृक्षेशाखेतिवदेकत्वेसप्तमीआधेयस्याधारत्वविवक्षया एवंचैकत्वविशिष्टेकर्मणिइत्यर्थइतिभावः प्रत्याख्यातमितिन्यायेनैवसि
द्धमितिन्यायात् इतिभावः अनेनपञ्चकप्रातिपदिकार्थइति॥ ७ ॥

एः द्वौत्राह्मणौ व्यतिलुनीतइत्यादौयथा उक्तार्थानामितितुतत्रनप्रवर्तते द्विर्वद्धंसुवद्धमितिन्यायात् यद्यपि क्वचित्समुच्चयोर्दृष्टइत्यत्रापितथास्यादिति वक्तुमशक्यमन्यथोक्तार्थाना
तथाहतःकटःक्रियतेकटइत्यादावपिस्यादिति अतभिहितइतिसूत्रङ्गतव्यमितिवाच्यम् यद्यपि क्वचित्समुच्चयोर्दृष्टइत्यत्रापितथास्यादिति वक्तुमशक्यमन्यथोक्तार्थाना
मितिन्यायस्यनिर्विषयत्वापत्तिरितितस्यानुरोधेनप्रकृतेतस्यन्यायस्याश्रयणमुक्तमित्याशयात् अतएवप्राप्तोदकोग्रामइत्यादौसमासेनकर्मादेरुक्तत्वात्साविभक्ति
नेभवति अत्रेदंबोध्यम् कर्मादीनांयोत्यत्वमेवयुक्तम् यथैकत्वादिसङ्ख्यायाः प्रकारतयाभानस्यानुभवसिद्धतयातेषान्द्योत्यत्वन्तथाहरिंभजतीत्यादिभ्यःकर्मीभूतह
रिकर्मकभजनमित्येवरीत्याशाब्दबोधस्यानुभवसिद्धत्वात् सुपांकर्मादयोप्यर्थाइत्यादिभाष्येऽर्थपदंद्योत्यतयातेषाम्बोध्यत्वेननिबोध्यम् अतएवकर्मणिद्वितीयेत्यादिशा
स्त्राणान्नियमार्थत्ववर्णनंसङ्गच्छते उक्तार्थानामिति न्यायसम्स्कारस्तुप्रातिपदिकार्थलिङ्गेति सूत्रव्याख्यानावसरेविभक्तेरुक्तार्थत्वादप्राप्तौ वचनमित्यनेनपरममूलएवकृ
तइति ननुमूलेसङ्ख्याविभक्त्यर्थइतिपक्षेसूत्रारम्भादित्यनेनसङ्ख्यातिरिक्तस्यतुकस्यप्रातिपदिकार्थइतिपक्षेसूत्रारम्भस्यावश्यकतालभ्यते तत्रदेवदत्तोवामेनाक्ष्णाय

लभ्यते तथाऽत्रापि कारकस्य विभक्त्यर्थत्वपक्षे सूत्रारम्भस्यानावश्यकता लभ्यत एवेति कारकं विभक्त्यर्थ इति पक्षे इति विशेषाभिधानमनर्थकमत आह अनेनेति कारकं वि
भक्त्यर्थ इति ग्रन्थेनेत्यर्थः पञ्चकेति अयमपक्षः कुत्सित इति सूत्रभाष्य एवोक्तः तत्र हि स्वार्थमभिधाय शब्दो द्रव्यमाह समवेतम् समवेतस्य वचने लिङ्गसङ्ख्याविभक्तीश्च
अभिधाय तान्विशेषानपेक्षमाणश्च स्त्वमात्मानम् प्रियकुत्सनादिषु ततः प्रवर्तते सो विभक्त्यन्त इति कर्मणि द्वितीयेत्यादि सूत्राणां नियमार्थत्व वर्णनमपि पञ्चक
प्रातिपदिकार्थ इति पक्षे साधु सङ्गच्छते सामान्यसूत्रेणानिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति न्यायेन विभक्तेर्विशेषाभिधायकताया लाभात् अत एव यत्र न विभक्तेः श्रव
णं दधि राजेत्यादौ तत्रापि पञ्चकप्रतीतिः लोपमजानतोऽपि बोधात् लुप्तविभक्तिस्मरणेन सर्वेषां बोध इति तु नयुक्तम् अत एव श्रीतात्करणपूर्वादिति सूत्रभाष्ये गवा
क्रीतेत्यादावतिप्रसङ्गमाशङ्क्य विभक्त्याव्यवधानान्नेति समाहितम् यदि करणस्य विभक्त्यर्थत्वं स्यात्तदा विभक्त्यन्तस्य करणार्थत्वे तथा समाधानासङ्गतिः स्पष्टैव अ
पि शब्दो मूलोक्तसङ्ख्याविभक्त्यर्थ इति पक्षसमुच्चायकः तत्रेति पञ्चकपक्षेऽत्यर्थः उक्तेऽपि स्यादिति समुच्चयस्यान्यत्रदृष्टत्वात् पूर्वोपात्तापि शब्द समुच्चितार्थस्पष्ट।

पक्षेऽप्यावश्यकता सूचिता तत्र यथा प्रातिपदिकेनोक्ते कर्मत्वादौ भवति तथा तिङादिभिरुक्तेऽपि स्यादतस्तद्वारणार्थमिदम् एवं संख्यातिरिक्तं चतु
ष्कप्रातिपदिकार्थः संख्यामात्रविभक्त्यर्थ इति पक्षेऽप्यावश्यकता एवं च कारकस्य विभक्त्यर्थत्वं यत्र यत्र पक्षे तत्र तत्रानावश्यकमिति सूचितम्

प्रतिपत्तये पुनराह एवमिति पञ्चकपक्षवदित्यर्थः पञ्चकपक्षस्य मुख्यत्वसूचनायात्र सादृश्यप्रदर्शनम् तत्रश्चानभिहित इति सूत्रम् एवञ्च मूले सङ्ख्याविभ
क्त्यर्थ इत्यस्य तन्मात्रं विभक्त्यर्थ इत्यर्थः ननु तद्वत्कारकं विभक्त्यर्थ इति ग्रन्थस्यापि कारकमात्रं विभक्त्यर्थ इति पक्ष इत्यर्थो लभ्यते स च न युक्तः स्वार्थादित्रयस्य प्रातिपदि
कार्थत्वपक्षेऽप्यनावश्यकत्वस्य लाभादत आह एवञ्चेति यत्र यत्र पक्ष इति त्रिकं प्रातिपदिकार्थ इति पक्षे सङ्ख्याकारके विभक्तिवाच्ये एवं संख्यान्तचतुष्कं प्रातिपदिकार्थः कार
कं विभक्त्यर्थ इति पक्षे चेत्यर्थः अनावश्यकमिति उक्तार्थानामिति न्यायेनैव सिद्धेरिति भावः यद्यपि यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् तच्छब्दएवकारश्चस्याद्वा
देयलक्षणमित्यभियुक्तोक्तेर्यत्र हि रूक्तं यत्पदेन नानाव्यक्तीनामुपस्थितिस्तत्र तावन्निष्ठोद्देश्यतावच्छेदकव्यापकत्व विधेयसंसर्गो भासते एतद्बोधनार्थमेव वीप्सायां द्वि
र्वचनमेवञ्चैकेन तत्पदेन तावद्व्यक्तिपरामर्शेन निरुक्तव्यापकत्वलाभान्न तत्पदे वीप्सा अत एवाकथितञ्चेति सूत्रभाष्यकारकञ्चेद्विज्ञानीयायाया मन्येन सम्भवे

दित्यत्र वीप्साया विवक्षितत्वेपि तत्पदे द्विर्वचनन्न कृतम् अतएव यो यो धूमवान् सोग्निमानिति नैयायिकवृद्धप्रयोगसङ्गतिः एवञ्च तत्र तत्रेत्यनुपपन्नम् तथा पि यन्देशं समुद्रस्य जगाम स महाकपिः स स तस्याङ्घ्रिपातेन सोन्मादइव लक्ष्यत इति रामायणीयप्रयोगात् यां यां प्रियः पश्यति कातराक्षीं सा सा ह्रियानम्रमुखी बभूवेति महाकविप्रयोगाच्च तत्पदेपि द्विर्वचनप्रवृत्तिः स्पष्टप्रतिपत्तये भवतीति न दोषः ॥ ६ ॥ तत्प्रीतिरेवेति हरिप्रीतिरेवेत्यर्थः एवकारेण तदननुकूलव्यापारनिरासः ननु क्रियाव्याप्यत्वेनेति मूलमसङ्गतम् क्रियानिष्ठव्यापकतानिरूपितव्याप्यतायाः कर्मण्यसत्वादत आह क्रियासम्बन्धित्वेनेति तथा च व्याप्तिसम्बन्धस्य एव विवक्षितः ननु क्रियाशब्द कर्तृनिष्ठव्यापारबोधकस्तत्सम्बन्धित्वञ्च न कर्मण इत्यत आह तज्जन्येति तत्वम् सम्बन्धित्वम् एवमेवेति मैत्रप्रयोगाद्व्यापारविशेष्यकः शाब्दबोधः कर्मारव्यातेपीति प्रतीयते यद्यपि तथाप्येवंतात्पर्येण न मूलकृता तथोक्तमित्याशयेनाह धात्वर्थेति कर्तृप्रत्ययसमभिव्याहाराद्व्यापारविशेष्यकफ

> प्रीतेरिति तत्प्रीतिरेव शुभफलजनकेति भावः क्रियाव्याप्यत्वेनेति क्रियासंबंधित्वेनेत्यर्थः तज्जन्यफलाश्रयत्वं हि तत्त्वम् एवमेवेति धा त्वर्थ एव विशेष्य इत्यर्थः इयांस्तु विशेषः तत्र फलांशो विशेष्यः कर्तरि तु व्यापारांश इति अतएव रूपमात्मन इति सूत्रे भाष्यम् इष्यते पुत्र इ त्यर्थे पुत्रीयतीति न प्रयोगो भिन्नार्थत्वादिति ॥

लप्रकारकः कर्मप्रत्ययसमभिव्याहाराच्च व्यापारप्रकारकफलविशेष्यकः शाब्दबोधः उभयथापि धात्वर्थविशेष्यकत्वस्य न क्षतिरिति भावः पक्वस्तण्डुल इत्यादिभ्यः फलविशेष्यकबोधः सर्वानुभवसिद्ध एव अतएव प्रत्ययानां प्रकृत्यर्थविशेष्यान्वय्यर्थप्रतिपादकत्वमिति नियमस्य न त्यागः स्वाभिमतेर्थे साधकमप्याह अतएवेति भिन्नार्थत्वादिति असमर्थत्वान्न बोध्यार्थबोधकवाक्यादित्यादिः समानविशेष्यबोधजनकत्वं हि समानार्थत्वन्तच्चात्र नास्तीत्येवं विग्रहेण न क्यच् किन्तु पुत्रमिच्छतीति विग्रह एवेति तत्वम् न च कर्मणि यत्र क्यप्रत्ययस्तत्र फलस्यास्तु व्यापारविशेष्यता कर्माख्याते तु तत्त्वे मानाभाव इति वाच्यम् इष्टः पुत्र इत्यत्र यथोभयोः पदयोः सामानाधिकरण्यं तथा इष्यते कर्मत्वस्य पुत्र इत्यत्रापि सामानाधिकरण्यमिति फलस्य विशेष्यत्वस्वीकारस्यावश्यकत्वात् अतएव भाष्यकृता क्यजेकस्मान्न भवति इष्टः पुत्रः इष्यते पुत्र इति इत्याशङ्क्य भिन्नार्थत्वादित्येकमेव समाधानमुक्तम् ॥ ७ ॥

वाक्यमेवेति इष्टः पुत्रइत्यादि ननु कथं क्यजन्तस्याकर्मकतया ततः कर्मणि प्रत्ययानुत्पादादिति भावः तस्याकर्मकत्वं तु धात्वर्थसङ्ग्रहीतकर्मकत्वेन वहिर्भूतकर्माकाङ्-
क्षाया अभावाच्च यत्र कर्मणि लकारस्तत्रैकाश्रयकव्यापारजन्या पुत्रकर्मिकाइच्छेति बोधः पुत्रमिच्छतीत्यस्मात्तु एकाश्रयकपुत्रकर्मकेच्छानुकूलव्यापार इति बोध
इति भिन्नार्थत्वं स्पष्टमेव प्रतीकान्तर इति स्वशब्देनोक्तत्वादित्यतः प्रागुक्त स्वशब्देनेति प्रतीकइत्यर्थः अत्रापीति भिन्नार्थत्वोपपादके इह भवन्त इत्यादि प्रतीक इत्यर्थः प्रती-
कान्तरे एतदर्थकथनस्यासङ्गिकमतस्तु तस्यावश्यकत्वमेवेत्याशयेनाह अत्रैवेति नच हरिः सेव्यत इत्यस्माद्यदि फलविशेष्यकबोधस्तदा फलस्यैव प्राधान्येन का-
लान्वयोपि तत्रैव स्यादिति वाच्यम् व्यापारेणैव तस्य साकाङ्क्षत्वाद्विशेषणीयभूतेपि तस्मिन्कालान्वयात् अत एव क्रियाभेदाय कालस्य सङ्ख्यास्य भेदिकेति हरि-
णोक्तम् नचैवं फलानुत्पत्तौ व्यापारस्य सत्त्वे पच्यत इति स्यादिति वाच्यम् इष्टापत्तेः पचतीत्यादिभ्यो व्यापारविशेष्यकबोधस्येष्टतया प्रधानभूते तस्मिन्कालान्वय उचित
एव नच पच्यते तण्डुल इत्यादिभ्यः फलविशेष्यकबोधस्वीकारे प्रधानीभूतधात्वर्थाश्रयत्वेन तण्डुलस्य कर्तृत्वापत्तिरिति वाच्यम् कर्तृप्रत्ययसमभिव्याहार इत्यस्यापि

यदा क्रियाफलस्य प्राधान्यं प्रतिपिपादयिषितं तदा वाक्यमेव व्यापारप्राधान्ये तु वा क्यजिति कैयटस्य यद्यप्ययमर्थः प्रतीकान्तरे कैयटेनोक्तस्तथाप्यत्रा-
पि स एवार्थ उचितः अत्रैववेत्यन्यत्र विस्तरः ननु नव्यन्यायादिग्रंथे प्रथमान्तविशेष्यकबोधस्यैवानुभवप्रदर्शनात्तथैव युक्तमित्यत आह क्रियाप्रधान-

तन्त्रनिवेशात् अत्र लः कर्मणीत्यनेन कर्मणि लकारविधानमेव मानम् एतेन पच्यत इत्यादिभ्यः फलविशेष्यकबोधस्वीकारे फले कालान्वयः स्यात् एवं क्रियाप्रधा मिति
नमाख्यातमिति वचनविरोधश्च क्रियापदस्य व्यापारस्य प्रसिद्धेः किञ्च प्रधानीभूतधात्वर्थाश्रयस्य कर्तृत्वेन प्रधानफलाश्रयतण्डुलादेरेव कर्तृत्वापत्तौ देवदत्तेन पच्यते
तण्डुल इत्यत्र देवदत्तपदात्तृतीयानुपपत्तिः किञ्च पाकानुकूलक्रियाश्रयोयमर्थे पचति पश्येति वा पच्यते पश्येत्यपीष्यते तच्च फलस्य प्राधान्येन स्यात् क्रियायाः फलविशे-
षणत्वात् नाप्यस्मिन्मते स्तूप आत्मन इति सूत्रस्य भाष्यविरोधः पुत्रीयतीति शब्दजन्यशाब्दबोधस्यैकाश्रयकव्यापारजन्या पुत्रकर्मिकेच्छेत्याकारकस्तस्मिन् कर्तुः कर्मा-
पदइच्छाया विषयतादस्यानेपुत्रइत्यस्मात्तु ज्ञानशाब्दबोधेन कर्तुः विषयत्वमिति भिन्नार्थत्वस्पष्टमेवेति परास्तम् उक्तरीत्याऽनुपपत्तिपरिहाराय विशेषणीभूतेपि व्या-
पारे कालान्वयस्य स्वीकारात् भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानीत्यस्य यास्कीयवचनस्य भावपदस्य धात्वर्थपरतया क्रियाप्रधानमिति वचने क्रियापदस्य

साध्यत्वेन प्रतीयमानार्थपरतया चोपपत्तेश्च तण्डुलादेः कर्तृत्वापत्तिस्तत्र कर्मणि लकारविधानानुपपत्तेरिति प्रागेवावेदितम् अस्मादेव ज्ञापकात्कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयस्यैव कर्तृत्वमिति स्वीकारात् किन्त्वनेनैतिः काजन्तान्तदर्थमध्ये न कर्तुः प्रवेशोऽयथा तथा पुनरत्रमूदृष्ट इति समुदाया थेऽपि न तस्य प्रवेशः सर्वमिथ्येतेपुनरिद्वत्यर्थेऽपि न तस्य प्रवेश इति कर्तारङ्गीकृत्वाभिन्नार्थत्वोपपादनमयुक्तमेव विक्लित्त्यनुकूलक्रियाश्रयत्वेन त्वर्थे पच्यते पच्यत्यस्य साधुत्वेमानाभावाच्च यत्तूक्तमाख्यातार्थस्य विशेष्यत्वमिति तुद्वदैवकारेण प्रथमान्तार्थस्यापि निरासे ध्वनिते प्रथमान्तार्थविशेष्यक शाब्दबोधस्वीकारे दोषोऽप्यस्तीति प्रतिपादयितुं शङ्कते नन्वित्यादिना नव्यमपदोपादानेन तच्छिरन्तनमते स्वरदभिमतरीत्यैव बोध इति ध्वनितम् ॥६॥ इदन्त्वेति सिद्धान्तार्थसूचकवाक्यन्त्वेत्यर्थः रूपपसूत्रभाष्य इति तत्र हि पचति रूपम्पचतो रूपमित्यादेरसिद्धिमाशङ्क्य क्रियाप्रधानमाख्यातन्द्रव्यप्रधानन्नाम यतः क्रियाम्पृष्टस्तिङा चष्टे किं त्वेत्तः करोति पचतीति द्रव्यम्पृष्टः कृता चष्टे कतरः सत्वेतायः पाचक इत्युक्तम् अत्र कृतेत्यस्य कृदन्तप्रकाशकस्वन्नेनेत्यर्थः कृत्पदन्त्व तद्धितादेरप्युपलक्षणम् इस्वो नपुंसक इति सूत्रभाष्येऽपि प्रातिपदिकग्रहणन्त्वीवन्तव्याप्त्यर्थमित्युक्तान

इदं च रूपपसूत्रे भाष्ये क्रियेति धात्वर्थशब्दद्वयस्यापि क्रियात्वेन व्यवहारो द्रष्टव्यः ॥ ० ॥

ख्यावर्तरसमनेकाण्डेऽइत्यभिधायरमतेद्वतिक्रियाप्रधानम् काण्ड इति विभक्त्यर्थप्रधानन्न चैतयोरर्थयोर्लिङ्गसंख्याभ्यां योगोऽस्तीत्युक्तम् ननु पूर्वोक्तभाष्य इयेपि क्रियापदस्यैव सत्त्वेन व्यापारविशेष्यकबोधस्य वा याभीत्यत आह अंशद्वयस्यापीति क्रियायाः प्राधान्यन्तु प्रत्ययार्थनिष्ठप्रकारतानिरूपितविशेष्यत्वम् नामार्थनिष्ठप्रकारतानिरूपितविशेष्यत्वञ्च आद्यं यथा पचति देवदत्त इत्यादौ अन्त्यम्भूयते घटेनेत्यादौ अत्रेदं बोध्यम् धातोः फलव्यापारयोः पृथक् शक्तिः कर्तृप्रत्ययसमभिव्याहारे व्यापारस्य कर्मप्रत्ययसमभिव्याहारे तु फलस्य प्राधान्यमिति सम्प्रदायः परे तु फलावच्छिन्नव्यापारे व्यापारावच्छिन्नफले च पृथक् शक्तिः तत्प्रत्ययसमभिव्याहारस्तत्तद्विशेष्यकबोधनियामकः प्रामाणिकञ्चैतत्तन्न दोषायेत्याहुः द्रष्टव्य इति क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरमित्यत्र कर्तृकर्मव्यवहितानामसाक्षाद्धारयत्क्रियामित्यत्र च हारग्रन्थइत्यर्थः अत्र क्रियात्वं साध्यत्वेन प्रतीयमानत्वरूपन्तेन हिरुगादिषु नातिव्याप्तिः तेषु क्रियाप्रधानत्वव्यवहारस्तु क्रियायास्तत्र विशेषणत्वेनोपपाद्यः सिद्धत्वेनाप्रतीयमानत्वेन वेति उक्तद्विविधक्रियायाङ्कारकान्वयः यत्तु क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकवैजात्यावच्छिन्ने कारकान्वय इति तन्न ओदनम्भुक्त्वा ग्राममङ्गच्छतीत्यादौ क्त्वाप्रत्ययार्थे

कारकान्वयानापत्तेः अन्येतु यद्यप्याख्यातमाख्यातेनेत्यत्राख्यातपदं तिङन्तपरम् तथापि आख्यायते सर्वप्रधानीभूतोर्थो ऽनेनेति व्युत्पत्त्याख्यातपदेन धातुरेवोच्यते अत
एव नामाख्यातोपसर्गनिपाताइति भाष्ये निरुक्ते च प्रक्तोनामेवो लृत्वः स्यातः अत एव नामान्याख्यातजानीति शाकटायनोक्तेरप्युपपत्तिः अत एवोणादयो बहुलमिति सू
त्रे भाष्ये सर्वन्नाम धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकमिति तोम् एतेन इति साख्यातार्थः भावना आख्यातार्थ इति नैयायिकानां प्रवादो न प्रद्वेयः आख्यातमा
ख्यातेनेत्यादौ चाख्यातपदं धातुमात्रतिकतिङन्तलाक्षणिकमिति एवञ्च विशेष्यतासम्बन्धेन कारकप्रकारकशाब्दबुद्धिम्प्रति धातुजन्योपस्थितिः कारणमिति कार्यका
रणभावः कर्तृकर्मोभयसाधारण एव न चोक्तकार्यकारणभावात्पक्ता तण्डुलं इत्यत्रापि तण्डुलपदार्थस्य धात्वर्थे विशेषणत्वापत्तिरिति वाच्यम् सत्त्वप्रधानानि नामानी
ति विशेषवचनेन द्रव्यप्राधान्यस्योपपत्तेरित्याहुः ॥ः॥ वस्तुतस्तु धातुमात्रस्योक्तव्युत्पत्त्या आख्यातपदेन ग्रहणे आख्यातमाख्यातेनेत्यत्र लक्षणाया आपत्तेः शिष्ट इत्यादिति

तस्यार्थ इति आख्यातशब्देनात्र नियमेन जनकाकांक्षं विभक्त्यन्तमाख्यातमाख्यातेनेत्यादौ तथा प्रतीतेः रूपसूत्रे कैयटोपि आख्यातमाख्यातकालसंख्यासा
धनाद्यवगमेपि तस्य क्रियाप्रधानत्वमिति नामान्याख्यातजानीति शाकटायनोक्तौ आख्यातावयवधातुजानीत्यर्थः अत एव सर्वनाम धातुजमाहेति त
त्समानार्थकमुणादय इति सूत्रे भाष्ये पठितम् नैकं वाक्यमिति साधु इति शेषः ॥ तिङन्तेति व्याप्तेराख्यातपदं तिङन्तपरमेवेत्याशयेन व्याचष्टे आख्यातशब्दे

नेति अत एव आख्यातपदस्याख्यातावयवधातुलाक्षणिकत्वादेव मूले अत एवेति धात्वर्थविशेष्यकबोधस्वीकारादेव ॥ः॥ एकवाक्यत्वाभावमुपपादयति पाककर्तृके
ति ननु नैकं वाक्यमित्ययुक्तं पदसमूहस्यैव वाक्यत्वादत आह साधु इति शेष इति लौकिकवाक्यत्वलक्षणानाक्रान्तत्वादिति भावः लौकिकैकवाक्यत्वञ्च एकतिङ
न्तचयो वाक्यं क्रियावाकारकान्वितेत्यमरसिंहेनोक्तम् अत्र वाशब्दश्चार्थे एवञ्च कारकान्वितक्रियाबोधकत्वे सति एकतिङन्तचयो वाक्यमिति फलितम् सु
प्तिङन्तचय इत्यस्य एवञ्च एकतिङन्तचयस्तिङन्तचय इत्यर्थः कारकपदार्थस्तु क्वचित् स्फुटवाच्यः क्वचित्तिङन्तवाच्यश्च आद्यो यथा देवदत्तेन शयितव्यमिति आ
आसीत्यस्याध्याहारलभ्यत्वेपि तदननुपादानात्स्फुटत्वञ्च यत्त्वमव्याहृतम् द्वितीयं यथा पचति भवतीत्यादि तृतीयन्तु चैत्रः पचतीत्यादि क्रियावाकारकान्वितेत्युत्तद्
पादानन्तु दश दाडिमानि षडपूपा इत्यादीनां समुदायस्यैकवाक्यत्वव्यवहारापत्तिवारणाय एकतिङ् वाक्यमिति तु समानवाक्ये निघातयुष्मदस्मदादेशा इत्येतद्विषयक

चितिङन्तस्य वृद्धिवृद्धीत्यस्य यत्र द्विर्वचनं तत्र प्रश्नोत्तरत्वे ऽनन्यस्यापि प्रश्नाख्यानयोरित्यनेन यत्र प्लुतस्तद्विषयत्वं जैमिनिनातु अर्थैकत्वादेकं वाक्यं साकाङ्क्षञ्चेद्विभागे
स्यादित्युक्तम् विभागे पृथक् प्रयोगे यदि साकाङ्क्षं स्यात्तदा तादृशसाकाङ्क्षपदसमुदायस्यार्थैक्यादेकविशेष्यकविशिष्टार्थविषयकप्रतीतिजनकत्वादेकवाक्यत्वव्यव
हार इति तदर्थः अत्र कारकान्वितक्रियाबोधकस्य तिङन्तचयस्यैवैदन्तः पचतीत्यस्यैकवाक्यत्वसवेमत सिद्धन्त्व प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकारे मतेनोपप
द्यत इति तेषान्तादृशोद्घोषोनादर्तव्य इति बोध्यम् यादृशेषाम्मत सिद्धमेवैकवाक्यत्वं शास्त्रीयकार्यप्रवृत्तिसम्पादकं स्यात्तदा वाक्यादेरामन्त्रितस्येति द्विर्वचनस्यादेवदत्तेश
श्वोन्वयेत्यादौ चरितार्थस्य कर्तरि कर्मणि वा यत्र लकारस्तत्र प्रवृत्तिर्न स्यात् यत्तु क्रियावेलनेनार्थनिष्ठैकवाक्यत्वसूचकलक्षणान्तरङ्गत्वमिति तन्न वचोऽशब्दसंज्ञायामि
तिकुत्वनिषेधेन मन्त्र वाच्यत्वव्यवहारस्यैव मुनिसम्मतत्वादत एवोक्तसाधुरिति शेष इति तस्यात्तत्वमिति एकवाक्यत्वमित्यर्थः चैत्र इत्यस्याध्याहारेण पाकानुकूलकृतिमा

प्रथमान्तविशेष्यकबोधेनुतस्यातत्वं दुर्वारमिति भावः एवं च अस्य साधुत्वापत्तेश्च भावप्रधानमिति भावकालकारकसंख्याश्चत्वारोऽर्था आख्यात
स्यतत्र भावः प्रधानमनेनदर्शितं भाष्यकार आह नामानीति ॥ ३ चैत्रो व्रजनानुकूलकृतिमानित्यन्वयबोधस्य सम्भवे नैकवाक्यत्वं दुर्वारमिति भावः नच

——— प्रथमान्तपदाध्याहाराभावेनैकवाक्यत्वाभावस्योपपत्तिर्भवत्येवेति वाच्यम् कर्तुराख्यातार्थत्वे न तस्य विशेष्यत्वमन्वयार्थत्वेन स्यादिति पाककर्ताव्रजन
कर्त्रभिन्न इति बोधस्यैकविशेष्यकस्य सम्भवात् कृति राख्यातार्थ इति तु न युक्तम् आख्यातवाच्य संख्यायाः स्वान्वययोग्यस्य शब्दानुपस्थितत्वेनानन्वितत्वापत्तेः
संख्यापि नाख्यातवाच्येति चेत् पचतीत्यादि जन्यबोधानन्तरं ततो एकत्वं नकोवेति संशयापत्तिः पचति पचत इत्यादीनां पर्यायत्वापत्तिश्च स्यात् क्रियाप्राधान्यबो
धकरूपस्य नपुंसकइत्यादिसूत्रस्य भाष्यविरोधापत्तिश्चेति दिक् मूले नैयायिकोद्घोष इति कर्तुर्वाच्यत्वेऽवाच्यत्वे चेति शेषः ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अस्यसाधुत्वापत्तेश्चेति पचतिव्रजतीत्यस्यसाधुत्वापत्तेश्चेत्यर्थः तद्भाष्यकारः यास्कोक्तिभाष्यकारः तच्च नामच अतिरिक्तमिति एवंचतेषां सत्वप्राधान्या भावेपिनक्षतिः यदितुपचतिव्रजतिचेतिचकारः प्रयुज्यतेसदाचशब्दार्थस्यउभयोर्विशेषणत्वेनैकवाक्यत्वन्दुर्वारमेव एतेनभवन्मतेपिपचतिव्रज तीत्यनयोरेकवाक्यत्वापत्तिर्दुर्वारैव एककर्तृकापचिक्रियाव्रजिक्रियेतिबोधस्यसम्भवात् भवन्मतादस्मन्मतेसतांवानेवविशेषः भवन्मतेएकप्रकारको भयविशेष्यकोऽस्माकम्मतेतूभयप्रकारकैकविशेष्य कइतिमूलोक्तन्विन्त्यमिति परानुयायिप्रतिपादितमपास्तम् चकारंविनाजायमानस्यबोधस्योभ यविशेष्यकतयाऽर्थैक्याभावेनवाक्यभेदस्यसत्वात् चकारस्यसत्वेतुसमुच्चय एकस्यविशेष्यतयाऽस्त्येवैकवाक्यत्वमिति प्रागेवाभिहितम् नामपद।

नामशब्देनसुबन्तमितिचतद्भाष्येस्पष्टम् तच्चाव्ययातिरिक्तमित्यन्यत्रनिरूपितम् नमन्त्याख्यातार्थंप्रतिविशेषणीभव नीति नामानीति तद्व्युत्पत्तिर्निरुक्तभाष्येदर्शिता किंचे तन्निरुक्तोत्तरंयत्रोभेभावप्रधानेभवतइतिनिरुक्तेउक्तम्॥ ७ ॥

स्यसुबन्तपरत्वेसाधकमाह नमन्त्याख्यातेति ननुपञ्चकप्रातिपदिकार्थइतिपक्षेयथाद्रव्यस्यस्वार्थादिनिरूपितप्राधान्यन्तथाक्रियात्वक्रियाकाल कारकसङ्ख्यैतिपञ्चकस्यधात्वर्थत्वमिति क्रियाप्रधानमाख्यातंसत्वप्रधानानिनामानीत्यस्यास्मन्मतेपिनासङ्गतिरतआह किञ्चेति तन्निरुक्तोत्तरम् भावप्रधानमाख्यातंसत्वप्रधानानिनामानीति निरुक्तोत्तरम् अथपुनर्यत्रतेउभेभवतोवाक्येतत्रतेभावप्रधानेआख्यातार्थप्रधानवाक्यस्यास्यात्तत्प्रधा नन्तदर्थत्वाद्गुणभूतन्नाम तदर्थस्यभावनिष्पत्त्यावङ्गत्वादेवन्तावद्वाक्येआख्यातप्रधानमिति यन्निरुक्तन्तस्ययोऽर्थःशेषपूरणेनव्याख्यानस्तन्दर्शयति॥

यत्रोभेदृति व्याख्यानान्तरम् पूर्वोक्तं व्याख्यानम् एवञ्चान्तरनिरुक्तानुरोधेन पूर्वनिरुक्तस्यापि तत्त्वैवार्थः कल्पनीयइतिस्वीयसिद्धान्तइतिभावः एवं।
सतिप्रकृतिप्रत्ययौसहार्थं ब्रूतस्तयोःप्रत्ययार्थः प्रधानमित्यौत्सर्गिकस्यनियमस्यतिङन्तेत्यागः उक्तनिरुक्तवाक्यत्वात् त्वत्कल्पितव्याख्यानेतुस्वीयभा
ष्यविरोधोप्यस्तीत्याह किन्त्वकर्तृविशेष्यकेति औत्सर्गिकनियमानुरोधेनकर्तृविशेष्यकबोधइत्यर्थः आपादितइति ओदनकर्मकविक्लित्यनुकूलभूत
कालिकैकत्वसङ्ख्यावद्व्यापाराश्रयाभिन्नदेवदत्तकर्मकदर्शनानुकूलव्यापारविषयकप्रवर्तनाविषयप्रवृत्तिमांश्चैत्र इतिह्नितस्माद्बोधः स्यादेवञ्चात्रशा।

यत्रोभेनामाख्यातेभवतोवाच्यतत्रैतेभावप्रधानेक्रियाप्रधानेइत्यर्थकतयाचतद्भाष्येतद्व्याख्यातम् अतः पूर्वनिरुक्तस्यव्या।
ख्यानान्तरन्नादरणीयमकिंच कर्तृविशेष्यकबोधे पचत्योदनंदेवदत्तंपश्येतिप्रयोगः घात्त्रविधायकभाष्यकैयटयोरापादितः
यद्यप्यन्तरङ्गाप्रथमातथापिप्रधानानुरोधिनीद्वितीयाभवतीतितदाशयः तदनुसारेणाह पश्येति मृगस्यकर्मत्वेप्रधानानुरोधि
नीद्वितीयैवस्यादितिभावः उक्तंचेति हरिणेतिशेषः ॥ ॥

ॐ आदेःप्रसङ्गएवनास्ति इतिध्वनितम् ननुकर्तुःप्रथमोपस्थितत्वात्तन्नि।
मित्ताप्रथमापूर्वम्भविष्यति ततोदर्शनक्रियायांसम्बन्धेपिजातसंस्कारस्यबाधनन्नसम्भवतीति भाष्याशयसङ्गतिरतआह यद्यप्यन्तरङ्गेतिप्रधानकार्यस्यान्त
रङ्गादपिबलवत्त्वेहेतुमतिचेति सूत्रभाष्येस्पष्टम् तदाशयः उक्तभाष्याशयः तदनुसारेण उक्तभाष्यानुसारेण अत्रापिमृगशब्दाद्द्वितीयापादानमुक्तरीत्ये
वेत्याह मृगस्येति धावनक्रियाविशिष्टस्यमृगस्यकर्मत्वेविशिष्टस्यशुद्धानतिरेकान्मृगस्यदर्शनक्रियाविषयत्वात्कर्मत्वमस्त्येवेतिभावः धातूपस्थितक्रि।
यायाः क्रियान्तरविशेषणत्वेहरिसम्मतिरस्तीत्याह हरिणेतीति ॥ ० ॥ ० ॥ ० ॥ ० ॥ ० ॥ ० ॥ ० ॥

ननु राज्ञो दण्डधरस्य पुरुषस्य द्रष्टेत्यादौ राजन् शब्दादपि पूर्वोक्तरीत्या द्वितीया प्राप्नोति राजसम्बन्धविशिष्टदण्डधराभिन्नस्य पुरुषस्य दर्शनकर्मत्वेन राज्ञोपि तद्वि षयत्वसम्भवादिति चेन्न अभेदसम्बन्धेन विशेष्यान्वयि यद्विशेषणं ——— द्वाचकादपि विशेष्यवाचकपदप्रकृतिकविभक्तिसजातीयविभक्त्युत्पत्तिस्वीका रात् कटम्भीष्मकृ विंशत्यादौ यथा विशेष्यस्य तु कारकाधिकारीयसंज्ञाविशिष्टत्वं तद्बोधिकाविभक्तिर्भवत्येवेति भवन्मते मृगस्य विशेष्यतया कर्मत्वेन तद्वाचका द्वितीया प्राप्नोतीति भावः अत्राम मैत्रं न्याद्राम्यं तथा चोत्पत्तयः शुभाद्दूतितार्थम् क्रियायाः ईप्सिततमं मानन्तु कर्मणा यमभिप्रैति इति सूत्रस्थकृ यापिक्रियया ई प्सिता भवति कया क्रियया सन्दर्शनादि क्रिययेति भाष्यमेव मन्मते धावनस्य प्राधान्यात्तस्य कर्मत्वेपि तद्वाचकस्य प्रातिपदिकत्वान्न ततो द्वितीया सुबन्ततिङ् न्तशब्दौ रामः पचतीत्यादि शब्दपरौ तयोश्च न विशेषणविशेष्यभावः प्रसिद्ध इत्यत आह तिङन्तेत्यादि स्वोक्तार्थे प्रामाण्यम्प्रदर्शयितुमाह स्पष्टम्भूवादिसूत्र ।

तिङन्तसुबन्तशब्देन तदर्थक्रियादिः पचिक्रिया भवतीत्यर्थ इति स्पष्टं भूवादिसूत्रे भाष्ये ॥ ७ ॥

भाष्य इति तत्र क्रियावचनो धातुरिति न्यासे कथन्तु न ज्ञायते क्रियावचनाः पचादय इति प्रश्ने यदेतेषाङ्करोतिना सामानाधिकरण्यम् किङ्करोति पचति किङ्क रिष्यति पक्ष्यति किमकार्षीत् अपाक्षीदित्युक्तम् ततः शङ्कितम् अस्ति भवति विद्यतीनां धातुसंज्ञा न प्राप्नोति यथा हि भवता करोतिना पचादीनां सामानाधि करण्यन्दर्शितन्न तथा अस्त्यादीनान्निदर्श्यते न हि भवति किङ्करोति अस्तीति इत्याद्युक्त्वा यदि पुनर्भाववचनो धातुरित्येतल्लक्षणं क्रियेतेत्युक्तम् कथन्तु न ज्ञायते भाववचनाः पचादयः यदेतेषां भवतिना सामानाधिकरण्यम् भवति पचति भवति पक्ष्यति भवति अपाक्षीदिति कथितम् तादृशन्यासे पचादीनां धातुसंज्ञा न प्राप्नोति यथा हि भवता क्रियावचने धातौ करोतिना सामानाधिकरण्यन्निदर्शितन्न तथा भाववचने धातौ निदर्श्यते करोतिः पचादीनां सर्वान्का लान्सर्वान्पुरुषान्सर्वाणि वचनान्यनुवर्तते भवति पुनर्वर्तमानकालञ्चैकत्वञ्च न त्वन्यत् यदः भवति पुनरिति न हि भवति भविष्यति पक्ष्यति अभूदपाक्षीत्

ततो भाष्यकृतोक्तम् कालदीर्यं वाचोयुक्तिः भवति पचति भवति पक्ष्यति भवत्यपाक्षीदिति प्रश्नेऽपि वाचोयुक्तिः पचादयः क्रियाः भवतिक्रियायाः कर्त्र्यो भवन्ति यद्यपि तावदेतत्स्वकाले वक्तुम् यत्रान्या चान्या च क्रिया यत्र तु खलु सैव क्रिया तत्र कथम् भवेदपि भवेत् स्यादपि स्यादिति अत्रैकैव क्रिया तस्याः साध्यसाधनभावो विरुद्ध इति भावः अत्राप्यन्यत्वमस्ति कुतः कालभेदात्साधनभेदाच्च एकस्यात्र भवतेर्भवतिः साधनम् सर्वकालश्च प्रत्ययः अपरस्य वा त्वं साधनम् वर्तमानकालश्च प्रत्ययः यावता त्राप्यन्यत्वमस्ति पचादयश्च क्रियाः भवतिक्रियायाः कर्त्र्यो भवन्तीत्युक्तम् ननु योऽश्वमेधेन यजते स ब्रह्महत्यां तरतीति वाक्यादश्वमेधयागकर्तायः स ब्रह्महत्यातरणकर्तेति बोधो जायत इति क्रियाविशेष्यक एव शाब्दबोध इति सिद्धान्तो व्यभिचरित इत्यत आह योऽश्वमेधेनेति इत्येव बोध इति एवञ्च न सिद्धान्तभङ्ग इति भावः यत्तदोर्नित्यसम्बन्धादुभयक्रियाकर्तृत्वमेकस्य मनसा निश्चीयत एव नन्वेवम्पचति भवतीत्यादिष्वपि य।

योऽश्वमेधेन यजते स ब्रह्महत्यां तरतीत्यादौ यत्कर्तृका यागक्रिया तत्कर्तृका तरणक्रियेत्येव बोध इत्यन्यत्र विस्तरः अपदार्थत्वादिति तन्नये पदजन्योपस्थितिविषयस्यैव प्रकारत्वविशेष्यत्वस्वीकारात् पदाध्याहारस्यात्र ॥ ७ ॥ ७ ॥

त्कर्तृका पचिक्रिया तत्कर्तृका भवनक्रियेति बोधः कस्मान्न भवतीति चेन्न तत्र तादृशशाब्दबोधजननगमकयत्तत्पदस्य सत्त्वादत्र गमकाभावात् किञ्च पचतीत्यत्र नैव पचिक्रियाकर्तुर्वर्तमानसत्त्वमवगतमिति भवतीत्यस्य वैयर्थ्यापत्तिश्च अत एव भविष्यति पक्ष्यति अभूदपाक्षीदिति न भवति नैयायिकमते तु तस्यापत्तिस्तत्र भाष्यविरोधश्चेति दिक् अन्यत्र उद्योतादौ ननु पदार्थत्वं पदजन्यप्रतीतिविशेष्यत्वं तदभावश्च न प्रकारत्वाभावसाधकः घटादिशब्दजन्यशाब्दबोधे घटत्वादेः प्रकारत्वमस्ति पदजन्यप्रतीतिविशेष्यता तु तेषां नास्तीत्यत आह तन्नय इति शब्दज्ञानादेवार्थबोध इति नय इत्यर्थः एवञ्च पदार्थत्वादित्यस्य पदजन्यप्रतीतिविषयत्वाभावादित्येवार्थः ननु तन्नयेऽपि धेहीत्यादिष्वोहारमित्यादिशब्दाध्याहारं यथा शाब्दबोधस्तथात्रापि तामित्यादिशब्दाध्याहारेण शाब्दबोधो भवत्वित्यत आह पदाध्याहारस्येति अत्र धावति पश्य पचति भवतीत्यादौ ॥ १ ॥ ७ ॥ १ ॥

असंभवादिति यद्यत्रतामित्यादिपदमध्याह्रियतेतदावाक्यभेदः स्यान्नत्वेकवाक्यतेतिपदाध्याहारेप्येकवाक्यतायाअसम्भवादितिभावः सर्वपक्षेशब्दाध्या
हारार्थाध्याहारोभयपक्षे संसर्गत्वम् संसर्गत्वमेव समर्थसूत्रेत्यादि राज्ञःपुरुषइत्यादिवाक्येतयोरभिसम्बन्धस्यषष्ठीवाचिका काष्ठैश्चितइत्यत्रक्रियाका
रकयोरभिसम्बन्धस्यद्वितीयावाचिकाभवतीति भाष्यास्वरस्वारस्येनसर्वत्रविभक्त्यर्थस्यसंसर्गत्वमेवस्वीक्रियतइतिभावः ननुविभक्तिजन्योपस्थितिविष
यस्यपदार्थस्याप्रकारत्वमेवन्याय्यमतआह शब्दोपस्थितस्यापीति तथाचपदादनुपस्थितस्यप्रकारत्वन्नेत्येवनियमइतिभावः मूलेफलस्यापीत्यमेवा
मतभेदेनव्यवस्थेति शब्दाध्याहारवादेफलस्यकर्मतासम्बन्धेनव्यापारविशेषणत्वमर्थाध्याहारवादे कर्मत्वस्यप्रकारत्वमपिसम्भवतीतिविज्ञेयमित्यादि

असंभवादितिभावः प्रकारत्वेपीति अपिनासर्वपक्षेविभक्त्यर्थस्यसंसर्गत्वमिति ———— समर्थसूत्रषष्ठीसूत्रभाष्योक्तःसि
द्धान्तः सूचितः शब्दोपस्थितस्यापिसंसर्गत्वंषष्ठ्यांसर्वैरङ्गीकृतमेवत्वङ्ङ्?ैः फलस्यापीति अपिनापक्वइत्यादौव्यापारस्यसंग्रहः॥

कर्मिकाभावनेति शाब्दबोधस्यसम्भवादितिभावः नचफलस्यकर्मत्वानङ्गीकारेपिशोभनादिपदार्थस्यधात्वर्थफलसमानाधिकरणस्यकारकत्वाभावा
त्तत्औत्सर्गिकमेकवचनम्प्रथमायाश्चक्तनपुंसकत्वञ्चास्त्विनिवाच्यम् निपुणस्त्वम्पचसिमृदुत्वाराजाद्रविणेनयोजयति इत्यत्रत्वामौद्वितीयायाइ
त्यस्यैवप्रवृत्तिर्भवति प्रथमान्तत्वेनुसपूर्वायाः प्रथमायाविभाषेत्यस्यभवन्मतेप्रवृत्तिः स्यात्वांवेत्यपिस्यादिति शोभनादिपदाद्द्वितीयैवभवतापिस्वीका
र्येत्याशयात् सङ्गृह्इति कर्मप्रत्ययसमभिव्याहारेफलव्यापारयोर्विशेष्यविशेषणभावव्यत्यासस्यानुभवसिद्धत्वेनफलनिरूपितप्रकारताव्यापारे।
स्तितस्यतस्मात्कर्तृत्वमप्यस्तुभावनाकर्तृकाविक्लित्ति रित्यादिप्रकारेणशाब्दबोधस्तुतत्कर्तृत्वविषयेमानव्यवस्थातत्तत्रीत्यैवस्वीकार्यइतिभावः॥७॥

स्यादेतत् शोभनमयं पचतीत्यादौ कर्मणि फले अभेदेनान्वितशोभनार्थवाचकाद्द्वितीयावज्ज्योतिष्टोमेन यजेतेत्यादौ करणफलान्वयिवाचकात्तृतीयावच्च शोभनेन पचतीत्यादौ शोभनादिपदार्थस्य कर्तृव्यापारेऽभेदेनान्वितस्य कर्तृत्वमिति तद्वाचकात्तृतीयाया अपि साधुत्वं स्यात् न चेष्टापत्तिः कर्तृकर्मणोः कृतीति सूत्रव्याख्यानावसरे शब्देन्दुशेखरे लोकस्याक इत्यादौ लोकपदार्थस्य धात्वर्थेऽभेदसम्बन्धेनान्वयित्वात् तद्वाचकात् षष्ठी भवति कर्तृसाहचर्यादित्युक्तत्वाद्विरोधापत्तेः भवन्मते कर्तुरप्यभेदेनान्वयस्य दर्शनादिति चेन्न सत्यम् परेत्विस्यादिना यन्मतं फलावच्छिन्नव्यापारे व्यापारावच्छिन्नफले धातोः पृथक् शक्तिः कर्तृकर्मवाचकप्रत्ययसमभिव्याहारश्च तत्तदर्थोपस्थितौ तात्पर्यग्राहक इति तद्रीत्या पचतीत्यत्र व्यापारस्य विशेषणतया भासमानस्य पदार्थैकदेशत्वेऽपि सर्वसंमतेति शेषः तद्रूल्लककलेपीति।

तत्र तस्य फलं प्रति विशेषणत्वात् इत्थमेवेति कर्मत्वभानविषये उक्तप्रकारेणैवेत्यर्थः व्यवस्थेति सर्वसंमतेति शेषः तद्रूल्लककलेपीति।

भावः वस्तुतस्तत्रापि संसर्गतैव घटपदे घटघटत्वयोः समवायस्येव उपस्थितिपूर्वकं पृथगाकाङ्क्षायाश्च दर्शनेनाध्याहारस्योक्ति संभवादिति ध्येयम् अतएव फलस्य कर्मत्वादेव तृतीयेति तत्र तस्य करणत्वेनान्वयादिति भावः॥ ॥ तयातत्राभेदेन शोभनाद्यन्वयासम्भवात् न च शोभनमयं पचतीत्यत्र फलावच्छिन्नव्यापारस्योपस्थितिरस्तीति तत्रापि फलस्य पदार्थैकदेशतया तत्र कथं शोभनादिपदार्थान्वय इति वाच्यम् तत्र तत्प्रत्ययानुपूर्वीमित्युक्तज्ञापकात्तथा नयस्वीकारेऽपि प्रकृते पदार्थैकदेशव्यापारे तथान्वयस्वीकारे मानाभाव इत्याशयात् ननु पचति भवतीत्यादौ पृथक्पदाभ्यामुपस्थितयोस्तथान्वयोऽस्तु नाम पक्व इत्यादौ त्वेकेनैव पदेनोपस्थितयोस्तथान्वयस्यादृष्टतया अध्याहारस्यासम्भवद्युक्तितया चेत्थमेवेत्यनुपपन्नमित्यत आह सर्वसम्मत इति प्रकृतेपीति पश्य मृगो धावतीत्यादावपि भाष्यसम्मतरीत्याह वस्तुत इति तत्रापि पचतीत्यादिस्थलेपि संसर्गतैवेति कर्मत्वस्येति शेषः यदाध्याहारस्यसम्भवे कदाचिद्विशेषणत्वसम्भावना स्यात्तस्यात्रासम्भव एवेत्याह उपस्थितिपूर्वकमिति तत्र भावनायाम् त

वादिप्रतिवाद्युभयसम्मतस्य दृष्टान्तत्वमित्याशयेन शोभनम्पचतीत्यादेर्दृष्टान्तत्वमित्याह तत्रेत्यादिना धावतीत्येतद्घटकधातुजन्योपस्थितिविषयक्रियायाः
सर्वेषां न विशेषणत्वमत आह अन्वयबोधकालइति एवञ्च द्वितीयानुत्पत्तेर्दुरुपपादत्वेन तथाप्रयोगविलय एव पश्यमृगो धावतीति प्रयोगविलय
एव यत्तु वासरूपन्यायेन तिङ् भविष्यति मृगपदादनन्तरङ्गत्वात्प्रथमास्त्विति न प्रयोगविलय इति तन्न त्वादेशेषु वासरूपन्यायाभावस्य भाष्यकारमतसि
द्धत्वात् प्रधानकार्यस्यान्तरङ्गादपि बलवत्त्वस्य हेतुमतिचेति —— सूत्रभाष्यसम्मतत्वाच्च अध्याहारेणेति यत्तदोर्नित्यसम्बन्धेन यच्छब्दस्य तमित्यस्य

दृष्टान्ते शोभनं पचतीत्यादौ तत्र नव्यनैयायिकवैयाकरणयोरुभयोरपि मते फलव्यापारयोः परस्परान्वयस्य सत्वेन न तु यद्दृष्टा
न्तत्वोचित्यात् पश्य मृग इत्यादौ धावनदर्शनयोरन्वयस्य नैयायिकासम्मततया साध्यत्वेन न दृष्टान्तत्वमिति बोध्यम् दार्ष्टान्तिकेप
श्य मृगो धावति पचति भवतीत्यादौ विशेषणसमर्पकादिति अन्वयबोधकाल इत्यादिः दुरुपपादत्वादिति एवं च तथा प्रयो
गविलय एव स्यादिति भावः गौरवादिति एकवाक्यतया अन्वये संभवति अध्याहारेण वाक्यभेदे गौरवमिति भावः ॥ ७ ॥

वाध्याहारेणेत्यर्थः वाक्यभेद इति यो धावति मृगस्तम्पश्येत्येवंरूपवाक्यभेद इत्यर्थः प्रामाणिकमिति प्रामाणिकस्य पश्य मृगो धावतीत्यादिवाक्य
स्योपपत्तिप्रयोजकमित्यर्थः शानृसूत्रस्थेनेति शानृविधायकसूत्रस्थेनेत्यर्थः तत्र हि लस्याप्रथमासमानाधिकरणेनायोगादादेशानुपपत्तिरिति वार्तिकम् अयम्भा
वः लः कर्मणीत्यनेन विधीयमानो लकारः क्रियाप्रधानीभूतास्ति गुणभूते कर्तृकर्मणी प्रतिपादयति क्रियाप्रधानमाख्यातमिति सिद्धान्तात् एवञ्चैकविशेष
णत्वेनोपस्थितस्य कारकस्यान्यत्र तथान्वयायोगात् प्रथमासामानाधिकरण्यन्नोपपद्यत इति एवम्पूर्वपक्षे त्वभ्युपेत्यवादेन अयमर्थस्तत्र ॥ ८

भवतियोगइतिचेत् अन्यत्रापियोगःस्यात् सान्यत्रलिङि अपचदोदनन्देवदत्तइति अत्रापिलवाच्यसाधनस्यदेवदत्तेनसामानाधिकरण्येसति अपचदोदन
न्देवदत्तस्त्वयस्येति प्रयोगापत्तिरितिभावः यतस्त्वेवंसूत्रमनुपपन्नंस्यादितिसमाहितम् अथवाआदेशेसामानाधिकरण्यन्दृष्ट्वानुमानाङ्गत्वमप्रकृतेपिसामा
नाधिकरण्यंभवतीति शत्राद्यादेशयोर्योल्लकारः अप्रथमासमानाधिकरणः अप्रथमासमानाधिकरणादेशस्थानित्वात् तादृशलकारोयद्यप्रथमासमाना
धिकरणेनस्यात्तदा प्रथमासमानाधिकरणत्वेनशास्त्रानुवादविषयोनस्यादित्यनुकूलस्तर्कः भूवादिसूत्रस्थेनकातर्थ्यमित्यादिनाकथितेन मुनिवचनेन

ननुप्रामाणिकंगौरवंनदोषायेत्यतआह तस्यचेति शास्त्रसूत्रस्थेनभूवादिसूत्रस्थेनचमुनिवचनेनविरोधइतिबोध्यम् । अ
किंचित्करत्वादिति ऋषीणामेकवाक्यतयाबोधेसाधुत्वस्यच्छासत्वेइत्यादिः नास्तीति एवंचतत्रद्वितीयादुर्वारेतिभावः नचे
दृशोस्यत्वेविशिष्टस्यदेवदत्तस्यमृगादेः कर्मत्वम् विशिष्टवाचकंचनप्रातिपदिकमितिनदोषः श्रुत्वाममैतन्माहात्म्यंतथाचो
त्पत्तयःप्रभाइति वदितिवाच्यम् नीलत्वविशिष्टस्य घटस्यकर्मत्वेप्रतिपादनीयेनीलघटमित्यादौद्वितीयानापत्तेः ॥ ७ ॥

यथाक्रमंवार्तिकभाष्यकारवचनेन उभयसङ्ग्रहार्थमेवात्रमुनिपदोपादानम् नव्यनैयायिकानामपिशास्त्रार्थनिर्णायकतयातान्प्रतित्वदीयेनिकथन
मनुचितमित्याह ऋषीणामिति द्वितीयादुर्वारेति देवदत्तशब्दादितिशेषः नैयायिकानुयायिनः शङ्कान्निरस्यति नचेत्यादिना विशिष्टस्येति पाकानु
कूलभूतकालिकव्यापारविशिष्टस्यदेवदत्तस्यधावनानुकूलवर्तमानव्यापारविशिष्टस्यमृगस्येत्यर्थः एवंचयत्रावयवस्यकर्मत्वादिकमस्तिद्वितीयादि
तुनदृश्यते तत्रायमेवप्रकारोबोध्यः अत्रसाधकन्दृष्टान्तमाह श्रुत्वेत्यादिना द्वितीयानापत्तेरिति ॥ ७ ॥

तस्माद्विशिष्टस्याप्रातिपदिकत्वेऽपि वाक्यावयवस्य प्रातिपदिकस्य तन्नच्छक्ति योग्यतायां तद्बोधिका विभक्तिर्भवत्येवेति कल्पनीयमत एव कष्टश्रीम्समुदायं शोभ
नमित्यत्र द्वितीयोपपादकभाष्यसङ्गतिः तस्माद्विशेष्यवाचकाद्यत्र द्वितीयादिविभक्तिस्तत्र तत्समानाधिकरणविशेषणवाचकेभ्योऽपि सा भवति राज्ञः पुरुषस्या-
भ्येत्यत्र तु राज्ञ इति व्यधिकरणमेव श्रुत्वेत्यादेरुपपत्तिमाह आर्षमिति एवञ्चार्षत्वात् त्यये न द्वितीयास्थाने प्रथमा पूर्वसवर्णदीर्घाभ्यां वेति रूपमत एव
बोध्या पश्यत्लक्ष्मणपम्पायां बकः परमधार्मिक इत्यादावपीयमेव गतिः सति सम्भवे नोचेत्साधुत्वमेव नच पश्य मृगो धावतीत्यादौ क्रियाया एव कर्मत्वे
तण्डुलमपाक्षीद्देवदत्तो वेद्वीत्यादौ तण्डुलादीनां कर्मणा यमभिप्रैति स सम्प्रदानमिति सूत्रेण सम्प्रदानसंज्ञायाञ्चतुर्थी स्यादिति वाच्यम् एतादृशस्य
ले स्वार्थे परिपूर्णस्यार्थान्तराकाङ्क्षेति न्यायेनान्तरङ्गत्वादेकक्रियासम्बन्धेन कर्मत्वादिकम्भवत्येव अत एव घटं त्वं पश्यामीत्यत्र पश्यन्तेऽर्थान्वयः

श्रुत्वेत्यादित्वार्षमित्यलं सुनिविरुद्धविचारेण क्रियाप्रधानमित्यत्र क्रियायाः प्राधान्यमाख्यातघटकप्रत्ययापेक्ष
यैवबोध्यते ऽतो द्रव्यादिकं प्रति धावनादेर्विशेषणत्वेऽपि न क्षतिरिति दिक् ॥ ७ ॥ ७ ॥ ७ ॥

पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः इत्यादि पदैर्न च द्वितीयाद्यन्तात् विशिष्टार्थे सास्तास्य पदार्थान्वय इत्याशयादित्याशयेनाह अन्तमिति धावनादिक्रियायाः क्रियान्तरप्र-
तिविशेषणत्वेऽपि न भाष्यवचनविरोध इत्याशयेनाह क्रियाप्रधानमित्यत्रेति नैयायिकानुयायिनस्तु पश्य मृगो धावतीत्यादौ धावनानुकूलकृतिविशिष्टमृगा-
देर्दर्शनक्रियाप्रतिकर्मतासम्बन्धेन विशेषणत्वम् न च नामार्थधात्वर्थयोर्भेदेनान्वयबोधो व्युत्पन्न इति व्युत्पत्तिविरोधः विशिष्टस्य नामार्थत्वाभावात्
न च प्रभुः स्त तण्डुलः पचतीत्यप्येवं सति स्यादिति वाच्यम् प्रामाणिकप्रयोगस्थल एवैतादृशकल्पनान्न तु सर्वत्रेति स्वीकारात् व्युत्पत्तिनियामकसम्बन्ध-
स्याभावप्रतियोगितावच्छेदकत्वस्वीकाराद्ब्राह्मणो धावति न पश्येत्यादौ बाधानुपपत्तिरित्याहुः तन्न तादृशकल्पनायामपि भावप्रधानमाख्यातमित्यादि
वाक्यस्य भाष्यादिसम्मतार्थकस्य विरोधो दुर्वार एवेत्याशयेनाह दिगिति ॥

शाब्दविधायकस्यमिति तच्चप्रदर्शितमधस्तात् ननुधात्वर्थोपस्थितफलव्यापारयोरन्यतरस्यान्यतरस्मिन्निरूपितकर्मत्वकरणत्वकर्तृत्वस्यस्वीकारादिदन्नास्य स्वरूपताप्रतिबन्धकमत आह क्रियान्तरेति तथाचतयोरन्यतरस्यपरस्परस्मिन्नितथात्वेपिक्रियान्तरनिरूपितत्त्वस्यप्रतिबन्धकंस्यादेवेतिभावः ननुकारक शब्दस्यशक्तिमत्परत्वेनपूर्वपक्षविरोधापत्तिरतआह करणादीति भिन्नपदोपात्तक्रियान्तरनिरूपितेत्यादि अतएवबस्यतिस्ववाचकेत्यादि ननुक्रि यान्तरस्मिन्निक्रियायाः करणत्वंहरिन्नमेदित्यत्रभुक्त्वात् सोनपीत्वेत्यत्रचनमनभोजनयोर्दृष्टमेवेत्यतआह हरिन्नमेदित्यादि दर्शनादिति सर्वत्रैव

भाष्येति भूवादिसूत्रस्थंभाष्यंपचादयः क्रियाभवतिक्रियायाः कर्त्र्योभवन्तीतितत्रोक्तम् वार्तिकंशाब्दसूत्रस्थम् तस्यक्रिया विशिष्टक्रियाबोधस्यकर्मत्वस्वीकार इतिक्रियान्तरनिरूपितत्वेन स्वीकार इत्यर्थः कारकस्यकरणादिकारकशक्तेः हरिन्नमे इत्यत्रतुस्वयापादित्यादौहेतुहेतुमद्भावेनान्वयोनक्रियाकारकभावेनेतिनदोषः स्ववाचकधात्वर्थस्मिन्नितुकर्मत्वान्वयः करणा नान्वयश्चनासत्वरूपताप्रतिबन्धकः शोभनंपचतिज्योतिष्टोमेनयजेतेत्यादौतथादर्शनात् अन्यत्रैनिकर्मत्वस्यसर्वत्रसंसर्गत्वेनैवेति। भाष्यस्मिन्तपक्षेत्वाद्यमेवसारम् अभिहितेत्विति॥ ८॥ यत्कृपदोपात्तक्रियानिरूपितकरणत्वाद्ययोगित्वमसत्वरूपत्वमितिफलितम् सर्वत्रत द्वाचकविभक्तेः सत्वेऽसत्वेवा आद्यमेवेति इदञ्चसामान्यतोऽभिहितम् वस्तुतस्तुलिङ्गसङ्ख्यानन्वयित्वङ्करणादिशक्तिरूपेणभिन्नपदोपात्तक्रि यायामनन्वयित्वंवाऽसत्वरूपत्वमितिलक्षणद्वयमेवबोध्यम् कारकस्यविभक्त्यर्थत्वपक्षेउक्तार्थानामितिन्यायेनाभिधानस्थलेविभक्तेरप्राप्तावपिस ङ्ख्याविभक्त्यर्थइतिपक्षेसूत्रस्यावश्यकतानैवेत्यतआह तिङादिभिरिति भाष्यकृत्परिगणनलब्धमिदम्॥ ७ ॥ ७ ॥ ७ ॥

उद्भूतेति उद्भूतकर्मत्वादिशक्तिके ऽर्थे वर्तमानादित्यर्थः ऽनभिहितइति सूत्रात्तात्पर्यग्राहकमिति भावः उद्भूतत्वञ्चतिङाद्यद्योत्यत्वम् प्रथमानुप्राति-
पदिकार्थस्याभिधानेपि भवत्येव अतएवाभिहितेप्रथमेति वार्त्तिकमभिहित तत्सोऽर्थोन्तर्भूतः प्रातिपदिकार्थः सम्पन्नइति भाष्यञ्चसङ्गच्छते अभि-
धानादिति ओदनपदार्थगतकर्मत्वशक्तेरित्यर्थः प्रधानविषयत्यादिनाप्रदर्शितानुरोधेनप्रक्रान्ताशङ्कासमाधानासम्भवादाह तुल्यन्यायादिति अ

तिङादिभिः कर्मादिशक्तेरभिधाने प्रातिपदिकस्योद्भूततच्छक्तिके ऽर्थे वर्तमानत्वाभावात् द्वितीयादेः कर्मादिशब्देभ्यइव।
प्राप्तिरिति भावः नस्यादितीति पचधातूत्तरतिङाऽभिधानादिति भावः गुणाश्रया गुणनिरूपिता प्रधानम् प्रधानक्रिया
निरूपितांशक्तिम् अनुरोधमेवविशदयति प्रधानविषयेति गुणे ऽनुक्तापिनद्वदुत्वत्प्रतीयतेतुल्यन्यायाद्गुणनिरूपि-
ताउक्तापिप्रधाननिरूपितानुक्तशक्तिवत्प्रकाशतइति अतएवप्रासादे आस्तइत्यादौ सदिनिरूपिताधिकरणत्वस्योक्त-
त्वेप्यासिनिरूपितानभिधानेनानभिहितत्वात्सप्तमीसिद्धिः इदंचस्वादुमिणमुलितिसूत्रेभाष्येस्पष्टम् तत्रत्यभाष्यार्थस्तुवा-
दिन्योचेमेद्वरिकारिकेइत्यन्यत्रप्रपञ्चितम् एवमुभयनिरूपितशक्तेरनभिधानेगुणक्रियानिरूपितशक्तेरप्यभिधायिनी।
विभक्तिर्भवति यथाग्रामायगच्छतिग्रामंगन्तुमिच्छतीतिचेष्यते ॥

तएव उक्तानुरोधस्यसत्वादेव सदिनिरूपितेति प्रआङ्-
पूर्वात्सद्धातोरधिकरणेघञ् आदिनाशयनेआस्तइत्यस्यसङ्ग्रहः स्वादुमिणमुलितिसूत्रेभाष्यइति इदमनुपदमेवव्यक्तीभविष्यति अनुरोध-
मेवविशदयति एवमुभयेति इतिचेति॥ २ । १ ॥ १ ॥ १ ॥ १ ॥

गत्यर्थकर्मणीति द्वितीयाचतुर्थ्यौ प्रकृतार्थभाष्यान्तरतोद्रढयति दृश्यतइति नकदापि गन्तुमित्यत्रग्रामपदार्थस्यान्वयकाले एतेनार्थोन्वयः शाब्दा न्वयोवोभयथाचतुर्थीद्वितीययोरप्रवृत्तिर्ध्वनिता सचशाब्दोऽन्वयः सकर्मकत्वस्यनसम्भवतीत्यावृत्तिरपिसूचिता कदापीत्यस्योपादानात् तन्सूत्रइति सन्निधायकेधातोः कर्मणइतिसूत्रइत्यर्थः वस्तुतस्त्वित्यादिनायन्मनोरमायामभिहितन्तस्वादुमीतिसूत्रस्थभाष्यविरुद्धमितिकेचित्तन्मनोरमाका रस्यतत्रनिर्भराभावादितिसूचयन्नाह एवञ्चैतद्विरोधादिति अत्रप्रयोगइत्यारभ्ययत्नेयदेनोक्तन्तद्विरोधात् यद्यपिस्वादुमीतिसूत्रस्थभाष्यमादा

ग्रामोगन्तुमित्यादौप्रधानेषिक्रियानिरूपितशक्तेरभिधानेगुणनिरूपितायाअभ्यभिधानान्नकदापिचतुर्थीद्वितीयेगमेर्ग्रा मःकर्मद्वेषेत्स्मेकर्मणीइतिसन्सूत्रेभाष्येस्पष्टम् एवंचोभयत्राप्यावृत्त्याशाब्दोऽन्वयइत्येवप्रतीयते अत्रप्रयोगेगामिक्रि यापेक्षेद्वितीयाचतुर्थ्यौनकदापिभवतइतिकैयटात् एवंचैतद्विरोधादोदनंपक्तुमित्यपीष्टमेवेति यत्केनचित्प्राचीनेनवस्तुत स्तुपक्तेत्यादिनासाधुइत्यन्तेनोक्तन्तदतितुच्छइतिबोधयन् स्वरूपव्याक्रियैवपराक्रियेति न्यायेनतथैवानुवदति वस्तु तस्त्वित्यादिना अतएवस्वादुमीतिसूत्रेभाष्येतुमुन् ण्वुल्णमुलादयःस्वान्वयिनासमभिव्याहृतेनानुप्रयुज्यमानेनसमानाधिक

वेववक्तुमुचितन्तथापिकैयटोक्तमपिसप्रमाणमितिबोधयितुंतद्भाष्यमाह अतएवेत्यादिना उक्तार्थेस्पष्टत्वादेवे ((वणेतद्धाप्यकारकेवतव्याः त्यर्थः आचतुमुनः समानाधिकरणेप्रत्ययाइतिहितन्नवार्तिकन्तस्यव्याख्यानपरम्भाष्यमाह तुमुन् ण्वुलितितुमुनस्तत्रत्यमुदाहरणंभोक्तुमोदनःपच्यतइति वार्तिकस्थंयत्समानाधिकरणपदन्तदर्थस्यप्रतियोग्याकाङ्क्षा शान्त्यर्थंपूरणेनपद्भाष्यकृतोक्तन्तदाह स्वान्वयिनेति तुमुनादिप्रकृत्यर्थान्वयिनेत्यर्थः एतस्यैवराम वविवरणंसमभिव्याहृतेनेत्यारभ्यानुप्रयुज्यमानेनेत्यन्तम् आख्यातेनेतिशेषः समानाधिकरणइति समानमेकंपदधिकरणंद्रव्यरूपकारकंतस्मिन्निति॥

एवञ्चाख्यातवाच्यकारकाभिन्नत्वं यत्क्त्वादिप्रकृत्यर्थे कारकत्वमस्तीति फलितम् कारकभेदे तु गुणीभूतक्रियाकर्मत्वबोधिका द्वितीया भवत्येव यथौ
दनं ह्रामो गम्यत इतियथा पूर्वोक्तवचनारम्भफलमाह तेनेति द्वितीयानेति पचधात्वर्थकर्मत्वबोधिकेति शेषः नवक्तव्यमिति उक्तार्थकत्वादिति कामि
त्यर्थः विधानादिति अव्ययकृतो भावे इति वचनादित्यर्थः लभ्यत इति अन्यथा आरम्भप्रत्याख्यानयोः फलभेदापत्या तदसङ्गतिः स्यात् सतदेवो

तेन पक्वौदनो भुज्यत इत्यादावोदनेन द्वितीया अन्यथाक्त्वादस्य कर्तृत्वोपनीतोपचिक्रियाकर्मत्वस्यानभिधानात्सा स्यादेवेत्यु
क्तानवक्तव्यम् अव्ययकृतो भावे विधानादित्युक्तम् अनेन हि भाष्येणोभयत्र शाब्दान्वयस्वलभ्यते तत्र वचनारम्भसंप्रत्यो
र्गणमुपपत्त्यभावात्प्रत्याख्याने यिद्धयुक्तरीत्यासन्नादिसूत्रस्थभाष्यसम्मतयाभावस्वोचितः एवञ्च कैयटोक्तसुधप्रतिहत्तुं शक्य
मित्यप्यसाध्वेवचनारम्भे सिद्धेः तुमुनाद्यन्वयिक्रियानिरूपितशक्तेरयं स्वभावो यत्स्वसमानाधिकरणगुणभूततुमुनादिप्रकृत्य
र्थनिरूपितशक्तेः स्ववदभिहितत्वेनानभिहितत्वेन वा प्रकाशनमिति सुधियो विभावयन्तु क्रियोरन्यतरेण सहेति इदं प्रागुक्तव
स्तु नभिन्नत्यादिशीत्योक्तं तदेवेति बोध्यम् मैवमिति ग्रामं गन्तुमित्यादौ ॥ ५ यपादयति तत्रेति आरम्भप्रत्याख्यानयोर्मध्ये सभाम् मूलोक्ता।
नाम् सन्नादीति आदिना स्वादुमीत्यस्य सङ्ग्रहः असाध्वेवेति अतएव शुक्लं तदनुं शक्यमिति भाष्यकारीयप्रयोगस्य सङ्गतिः एवं चोक्तभाष्यद्वयबलाद्य
त्फलितं तद्दर्शयति तुमुनाद्यन्वयीति स्वसमानाधिकरणेति अत्र स्वपदं शक्तिपरम् तदेवेति खण्डनीयमेवेत्यर्थः मैवमित्युक्त्वा शाब्दबोधवै
लक्षण्यसूचनाय कर्तुरीप्सिततममित्यस्यारम्भ इति नोक्तमिति न्यूनतापरिहाराय स्वयमाह ग्राममिति ॥ ६ ॥ ६ ॥

ईप्सिततमत्वोपलक्षितमिति इच्छार्थकसन्प्रत्ययसत्वात् तेनोद्देश्यत्वं लक्ष्यते अत एव उद्देश्यत्वस्य भानादेवगामिति अस्य विप्रायेत्यादिः गोरपीत्य पिना विप्रसमुच्चयः नत्वेव गवैव त्र्ययम्भावः काकेन पुण्डरीकादिकं यथा परिचाय्यते तेन गृहविशेषस्य प्रतीतिस्तथा ईप्सिततमशब्दस्येच्छार्थकसन्प्र त्ययघटितत्वात्तेनोद्देश्यत्वमुपलक्ष्यते अत एव प्रकृत धात्वर्थप्रधानीभूतव्यापारजन्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वमीप्सिततमत्वमिति कथ यन्ति गां च विप्राय गां ददातीत्यत्र स्वस्वत्वध्वंसविशिष्टपरस्वत्वोत्पत्त्यनुकूलव्यापारस्य धात्वर्थतया इच्छारूपतादृशव्यापारस्य विप्रविषयकत्वेन विप्र स्य सम्प्रदानसंज्ञा जायते कर्मणेत्यस्य सत्वे तदभावे तु यमभिप्रैतीत्यर्थफलाश्रयत्वेनाभिसम्बन्धुमिच्छतीत्यर्थः स्यात्तथा च गोः सम्प्रदानत्वस्य प्राप्तिरिति।

ईप्सिततमत्वोपलक्षितमुद्देश्यत्वं भासते एतत्सूत्रबोध्यकर्मत्वशक्तेरुद्देश्यतासमानाधिकरणत्वात् अत एव कर्मणा यम भिप्रैतीति सूत्रे कर्मणेत्यस्याभावे गां ददातीत्यत्र गोरप्युद्देश्यतया तत्रैव पर्यायेण सम्प्रदानसंज्ञा स्यादिति भाष्यकैयटोक्तं संग च्छते चतुर्थ्या उद्देश्यत्वं वाच्यम् तत्समानाधिकरणशक्तिर्वेति॥ ॥ दाधातुप्रयोग एव सम्प्रदानसंज्ञा भवतीत्यस्याना श्रयणाद्धात्वन्तरार्थ योगेपि तत्प्राप्तिरित्याशयेनाह पर्यायेणेति तदनाश्रयणे मानन्तु प्रकृतभाष्यमेव यमभिप्रैतीत्यत्र कर्तृबोधक तिङ्सत्वात्केनाभिप्रैतीत्याकाङ्क्षायां स्वानिष्ठक्रिययेति प्रतीतिः स्यात्तया क्रियया प्रथमतो गोरभिप्रेयते पश्चाद्भवाविप्रइति गोरन्तरङ्गत्वात्सम्प्रदानसंज्ञाप्राप्तिः एतेन विप्रे सम्प्रदानसंज्ञा चरिता र्था धात्वन्तरार्थयोगे कर्मत्वञ्चरितार्थमिति परत्वाद्गोः कर्मसंज्ञैव स्यादिति कर्मण एव स्यादिति भाष्यस्य तात्पर्यमिति ध्वनितम् उद्देश्यत्वञ्च फलात्मकधा त्वर्थग्राह्यम् क्रियायाः फलेच्छापूर्वकेच्छाविषयत्वात् तदाश्रयत्वाद्ग्रामादेरप्युद्देश्यत्वव्यवहारः चतुर्थ्या उद्देश्यत्वार्थकत्व एवोक्तभाष्यसङ्गतिरित्याशयेनाह

चतुर्थ्या इति शक्तिः सम्प्रदानत्वशक्तिः॥

उद्देश्यत्वन्तु उद्देश्यपदशक्यतावच्छेदकम्पदार्थान्तरम् यत्तु इच्छाविषयत्वमेवोद्देश्यत्वमिति तन्न घटो द्रव्यमित्यादौ उद्देश्यविधेयभावेनान्वय इति
व्यवहारस्येच्छाविषयत्वस्याप्रतीतावपि दर्शनात् उद्देश्यत्वमेव चतुर्थीवाच्यमिति प्राचीनमतन्तत्समानाधिकरणसम्प्रदानत्वमिति प्राचीननवीनोभय
सम्मतमित्याशयेनाह सर्वसम्मतमिति एतेन प्रघट्टकेनोद्देश्यत्वस्य भानार्थङ्कर्तुरीप्सिततममिति सूत्रमनुद्देश्यत्वभानार्थन्तथायुक्तमिति सूत्रमिति सू
त्रकाराशयो वर्णितः विप्राय गान्ददातीति शब्दाद्विप्राभिन्नसम्प्रदाननिष्ठोद्देश्यतानिरूपकन्दानमिति सम्प्रदानविप्रीयं विप्रसम्प्रदानकमिति वा बोधः फ
लान्तरम् पृथक्सूत्रद्वयोपादानस्य फलान्तरम् यदुतम्मूले माणवकस्यापादानत्वम्प्राप्तमिति तदाशयमाह ईप्सिततमपदाभाव इत्यादिना तदपवादत्वा

सर्वसम्मतमिति भावः फलान्तरमप्याह अग्नेरिति ईप्सिततमपदाभावे वारणार्थानामित्यस्यैतदपवादत्वापत्तेः नचाग्नेरनन्वयिता
र्थम् तस्यापि तदुपस्थाप्यसंयोगरूपफलाश्रयत्वात् वारयतेश्च संयोगाद्यनुकूलव्यापाराभावानुकूलव्यापारोऽर्थः तत्रापी
प्सितशब्दः क्रियाशब्दस्य वृद्धीप्सिततममित्युक्तोऽईप्सितमात्रे सावकाशस्य परत्वादीप्सिततमे नबाधः ॥ ६ ॥ ७ ॥

पत्तेः वारणार्थकधातुयोगे ईप्सितस्यापि कर्मत्वं प्राप्तमिति निरवकाशतया कर्मसंज्ञापवादत्वापत्तेरित्यर्थः तत्रापि वारणार्थानामिति सूत्रेऽपि अत एव कूपादन्धं
वारयतीत्यादौ कूपादेरपादानत्वस्य सिद्धिः यदीप्सितशब्द इच्छाविषयपरः स्यात्तदा तत्र कूपस्येच्छाविषयत्वाभावान्न स्यात् ईप्सिततममित्युक्ताविति वारणा
र्थकधातुयोगे माणवकादेः कर्मणोऽपवादत्वात्प्राप्तापादानत्ववारणाय ईप्सिततममित्येतत्पदघटितसूत्रकरणे इत्यर्थः सावकाशस्येति अयम्भावः शुक्लत
मः पट इत्यादौ यथा प्रवृत्तिनिमित्तशौक्ल्यगतप्रकर्षे तमप्प्रत्ययो भवति तथात्रापीप्सितशब्दस्य यत्प्रवृत्तिनिमित्तमाप्तीच्छा तस्याः प्रकर्षे तमपा भवितव्या
मिच्छायाः प्रकर्षस्तु यद्यपि स्वतः सम्भवति तथापि व्याख्यानात्तद्विशेषणाप्तिगतः प्रकर्ष इह विवक्षितः आप्तिश्च धात्वर्थफलानुकूलव्यापारात्मकः ॥ ७ ॥
नत्वयं संयोगानन्तर्कर्तृव्यापारजन्यः तत्र कर्तृपदस्याभावात् + ६ पं. अ.

सम्बन्धस्तत्कर्मत्वं प्रकृते तादृशसम्बन्धघटकफले धात्वर्थप्रधानीभूतव्यापारप्रयोज्यत्वरूपः एवञ्च वारयतेरुत्तरदेशसंयोगानुकूलव्यापाराभावा
नुकूल —— व्यापारार्थकतया तद्घटकतादृशव्यापाराभावात्मकफले प्रधानव्यापारप्रयोज्यत्वसत्त्वात्तदाश्रयमाणवकादेः कर्मसंज्ञा प्रवर्तते।
यवेभ्यो गां वारयतीत्यादौ तु भक्षणानुकूलव्यापाराभावानुकूलव्यापारात्मकः प्रवृत्तिविघातस्तद्घटकप्रधानव्यापारप्रयोज्यभक्षणानुकूलव्यापाराभावात्मकफलाश्रयत्वा
द्गोः कर्मत्वम्भवति ईप्सिततमशब्दघटकेन सन्नादिच्छार्थकेनोद्देश्यत्वमुपलक्षितमिति प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफला
श्रयत्वेनोद्देश्यत्वं कर्मसंज्ञाप्रयोजकन्तच्च न कूपादाविति तेष्वपादानसंज्ञा चरितार्थेति सार्द्दृशप्रकर्षयुक्तफलाश्रयेकर्मसंज्ञया बाध्यते वारणार्थानामि
ति सूत्रघटकेप्सितशब्दार्थस्तु वारणार्थकधातूपस्थाप्यफलाश्रयत्वरूपः स तद्घटकाभावप्रतियोगि व्यापारप्रयोज्यफलमुत्तरदेशसंयोगादि तदाश्र

ईप्सिततमत्वं च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम् अत एवाप्येनोद्देश्यत्वप्रतीतिस्त
त्रेति भावः नत्वावश्यकमिति द्रष्टव्यसंग्रहोपि ॥ ॥ यत्त्वादमिकूपादावपादानसंज्ञा भवतीति यतः सन्प्रत्ययेनोद्देश्यत्वमुपलक्षितमत एवाह।
अत एवेति यत ईप्सिततमत्वमुक्तरूपात्मकं विवक्षितमत एवेत्यर्थः तत्र अग्नेर्माणवकं वारयतीत्यत्र उक्तरूपात्मकेप्सिततमशब्दार्थघटकफल व्यापा
रयोः प्रकृतत्वन्तु प्रत्यासत्त्या लब्धम् तत्फलन्तु पदामाषभक्षणेनाश्वस्य पुष्टिर्जायतामितीच्छया माषक्षेत्रस्य वाश्वं बध्नन् नापि पुरुषेण कृतन्तत्र माषेष
श्वं बध्नातीति प्रयोगो भवति तादृशस्य लोकानुमतत्वेनोद्देश्यः प्रधानीभूतो व्यापारस्तत्प्रयोज्यफलं लाभः संयोगोपि तदाश्रयत्वान्माषाणाङ्कर्मसंज्ञा स्या
दिति तदुदाहरणम् भक्षणरूपफलस्य बन्धधात्वर्थत्वाभावात् उक्तरीत्या ईप्सिततमपदघटितसूत्रेणोक्ते द्रष्टव्यस्योदासीनस्य च कर्मसंज्ञासिध्यर्थन्तथा युक्तमि
ति सूत्रमपि कार्यन्तच्चेप्सिततमभिन्नसङ्ग्रहार्थमिति द्रष्टव्योदासीनयोः सङ्ग्रह इत्याशयेनाह द्रष्टव्यसंग्रहोपीति ॥ ॥ ॥

नन्वनीप्सितपदाभावेन तथायुक्तमित्यस्येप्सिततमवत् क्रियायुक्तं क्रियाजन्यफलाश्रयः कर्मेत्यर्थः स्यादेवञ्च कूपादन्धं वारयतीत्यादौ कूपादेर्निरुक्तेप्सिततम-
भिन्नत्वात्पुनरपि वारणार्थानामिति सूत्रान्निरवकाशमिति वाच्यम् द्वेष्योदासीनयोरेव कर्मसंज्ञा यथा स्यादित्येवमर्थमनीप्सितपदमपि कर्तव्यन्तदर्थञ्चेप्सिततमभि-
न्नमित्येवं न किन्तु नञोऽसुराधर्मादिपदघटकनञ्वदीप्सिततमविरोधीत्यर्थः तद्विरोधश्च द्वेष्योदासीनयोः तत्रोदासीनत्वमिच्छाद्वेषयोर्यत्राभावस्त-
त्त्वमेवञ्च कूपादेर्निरुक्तोदासीनत्ववत्त्वेपि प्रधानीभूतधात्वर्थव्यापारजन्यफलाश्रयत्वस्य तथायुक्तत्वमिह विवक्षितमिति तथायुक्तत्वाभाववत्त्वेन न तथायु-
क्तमित्यस्य प्राप्तिरित्याशयात् नचैवन्तथायुक्तमित्येवास्त्विति वाच्यम् पयसः करणत्वविवक्षायां पयसा ओदनं भुङ्क्ते इति यत्र प्रयोगस्तत्र पयसः कर्मत्ववार-
णाय तथायुक्तञ्चानीप्सितमित्यस्याप्यावश्यकत्वात् नचैवन्नत्वावश्यकमिति मूलविरोध इति वाच्यम् मूलस्य यथाश्रुताभिप्रायकत्वात् अत एव दोक्ता-
भाव इति मूलकारस्य भावो वस्तुतस्तु तदावश्यकमित्यत्र तात्पर्यम् पयसो यदा करणत्वमात्रविवक्षा तदा प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्र-

व्याख्यानादेव भविष्यतीति भावः तस्यापीप्सिततमभिन्नत्वात् एकरूपेणैवेति इच्छाविषयत्वानिच्छाविषयत्वभानकृतवैरूप्यरहितद्रूप-

कृतधात्वर्थफलाश्रयत्वेनोद्देश्यतापन्नेनेति तस्य न कर्मसंज्ञा द्वेष्योदाहरणञ्चोरान् पश्यतीति अत्र चोराणामिन्द्रियसंयोगाद् दृश्यमानत्वेपि न ऽर्थः॥
तेदर्शनोद्देश्यत्वमिति न पूर्वसूत्रस्य प्राप्तिरिति बोध्यम् व्याख्यानादेवेति तथाशब्दोपादानमूलकादित्यर्थः केचित्तु प्रकृतधात्वर्थफलवत्कर्मेत्येव सूत्रङ्कार्यन्त-
थायुक्तमिति न वाच्यमिति लाघवम् नचैवम् लोकरीत्या वारणार्थानामीप्सित इति सूत्रमनवकाशन्तया कर्मसंज्ञाया वारणार्थकधातुप्रयोगे बाधकं स्यादिति
वाच्यम् प्रवृत्तिविघातो हि वारणम् प्रवृत्तिविघातश्च प्रवृत्तिध्वंसानुकूलव्यापार एव स एव च सर्वत्र वारयतेरर्थः एवञ्च कूपान्यादौ नैतादृशधात्वर्थफ-
लाश्रयत्वमिति कूपादेर्न कर्मत्वप्राप्तिरिति वारणार्थानामित्यस्य चरितार्थत्वात् द्वेष्योदासीनयोस्तु धात्वर्थफलाश्रयत्वाद्भविष्यति कर्मत्वमित्याहुः तदयुक्त-
लम् उक्तरीत्या शाब्दबोधकृतवैलक्षण्यसम्पादनाय सूत्रावश्यकत्वस्योक्तत्वात्॥

किन्त्वयदानगविप्रवृत्तिः किन्तुसम्भावितप्रवृत्तिप्रागभावस्यात्यन्ताभावस्यवाविवक्षामाह शास्थले ध्वंसस्यप्रतियोगिपूर्वकत्वेनप्रवृत्तिध्वंसस्यसम्भवाद्येभ्यो
गांवारयतीतिप्रयोगानुपपत्तिरितिप्रवृत्तिध्वंसानुकूलव्यापारमात्रस्यवारयत्यर्थत्वमयुक्तमेव हेष्योदाहरणञ्चोरान्पश्यतिव्याघ्रान्पश्यती त्यादेव ननुवि
षस्भुङ्क्ष्वइति महाभयादिभ्योदुःखस्यसम्भावितस्यनिवृत्त्यर्थंयदाविषमत्स्यति तदाभक्षणक्रियाजन्यफलाश्रयत्वादुद्देश्यत्वाच्चतस्यकर्तुरीप्सितत्वेनकर्मत्वस्या
सिद्धत्वात् अतएवयएषमनुष्योदुःखार्तोभवतिसोऽन्यानिदुःखान्यनुनिशम्यविषभक्षणमेवज्यायोमन्यतेऽतश्चेप्सितयत्तदक्षयतीतिभाष्यकारेणोक्तमुद

तदाह ईप्सानीप्सादेरिति इच्छाविषयत्वानिच्छाविषयत्वयोरादिनाद्वेष्यागतप्रकर्षस्येत्यर्थः उपयोगेपीति स्वरूपतः सत्त्वेपीति भावः ना
तुपलक्षितमुद्देश्यत्वादिकन्तुभासतएवतदाह अनन्यलभ्यस्यैवेति भासमानोद्देश्यत्वतदभावाभ्यामर्थतइच्छाविषयत्वादिलाभादिति
भावः आधारवाचिकेति इदमुपलक्षणंद्वितीयोगेकरणवाचकत्वात् कर्तुरीप्सिततममितिलक्षणेविशिष्टस्यप्रवेशात्प्रामाणिकंगुर्वेवश
कमस्त्विस्यतआह क्रियायाइति फलस्यव्यापारस्यचेत्यर्थः देवदत्तादिशब्दैरिति आदिनातिङ् नन्वेवमाधारस्यधर्मिणोपिप्रकृत्याला
भः आधारत्वेनालाभइत्यस्याधारत्वंनलभ्यमित्यत्रैवपर्य्यवसानात्तस्यैववाच्यत्वंयुक्तम् तस्यधर्मिसाकांक्षत्वाद्विशेषणत्वञ्चयुक्तमिति
॥ चिन्त्यम् अभेदइति

दासीनोदाहरणन्तृणंस्पृशतीत्याद्येव यद्यपिद्वेष्योदासीनयोः प्रधानीभूतव्यापारजन्यफलाश्रयत्वन्तथापि तेषान्नमुख्योद्देश्यत्वमिति
कर्तुरित्यस्यतत्राप्राप्तिरितिबोध्यम् वैरूप्यरहितइति तेनोद्देश्यत्वभानकृतवैरूप्यस्यसत्त्वेपिनक्षतिरितिभावः भासतएवेति सतञ्चकर्मणायमभिप्रैनीतिसू
त्रस्थभाष्याल्लभ्यतइतिप्रागेवाभिहितम् ईप्सागतेति इच्छाविशेषणीभूतव्याप्तिगतेत्यर्थः ननुसर्वत्राधारवाचकत्वमनुपपन्नंद्विवः कर्मच्चेतिसूत्रविषये
आधारप्रतीत्यभावादतआह इदमुपलक्षणमितिनन्वेवमिति एवम् अनन्यलभ्यस्यैवशब्दार्थत्वेतस्यैव आधारत्वस्यैवशक्तिविशेषरूपस्य अखण्डोपा
धिरूपस्यचिन्त्यमिति चिन्ताबीजन्तुअखण्डोपाधिरूपधर्मस्यवाच्यत्वेनस्यावशेषणतयाशाब्दबोधविषयत्वकल्पनेचप्रकृतिप्रत्ययाविविन्यायविरोधः॥
शक्तिविशेषरूपस्य+६

कर्मणिद्वितीयेतिसूत्रस्यसुपाङ्कर्मादयोप्यर्थाइतिभाष्यस्यचविरोधापत्तिरिति किञ्चधर्मस्याखण्डोपाधिरूपस्यवाच्यत्वेतन्निष्ठधर्मस्यवाच्यतावच्छे
दकत्वेनस्यचकर्मत्वरादित्तित्वविशिष्टसकलकर्मवृत्तित्वरूपत्वेमहागौरवन्तस्याप्यखण्डोपाधिरूपत्वेतदाश्रयाखण्डोपाधिरूपधर्मस्यवाच्यतावच्छे
दकत्वंयुक्तमितिवस्तुतस्तुपञ्चकमाप्तिपदिकार्थइतिपक्षस्यमुख्यतयाकर्मादीनां द्योत्यत्वेनप्रकृत्यर्थविशेषणत्वमेवयुक्तम् ॥ ॥ विशेष्यविशेषणभावइ
ति इतरसम्बन्धानवच्छिन्नेत्यादिः पदजन्योपस्थितावविशेषेपिफलव्यापारयोर्धातुजन्योपस्थितिविषयत्वस्यसमानत्वेपि इदमुपलक्षणमिति फ

विशेषणविशेष्यभावइत्यर्थः वाक्यार्थइति हरिंभजतीत्यत्रेतिशेषः फलमिति कर्तरित्यादिविहितकर्मसंज्ञकविषयेफ
लमित्यर्थः व्यापारइति कर्तृविषयेस्वाश्रयेति स्थाल्यांपचतीति तण्डुलमित्यत्रकर्मद्वाराधिकरणं भूतलेदेवदत्तः पचतीत्या
दौकर्तृद्वाराधिकरणम् फलीभूतइति पदजोपस्थितावविशेषेपि तत्फलभूतशाब्दबोधइत्यर्थः इदमुपलक्षणम् संज्ञार्थ
स्यनिमित्तत्वेनतत्तत्संज्ञाप्रकारिकेबोपस्थितिरितिकर्मत्वादिनेवोपस्थितेस्तत्रापिवैलक्षण्यमस्तीत्यन्यत्रविस्तरः तन्निष्ठधर्मस्ये
ति आधारेतराऽवृत्तित्वेसति सकलाधारवृत्तित्वरूपस्येत्यर्थः आधारतानुशक्तिविशेषरूपाऽखण्डैवेत्याशय ———
——— नन्वाधारतैवनिरूपकाश्रयसंबंधभेदेनभिन्नात्राश्रयतात्वमखण्डमितिनगौरवमतआह ॥ ॥ लभूतशाब्दबोधवैलक्षण्य

प्रतिपादनमुपलक्षणमित्यर्थः संज्ञयाकर्मादिसंज्ञया अर्थस्यसंज्ञिनः निमित्तत्वइति शाब्दबोधजनकोपस्थितिनिमित्तत्वइत्यर्थः तत्रापि पदार्थोपस्थिता
वपि इत्याशयइति आधारादिरूपधर्मिणएववाच्यत्वमितिप्रतिपादकमूलस्याशयइत्यर्थः निरूपकाश्रयसम्बन्धभेदेन क्वचिदाश्रयतानिरूपकंविक्लित्ति
रूपम्फलङ्क्वचित्संयोगः क्वचिद्विभागइति यथायथमूहनीयमित्यर्थः आश्रयः तण्डुलादिः संबंधभेदेनेति पचतिगच्छतीत्यादौफलाधारतासमवाया
सम्बन्धावच्छिन्ना यवेभ्योगांवारयतीत्यादावभावरूपफलाधारतास्वरूपसम्बन्धावच्छिन्नेतिभेदेनेत्यर्थः ॥ ७ ॥ १ ॥ ७ ॥ १ ॥

नाधारत्वस्य शक्यत्व इति आ
नन्वेवमाधारस्य शक्यत्वे तन्निष्ठाधारत्वस्योक्तरीत्याभिन्नस्य शक्यतावच्छेदकत्वे शक्यतावच्छेदकभेदाच्छक्तिभेदापत्तिरत आह आधारत्वस्य शक्यत्व इति आ
धारतात्वेन अखण्डोपाधिरूपेणेति शेषः अनुगमादिति अनुगताकारप्रतीतिविषयत्वात् अनुगतधर्मावच्छिन्नशक्यतावच्छेदकतया वाचकत्वेन शक्तेरेकत्व
मिति व्यवहार इति भावः शक्तिरपि कर्मत्वादिरूपा शक्तिरपि सतेः कर्मादिपदैः धर्म्यभेदम् शक्तिमदभेदम् एवञ्च कर्मत्वादिशक्तिमान् द्वितीयार्थ इति रीत्यास्वी
कार्यमिति भाष्यसम्मतमेवयुक्तमिति बोध्यम् यत्वपञ्चितन्तदाह लादेशेति नटस्य शृणोतीत्यादौ यथा नटे ऽतिप्रसङ्गप्राप्तिस्तथाह अपादानादीति अन्येतिसा

कर्मणीति लोके कर्मादिपदानां धर्मिपरतायादृष्टत्वेसूत्रेऽपि तत्परत्वेवौचित्येनेति भावः आधारस्य शक्यत्वे ऽनन्ताधारतानामाधारत्वेनानुगमाधु
पगमान्नशक्त्यानन्त्यमिति बोध्यम् कर्मादयोपीति अपि ना संख्यासूत्रवदेवात्रापि कर्मपदस्य धर्मिपरता शक्तिरप्यैते धर्म्यभेदमापन्नैर्वाच्य
न इति बोध्यम् संख्याचेति चेन कर्तृकर्मणी वैरूप्यापत्तेरिति तद्विषये धर्मिपरता तिङ्विषये धर्मपरतेति वैरूप्यापत्तेरित्यर्थः कृतां धर्मि
वाचकत्वे बीजमाह पाचक इत्यादि स्वीकाराद्विति कृतामिति शेषः प्रपञ्चितमिति लादेशशब्दे तिङां च वैषम्यसर्वेषादुरुपपादमि
त्यादीति भावः तेन नटस्येति अपादानादिविशेषैरविवक्षा च प्रसक्तस्य बुद्धिपूर्वमविवक्षा सर्वथा ऽप्रसक्तस्या ऽविवक्षा चेत्युभयविधा
पि गृह्यते प्रकृते चोपयोगेत्यादिना च तस्याख्यातोपयोग इति शास्त्रे तत्सक्रियाजनकत्वम् ॥ ऽ सर्वथा ऽप्रसक्तस्या ऽविवक्षा रूपा इति शास्त्रकृता
मिति उपयोगग्रहणस्य नटे ऽपादानसंज्ञाव्यावर्तकत्वेन भाष्यकृताचरितार्थ्यस्योक्तत्वेन तच्छास्त्रकृन्नमित्यर्थः न च नटीयगीतेन श्रवणक्रियासम्भवेन तद्भिन्न
स्य नटस्यान्यथासिद्धतया क्रियाजनकत्वमिति वाच्यम् द्वारेण द्वारिणो ऽन्यथासिद्धत्वाभावात् नदं शृणोति कर्मयुक्तिर्लक्षणस्य न च दुह्यादिपरिगणने कृतेपि
स्यात्यान्दोग्धि पय इत्यत्र स्थाल्यामधिकरणत्वाविवक्षायामनेन कर्मसंज्ञा स्यादिति वाच्यम् धात्वर्थव्यापाराश्रयकर्मयुक्तस्य संज्ञानिमित्तत्वात् द्विविधा
ऽविवक्षायाः प्रकृतसूत्रे ग्रहणे मानन्तु गां दोग्धि पय इत्युदाहरणपरं प्रकृतसूत्रभाष्यं नटस्य शृणोतीति प्रत्युदाहरणपरञ्च भाष्यमेव ॥ ७ ॥

अस्य अकथितञ्चेति सूत्रस्य असङ्गतेरिति पूर्वस्य परस्य च यत्र प्राप्तिस्तत्रैव विप्रतिषेधसूत्रस्य प्राप्तिरिति कर्तुरीप्सितेत्यादि सूत्रद्वयविषयकमेव तथा चाकथितमिति सूत्रं न कार्यमित्येतदभिप्रायकमिति भावः पञ्चकमित्यादीति एतेन पञ्चम्या अवधित्वं तृतीयाया फलाश्रयत्वं प्रतिपाद्यमित्युभयविवक्षा वक्तुमशक्येति शङ्कायाना वकाश इति सूचितम् गोशब्दस्यैव शक्तिद्वयप्रतिपादकत्वसम्भवात् पञ्चम्या अपादानत्वशक्तिविशिष्टार्थाभिधायकत्वमिति सिद्धा न्ताभिप्रायेणाह अपादानत्वेति ननु यदि शक्तिद्वयविवक्षा न तदा शक्तिद्वयप्रतिपादकत्वं विभक्तेरुपपादनीयं तच्च न सम्भवति परत्वाज्ज्ञातकर्मसंज्ञाया द्वितीयया प्रतिपादनसम्भवादत आह ईदृशे चेति उभयोः शक्त्योः प्रातिपदिकेन प्रतिपादनविवक्षा ज्ञाना चैकैव विभक्तिस्तादृशविषय इत्यर्थः केवलमात्रस्य द्वितीयया प्रतिपादनसम्भवादत आह ईदृशे चेति

परत्वादिति ग्रामादायातीत्यादौ संज्ञान्तराभावादपादानत्वं सावकाशं कर्मसंज्ञा तु ग्रामं गच्छतीत्यादौ भाष्यमिति एतच्च भाष्यं नाकथितं चेत्येतद्विषयम् अस्यापादानत्वाविवक्षायां प्राप्त्या परत्वादित्युक्त्यसंगतेस्तद् ध्वनयन्नाह पंचकमित्यादि अवधित्वेत्यादि अपादानत्वकर्मत्वशक्त्योरित्यर्थः ईदृशे च विषये आकडारसूत्रतद्भाष्यबलादुभयोरपि द्वितीयैव बोधिकेति भावः इति स्थितमिति प्राचां ग्रन्थ इति शेषः अत्र रुचिबीजं तु पयः पयो निष्ठविभागानुकूलो व्यापार एव धात्वर्थस्तदापादानत्वाविवक्षायामन्येनासिद्धेः कर्मत्वार्थमिदमावश्यकम् एवमन्येष्वपि ॥ इति स्थितमित्यस्याज्ञाप्येऽस्थितमित्यर्थः प्रतीयते परन्त्वेवं वक्ष्यमाणानुपपत्तेरत आह प्राचाङ्ग्रन्थ इति अत्र प्राचामित्यनेन प्रतिपादने अपादानत्वविवक्षायां गोः पयो दोग्धीत्येव भवतीत्याशयेनाह अपादानत्वाविवक्षायामिति अन्येन शास्त्रान्तरेण असिद्धेरिति कर्मसंज्ञाया इति शेषः सकर्मव्यापारार्थकत्वं पदाप न्वादिधातूनां तदा तत्कारकस्य कर्मसंज्ञार्थमकथितञ्चेति सूत्रम् यदुक्तमाकृषष्ठीबाधनार्थमिदं सूत्रमित्येतन्नाख्यविभक्तेः सम्बन्धार्थकत्वमिति तद्दूषयति ॥ ७ ॥ ७ ॥

किन्त्वेति क्रियाजनकतासमानाधिकरणेति एतेनकारकत्वमपिशक्तिविशेषएव तेनैवरूपेणशाब्दबोधविषयतासंज्ञिन इतिध्वनितम् अपादानसम्प्रदा
नाधिकरणानामपादानत्वादिना विवक्षायामनेनकर्मसंज्ञायाः कर्मत्वशक्तिमत्त्वेनैवशाब्दबोधविषयतेतिबोध्यम् मूलङ्खण्डयितुमुपक्रमते व्यापारद्व
येति अपिस्तथायुक्तमितिसूत्रसमुच्चायकः यथाप्रयोगमित्यनेनातिप्रसङ्गो वारितः बहूनामिति मूलपरिगणितभिन्नानामपिग्रहणमित्यनेनोक्तम् उक्तरीत्या
धातूनान्द्विकर्मकत्वेबोधितेलकारोत्पत्तिविषयेव्यवस्थामाह तत्रेत्यादिना यदुहादयः पचादयश्च इत्युक्तेरिति इतिभाष्यकारोक्तेरित्यर्थः इष्टव्यवस्थासि
द्धये प्रधान कर्माचन्दर्शयति प्रधानेति कर्तृप्रत्ययसमभिव्याहृतधातुजन्यशाब्दबोधेयः प्रधानभूतोव्यापारस्तस्मिन्साक्षाद्विशेषणंयत्फलन्तदाश्रयत्वम्प्र

किंच कर्तुरित्यपिषष्ठ्यपवादस्य तदभावेतद्विषयेपिषष्ठ्याएवप्राप्तेरतः षष्ठ्यपवादत्वमात्रेणनसंबंधत्वेनबोधकतोचितातुस्मादत्रा
पिक्रियाजनकतासमानाधिकरणकर्मत्वशक्तिमत्त्वेनैवबोधइत्येवोचितम् व्यापारद्वयार्थत्वे कर्तुरीप्सिततममित्यनेनापिद्विकर्मकत्वम
स्येवयथाप्रयोगंबहूनांधातूनाम् तत्रयेव्यापारद्वयार्थत्वेनद्विकर्मकास्तेषांप्रधानकर्मणिलादयः प्रधानकर्मण्याख्येयेलादीनाहुर्द्वि
कर्मणामित्युक्तेः प्रधानकर्मत्वंच कर्तृप्रत्ययसमभिव्याहारेकर्तृनिष्ठप्रधानधात्वर्थव्यापारमात्रविशेषणफलाश्रयत्वंएतद्विषयेइ
दृश प्राधान्यस्यैवग्राह्यत्वात् गर्गाः शतं दण्ड्यन्तामित्यादौ गर्गाणामेवतत्वमितितत्रैवकर्मणिलादयः उद्देश्यत्वरूपमार्थप्राधान्यन्तुश
तस्येत्यत्र उद्देश्यत्वेनाप्रधानगर्गानुरोधान्नशतादृत्ति रितिनदृष्टिस्तत्रस्थभाष्यविरोधः॥ प्रधानकर्मत्वम् व्यापारेतिकर्तृनिष्ठेतिचस्वरूपकीर्तनेन
म् मात्रपदेनपरंपरयाविशेषणत्वव्यवच्छेदः गर्गाः शतन्दण्ड्यन्तामितिभाष्यीयप्रयोगेयद्यपिनकर्तृप्रत्ययस्तथापिगर्गरूपकर्मणिलकारोत्पत्तिव्यवस्थामा
ह गर्गादृति गर्गाणामेवेति कर्तृप्रत्ययसमभिव्याहारेगर्गान् शतन्दण्डयतीत्यत्रस्वसम्प्रदानकदानानुकूलव्यापारानुकूलव्यापारोदण्डयतेरर्थः तत्रप्र
धानभूतोव्यापारोद्वितीयस्तन्निष्ठविशेष्यतानिरूपितासाक्षात्प्रकारताप्रथमव्यापारस्येतितदाश्रयगर्गाणाम्प्रधानकर्मत्वम् नन्वेवंदुहिरादेर्जितिसूत्रभा

ष्ये॰ प्रधानकर्मणां गोणानाम्बहुत्वेपि न प्रधानस्य प्रातसान्तृप्तिरिति प्रतिपादितन्न विरोध इत्यत आह उद्देश्यत्वेति ॥ ॐ ॥ दुहादीनामेकव्यापारार्थकत्वे कथित ञ्चेति सूत्रेण तद्योगे गवादीनामिति प्रागभिहितन्तदापि गवादिकर्मणि लकारादिव्यवस्थामाह एकव्यापारेति तदादिविभागानुकूलव्यापारसदुदुह्या त्वर्थः विभागरूपम्फलं प्रधानव्यापारविशेषणन्तदाश्रयत्वात्पयसः प्रधानकर्मत्वन्तद्भिन्नत्वङ्गवादीनामिति तेषामप्रधानकर्मत्वम् एवञ्चेति उ करीत्येवव्यवस्थासिद्धौ च भाष्यानुक्तानाम्पयादीनाम् भाष्योक्तामुदुहादयएकव्यापारार्थकत्वेपि तेषामप्रधानङ्कर्मयस्याकथितञ्चेति सूत्रेण कर्मसं ज्ञा तदेव सम्पन्नन्तद्धात्वर्थप्रधानीभूतोयस्तादृशव्यापारस्तद्विशेषणफलाश्रयभिन्नत्वमस्त्येव इत्यहितन्त्र्यंभाष्यम् केनाकथितम् अपादानादिभि र्विशेषकथाभिः इयं करणे तृतीया भूतकालोऽत्राविवक्षितः तेन सर्वथा यत्रापादानादीनाम प्रसक्तिस्तेषामप्यसङ्कीर्तितत्वादकथितत्वव्यवहारः किन्तु

॥ एकव्यापारार्थकदुहादियोगेत्वप्रधानकर्मणि अप्रधानत्वञ्चोक्तप्रधानकर्मभिन्नत्वम् तच्च
तत्रार्थे गवादीनामेव फलाश्रयत्वाभावात् एवञ्च भाष्यानुक्तानां परिगणने पाठोऽयुक्तः ॥

दाहरणम् दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितङ्कविना उपयोगनिमित्तमिति उ पयुज्यतेइत्युपयोगः पयः फलादितस्यनिमित्तङ्गवादि पय आदीनामुपयोगपदव्यवहार्यत्वप्रदर्शनेन तेषामीप्सिततमत्वन्दर्शितम् गवादीनाञ्च त न्निमित्तत्वेन धात्वर्थव्यापारात्प्राक् पय आदिकर्मयुक्तत्वन्निदर्शितम् गवादीनान्तथायुक्तत्वाभावादकथितञ्चेत्यनेनापि कर्मसंज्ञा न भवति अपूर्वे विधावित्यत्रपूर्वत्वमुपलक्षणन्तेन परविधावपीयं संज्ञा न भवति ब्रुविशासिगुणेनेति ब्रुविशास्योर्गुणः साधनम्प्रधानङ्कर्म धर्मादिकन्तेन यत्सचते सम्बध्यते इत्यर्थः क्रियायाः साध्यत्वात्प्राधान्यङ्कारकाणान्तु तदर्थत्वाद्गुणत्वम् एवम्परिगणनेन नटस्य शृणोतीत्यादावपि ॥ ७ ॥ ७ ॥

प्रसङ्गवारकेणाकथितञ्चेति सूत्रोदाहरणत्वमेषान्यासूत्तामितिप्रदर्श्यदुहि गांदोग्धिपयः नैतदस्ति कथितात्रापादानसंज्ञा गोः पयआदत्ते इत्यर्थाव
गमाद् पादानत्वङ्गवादीनाम् अनेनयदागवादीनामपादानत्वविवक्षातदा न भवति यदातुनत्तथा धातोर्व्यापारद्वयार्थकताचतदाकर्त्तुरीप्सितमत्वमिति
प्रदर्शितम् याचि इदन्तर्हि पौरवङ्गां याचते नैतदस्ति कथितात्रपूर्वापादानसंज्ञा पौरवात् गाम्भिक्षतइत्यर्थस्य प्रतीतेः सतेनास्याप्यनुदाहरणत्वन्दर्शयि।
त्वातत्रअकथनयाचनादेवापायोभवति याचितोसौयदिददाति तदापायेनयुज्यते एतेनसर्वथाऽविवक्षायामनेनास्यकीर्त्तितपौरवस्यकर्मत्वम् रुधि अन्व
वरुणद्धिगांव्रजम् नैतदस्ति कथितात्रपूर्वाऽधिकरणसंज्ञा गांव्रजेस्थापयतीति सम्प्रत्ययात् एतेनयदागोर्व्रजस्थाविशतिगवाव्रजम्प्रवेशयतीत्यर्थ।
विवक्षातदाव्यापारद्वयार्थकत्वेनपूर्वसूत्रस्यप्रवृत्तिरित्यर्थादुक्तम्भवति प्रच्छि माणवकम्पन्थानम्पृच्छति नैतदस्ति कथितात्रपूर्वापादानसंज्ञामाण
वकान्मार्गोपदेशञ्जिज्ञासतइत्यर्थविवक्षादर्शिता तदाऽनुदाहरणत्वयदातुप्रश्नमात्रमनङ्गीकृतापायन्यात्वर्थस्तदभिप्रायेणनप्रश्नादेवापायोभव
तिपृष्टोसौयदाचष्टेतदाऽपायेनयुज्यतइत्युक्तमनेनसर्वथाऽविवक्षायामुदाहरणत्वस्यैवदर्शितम् भिक्षि पौरवंगांभिक्षते नैतदस्ति कथितात्रपूर्वा
ऽपादानसंज्ञा नभिक्षणादेवापायोभवति भिक्षितोसौयदिददाति तदाऽपायेनयुज्यते अनेनभिक्षधातुविषयेयाचिधातुवदुदाहरणमनुदाहरणत्वञ्चक।
ल्पनीयमितिकथितम् चिञ् वृक्षमवचिनोति फलानि वृक्षस्यापादानत्वविवक्षायामनेनकर्मत्वम् नैतदस्ति कथितात्रपूर्वाऽपादानसंज्ञा वृक्षात्फलान्या
दत्तइत्यर्थावगमात् एतेनात्रापादानत्वाविवक्षैवनास्तीतिनिदर्शितम् ब्रुविशासि पुत्रन्धर्मम्ब्रूते पुत्रन्धर्ममनुशास्ति पुत्रोधर्मम्प्रतिपद्यते पुत्रन्धर्मम्प्र
तिपादयतीत्यर्थः अनेनसम्प्रदानत्वाविवक्षायामुदाहरणत्वमित्युक्तम् नैतदस्ति कथितात्रपूर्वासम्प्रदानसंज्ञावचनानुशासनकर्मणाधर्मेणपुत्रस्या
भिप्रेयमाणत्वात्सम्प्रदानत्वम् तस्याविवक्षाचात्रनास्तीति प्रदर्शितम् तस्मात्त्रीण्येवोदाहरणानि पौरवंगांयाचते माणवकम्पन्थानम्पृच्छति पौरवंगांभिक्ष

इतिचायुक्तमिति भाष्योक्तपरिगणन परवाक्येयात् धातुसमानार्थकभिक्षेत्यादानादिति शेषः सवन्ध्यार्थत्वेन दुह्यादिवद्यार्थत्वेन अतिप्रसङ्ग इति गमा
दिधातूनांसंयोगानुकूलव्यापारानुकूलव्यापाराद्यर्थकतामाश्रित्यभूत्यड्·ग्रामङ्·च्छुसीत्यादिप्रयोगापत्ति रूपोऽतिप्रसङ्ग इत्यर्थः विस्तरस्त्वन्यत्रद्रष्टव्यइ
त्याशयेनाहदिगिति ननुक्रियायामन्वयेपिकदाचित्षष्ठीसम्भवात्क्षीरविशेषणत्वमात्रेणषष्ठीप्रतिपादनमयुक्त मित्याशयेनाशङ्काङ्कत्वात्तान्निराचष्टे नचेति।
षष्ठ्यन्तार्थस्येति शेषत्यादिः स्वान्वययोग्यनामसमभिव्याहार इतिकथनेनयत्रतत्समभिव्याहाराभावः क्रियायामन्वयविवक्षाचशेषत्वविवक्षाचतत्रषष्ठी
भवत्येवमातुः स्मरति नटस्यशृणोतीत्यादौयथा इतिव्युत्पत्तेरिति एतेनपयःपदसमभिव्याहारे धात्वर्थानन्वय इतिदर्शितम् अतएवेति उक्तव्युत्पत्तिसत्वा

अर्थनिबंधनेयंसंज्ञेतिचायुक्तम् सवंद्धार्थत्वेनद्विकर्मकत्वातिप्रसंग स्त्वनभिधानेनवारणीय इतिदिक् अपादानत्वमात्रत्वेति विभागानु
कूलव्यापार मात्रार्थकत्वविवक्षायामितिभावः गोः क्षीरमिति नचक्रियान्वयेपि शेषत्वविवक्षायांसेनिवाच्यम् षष्ठ्यर्थस्यस्वान्व
ययोग्यार्थकनामसमभिव्याहारेतत्रैवान्वयव्युत्पत्तेः अतएवतण्डुलानामोदनंपचतीत्यादौद्व्यर्थश्चेत्यत्रविकारयोगेषष्ठीतण्डुल
विकारमोदनंपाकेननिर्वर्तयतीत्युक्तम् भाष्येन॥ ननु देवदत्तादिनातण्डुलानोदनम्पचतीत्यस्यसङ्गतः अत्रनिर्वर्तनंविक्लेदनंचपचेरर्थःतण्डुलान्
विक्लेदयन्नोदनन्निर्वर्तयतीतिवाक्यार्थः इत्युक्तम्भाष्य इति कर्तुरीप्सिततममितिसूत्रभाष्येउक्तमित्यर्थः तत्रहि अथेहकथंभवितव्यम्तण्डुलानोदनम्प
चतीति आहोस्वित्त ण्डुलानामोदनम्पचतीति उभयथाभवितव्यम् कथम् इहतण्डुलानोदनम्पचतीति द्व्यर्थःपचिः ———————— तण्डुलान्पचन्नोद
नन्निर्वर्तयतीति इहेदानीन्तण्डुलानामोदनम्पचतीति द्व्यर्थश्चैवपचिः विकारयोगेषष्ठीतण्डुलविकारमोदनन्निर्वर्तयतीत्युक्तम् यद्यपि फलव्यापारा
वादायसर्वेषामेवधातूनान्द्व्यर्थत्वमितीहद्व्यर्थत्वाभिधानमनुपयुक्तमितिशङ्का भवति तथापिविक्लेदनविशिष्टन्निर्वर्तनम्पचेरर्थ इत्यस्याभिप्रायेणद्व्यर्थे
त्वाभिधान · विक्लेदनवैशिष्ट्यन्त्वकचित्सामानाधिकरण्येनयथात्राद्ये तत्रविक्लित्तिरूपफलाश्रयत्वात्तण्डुलानान्निर्वृत्तिरूपफलाश्रयत्वात्तु ओदनस्य

विक्लेदनवैशिष्ट्यञ्चक्वचित्सामानाधिकरण्येनयथाआद्ये तत्रविक्लित्तिनिरूप्यफलाश्रयत्वात्तण्डुलानान्निर्वर्त्तिरूप्यफलाश्रयत्वात्तुओदनस्यकर्मता द्वितीयप्र
योगेतुकरणत्वेनविक्लित्तिविशिष्टन्निर्वर्तनमस्यचेत्यर्थः तत्रतण्डुलानान्धात्वर्थप्रधानव्यापारविशेषणफलाश्रयत्वाभावान्नकर्मत्वङ्किन्तुविकारयोग।
विवक्षयाशेषेषष्ठीतिबोध्यम् विक्लित्तेश्चसम्बन्ध्याकाङ्क्षायांसन्निधानात्तण्डुलसम्बन्धिनीसेतिविज्ञायते अत्रभाष्येयथामातुःस्मरतीत्यत्रकर्मणः।
शेषत्वविवक्षयाषष्ठीभवतितथैवतण्डुलपदादपिसासिद्धैवेतिविशिष्यविकारयोगेषष्ठीत्यभिधानेनपक्षान्तार्थ स्यस्वान्वययोग्यनामसमभिव्याहारेत

नुपाकान्वयेषष्ठीत्युक्तमितिदिक् निर्मूलइति अपादानत्वाद्यविवक्षायांतत्संबंधिनः कर्मत्वेमूलंनास्तीतिभावः द्विकर्मकत्वंतुयदीष्टनर्हिव्यापा
रद्वयार्थतयाबोध्यम् उदाहरणमप्ययुक्तमिति शक्राद्युतरूर्ज्जगाहेत्येवप्रतीतेः पराक्रमातिशयद्योतनायजहारद्युतरूमित्यस्यैवोचितत्वा
दितिभावः द्विकर्मकत्वमिति अकथितसूत्रविषयतयेत्यर्थः कैयटमाधवादिसंमतत्वादितिभावः अतस्तद्रीत्यैवदूषणमाह एवंचे
त्यादिना प्रधानमिति उद्देश्यत्वादितिभावः तस्योद्देश्यत्वेमानमाह अर्थिनश्चेति ननुनिग्रहार्थइति शारीरदण्डाद्यर्थइत्यर्थः॥
तस्मादेववाक्यशेषादितिभावः॥ ९ नैवान्वयइत्युत्सर्गतोव्युत्पत्तिः सूचिता ॐ॥ मूलन्नास्तीतीति भाष्यानुक्तत्वादितिहेतुःपूरणीयःअतएवाह॥
द्विकर्मकत्वमिति ननूक्तरीत्याद्विकर्मकत्वंसाधितमेवेतिकथमक्रियाकुदुक्तोदाहरणस्यायुक्तत्वाभिधानमित्याकाङ्क्षायामाह शक्रादिति एतेनतादृशप्रयो
गाभावएवेतिध्वनितम् इतरेषान्द्विकर्मकत्वन्नव्यापारद्वयार्थत्वेनाभिहितमित्याशयेनाह अकथितेति ननुभाष्यानुक्तत्वेनेतरेषान्द्विकर्मकत्वस्यप्रामाणिक
त्वाभिधानमयुक्तमतआह कैयटेति तद्रीत्येवेति कैयटाद्युक्तरीत्येत्यर्थः ननुग्रहणार्थत्वेपिनिग्रहार्थत्वंसिद्धमेवेत्यतआह शारीरेति तस्मादेवेति अर्थिन
श्चेत्येतस्मादित्यर्थः एवञ्चमूलेअर्थिनश्चेत्यादिवाक्यशेषादित्यनन्तरन्देहलीदीपकन्यायेनोभयत्रान्वेति॥ ॥ ॥ ॥ ॥ ॥ ॥

मूलादिखण्डयितुमुपक्रमते एतत्सर्वमिति सर्वम् मूलस्य रसमूलं श्लोकस्य पठनम्प्राचीनखण्डनम्प्रागुक्तं वक्ष्यमाणञ्च सर्वम् प्रागुक्तमिति कर्तृप्रत्ययसमभि व्याहारे प्रधानीभूतधात्वर्थव्यापारविशेषणत्वादिना प्रागुक्तमित्यर्थः ननु कर्तुरीप्सिततममिति सूत्रस्य प्रागुक्तभाष्यसम्मतमेव पचेर्द्विकर्मकत्वमिति कथ मप्रामाणिकत्वाभिधानमत आह अकथितसूत्रेति अत्रेति कैयटे स्वादिकथने व्यापारद्वयार्थत्वे फलपाकानुकूलव्यापारानुकूलव्यापारार्थत्वे इत्यर्थः तदाहु दुम्बरः फलम्पचतीति प्रयोगः एकव्यापारेति फलपाकानुकूलव्यापार एव पचेरर्थः तदाहुदुम्बरः फलम्पच्यत इति प्रयोगः कालनिष्ठस्य द्वितीयस्य व्यापारस्य

एतत्सर्वम्माधवादिरीत्यालाघवस्यातिनियामकं यदि प्रागुक्तं प्रधानकर्मत्वं तदेतत्सर्वं असंगतमित्युक्तदिशोह्यम् द्विकर्मकेष्विति अक थितसूत्रविषयेष्वित्यर्थः पचेरप्रामाणिकत्वदूषणं कैयटाद्यनुरोधेनेति ध्वनयन्नाह कैयटेति अत्रारुचिवीजं तु पचेर्व्यापारद्वयार्थ त्वे कर्तुरीप्सिततममिति कर्मणो वृक्षस्यैकव्यापारपरित्यागे कर्तृत्वविवक्षयापि भाष्यस्योपपादत्वेनैतत्सूत्रविषयत्वेन मानमिति तन्म तान्तरेति पूर्वोपपादितभाष्यसम्मतमतान्तरे इत्यर्थः भाष्यानुक्तानां सर्वेषां ग्रहणमप्रमाणमित्यनेन सूचयति उदाहृतस्वपरग्रंथाश्च यथाश्रुतकैयटानुसारेणेति च ध्वनितमित्यन्यत्र विस्तरः कैयट इति अत्रारुचिवीजमुक्तम् ॥ ॥ ॥ ॥ ॥ ॥

धनापरित्यागः भाष्यस्य दुहिपच्योर्बहुलंसकर्मकयोरिति भाष्यस्य एतच्च भाष्यं कर्मवदिति प्राप्तकर्मवद्भावस्य सकर्मकाणाम्प्रतिषेध इत्यनेन प्रतिषेधे प्राप्ते कर्मवद्भावविधायकम् एतत्सूत्रेति अकथितञ्चेति सूत्रे इत्यर्थः यदुक्तम्मूले मतान्तरेति तदयुक्तम्प्रागुक्तं यद्भाष्यसम्मतम्मतन्तद्रीत्यातस्ययुक्तत्वमेवेत्या शयेनाह पूर्वोपपादितेति एवञ्च हरदत्तोक्तमसङ्गतमिति भावः ध्वनितमिति मतान्तरेत्यभिधानेन ध्वनितमित्यर्थः उक्तमिति अकथितञ्चेति सूत्रवि षयत्वयदि जयत्यादीनाम्भाष्यकाराभिमतन्तदा चकारेण तेषां सङ्ग्रह उचितस्तत्रैव तु न मानमित्युक्तप्रायमित्यर्थः ॥ ॥ ॥ ॥

ननु यदि प्रकृतसूत्रस्यार्थनिबन्धनार्थत्वाभावेनाप्राप्तिस्तदा द्विकर्मकत्वङ्कथमनुक्तानामित्याकांक्षायामाह द्विकर्मकत्वन्त्विति यथाप्रयोगव्यापारद्वयार्थकत्वं क स्मनीयमितिभावः कुरुपञ्चालादेरेव देशपदेन ग्रहणे किम्मानमतआह व्याख्यानादिति अधिशीङ्स्थासामित्यादिसूत्रारम्भमूलकाद्व्याख्यानादित्यर्थः नचै व कुरुपञ्चालादिशब्दानामेव देशवाचकत्वेनोदाहरणात् मूलेमित्यादेरित्यत्रादिपदेन समानो देशयितओचोदात्त इति निर्देशस्य सङ्ग्रहः अकर्मकधातुभिर्यो ग इति वार्तिकमेव स्वातन्त्र्येण न कर्मसंज्ञाविधायकङ्किन्तु स्वार्थकरणकव्यापने धातूनां वृत्तिकल्पनेन सिद्धकर्मत्वानुवादकमित्यस्य वक्ष्यमाणत्वात्तदभिप्राये णाह शीङादेरपीति शयनपूर्वके शयनादिकरणके नन्वेवं नादृशदेशग्रहणेपि तस्य सूत्रस्य वैयर्थ्यमेवात स्तत्फलितमेवैतदित्याह एवञ्चेति तादृशदेशग्रह

इतिभाव इति अर्थनिबंधनेयंसंज्ञेति वदतां कैयटादीनामित्यादिः द्विकर्मकत्वं तु व्यापारद्वयत्वेन सिद्धमिति तत्त्वम् कुरुपाञ्चालादिरि ति व्याख्यानात्तथैव भाष्योदाहरणाच्चेति भावः नवैयर्थ्यमिति शीङादेरपि शयनपूर्वके व्यापारे वृत्त्या कर्तुरित्येव कर्मत्वस्यास्यादियोगइव सि द्धत्वादितिभावः एवं चैवं कल्पनयोक्तदेशादीनामेव कर्मत्वं नान्येषामनभिधानादिति सूचयति प्रसिद्धस्येति क्रियायाः कालोपाधित्व मेव प्रसिद्धमिति भावः तेनेति देशादीनां ग्रहणेनेत्यर्थः यत्तु मासादेरेव ग्रहणेनेत्यर्थ इति तन्न जन्यमात्रस्य कालोपाधित्वेपि कालत्वाभा वात् यदि तु जन्यमात्रस्य कालत्वमिति मतमस्ति तदा घटत्वादिना न तस्य कालता किन्तु मासत्वादिनैवेति भावः एतच्चनापूर्ववचनमित्याकरेस्प

॥ इम् अध्यानस्वपितीति॥

णेवेत्यर्थः एवं कल्पनया स्वकरणकव्यापने वृत्तिकल्पनया उक्तदेशादीनाम् कुरुपञ्चाला दीनाम् एवकारेण वैकुण्ठा दीनां व्यवच्छेदः मूलादुक्तार्थस्य न झटिति प्रतीतिरतआह सूचयतीति ननु क्रियापि काल एव प्रसिद्धपरिमाणा सूर्यक्रियाक्रियान्तरपरिच्छेदहेतुत्वात्का ल एवेत्युक्तेरतआह क्रियाया इति जन्यमात्रङ्कालोपाधिरित्यस्य जन्यमात्रं न तत्पदार्थनिष्ठाधेयतानिरूपितायाः कालनिष्ठाकालिकसम्बन्धावच्छिन्ना धिकतातदवच्छेदकमित्यर्थः क्रियाया इव जन्यघटादेरपि मासादिपदव्यवहार्यत्वङ्कालाध्वनोरत्यन्तसंयोग इति सूत्रोदाहरणसिद्धये स्वीकार्यमेवेत्याशये

ननु स्वपधातोर्यदा स्वापकरणकव्यापने वृत्तिस्तदाऽध्वानं स्वपितीतीष्टमेवेत्यत आह स्वापमात्रेति एतेनाकर्मकधातुभिर्योग इति मौलवचनस्यापूर्वत्वशङ्का। वारयति अकथितञ्चेति सूत्रे कर्मकप्रकृतिकण्यन्तानां कथञ्चित्कर्मकत्वमिति प्रश्ने कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणामित्यत्र प्रसिद्धत्वसूचकहि शब्दोपादानेन सर्वत्र स्वार्थकरणकव्यापने वृत्त्या कालादिकर्मकत्वसम्भवस्य सूचनात् अकर्मणामित्युपलक्षणम् सकर्मकाणामप्येवङ्कल्पने पाकादि कर्मकत्वस्य सम्भवात् कृत्रिमाकृत्रिमयोरिति परिभाषया कृत्रिमाधिकरणकं कार्यं जातमुक्तञ्च तत्र हेतुः तत्र स्वग्रन्थसहेतुपरत्वमेवेत्याशयेनाह कार्य सम्प्रत्ययस्येति एवञ्चौचित्येन हेतुनोक्तार्थः साधनीय इति भावः कृत्रिमकर्मत्वोक्तेरिति तच्चगनुमिच्छतीत्यस्य प्राप्त्यैव एवं च तत्र सन्दर्शनप्रार्थनाध्यव।

स्वापमात्रार्थकोऽत्र स्वपितिः कार्य्यसंप्रत्ययादिति कार्य्यसंप्रत्ययस्यौचित्यादित्यर्थः ननु कर्तरि कर्मेति सूत्रे क्रियायामपि कृत्रिमकर्मत्वो क्तेरिदमसंगतमत आह कर्मेति प्राञ्च इति हेतुमति चेति सूत्रे भाष्यकृत इत्यर्थः गुणक्रियायां णिच्प्रकृत्यर्थक्रियायाम् स्वातन्त्र्या दित्यस्य स्वधर्मेणाभिधाने हेतुत्वं कर्मसंज्ञा निषेधस्य च प्रेषणे ण्यर्थे तत्तीययेति: स्वधर्मेणेत्यस्य स्वकार्य्येणेत्यर्थः विशिष्टक्रियायाः संबं धे हेतुमाह हेतुमतीति अन्तरङ्गत्वादिति ॥ ९९ सायारम्भनिर्दिष्टेतेः सत्त्वेन तन्निरूपितकर्मत्वमस्त्येवेति कृत्रिमं कर्मत्वोक्तेरित्यर्थः एवञ्च कृत्रिमा कृत्रिमन्यायेन कर्मकारकस्यैव ग्रहणमिति नियमासिद्धिरित्याह इदमसङ्गतमिति प्राञ्च इत्यभिधानम्मूलकारस्य यद्यपि कर्त्रभिधानायत्तदातत्स्वार्थस्य भा ष्यकारसम्मतत्वादेवङ्कथनमसङ्गतमेवेत्यत आह हेतुमतीति हरिकारिकायां स्वातन्त्र्यादित्यनेन कर्मत्वप्राप्तिहेत्वभिधानं ङ्गतमिति भ्रमनिवारणायाह स्वातन्त्र्यादित्यस्येति स्वधर्मेणेत्यस्य कर्तृत्वनिधर्मेण कर्तृत्वेनेत्यर्थे, तृतीयया इत्यस्य न लाभ इत्यत आह स्वकार्येणेत्यर्थ इति एवञ्च तृतीययेति फलितार्थो कथनमिति भावः मूलेऽन्तरङ्गत्वमुपपादयति स्वकारकेति हेतुमति णिञ्चिधानादित्यनेन यद्युपजीव्यत्वमेवोपपादितमिति ज्ञायते तदाऽनस्येत्यनेन पु नरुपजीव्यत्याभिधानेपौनरुक्त्यमत आह विशिष्टायाइति स्वकारकविशिष्टायाणिजर्थेन सम्बन्ध इत्यर्थः मूलेऽनएवेत्यस्योक्तहेतोरेवेत्यर्थः॥ १ ॥

एवञ्च अनरङ्गत्वसत्वेच गतिवुद्धीतिसूत्रस्यनियमार्थंभाष्यकाराभिमतमितिविधित्वपक्षस्यनिर्मूलस्यकथनमसङ्गतमतआह अस्येति अस्यगतिवुद्धीति। सूत्रस्य तदेवाह तत्रहीति आकडारादितिसूत्रइत्यर्थः कर्मेतिप्रथमानाम मन्यतइति मूलकृदितिशेषः अरुचिरभिमानइतिमन्यतइत्याभ्यांसूचितासाऽनुप देमेवव्यक्तीभविष्यति मूलेशाब्दस्याधान्यम्पुरस्कृत्येति प्राधान्यादितिशेषः नप्राबल्यम्प्रयोजयतइति लौकिकोदृष्टान्तोऽत्रसाधकः यथाऽन्तरङ्गमात्यादि कार्यम्प्रधानराजाज्ञयाबाध्यतइति इहशास्त्रेशब्दस्यप्राधान्यात्तदनुरोधिकमेवत्वस्यराजवत्प्राबल्यमिति ननुयथाशाब्दस्प्राधान्यम्प्रयोजकव्यापारेनतथा।

एवञ्चपरत्वादित्यभ्युच्चयः लक्ष्यस्यनिर्वोधत्वादिति अनेनअर्थनिबंधनेयंसंज्ञेत्यस्यानभिमतत्वंसूचयति एतच्चानुपदंस्फुटीभविष्यति॥

अस्यविधित्वमित्ययंपक्षआकडारसूत्रेभाष्येध्वनितइत्यभिमानः तत्रहिपरंकार्य्यमितिपाठेगत्यादीनांण्यन्ता नांकर्मकर्तृसंज्ञमपिप्राप्नोति आरम्भसामर्थ्यात्कर्मसंज्ञापरंकार्य्यत्वाच्चकर्तृसंज्ञाप्राप्नोतीत्युक्तम् तत्रारंभसामर्थ्यादित्यस्यगत्यादिसू त्रारंभसामर्थ्यादित्यर्थंमन्यते पुरस्कारेत्विति तुनारुचिः सूचिताप्रयोजकव्यापारेऽन्यानधीनत्वलक्षणार्थ———प्राधान्यस्य शाब्दप्राधान्यस्यचसत्वेनोद्देश्यत्वलक्षणार्थप्राधान्यस्यप्रयोज्यव्यापारनिष्ठस्यपुरस्कारेणयुक्तइति किंच कर्तृग्रहणंधात्वर्थप्रधानी भूतव्यापाराश्रयरूपस्वतंत्रोपलक्षणम् ननुतत्संज्ञकपरंस्मात्तउपजीव्यत्वंदुरुपपादम् आकडारसूत्रस्यारम्भसामर्थ्यात् इत्यस्यैतत्। न्नियमारम्भसामर्थ्यादित्यर्थः किंच परंकार्यमितिपाठेविरोधाभावात्सर्वत्रसंज्ञाद्वयप्राप्तावस्यानियमार्थत्वेवोचितासएषांकर्मसंज्ञैवेति

द्देश्यत्वलक्षणमार्थप्राधान्यम्प्रयोज्यव्यापारइतिद्वयोः समत्वमेवेतिब्रूयादित्याशयेनाह अन्यानधीनत्वेति एवञ्चद्विविधस्प्राधा नियमस्तुन०॥ न्यन्तत्रास्तीतिप्रयोजकव्यापारएवप्रबलइतिभावः परोक्तमुपजीव्यत्वमपिखण्डयति किञ्चेत्यादिना भाष्यस्यपरोक्तस्यतर्हिकागतिरतआह आकडा रेति तस्यसूत्रस्यपाठभेदेप्यस्यनियमार्थत्वमेवेत्याह किञ्चेति विपरीतनियमशङ्कांवारयति एषामितियोगेकर्तुरितिशेषः तदाहिगत्याद्यर्थानाम

शपस्त्रबाधापत्तेरिति तादृशनियमेनकर्तृसंज्ञाया व्यावृत्तापरकार्यस्यविधानाभावादितिभावः किञ्च भवदुक्तोनियमाकारश्चेत्याचयस्यादियोगेपिकर्मसंज्ञाप्रयोजकव्यापारस्योक्तद्विविधप्राधान्य स्यसत्त्वात्प्राप्नोति नचेष्टापत्तिः आकडारादितिन्यासान्तरेणवैरूप्यापत्तेः नचायोयःकर्तासएवणौकर्म भवतिनतुतद्भिन्नइतिविपरीतनियमःकस्मान्नभवतीतिवाच्यम् लक्ष्यविसंवादापत्तेः ण्यन्तेकर्मान्तरस्यभवन्मतेऽभावेनण्यन्तेकर्तुश्चकर्मणइतिविशेषाभिधानानुपपत्तेश्च कर्मान्तरसम्भावनाया अभावेनसौत्राकर्मकग्रहणवैयर्थ्यापत्तेश्च अनीप्सितत्वाभावादिति प्रकृतिजन्यशाब्दबोधेप्रधानीभूतोयोव्यापारस्तत्प्रयोज्यफलाश्रयत्वेनोद्देश्यत्वस्यसत्त्वेनोद्देश्यत्वाभावात्मकानीप्सितत्वाभावादित्यर्थः ननुप्रयोज्यव्यापारोद्देशेनप्रयोजकव्यापारस्यप्रवृत्तेर्लौकिकमनीप्सितत्वंस्वर्गादीनामस्त्येवेत्यतआह तत्रापीति कर्तुःक्रिययातथायुक्तमित्येवंसूत्रार्थस्यसत्त्वात् मूलेस्वतन्त्रोपलक्षणमिति स्वतन्त्रेलाक्षणिकमित्यर्थः कर्तृपदस्यशक्तिवि

प्राक्कडारादितिशास्त्रबाधापत्तेः स्पष्टंचेदंतत्रैवकैयटे नन्विहेतितथायुक्तमित्यनेनापिनतस्यानीप्सितत्वाभावात् तत्रापिकर्तुरित्यनुवृत्तेश्च लक्षणांविनेतिकर्तृपदस्यस्वतंत्रेलक्षणांविनेत्यर्थः अतएवसार्थाद्धीयतइत्यत्रकर्तुरपादानत्वेपिकर्मत्वप्रयुक्तलकारसिद्धिरितिसम्प्रदानसंज्ञासूत्रेकैयटस्यस्पष्टम् तत्प्रयोजकोहेतु ॥ ((शेषावच्छिन्नेपरिभाषितत्वादितिभावः अतएव कर्तृपदस्यतत्रलक्षणा

सत्त्वादेव दाधातोर्विभागानुकूलव्यापारोऽर्थः तादृशविभागावधित्वस्यप्रकृतधात्वर्थप्रधानव्यापाराश्रयत्वेनकर्तृत्वस्यचप्रासौपरत्वात्कर्तृसंज्ञेवसार्थस्यस्यान्नत्वपादानत्वमितिकथमत्रपञ्चमीतिनशङ्क्यम् अपादानेचाहीयरुहोरितिज्ञापकादितिगृहाण अपादानेयापञ्चमीभवतितदन्ताद्दासिःस्यात् तच्चेदपादानंहीयरुहसम्बन्धिनचेदितितदर्थः ग्रामाद्ग्रामतोवागच्छतीतितदुदाहरणम् अत्रहीयतिकर्मप्रत्ययेसतिहीयतेइतियद्भवतितदेकदेशानुकरणमतस्तेनपर्युदासरूपज्ञापकेनकर्मप्रत्ययान्तदाधातुयोगेविप्रतिषेधइतिशास्त्राप्रवृत्त्याऽपादानत्वम्भवति सार्थएनंजहातिअयंसार्थाद्धीयतेइतिसम्प्रत्ययात् हीयतइतिकर्मकर्तरिलः हीयतेऽपगच्छतीत्यर्थः नकेवलङ्गतिबुद्धीतिसूत्रएवकर्तृग्रहणंस्वतन्त्रोपलक्षणङ्किन्त्वन्यत्रापीत्याह तत्र

एवमेव तत्सदमपिस्वतन्त्रपरामर्शकमेव कर्तुरीप्सिततममितिसूत्रे कर्तृपदस्यलक्षणांविनापिनिर्वाह इत्याशयेनाह किञ्च प्रयोजकेति एतत्सर्वंकर्मसंज्ञा।
याप्रागप्रवृत्तिमभ्युपेत्य वस्तुतस्तुगतिबुद्धीतिसूत्रस्यणिचिकृतेप्रवृत्तिः कर्तुरीप्सिततममित्यस्यतुप्रागेवप्रवृत्तिरित्यनुपपत्तिग्रन्थोपिनेत्याह किञ्चणिजुत्पत्ते
रिति ननुकृतमपिकार्यंनिवर्तयनीत्यर्थकाकृतेतिन्यायेनप्राक्प्रवृत्तायाः संज्ञायाअपगमेपुनस्तस्याः प्रवृत्तिरभिप्रेताअथवाप्रयोज्यस्यकर्तृत्वनष्टस्यती
तिस्वर्गादीनांकर्मसंज्ञाप्राङ्नभविष्यतीत्यतआह अकृतेति अनित्यमिति छोरितिसूत्रेसनुक्तग्रहणात् एतत्कैयटानुरोधेन स्वमतेनाह नास्त्येवेतिगतिसूत्त
रदेशसंयोगानुकूलव्यापारमात्रस्यायणन्तुतादृशव्यापारानुकूलव्यापारइत्याह उत्तरदेशेति अतएवप्रतिषेधादिति नीवह्योरित्यस्मादेवप्रतिषेधादित्यर्थः।

रितिसूत्रेप्येवमेव अतएवणिच्सिद्धिः अवधेहीति किञ्च प्रयोजककर्तृव्यापारप्रयोज्यसंयोगरूपफलाश्रयत्वेनाक्षतंकर्मत्वम्
किञ्चणिजुत्पत्तेःप्रागेवस्वर्गादीनांकर्मत्वप्रवृत्तिः तस्यामवस्थायांकर्तृत्वसत्त्वात् अकृतव्यूहाइतित्वनित्यंनास्त्येववा प्रापणमि।
ति उत्तरदेशसंयोगानुकूलव्यापारानुकूलव्यापारोहितत् तथापीति अतएवप्रतिषेधाद्यथाकथंचिद्गत्यर्थानामप्यत्रग्रहणमितिभा
वः प्राप्तिंमस्त्वेति नवेतिसूत्रेभाष्येहृकोरित्यस्योभयत्रविभाषात्वमुक्त्वाप्राप्नेऽभ्यवहरतिमुदाहृत्याप्राप्तेहरतिभारंदेवदत्तोहारयतिभारमि
त्युदाहरणात्॥

यथाकथञ्चित् विशेषणतया जातिविशिष्टस्यशब्दार्थत्वेपिजातिशब्दत्वव्यवहारवत् अपिनाविशेष्यतयेत्यस्यसङ्ग्रहः अत्र गती
तिसूत्रे अतएवणिजन्तस्यगत्याद्यर्थकत्वमुपजीव्यगत्याद्यर्थानामणौकर्तायः सणाविति व्याख्यानमपिसुष्ठुसङ्गच्छते एतावताप्रबन्धेनमूलंसंयोज्यसिद्धा
न्तरीत्यामूलंखण्डयितुमुपक्रमते नवेतिसूत्रइत्यादिना अभ्यवहरतिम् अभ्यवपूर्वकहृधातुम् प्रत्यवसानार्थत्वाद्धि प्राप्तिरत्र अप्राप्तइति संयोगानुकूल
व्यापारमुख्यविशेष्यकोपस्थितिजनकस्यगत्यर्थत्वमितितदाशयः उदाहरणादिति प्रापणार्थस्यगत्यर्थत्वे प्राप्त मिथानसंसङ्गतंस्यादितिभावः॥ ६॥

विपूर्वइति विहरतिदेशान्तुरगाइतिशब्दात्सम्यग्गच्छतीत्यर्थावगमात् केवलस्यगत्यर्थत्वेविपूर्वइतिनवदेदितिभावः अभ्यवपूर्वइति हरतिरित्यस्यानुषङ्गः अप्रति
षेधइति —— नगतीतिप्रतिषेधोनेत्यर्थः प्रापणंयदिगतिः स्यात्तदाप्रतिषेधाभावाभिधानमसङ्गतंस्यादितिभावः नन्वेतावताहरतेरस्तुतथा वहतेस्तुगत्यर्थ
त्वाभावेकिम्मानमतआह तत्रैवेति नगतीतिसूत्रएवेत्यर्थः इतिभाष्येणेति वार्तिकस्थवहिग्रहणप्रत्याख्यानपरेणेतिशेषः वहधातोर्गत्यर्थत्वाभावेहेतुमा
ह प्राप्तिश्चेति एवञ्चसंयोगत्वेनसंयोगस्यतन्मध्येऽप्रवेशान्नगत्यर्थत्वमितिभावः सुखम्प्राप्तइति अत्रसमवायत्वेनसंबन्धस्योत्तरत्रस्वस्वामिभावत्वेन
सम्बन्धस्यप्रवेशइतिविवेकः गत्यर्थत्वाभावेकर्तरिक्तप्रत्ययएवकथमतआह आदिकर्मणीतिचस्त्वर्थे नन्वेवन्तर्हिनीवह्योरितिवार्तिकस्यकागतिरत

विपूर्वोहरतिर्गत्यर्थोऽभ्यवपूर्वः प्रत्यवसानार्थइतितत्रस्यकैयटाच्च नगतीतिसूत्रेहृवह्योरप्रतिषेधः संप्रहरन्तेराजानइतिहिंसार्थस्यवभा
ष्येउदाहरणाच्च तत्रैववहिर्नगत्यर्थः देशांतरप्रापणंहिवहेरर्थइतिभाष्येणप्रापणस्यगतित्वाभाववोधनाच्च नगत्यर्थत्वेनतेषाग्रहणम् ॥
प्राप्तिश्चसंबंधमात्रंनसंयोगएव सुखंप्राप्तोधनंप्राप्तःभूः प्राप्तेत्यादिव्यवहारात् आदिकर्मणिचकर्तरिक्तःदेशान्तरप्राप्तेः परंगतिंवि
नानुपपत्त्याक्वचिन्नान्तरीयकतयागतिप्रतीतिरस्त्येव तादृशमपिगत्यर्थकत्वमभिप्रेत्यवार्तिकारम्भः वस्तुतोऽप्राप्तिरेवेत्यनेनसू
चितम् हिंसेति हिंसाङ्गेभक्षणेच भक्षयतेर्दृतिर्वोध्या भाष्यप्रयोगादेवेति॥ ११ आह देशान्तरप्राप्तेरिति परंकेवलं सुखम्प्राप्तइत्यत्रनतथावग
त्यभावादाह क्वचिदिति ग्राममप्राप्तइत्यादौनान्तरीयकतयातस्यप्रतीतिः इत्यभिमतस्य एवमङ्गीकृत्य उक्तभाष्यविरोधोऽस्याभिमानत्वोक्तौहेतुः एवञ्चन्यायसिद्धा
र्थानुवादएववार्तिककृताकृतइतितत्त्वम् ननुक्षेत्रस्थानांयवानाम्भक्षणेयवानांयद्यपिप्राणवियोगसत्त्वाद्धिंसाभवतितथापिधातोस्तदर्थत्वाभावान्ननिषेध
स्यप्राप्तिरतआह हिंसाङ्गेति हिंसायाअङ्गं विशेषणमितिवाच्यार्थः भक्षणकरणकहिंसनेधातोर्वृत्तिरितिभावः भक्षयतेः स्वार्थणिजन्तप्रकृतिकहेतुम
ण्णिजन्तस्यभक्षयतेः अस्मादेवनिषेधाद्गति —— वुद्धीतिसूत्रेऽणौत्यत्रहेतुमण्णिच्चस्यवग्रहणम् मूलेस्मारयतीति चिन्तनार्थोयन्नमितु॥ ६ ॥

ननु यदि भाष्यप्रयोगात्कर्मत्वं तदा स्मारयति देवदत्तेनेत्यत्रातिप्रसङ्ग इत्यत आह आध्यानेति उत्कण्ठापूर्वकस्मरणे इत्यर्थः स्मरतेः चिन्तनार्थस्य स्मरतेः वक्ष्यमाण
रीत्याऽप्युक्तम्मूलं योजयति इदमिति शब्दायतेरिति वचनमित्यर्थः कैयटपदसूचितामरुचिमाह वस्तुत इत्यादिना एवञ्च तत्र पक्षे प्रतिषेधानुक्तौ च तत्र पक्षे शा
ब्दकर्मकाणामिति पक्षे ननु धात्वर्थसङ्गृहीतकर्मकत्वमेव मानम्भविष्यतीत्यत आह शब्दस्येत्यादि बहिर्भूतेति अन्तर्भूतशब्दात्मककर्मणा इत्यादिः तेन एवं।
व्याख्यानेन बोधनार्थस्य बुद्ध्यर्थकत्वेन गतिबुद्धीति सूत्रस्य प्राप्तिरन्यार्थकत्वेऽपि नेति भावः अन्यथा अस्यार्थस्यापि द्विकर्मकत्वस्य प्रामाणिकत्वे एवञ्चेति।

आध्यानार्थकघटादिभिन्नस्मरतेरेव योगे तद्भाष्यप्रामाण्यात् कर्मत्वाभावो घटादेस्तु भवत्येव कर्मत्वमिति भावः परास्त इति इदं च कैयटा
नुरोधेनोक्तम् वस्तुतः शब्दक्रियाणामिति पक्षे भाष्ये ह्वाययति शब्दाययति क्रन्दयतीनां निषेध उक्तो न तु शब्दकर्मकाणामिति पक्षे एवं च
तत्पक्षे शब्दाययतौ प्रतिषेधानुक्त्याऽकर्मकशब्दाययतिसत्त्वे न मानम् शब्दस्य धात्वर्थेन संगृहीतत्वेऽपि बहिर्भूतपुत्रादिकर्माभावेन मान
मिति बोध्यम् ब्याच स्युरिति तेन बोधनातिरिक्तार्थस्य न द्विकर्मकत्वम् अन्यथाप्रसिद्धार्थे परिग्रहो व्यर्थ एव स्यादिति भावः ग्राहेः बो
धनातिरिक्तार्थग्राहेः ततश्चेति एवञ्च व्यधिकरणत्वादन्यपदार्थाभावाच्च बहुव्रीहिर्न स्यादिति भावः प्रतिग्राहितेति अस्य जायये त्या
दिः तत्र जायाप्रतिग्राहितशब्दयोस्तृतीयातत्पुरुषं कृत्वा बहुव्रीहिः कार्य इति भावः बहुव्रीहिणा तृतीयातत्पुरुषस्तु ॥ ६ ॥

धेनोरभिधाने च अन्यपदार्थत्वाभावादिति धेनोः कर्तृनाभिधानादिति भावः तत्र जाययेत्यस्यादित्वे तृतीयान्तस्य व्यधिकरणत्वाद्बहुव्रीहिघटकत्वं न सम्भ
वतीत्यत आह तृतीयातत्पुरुषमिति बहुव्रीहिरिति जायाप्रतिग्राहितशब्दस्य द्वन्द्वसंज्ञकगन्धमाल्यशब्देन बहुव्रीहिसमास इत्यर्थः ननु प्रतिग्राहितेन ग
न्धमाल्येयये इत्यर्थे बहुव्रीहिर्ङ्कुत्वा तेन जाययेति तृतीयान्तस्य तत्पुरुषोऽस्त्वित्यत आह बहुव्रीहिणेति॥ ॐ ॥ श्रीरामचंद्राय नमः

विधायकाभावादिति समुदायार्थस्य तृतीयान्तार्थेकृतत्वाभावेन तृतीयात् क्तेनेति सूत्रस्याप्राप्तेरिति भावः ननु अवयवद्वारकसामर्थ्यमादाय सुप्सुपेति समासोऽस्त्वि
त्यत आह अवयवेनेति द्विकर्मकत्वेपीति बोधनातिरिक्तार्थस्य ग्रहे द्विकर्मकत्वेपीत्यर्थः कर्मत्वाविवक्षायामिति सम्बन्धित्वेन विवक्षायामित्यर्थः इष्टसि
द्धिरिति जायया प्रतिग्राहिते इत्यर्थे तृतीयातत्पुरुषं कृत्वा जायाप्रतिग्राहितेगन्धमाल्ये यस्याइत्यर्थे बहुव्रीहिसमासेनेष्टसिद्धिरिति भावः हेतुत्वार्थमिति।
हेतुसंज्ञार्थमित्यर्थः कर्तृत्वार्थमिति कर्तृसंज्ञासिध्यर्थमित्यर्थः ईदृशार्थस्य तादृशव्यापाररूपार्थस्य एतत्कर्मसंज्ञेति धेनोः कर्मसंज्ञानिमित्तकोटौ प्रवे

दुर्लभो विधायकाभावात् अवयवेन सामर्थ्येपि समुदायेन तृतीयान्तस्यासामर्थ्याच्च तदाह जायानिष्ठेति ननु द्विकर्मकत्वेपि धेनुरूप
प्रयोज्यकर्म्मणः कर्मत्वाविवक्षायां गंधमाल्यरूपकर्मण्येव क्ते इष्टसिद्धिरिति चेन्न णिजुत्पत्त्यर्थं प्रयोजकजायाया हेतुत्वावश्यकत्वे
न हेतोश्च कर्तृप्रयोजकत्वरूपत्वेन प्रयोज्यायाः धेनोः कर्तृत्वार्थं जायानिष्ठप्रेरणविषयीभूतव्यापाराश्रयत्वविवक्षाया आवश्यकत्वे।
न ईदृशार्थस्यैवैतत्कर्मसंज्ञानिमित्तकोटौ प्रवेशेन ईदृशविषये कर्मत्वाविवक्षाया उपपादयितुमशक्यत्वात् कर्मत्वशक्तेरपि तत्स
मनियतत्वेनाविवक्षाया असम्भवइत्यभिमानात् न च निवृत्तप्रेषणप्रतिग्रह धातोर्णिचि गंधमाल्यकर्मण्येव क्ते इष्टसिद्धिः जायाप्रदेन

शेनेत्यर्थः ईदृशे विषये कर्तुः कर्मत्वविषये ननु कर्तृत्वकर्मत्वशक्त्योरन्यतरस्य सत्त्वमस्तु अन्यतरस्याविवक्षा ॥ षष्ठीसमासइतिवाच्यम् ॥ ७ ॥
स्त्वित्यत आह कर्मत्वशक्तेरपीति तत्समनियतत्वेन कर्तृत्वसमनियतत्वेन अभिमानादित्यभिधानमरुचिसूचनाय तद्बीजन्तु शक्त्योर्भेदे तयाविवक्षा।
सम्भवत्येवेति निवृत्तप्रेषणग्रह धातोः स्वीकारमात्रार्थकग्रहधातोः णिचि तादृशस्वीकारानुकूलव्यापाररूपार्थे णिचि उच्छृङ्खलत्वस्य शङ्का वा।
रयितुमुपक्रमते नन्वित्यादिना अन्यान्तर्भावेणेति वृत्तौ विग्रहघटकपदार्थातिरिक्तार्थस्यान्यपदार्थभिन्नस्य बोधकः शब्दइत्यर्थे मानाभाव इति भावः

व्याख्यानादिति वक्ष्यमाणभाष्यप्रयोगमूलकव्याख्यानादित्यर्थः वीजाभासमिति पूर्वनिपातप्रकरणस्यानियतत्वात्पूर्वनिपातस्य संघातविवक्षासाधक
त्वाभावाद्वीजाभासत्वमित्यर्थः अत एव संघातस्य विवक्षायाः सत्वादेव भाष्यप्रयोगः वीतागुणवचनादिति सूत्रस्थभाष्यप्रयोगः ननु नित्यमितिसू
त्रेणायचोवृत्तिविषये विधानादुभशब्दोद्देश्यकत्वं षष्ठ्यर्थ इति वक्तुमशक्य मित्यत आह उभौ श इति ननु मौत्ववचनेन तर्हि कुतो नायजित्यत आह उभ

प्रकृत्यैव तदर्थलाभे णिजुपादानस्यापुष्टतापत्तेः ननु गवादिपदानां विग्रहे स्वार्थमात्रपराणां समासेन्यपदार्थपरत्वमिव प्रतिप्राहित
शब्दस्य धेनुपरत्वेपि दत्तौ गंधमाल्यपरत्वं भविष्यतीत्यत आह अन्यपदार्थेति तदंतर्भावेणैकार्थीभावस्य सूत्रव्युत्पत्यादिवृत्तेनाङ्गी।
कारेप्यन्यांतर्भावेण तत्स्वीकारे मानाभाव इति भावः व्याख्यानात्संघातग्रहणे स्थिते व्याख्याने वीजाभासं दर्शयति पूर्वनिपात इति नि
विशते इति अत एव सत्वे निविशतेपैतीति भाष्यप्रयोगः संगच्छते भाष्यप्रयोग इति समर्थसूत्रस्थ इति शेषः उभमर्वेयोस्त्साविति उ
भौशे उभशब्दघटितसमुदायोद्देश्यकत्वं षष्ठ्यर्थ इति बोध्यम् उभशब्दस्य शब्दपरत्वाद्वृत्तिविषयेपि नाप्त्व वार्तिके उदाहरणेतु।
अंतरङ्गत्वात्पूर्वमेवायचि नतउभयशब्दान्तस्यापि तद्घटितसमुदायोद्देश्यकत्वमस्त्येवेति न दोषः वृत्तिविषय इति वृत्तौ कृताया
मित्यर्थः प्राचीनैर्हि उभौ साभ्यामस्येति निर्देशेन वृत्तिघटके परत एवायजिति व्याख्यातम् तदाह उभशब्दादित्यादिः एवं चतेषां स्व
रसाश्रयणं व्यर्थमिति भावः अविभक्तिक इति अनुत्पन्नविभक्तिक इति तदर्थ इति तद्व्याख्यातारः॥ ॥ ॥ ॥ ॥

शब्दस्येति यत्र संख्येयपरतास्ति तत्रोभादुदात्त इत्यस्य प्रवृत्त्या नित्यमित्यस्यापि तत्रैव प्रवृत्तिरिति भावः प्राचीनसम्मतव्याख्यानानुरोधेनाह वृत्तौ।
कृतेति धिगित्यत्र विभक्त्यश्रवणेनाविभक्तिकत्वं स्पष्टमेवेत्यत आह अनुत्पन्नेति॥ ॥

सूत्रेणैव तसिल्प्रत्ययस्योपपत्ता वाद्यादित्वकल्पनमनुचितमित्यभिप्रायेणाह कस्मसंबन्धीति ननु सामानाधिकरण्यमेकाधिकरणवृत्तित्वं न तस्य सम्बन्धत्वं नु नीलो घट इत्यादौ बाधितं तद्द्वयोरभेदादत आह विनापीति सम्बन्धम् सम्बन्धविशेषम् षष्ठ्याः शब्दरूपतया सम्बन्धत्वं न सम्भवतीत्यत आह भेदसम्बन्धेति भेदप्रयोज्यसम्बन्धेत्यर्थः स च स्वस्वामिभावादिरूपः ननु नाम्नोरेव द्विधाऽभिसम्बन्धाभिधानमसङ्गतम् क्रिययोरपि द्विधासम्बन्धस्य दर्शनात् एधाञ्चक्र इत्यादौ पुरीमवस्कन्द इत्यादौ चाभेदस्य कस्मन्नमेव सुखं यायादित्यादौ भेदसम्बन्धावच्छिन्नविशेष्यविशेषणभावस्य प्रतीतेरत आह नाम्नोरित्यनेनेति एवञ्च नाम्नोरेव द्विधासम्बन्धप्रतिपादने न तात्पर्यं किन्तु क्रियाकारकयोर्विशेषसम्बन्धाभिधाने तात्पर्यमिति भावः ननु दृष्टान्तो वैयधिकर

दृष्टान्तबलेन तथैव लाभात् तदभिप्रेत्याह जग्धस्येति अतिदेशादिति अतिदेशेनान्वयत्वादित्यर्थः आद्यादित्वादिति कस्मसंबंधिपाश्चैद्याभ्यामागता इत्यर्थे पंचम्यास्तसिलित्यन्ये सामानाधिकरण्येन विनापि संबंधं विशेष्यविशेषणभावेन षष्ठ्येति भेदसंबंधपूर्वकविशेष्यविशेषणभावेनेत्यर्थः नाम्नोरित्यनेन क्रियाकारकयोः क्रियाकारकभावरूपकारकविभक्त्यर्थसम्बन्धेनान्वय इति सूचितम् वैयधिकरण्येति षष्ठ्या वेत्येतद्वैयधिकरण्योपलक्षणमिति भावः क्रियान्वय इति बोधनीयक्रियान्वय इत्यर्थः धिक्शब्दयोगाभावादिति॥

प्यपदानुक्तेः कथमेवमभिधानमत आह षष्ठ्या वेत्येतदिति बोधनीयेति विधेयभूतेत्यर्थः एवञ्च धिङ्मूर्ख त्वं जीवसीत्यादि विधेयक्रियायाम्मूर्खस्यान्वयस्तस्यामेव धिक्शब्दार्थनिन्द्यत्वस्यान्वय इति क्रियाया निन्द्यत्वस्य प्रतीतिर्न तु मूर्खत्वस्येति भावः तथा च यस्मिन्वाक्ये सम्बोधने न विभक्त्यन्तस्य क्रियावाचकस्य च तादृशस्य प्रयोगस्तत्र तस्याः क्रियायामन्वयो यत्र तु सम्बोधनविभक्त्यन्तमात्रस्य प्रयोगस्तत्र विधेयक्रियावाचकम्पदमध्याहर्तव्यमित्यत्र तात्पर्यम् यत्र धिङ् मूर्ख जीवसीति प्रयुज्यते तत्र जीवनरूपा क्रिया न विधेया तस्याः सिद्धत्वात्किन्तु जानीहीत्यस्य शेषता कल्पनीया अभिमुखीभवन्मूर्खोद्देश्यकं जीवनसम्बन्धिनिन्दाकर्मकं यज्ज्ञानं तदनुकूलप्रवर्तनाविषयो व्यापार इति शाब्दबोधः ॥ ॥ ॥ ॥ ॥

नयोगइति किन्तु जानीही त्येतदर्थे तातेत्यस्य त्वांह्वा मांवाह्वा इतिवाक्यद्वयमेवात्रबोध्यम् ह्वापदस्येति खेदार्थकस्येतिशेषः ननुसम्बोधनपदार्थस्यक्रियायाम
न्वयस्यप्राक्प्रतिपादितत्वे नतिङ्समानाधिकरणेप्रथमेतिवार्तिकेकवाक्यतयाप्रथमायाः कारकविभक्तित्वस्यसत्त्वाच्चतन्मन्दमित्यादिनाप्रतिपादितम
सङ्गतमतआह कर्तृकारकेति ननुयदिकारकत्वन्तर्हितस्यकर्तृत्वमप्यस्त्वितिस्य तत्राह सम्बोधनपदार्थस्येति देवत्वम्प्रसीदेतिवाक्यइत्यादिः त्वमित्यनेन
एतदर्थेनत्वभेदेपीति फलिताभेदेपीत्यर्थः शब्दतइति सम्बोधनपदार्थइत्यादिः उद्देश्यतयैवतस्यतत्रान्वयस्यस्वीकारादितिभावः ननुतस्मिन्वाक्येत्वमित्ये
तदर्थेनसहदेवेत्यस्याभेदस्यसत्त्वाद्गुणस्याश्रयत्वमप्यस्तीत्यतआह वास्तवेति वहूपल्लवइति वचनरूपाद्यव्यवस्थारूपइत्यर्थः वस्तुतस्तुवाक्यैकदेश

संबोधनस्यक्रियान्वयात्तत्क्रिययैवधिकोयोगोनतेनापीतिभावः व्याख्यातंइति तातेत्यादेर्ह्वाशब्देननयोगइतिभावः ह्वापदस्यचाध्याहृ
तत्वामित्यनेनमामित्यनेनवान्वय इतितात्पर्यम् कारकविभक्ति त्वमिति कर्तृकारकविभक्तित्वमित्यर्थः संबोधनपदार्थस्यदेवस्यत्वमि
त्यनेनसहाभेदेपिशब्दतःक्रियाश्रयत्वादिप्रतीतेरुपपादनस्याशक्यतयाकर्तृत्वंदुर्लभंवास्तवक्रियाश्रयत्वमादायकर्तृत्वेतुवहूपल्लवइ
तिभावः नास्यप्रवृत्तिरिति अतएवसर्वेषामधमम्लानमुपर्युपरिवर्ततइत्यादौनद्वितीया ॥ १९ न्यायेनत्वजानिदेवदत्तेत्यस्यत्वजानिदेवदत्तजानी

हीत्येतदर्थकनास्तिएकतिङ्वाक्यमित्यस्यश्रूयमाणैकतिङ्वाक्यमित्यर्थइतिनिघातस्यसिद्धिरप्यस्ति अतएवसम्बोधनस्यकर्तृकारकवाचित्वव्यवहारोपि
प्राचाम् देवदत्तेत्यस्योक्तन्यायेनदेवदत्तत्वञ्जानीहीत्येतदर्थकत्वेनविधेयक्रियाकर्तृकारकवाचित्वात् अतएवतिङ्समानाधिकरणेप्रथमेतिवार्तिकस्य
प्युपपत्तिः यत्रक्रियावाचकस्यदन्नश्रूयतेतत्राप्यस्तिर्भवन्तीपरइतिन्यायेनगम्यमानक्रियान्वयोस्त्येव भवन्तीपरइत्यस्यलट्परइत्यर्थः अत्रभवन्तीत्युपलक्ष
णम् लकारान्तरस्यापिक्वचित्सम्भवादतआह इतिभावइति एवञ्चसूत्रोक्तन्त्विन्यायमित्यत्रतात्पर्यम् ननुप्रथमसमाधानेन उपर्युपरिवुद्धीनामित्यस्यसूपपाद
त्वेनयद्वेत्यादिनोक्तद्वितीयसमाधानस्यनोपयोगः किन्त्ववुद्धीनामितात्रेष्टावुद्धीनातामुपर्युपरीत्येवन्द्वितीयापिवक्तुंशक्येत्यतआह अतएवेतिद्वितीयसमाधा

एतदेवाहात्रेति उक्तवाक्येइ त्यर्थः अतिशयइति यथाउपर्युपरिलोकंहरिरित्यादौद्विरुक्तस्योपर्युपरीत्यस्यसमीपोर्ध्वदेशवृत्तित्वमर्थः प्रतियोगित्वरूपः सम्ब
न्धोलोकपदोत्तरद्वितीयार्थः लोकप्रतियोगिकसामीप्यवदूर्ध्वदेशवृत्तिर्हरिरित्यर्थः प्रतीयतेनतथाप्रकृते किन्तुवृद्धानांलौकिकपुरुषवृद्धीनामुपर्युपरिनद
वधिकातिशयविशिष्टाश्चरन्तीत्यर्थइतिनद्वितीयाप्रसक्तिरितिभावः द्विर्वचनञ्चात्रेति चस्त्वर्थे ननुवुभुक्षितन्नप्रतिभातीत्यत्रकर्मप्रवचनीययुक्तइत्येव
द्वितीयासिद्धाप्रतिशब्दस्येत्यम्भूताख्यानेनत्स्याःसंज्ञायाःप्राप्तेरतआह वुभुक्षितेति वुभुक्षितेनान्वितोयःप्रत्यर्थःप्रतियोगित्वरूपोयःसम्बन्धस्तस्यक्रियाग
तत्वमित्यर्थः सचप्रतिभात्वरूपएव एतच्चस्फुरदितिस्फूर्तिकत्वमेव एतस्यसम्बन्धस्यप्रतिद्योत्यतावाच्यस्तुसधातोरेवेतिसूचनायवुभुक्षितस्यनभातीत्यस्यप्र
तत्वमित्यर्थः सचप्रतिभात्वरूपएव एतच्चस्फुरदितिस्फूर्तिकत्वमेव एतस्यसम्बन्धस्यप्रतिद्योत्यतावाच्यस्तुसधातोरेवेतिसूचनायवुभुक्षितस्यनभातीत्यस्यप्र

अत्रउपर्युपरीत्यस्यातिशयोर्थोनसामीप्यम् वीप्सायांद्विर्वचनञ्चात्रेतिबोध्यम् उपसर्गइति वुभुक्षितान्वितप्रत्यर्थसंबन्धस्यक्रियाग
तत्वात् वुभुक्षितस्यनभातीत्यन्वयइतिभावः मध्येइति अन्तराइतिहिमध्येइत्यर्थकम् लक्ष्यलक्षणेति वृक्षप्रकाशेनविद्युद्द्योतन
ज्ञानाद्वृक्षोलक्षणंविद्युत् विद्योतनंलक्ष्यम् कर्मणीति वृक्षपदार्थस्यसेचनंप्रतिकर्मत्वात् अतएववृक्षस्यवृक्षस्यप्रतिसेचनं
मित्यादौषष्ठीतिभावः विषयतयेति अन्यद्योत्यायाअपिवीप्सायाःसंज्ञाप्रतिनिमित्तत्वादितिभावः इतरेलक्षणादयस्तुद्योत्याएवेतिबो
ध्यम्॥

तिशब्दाघटितस्यत्वेरवः कर्मप्रवचनीयत्वेतुतस्याप्युपादानङ्गंतस्मात् एवञ्चवुभुक्षितसम्बन्धीयत्किञ्चिद्विषयकप्रतिभाभावइतिबोधः
अन्तराशब्दस्याधिकरणशक्तिप्रधानत्वादाह अन्तराइतिहीति मध्यत्वान्वय्यवधित्वरूपः सम्बन्धोद्वितीयार्थः अन्तरान्तरेणेतिसूत्रेपरस्परसाहचर्याद
व्यययोरेवग्रहणन्तुदावन्ततृतीयान्तयोः अतएवेति कर्मणिद्वितीयाङ्गीकारादेवेत्यर्थः षष्ठीति कर्तृकर्मणोरितिसूत्रविहितापष्ठीत्यर्थः एतेनास्यकर्म
प्रवचनीयसंज्ञयाषत्वाभावोयथाभवतितथाकर्मप्रवचनीययुक्तइतिद्वितीयापिसिद्धैवेतिकर्मणिद्वितीयेत्ययुक्तमितिपरास्तम् शेषषष्ठीतुवक्तुमशक्या
कर्मप्रवचनीययोगविहितद्वितीयायास्तद्बाधकत्वात्॥

ननु लक्षणादीनां विषयत्वन्द्योत्यत्वेनवाच्यत्वेनवावक्तव्यन्तच्चान्यतरदप्यत्रन वीप्सायान्द्विर्वचनस्यस्वीकारादतआह अन्यद्योत्सायादिति द्विर्वचनद्योत्यायाइत्यर्थः विषयत्वन्तुतद्घटितवाक्यजन्यशाब्दबोधविषयत्वाद्बोध्यम् वीप्सायाविषयत्वबोधनायसूत्रेवीप्सापदमत्रत्यादिसान्निध्येनोपात्तम् इतरे वीप्सातः ननुपरिशब्दस्यक्रियया सम्बन्धो नतु वृक्षेणेतिकथमयंचण्यापत्तिः कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वस्यैवकर्मप्रवचनीययुक्तत्वादतआह विशिष्टक्रियासम्बन्धेइति परिद्योत्यसर्वतोभावविशिष्टक्रियासम्बन्धेइत्यर्थः यदिक्रियया सम्बन्धोनस्यात्तदाकर्मत्वाभावाद्द्वितीयापिनस्यात् एवञ्चकर्मप्रवचनीयद्योत्यसम्बन्धाश्रयान्वितत्वरूपमिहकर्मप्रवचनीययुक्तत्वमस्तीतिभावः अभ्युपेत्यवादोयमितिध्वनयन्नाह एतत्सर्वमिति एतत्सर्वम् इहवीप्सेत्यादिनोक्तम् हरद

इतितुनभवतीति विशिष्टक्रियासम्बन्धेविशेषणेनापिसम्बन्धात्प्राप्तिरितिभावः एतत्सर्वंहरदत्तानुरोधेन कर्मत्वाविवक्षायामपिद्वितीयार्थसंज्ञाया आवश्यकत्वात् किंचपरैः क्रियाविशेषकत्वेअन्वर्थत्वेनकर्मप्रवचनीयत्वस्यैवानापत्तिरित्यन्यत्रविस्तरः नन्वत्रार्थेभागाप्रतीत्याकथंनिषेधःऽतआह अत्रचेति अर्थतोभागपर्यवसानमादायनिषेधप्रवृत्तिरितिभावः कालेध्वेति येनकालेनाध्व॥

त्तानुरोधेनेति उपपविभक्तेरितिन्यायेनात्रकर्मण्येवद्वितीया पर्यादयस्तुक्रियाविशेषकाएवेतिहरदत्तेनोक्तम् कर्मत्वाविवक्षायामिति तादृशशक्तिमत्त्वेनविवक्षायाङ्कर्मणिद्वितीयेत्यस्यप्रवृत्तिरितिस्पष्टमेव अनापत्तिरिति कर्मप्रवचनीयइत्यत्रबाहुलकात्कर्तरिभूतेऽनीयर कर्मशब्दोत्रक्रियागतविशेषस्यबोधकः येकर्मप्रोक्तवन्तः सम्प्रतितुनतथाकिंत्वप्रयुज्यमानक्रियाकृतसम्बन्धविशेषस्यद्योतकाइतिलभ्यम् एवञ्चयदिप्रयुज्यमानसेचनक्रियागतविशेषद्योतकाएतेतदाऽप्रयुज्यमानक्रियाकृतविशेषाद्योतकत्वात्कर्मप्रवचनीयसंज्ञैवनस्यान्महासंज्ञाकरणादितिभावः ननुभवन्मतेकथमत्रकर्मप्रवचनीयसंज्ञेतिचेदित्थम् वृक्षम्प्रतिविद्योततेविद्युदित्यत्रप्राप्तिरूपायाःविद्यमानक्रियातत्कृतोयोविलक्षणोवृक्षविद्योतनयोर्लक्ष्यलक्षणभावाख्यःसम्बन्धस्तद्द्योत

इत्थम्भूताख्यानेउदाहरणमस्मिन्देशेप्रतिपुरुषंसौन्दर्यमस्तीत्यादौप्राप्तिक्रियाजनिताधाराधेयभावाख्यस्यपुरुषसौन्दर्ययोः सम्बंधस्यद्योतकतास्ति भागेवृ
क्षम्प्रतिफलानितिष्ठन्ति अत्राप्रयुज्यमानप्राप्तिक्रियाजनितोयोऽवयवावयविभावोजन्यजनकभावोवासम्बन्धस्तत्परिच्छेदकतास्ति वीप्सायाम् वृक्षंवृक्षं
प्रतिसिञ्चतीत्यत्रवृक्षस्यजलसंयोगाख्यसेचनस्यचयोव्याप्यव्यापकभावाख्यः सम्बन्धः सोऽप्रयुज्यमानतत्तद्वृक्षावच्छिन्नोत्पत्तिक्तनइतिकर्मप्रवचनीयत्व
म् किञ्चयद्यत्रवृक्षस्यक्रियाकर्मत्वमाश्रित्यकर्मणिद्वितीयाप्रतेः सेचनगतसर्वतोभावरूपसम्बन्धद्योतकतावाचकल्प्यतेतदाऽसामर्थ्यात्प्रतिवृक्षमित्यत्रसमा
सानापत्तिः अतएवप्रत्यर्थंशब्दनिवेशान्नैकेनानेकार्थस्याभिधानमितिसरूपसूत्रस्थभाष्यप्रयोगस्योपपत्तिः अन्यथाप्रतेर्भेवदुक्तरीत्यानिवेशनान्व
यित्वेनासामर्थ्यात्समासोनस्यात् अतएवैतत्सूत्रभाष्येकस्यलक्षणादयोऽर्थानिर्दिश्यन्ते वृक्षादीनाम् किमर्थम्पुनरिदमुच्यते कर्मप्रवचनीयसंज्ञायथा
स्यात् गत्युपसर्गसंज्ञेमाभूतामिति नैतदस्तिप्रयोजनम् यत्क्रियायुक्ताः प्रादयस्तम्प्रतिगत्युपसर्गसंज्ञेभवतः नचवृक्षादीन्प्रतिक्रियायोगः इदन्तर्हिप्रयो
जनम् द्वितीयायथास्यात् कर्मप्रवचनीययुक्तेद्वितीयेति वृक्षम्प्रतिविद्योतते वृक्षमनुविद्योततेइतिप्रघट्टकेनचवृक्षादीन्प्रतिक्रियायोगइत्यनेनवृक्षप्र
तिशब्दयोः सम्बन्धोदर्शितः कर्मप्रवचनीययोगेनद्वितीयाचस्पष्टमभिहिता किञ्चोक्तोदाहरणेद्युतेरकर्मकत्वात्कर्मणिद्वितीयावक्तुमप्यशक्येतिबोध्यम् मूले
प्राञ्चइत्यस्यप्रक्रियाकृतइत्यर्थः तस्योपपत्तिरपितत्रेत्यनेनदर्शिता तत्र तस्मिन्नत्युदाहरणे अत्रार्थे माम्प्राप्नुयादित्यत्रार्थे यन्माम्प्राप्नुयात्तद्दीयतामि
त्युक्तेभागएववक्तृतात्पर्यावगमः यदित्युपच्छब्दस्यबुद्धिस्थवाचकत्वेनभागवाचकत्वमेवप्रकृतेस्त्वितिस्वीक्रियतेतदात्वनुकापिशङ्केतिबोध्यम् काला
ध्वनोर्योऽत्यन्तसंयोगः सम्बन्धोव्याप्यव्यापकभावस्तस्मिन्नर्थेप्रातिपदिकाद्द्वितीयेत्यर्थेकेनात्यन्तसंयोगइत्याकाङ्क्षायाङ्गुणेनक्रिययाद्रव्येणवास
म्भवतीतितेषांलाभेप्रत्यासत्याकालाध्ववृत्तिभ्यान्द्वितीयाइतियद्यपिलभ्यतेतथाप्यन्यकालेनात्यन्तसम्बन्धोऽन्यकालप्रतिपादकाच्चुसेतिकुतोनेत्यत।
आह येनकालेनेति ॥

संयोगइति गुणादीनामिति अभावोदाहरणम्मासम्भोजनाभावइति ननुयन्मूलेसमासनिष्ठनेरेवफलत्वादित्युक्त्वानस्मादित्युपसंहरणन्नदयुक्तमन्यार्थड्ङु
नस्यकुल्यादेरन्योपकारकत्वस्यदृष्टतयातिङ्ङनेनयोगेक्त्वोर्थप्रयोगसूत्रप्रत्नेर्दुर्वारत्वादतआह अन्तरङ्गत्वाच्चेति अल्पापेक्षत्वरूपत्वात्रान्तरङ्गत्वम्
नचविशेषविहितत्वेनान्तरङ्गादपितत्सूत्रम्बलवद्भविष्यतीतिवाच्यम् अचारितार्थ्यविषयतायास्तस्योक्तेरितिभावः एतेन अन्तरङ्गत्वेन अननुवृत्ताविति
क्त्वोर्थइतिसूत्रइत्यादिः एवञ्चवक्ष्यमाणरीत्यासप्तसूत्र्यामेवशेषग्रहणानुवृत्तिः तेनैव क्त्वोऽर्थइत्यनेनैव परास्तमिति अल्पापेक्षस्यान्तरङ्गत्वन्तत्सा
म्मतमितितद्रीत्यैवतदुक्तमपास्तमित्यर्थः यदितुतादृशान्तरङ्गबहिरङ्गभावोनसिद्धान्तिसम्मतइत्युच्यतेतदातुतेनैवाद्वितीयेतितत्त्वम् इतिद्वितीयाविवर
णम् ननुप्राधान्यम्मुख्यविशेष्यत्वरूपञ्चेत्प्रयोज्यव्यापारेतदभावात्प्रयोज्यस्यकर्तृत्वंणिच्समभिव्याहारेकर्मणियत्रप्रत्ययस्तत्रचैत्रेणपक्वइत्यादौच

नावासन्नसंयोगस्तद्भृतिभ्यामित्यर्थः तस्मादिति अंतरंगत्वाच्चेत्यपिबोध्यम् एतेनशेषग्रहणानुवृत्तौतेनैवेतिपरास्तम् इतिद्विती
याकारकम् प्रधानीभूतेति प्राधान्यंचकर्तृप्रत्ययसमभिव्याहारेधात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयधात्वर्थत्वम् धातु

फलव्यापारयोर्व्यस्तासात्तत्रकर्तृत्वंकस्यापिनस्यादतआह प्राधान्यञ्चेति देवदत्तेनपच्यतेतण्डुलइत्यादौदेवदत्तस्य ॥ नोक्तक्रियैकारके ॥
कर्तृत्वसिद्ध्येकर्तृप्रत्ययसमभिव्याहारइति धात्वर्थनिष्ठप्रकारतानिरूपितविशेष्यत्वमित्येतावन्मात्रोक्तौविभागावच्छिन्नक्षरणानुकूलव्यापारस्यगोः
पयोदोग्धिचैत्रइत्यत्रदुहधात्वर्थत्वात्तत्रक्षरणेऽतिव्याप्तिरितिधात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वनिवेशः अत्रधातौतत्त्वन्निवेश
नीयमन्यथाणिजन्तजन्यशाब्दबोधेप्रयोज्यव्यापारस्यप्रयोजकव्यापारविशेषणत्वात्तत्रणिच्प्रकृतिधात्वर्थस्यप्राधान्यव्यवहारोनस्यात् नचेष्टाप
त्तिः चैत्रेणपाचयतितण्डुलंयज्ञदत्तइत्यत्रचैत्रेऽव्याप्तेः णिचस्तुप्रयोजकव्यापारवाचकत्वएव एवञ्चणिजन्ततत्प्रकृतिधात्वोर्भिन्नतयातदुभयार्थव्यापा
रयोः स्वस्वार्थम्प्रतिप्राधान्यस्यसत्वेनप्रयोज्यस्यकर्तृत्वसिद्धिः कारकेइतिसूत्रस्थभाष्यात्तुन्तत्तद्धात्वर्थकारकचक्रप्रवर्तकत्वंकर्तृत्वमितिलभ्यतेतच्चारो

स्थालीपचतीत्यादावाप्यम् चैत्रः पचतीत्यादावनयम् यद्व्यापारस्यान्यव्यापारप्रवर्त्तकत्वविवक्षा तदा तद्व्यापार एव धात्वर्थः मूलोक्तार्थस्तु न युक्तस्तस्मिन्नर्थे भाष्यकृता स्वतन्त्रपदस्यापरिभाषणात् कर्त्तृसंज्ञाबोधितकर्तृत्वशक्तिमत्त्वं तु कर्तृत्वम् सा चोक्त स्वतन्त्रे तिष्ठति तस्या विभक्तिद्योत्यत्वात् प्रकृत्यर्थे विशेषणता कर्तृक्रियाभावसम्बन्धस्तु तृतीयार्थः प्रकृत्यर्थस्य तद्द्वारकं कर्तर्यभेदेन विशेषणता एवञ्च चैत्रः पचतीत्यादिभ्यः कर्तृचैत्राभिन्नकर्तृकः पाकइ

नित्यं कर्तृतेष्यत इत्यन्वयः यद्व्यापारादिति अन्यतरशब्दयोगे दूरान्तिकार्थैरिति सूत्रेण पंचमी यत्र येषां कारकाणां मध्य इत्यन्वयः वस्तुत इति वस्तुनीत्यर्थः सार्वविभक्तिकस्तसिः तन्न कर्तृत्वादिकं अनिर्देश्यम् इदं वस्तु कर्त्रैवेत्यादिक्रमेण न निर्देश्यमित्यर्थः हियतो वस्तुनस्तद्रूपेणाव्यवस्थितम् तामेवाव्यवस्थां दर्शयति स्थाल्येत्यादि कारकत्वमिति विशेषणत्वादियथा खञ्जकुब्जादावव्यवस्थितमेवं कारकत्वम् तद्वा प्यमधिकरणत्वादिकं चेत्यर्थः तण्डुलानोदनं पचतीत्यत्र करणकारकस्यापि तण्डुलस्य तण्डुलानामोदनं पचतीत्यादौ ओदनपदार्थान्वयेन षष्ठ्यंतता दर्शनात् कारकत्वस्य व्यभिचारो द्रष्टव्यः प्रकृतव्यक्त्युपेति प्रकृतधातुव्यक्तीत्यर्थः अनेकधात्वमेव दर्शयति एवञ्च पचेरिति तण्डुलधारणादिपरत्व इति आदिना आपाकसमाप्ति धारणम् अवयवविभागादीति आदिनारोटिकादाववयवमेलनम् तण्डुलाः कर्तार इति कर्मकर्तरीत्यर्थः संप्रदाना॥ ॥ ॥ ॥ ॥

११ तिरीत्याबोधः धातुनानिसंयुक्तक्रियदतिभ्रमवारणायाह धातुनोक्तेति अत्र क्रियापदम् प्रधानव्यापारपरन्तदाश्रयस्य कर्तृसंज्ञैव न तु कर्मसंज्ञेत्यस्यार्थस्य स्पष्टप्रतिपत्तये नित्यपदम् अन्यतरशब्दार्थेन योगे षष्ठीप्राप्तानामबाधित्वा पञ्चमीत्याशयेनाह अन्यतरशब्देति सूत्रपठितवचनेय देशेतदपेक्षया यत्रेत्यधिकमतस्त्वाह यत्रेति अधिकरणादीनामित्यर्थः अव्यवस्थां दर्शयति तण्डुलानोदनमित्यादिना कर्मणः कर्तृत्वस्थलमाह कर्मकर्तरीति कारकसामान्यस्य न कर्तृत्वविवक्षेत्याशयेनाह सम्प्रदानेति॥ ६

उपादानं इत्यत्र नन्वार्थकर्मकत्वं सम्भवतीत्यत आह । उक्त इति मूले आदिखादिभ्यामित्यादिना केवलेरूपानेनाधिकरणमित्यन्तेन ग्रन्थेनैकस्यैव शब्दभेदेन संज्ञा
भेदः प्रदर्शितः गत्यर्थः संयोगानुकूलव्यापाराश्रये यद्यपि णि च्यन्तस्य धातुना खादधातुनाचाभिधीयते स एव च भक्षधातुनापि तथापि आदिखाद्योर्नेति निषेधात्
भ्यांणिचि सतिप्रकृत्यर्थव्यापाराश्रयस्य कर्तृसंज्ञैव भवति न तु कर्मसंज्ञा यदा तु भक्षधातोर्णिचि सति स एवार्थो भक्षयति नाभिधीयते तदा निषेधवचनाभावात्
योज्य व्यापाराश्रयस्य गतिबुद्धीति सूत्रेण कर्मसंज्ञा भवतीति प्रकारेण शब्दविशेषनिमित्तकत्वं संज्ञायाः एतेनेति वक्ष्यमाणपरिहारेणेत्यर्थः ज्ञानस्य स्वप्रकाश
त्वइति एतादृशो व्यवहारो वेदान्तिनामस्ति तस्योपपत्तिर्न संभवतीति केषाञ्चिदुक्तिरियम् स्वप्रकाशशब्दस्य स्वमात्मानम्प्रकाशयति विषयीकरोतीत्यर्थः का
र्यः एवञ्चैकस्य कर्मत्वङ्कर्तृत्वञ्च बाधितं कर्तृसंज्ञायाः कर्मसंज्ञा बाधकत्वादिति तेषामभावः नचतेजसो यथा ग्राह्यत्वन्द्रव्यत्वेन ग्राहकत्वन्तु इन्द्रियत्वेनाभिभूत
रूपवत्तेजस्त्वेनोपाधिना भवति उपाधिभेदस्यैवोभयव्यवहारनियामकत्वात्तथा ज्ञानस्यापि भविष्यतीति वाच्यम् नित्यं विज्ञानमानन्दम्ब्रह्मेति श्रुत्या ज्ञाना

पादानयोस्तु न कर्तृत्वविवक्षा शब्दशक्तिस्वाभाव्यात् नह्यापारे धातोरष्टनेरिति बोध्यम् उपात्त इति उक्त इत्यर्थः ॥ ९ ॥

पदवाच्यम्ब्रह्मैव तच्च नेह नानास्ति किञ्चनेति श्रुत्या धर्मरहितत्वेन प्रतिपादितमित्युपाधिभेदस्यैवाभावात् अन्यथाऽद्वैतानापत्तिः नच लौकिकोपाध्यभाव
स्य तत्र भवन्मते सत्वात्कथन्निर्धर्मिकत्वमिति वाच्यम् अभावस्याधिकरणात्मकतया स्वभिन्नधर्मशून्यत्वसत्त्वादित्याह ज्ञानविषयत्व इति आ
धाराधेयभावस्येत्यनेन कर्तृत्वखण्डनम् विषयविषयिभावस्येति कर्मत्वखण्डनम् एवञ्च ज्ञानस्य ब्रह्मात्मकस्य स्वप्रकाशत्वमिति व्यवहारासङ्गतिः उक्तवि
रोधस्य परिहारमाह मूले शब्दविशेषोपाधिकस्येति अत्रोपाधिशब्दो निमित्तपर इत्याशयेनाह शब्दविशेषनिमित्तकस्येति यद्वा त्वर्थक्रियायाप्यस्य स्वातन्त्र्यवि
वक्षा सन्नद्धात्वर्थकर्ता यद्वा त्वर्थप्रधानव्यापारविशेषणफला श्रयत्वविवक्षायस्ततत् तत्कर्मेति रीत्या धातुस्वरूपोपः शब्दस्तन्निमित्तकत्वन्तयोरित्यर्थः
प्रत्यक्षाविति मूलेन ब्रह्मणः प्रत्यक्षरूपत्वन्दर्शितम् तस्याप्यभावः यथा घटादिविषयाणां स्वभिन्नापरोक्षज्ञानविषयत्वेन प्रत्यक्षत्वव्यवहारस्तथान ॥

ब्रह्मणः किन्तु स्वात्मकस्वप्रकाशस्यैव प्रत्यक्षपदेन व्यवह्रियतेइति यत्साक्षादपरोक्षादितिश्रुतेः अपरोक्षादित्यस्यापरोक्षमित्यर्थः ननु ब्रह्मयदि नजन्यज्ञानवि षयस्तदानस्मिन्स्वप्रकाशत्वव्यवहारो घिक्रयमिति चेच्छृणु किमब्रह्म यद्यवेद्यं स्यात्तदानादृशव्यवहारविषयो न स्यादिति तर्केण तादृशव्यवहारस्वरूपस्य सिद्धत्वस्वप्रका शत्वव्यवहारोस्माकमिसेतादृशव्यवहारविषयत्वेन हेतुना अवेद्यत्वाभावानुमानङ्गरोषिनाद्यः आपाद्यापादकयोर्द्वयोरपि ब्रह्मणि सत्वाबोधकं न द्वितीयः हे त्वसिद्ध्या स्वरूपासिद्धेः ब्रह्मणः शब्दावेद्यत्वात् यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति श्रुतेः ॥ ॐ ॥ ननु भवन्मते ब्रह्म स्वप्रकाशमिति वाक्यघटकः स्वप्रका शशब्दो यौगिको रूढो वा आद्ये स्वं स्वं प्रकाशयतीति व्युत्पत्त्या स्वपदार्थस्य कर्मत्वं प्रकाशशब्दार्थस्य प्रकाशकर्त्रर्थकत्वं वाच्यं न तच्च विषयत्वाश्रयरूपमुभयथा

स्वप्रकाशत्वे ज्ञानविषयत्वे कर्तृकर्मविरोधइति अभेदे आधाराधेयभावस्य विषयविषयिभावस्य चाभावादिति भावः शब्दवि शेषोपाधिकस्य शब्दविशेषनिमित्त कस्य कर्तृकर्मशब्दयोराश्रयविषयत्वस्य कत्वे स्वप्रकाशत्वेइत्यस्य स्वप्रकाशपदव्यवहा। र्यत्वइत्यर्थे वा लक्षणैव दोषइति बोध्यम् परेति कर्मत्वाभिमतापेक्षयापरेत्यर्थः गम्यादिकर्तर्यतिव्याप्तिवारणायेदम् अपा।

१ दानेइति ॥

प्यनुपपत्तिः निर्धर्मकत्वबोधकश्रुतिविरोधात् द्वितीये स्वप्रकाशशब्दः स्वप्रकाशशब्दव्यवहार्यइत्यर्थे को वाच्यः तत्रापि तच्छ्रु तिविरोधइत्यत आह कर्तृकर्मशब्दयोरिति ननु भवन्मते तस्य वाक्यस्य का गतिरिति चेदित्थम् स्वश्चासौ प्रकाशश्चेति कर्मधारयः प्रकाशशब्दो भावघञ न्तः स्वाभिन्नः प्रकाशः तस्य भावः स्वप्रकाशत्वम् कृत्तद्धितसमासेभ्यः संबन्धाभिधानम्भावप्रत्ययेनेति सिद्धान्तात्त्वप्रत्ययार्थोत्र स्वाभेद एव स च नातिरि क्तइतियत्किञ्चिदपेक्षयापरत्वमव्यावर्तकमत आह कर्मत्वाभिमतेति फलाश्रयत्वेनाप्योपस्थितत्वादित्यर्थः कर्मापेक्षयेति तु नोक्तम् एतावत्पर्यन्त ङ्गमेत्यस्यासिद्धेः अतिव्याप्तीति ग्रामङ्गच्छतिचैत्रइत्यत्र चैत्रे गमनक्रियाजन्यसंयोगाश्रयत्वस्य सत्त्वादतिव्याप्तिरित्यर्थः अत्र फलेन तद्वत्त्वयेत्वमपि विशे

काशींगच्छतीति अत्र विभागजन्यसंयोगानुकूलव्यापारस्य गम्धात्वर्थत्वमिति विभागस्य धात्वर्थत्वमस्तीति भा[illegible] एतन्मते भेदः आधेयत्वञ्च द्वितीयार्थः भेदे प्रकृ-
त्यर्थस्य तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वयः तस्य च भेदस्य सामानाधिकरण्यसम्बन्धेन व्यापारेऽन्वयः ग्रामपदार्थस्याधेयत्वेऽप्यन्वयः ग्रामपदा-
र्थस्य च द्विधा भानमिति ग्रामवृत्तिसंयोगानुकूलो ग्रामभेदविशिष्टव्यापारानुकूलकृतिमानित्यन्वयबोधः परमते स्वमतेऽनुकर्तृविशिष्टस्तादृशव्यापार इत्याकारकः
संयोगस्यैव तथात्वमिति गम्धातोः संयोगावच्छिन्नव्यापार एव शक्तिरिति भावः धात्वर्थतावच्छेदके त्यत्र धातुपदग्रहणपठितधातुपरम् तत्तद्भिन्नस्यापि बोधकम् ॥
नाद्य इत्याह ग्रामङ्गमयतीति तन्मते नैयायिकमते गमनस्य संयोगावच्छिन्नव्यापारस्य न द्वितीय इत्याह तत्त्वेवेति सूत्रेऽपादानेऽपि तर्हीति एवञ्च तद्व्यावृत्तये धात्व-
र्थतावच्छेदकत्वविशेषणनिवेशप्रयत्नानुधावनं विफलमिति भावः सर्वसन्तिपरयाकर्तृसंज्ञया बाधेन चैत्रश्चैत्रं गच्छतीत्यादिप्रयोगापत्तिवारणेनप्रद्वेदेऽपि

प्रयागात्काशीं गच्छतीत्यादौ तस्यापि क्रियाजन्यविभागाश्रयत्वादिति भावः धात्वर्थतावच्छेदकेति संयोगस्यैव तथात्वं न तु विभागस्येति।
भावः तत्त्वेवेति एवं तु धात्वर्थतावच्छेदकत्वे वेत्यर्थः वचनबलात् गत्यादिनियमबलात् ननु विभागस्य तत्त्वेन कर्तुरिति तथायुक्त।
मिति च प्राप्नोति अपादानप्रकरणेऽवध्यन्वयिनो विभागस्य धात्वर्थतायावक्ष्यमाणत्वात् इत्यत आह एकसंज्ञेति सावकाशायाइति
विषं भुङ्क्ते इत्यादौ सावकाशाया इत्यर्थः कर्तुरीप्सिततमं कर्मसंज्ञात्व पादानत्वस्य परत्वाद्बाधिका अतएव ग्रामं ॥ ११ द्वितीयायाः शक्तिरिति प्रागुक्तम्।

त्तन्नोचितमिति च वचनबलादित्यनेन सूचितम् ननु स्वमते यदि सूत्रेणैव संज्ञाप्रतिनिर्णयस्तदाऽपादानस्य कर्मसंज्ञा प्राप्नोतीत्याशयेन शङ्कते नन्विति तत्त्वेन धा-
त्वर्थकुक्षिप्रवेशेन विभागजन्यसंयोगानुकूलव्यापारो धात्वर्थ इत्याशयः उद्देश्यत्वानुद्देश्यत्वभेदेन सूत्रद्वयोपन्यासः द्वितीयसूत्राभिप्रायेणेदमुत्तरमित्याशयेना-
ह विषम्भुङ्क्ते इत्यादाविति आदिनोदासीनतृणादिसङ्ग्रहः आद्यसूत्रस्य यत्र फलाश्रयत्वेनोद्देश्यता तत्र प्रवृत्त्या विभागजन्यसंयोगानुकूलव्यापारस्य धात्वर्थत्वेऽपि
कर्तृवृत्तिव्यापारजन्यसंयोगाश्रयत्वेन प्रयागात्काशीं गच्छतीत्यत्र काश्या एवोद्देश्यता न तु प्रयागस्येति तत्र प्रयागे सावकाशाऽपादानसंज्ञा ग्रामं न्यजतीत्यत्र कर्म-
संज्ञया बाध्यते अतएव प्रथमसूत्रविहितकर्मसंज्ञाया अपादानसंज्ञा बाधकत्वादेव ॥ ६ ६ ६ ६ ॥

प्रकारान्तरेणाप्यतिप्रसङ्गं वारयति अपादाननिष्ठेति प्रासादादवमायातीत्यत्र यद्यपि विभागावच्छिन्नसंयोगानुकूलव्यापारो धात्वर्थस्तथापि संयोगीयोऽनुयोगिताख्यः सम्बन्धः स एव फलतावच्छेदको न तु विभागीयः फलतावच्छेदकसम्बन्धेन फलाश्रयत्वमेव कर्मसंज्ञाप्रयोजकमन्यथा कालिकसम्बन्धेन संयोगाश्रयत्वस्य पर्वतादावपि सत्त्वेन ग्रामम्पर्वतान्गच्छतीतियत्र तत्र पर्वतं गच्छतीति स्यात् यत्र विभागावच्छिन्नव्यापारो धात्वर्थस्तत्राप्यनुयोगितासम्बन्ध एव फलतावच्छेदको न तु प्रतियोगितालक्षणः अत एव वृक्षाद्विभजत इत्यादौ वृक्षादिशब्देभ्यः पञ्चमी सिद्धिः न च आत्मानमात्मना हन्तीतिवच्चैत्रश्चैत्रं गच्छतीति प्रयोगापत्तिः तत्रापि शरीराद्युपाधिभेदेन कर्तृकर्मणोर्भेदस्य कल्पना सम्भवादिति वाच्यम् प्रामाणिकप्रयोगस्योपपत्तये एव कल्पनायाः सत्त्वात्तत्त्वसिद्धान्ते पञ्चक। प्रातिपदिकार्थस्तत्र विभक्तिद्योत्यकारकाणां प्रातिपदिकार्थविशेषणत्वेन न तु क्रियाविशेषणत्वमिति प्रसक्तामूलासङ्गतिम्परिहरति विभक्त्यर्थस्येत्यादिना एवञ्च वि

त्यजतीत्यादौ द्वितीयासिद्धिरिति तात्पर्यम् अपादाननिष्ठविभागीयसंबन्धस्य फलतानवच्छेदकत्वान्न दोष इत्यपि बोध्यम् अत एवैकसंज्ञाधिकारे संज्ञयोर्बोध्यबाधकभावादेव अहं कारादीति आदिना शरीरम् विभक्त्युपस्थितानामिति विभक्त्यर्थस्य संसर्गत्वमतेन तदन्योपस्थितानामित्यर्थः व्युत्पासइति तद्व्युत्पासेनैव धातुनस्तदुपस्थितिरित्यर्थः तत्र व्यापारजन्यफलमेव धात्वर्थ इति भावः तदिष्टापत्तीति ॥ ६ ॥

भक्त्यन्तेनोपस्थितानान्तद्विभक्त्यर्थसम्बन्धेन क्रियाविशेषणत्वं स्पष्टमेव तद्व्युत्यासेन फलव्यापारयोर्विशेष्यविशेषणभावव्युत्यासेन फलावच्छिन्नव्यापारावच्छिन्नफले च धातोः शक्तिः कर्तृकर्मबोधकप्रत्ययसमभिव्याहारस्तत्र बोधतात्पर्यग्राहक इति स्वसिद्धान्ताभिप्रायेणेदम् तत्र कर्मबोधकप्रत्ययसमभिव्याहारे। मूलेरामनिष्ठो यो व्यापारस्तद्विषयत्वम्फलभूतधात्वर्थे उक्तन्तच्च सोत्पादकप्रवृत्त्युद्देश्यत्वरूपम्बोध्यम् एवम्प्राणवियोगात्मकफले बाणव्यापारसाध्यत्वाभिधानङ्ग तन्नेन करणकारकस्य सर्वत्र स्वव्यापारद्वारा फलम्प्रत्येव जनकत्वात्तत्रैवान्वय इति ध्वनितम् मीमांसकैर्यदुक्तं ङुनष्ठैः पाक इत्यपि स्यादिति तत्पाकक्रियायाः सिद्धावस्थापन्नायाः एव पाकपदेनाभिधानात्कारकान्वययोग्यतावच्छेदकसाध्यत्वेनानभिधानेनास्य कारकान्वय इत्यभिमानेन वस्तुतस्तु पाकादिशब्दघटकधातुनात्रापि साध्यत्वेनैव क्रियाया अभिधानेन तस्याङ्कारकान्वये बाधकाभाव इत्याशयेनाह तदिष्टापत्तीति ॥ ॥ ॥

तन्नैव प्रकृत्यातेन रूपेणाभिधाने भवतिक्रियायामिति काष्ठैः पाक इत्यादौ यद्यपि भवतिक्रियाबोधकम्पदन्नास्ति तथाप्यास्तेर्भवन्तीपरो ऽप्रयुज्यमानोप्यस्तीति भाष्यकारोक्तेरत्रापि सा प्रतीयत एवेत्याशयेनेदम् कर्त्तृकृत्त्वादिति प्रधानेतरयोरिति न्यायेन प्रधानभवतिक्रियाकर्तृत्वस्याभिधानेन गुणभूतपचिक्रियाक र्तृत्वमप्यभिहितमितिभावः ननु न प्रधानक्रियायाङ्कर्तृत्वेनान्वयः किन्तु करणत्वेनेति तदनुयायिनः शङ्कां वारयति करणत्वेनेति पार्ष्टिकस्यापीति इदङ्कर्मे णइत्यत्र सामानाधिकरण्येनान्वयि तद्विषयकबोधस्य पश्चाद्भवनात्तद्विषयेपि पार्ष्टिकत्वव्यपदेशः नन्वेतादृशेस्थले हरिकर्तृकत्राणबोधाभावइष्टापत्तिरेवेत्यत आ

कृत्सङ्कृत्यर्थक्रियायामपि कारकाणामन्वयादिति भावः तन्नैवमानमाह कर्त्रित्यादि यत्तु भवतिक्रियायां प्राथमिकान्वयेन तत्तद्विभक्तौ कृदन्ते न पार्ष्टिकान्वयस्तेषां चारितार्थ्यमिति तन्न भवतिक्रियायां कर्तृत्वेनान्वये कर्तुरुक्तत्वात् तृतीयानापत्त्याहरिणात्रात इत्यसिद्ध्यापत्तेः करण त्वेनान्वये पार्ष्टिकस्यापि हरिकर्तृकत्राणकर्मणो बोधानापत्तेः कर्तृतृतीयान्तेन समासविधायकासंगतेश्च यत्कर्तृकक्रुतिकर्मविश्वमिति विग्रहवाक्यजबोधाद्भिन्नबोधस्वीकारे न मानमत आह अषष्ठ्यर्थेति आकृतीति इदंचयथा योगं सर्वे विभक्त्यपवादः नाम्नेति नाम सम्बंधितीस्यात्त्ववानित्यर्थः करणशब्दानुवृत्त्येति एकसंज्ञाधिकारेणचेति बोध्यम् ननु मनसादेवइत्यसंगतम् कृद्योगलक्षणषष्ठी

आह कर्तृतृतीयान्तेनेति असङ्गतेरिति तद्धटककर्तृपदांशस्यासङ्गत्यापत्तेरित्यर्थः विग्रहवाक्यजेति लौकिकविग्रहवा ॥ प्राप्तेः नचकर्तृसाहचर्य्यात् क्यजेत्यर्थः इदञ्चेति प्रकृत्यादिभ्य इति वार्तिकञ्चेत्यर्थः आदिशब्दोत्र प्रकारे तेन वह्नित्वेन घटाभावः दण्डत्वेन कारणतेत्यादिप्रयोगाणामुपपत्तिः नामसंब न्धीति नामज्ञाप्यमित्यर्थः वह्नित्वेनेत्यादौ त्ववच्छिन्नप्रतियोगिताकत्वन्तृतीयार्थः ननु दिव इतिसूत्रे करणशब्दानुवृत्त्या संज्ञयोः समावेशो भविष्यतीत्यत आ ह एकेति मूलेपन्मनसादेवइत्येतत्सिद्धिरूपं संज्ञाद्वयसमावेशफलमुक्तं न तदसङ्गतमिति हरदत्तानुयायिन उक्तिङ्खण्डयति नन्वित्यादिना षष्ठ्याः प्राप्तेरि ति यथाऽक्ष्णाणान्देविताइत्यत्रापवादत्वात्तृतीयाबाध्यते न तद्वदिति शेषः ॥

तत्र कर्तृकर्मणोः कृतीति सूत्रे कर्तृसाहचर्यादिति यथा धातुप्रतिपाद्यप्रधानव्यापाराश्रयस्य कर्तृपदेन ग्रहणन्तथा मुख्यतया तदर्थफलाश्रयस्य तत्र ग्रहणमित्यत्र। साहचर्यं हेतुत्वेनाभिहितम् मुख्यत्वाभिधानं व्यपदेशिवद्भावेन यस्य कर्मत्वन्तद्व्युदासाय अतएव तादृशकर्मणो ग्रहणादेव अत्र लोकपदार्थस्य व्यपदेशिवद्भावेन यत्कर्मत्ववत्त्वाभेदेनान्वयात्कर्मत्वन्तन्तु मुख्यङ् कर्मत्वमस्तीति न षष्ठीति भावः कर्मणि द्वितीयेति सूत्रे तु मुख्यकर्मण ग्रहणमित्यत्र साधकाभावाद्व्यपदे। शिवद्भावलब्धकर्मत्ववतोपि ग्रहणमिति द्वितीया भवति धात्वर्थफले भेदेन क्रियाकारकभावसम्बन्धेन तदुपपत्तौ लोकस्याकइत्यत्र षष्ठ्यभावोपपत्तौ तत्र लोकपदार्थस्य फलेऽभेदेनान्वयादितिभावः अत्र मनसादेवइत्यत्र अप्रवृत्ताविति कर्तृकर्मणोरित्यस्या प्रवृत्तौ अत्र प्रमाणमाह ध्वनितञ्चेदमिति तत्रहि अस्या

तत्र मुख्यव्यवहारेण धात्वर्थाश्रयस्यैव कर्मणो ग्रहणम् अतएव लोकं पाकइत्यादौ षष्ठीनेति वाच्यम् धात्वर्थेऽभेदेनान्वयि कर्मग्रहणे नैव तदुपपत्तौ अत्राप्रवृत्तौ मानाभावात् ध्वनितञ्चेदमाकडारसूत्रे कैयटे तादृशसंज्ञासत्त्वे दृढतरमानाभावश्चेत्यरुचेराह किंचेति ॥ कर्मत्वं नेति नचवैकल्पिकत्वेपि ग्रन्यता विद्यमानकर्मकत्वाभावात्कर्मत्वाभावः सिद्ध इति वाच्यम् ॥ ९९ णान्देवितेत्यत्रापवादत्वाद्द्वितीयायाः षष्ठीबाधिका तृतीयायास्तु परत्वादिति प्रतिपादितम् अत्र षष्ठ्याः कर्तृकर्मणोरिति विहिताया द्वितीयातृतीयाबाधकत्वाभिधानेन मनसादेवइत्यत्रापि तस्य सूत्रस्य प्रवृत्तिर्न्याय्यैवेति ध्वनितमित्यर्थः ननु कर्तृकर्मणोः कृतीति सूत्रे धात्वर्थफलाश्रयकर्मणएव ग्रहणमिति कल्पनया न षष्ठीप्राप्तिरतआह तादृशसंज्ञासत्त्वइति समाविष्टकर्मकरणसंज्ञाद्वयसत्त्वइत्यर्थः नचैवं सति मनसादेवइति प्रयोगस्यैव तर्ह्युच्छेदः स्यादिति वाच्यम् हेताविति सूत्र विहिता तृतीयान्तस्य पचाद्यजन्तदेवशब्देन समासात्प्रयोगोपपत्तेः दिवः कर्म चेति सूत्रे संज्ञाद्वयसमावेशफलकचकाराभावेपि किञ्चेत्यादिनोक्तफलमन्यथासिद्धमित्याशयकश ङ्कान्निरसितुमाह नचेति वैकल्पिकत्वेप्यपीति चकाराभावे कर्मकरणसंज्ञयोः पर्यायेण प्रवृत्त्या वैकल्पिकत्वे सत्यपीत्यर्थः अपिना समावेशसमुच्चयः येषान्देशकालादिभिन्नङ्कर्म न सम्भवति तएवाकर्मकपदेन गृह्यन्तइति तैरुक्तम् कर्मत्वाभावइति गतिबुद्धीति सूत्रविहितेत्यादिः ॥

अन्यत्रनिरूपितत्वादिति अत्रशास्त्रेऽविवक्षितकर्मकाणामप्यकर्मकपदेनग्रहणमतएवभाष्यकृतापूर्वोक्तम् भुक्तपूर्वीओदनमित्युदाहृतम् अतएव
णेरणाविति सूत्रव्याख्यानावसरेलावयतिकेदारन्देवदत्तइतिप्रयोगेलुनातेर्निवृत्तप्रेषणाण्णिचिद्वितीयाकैयटेनस्वीकृता अतएवाधीगर्थेतिसूत्रभाष्येक
र्मणःशेषत्वविवक्षयामातुःस्मर्यतइत्यत्रभावेलकारउदाहृतः फलान्तरमिति संज्ञयोःसमावेशस्येत्यादिः स्वयम्फलान्तरमाह दीव्यतइत्यादिना ननु
स्थलत्रयेपिकर्मसंज्ञायाःफलमुक्तन्नतुकरणसंज्ञायाइत्यतआह करणत्वाच्चेति चकारोभिन्नक्रमेणतृतीयापदानन्तरन्द्रष्टव्यः मूलेयत्तुप्राचेति प्रक्रियाकृ
तेत्यर्थः अस्योपस्थानमिति दिवःकर्मचेत्यस्योपस्थानमित्यर्थः वस्तुतस्तुमूलोक्तरीत्याऽक्षैरक्षानित्यस्योपपत्तिरयुक्ता कार्यकालपक्षविशेषकथनेनदे

॥ तत्रासत्त्वाविद्यमानकर्मणामेवग्रहणेमानाभावस्यान्यत्रनिरूपितत्वादितिभावः फलान्तरमाह अणावितीति दीव्यतेऽक्षैर्देवद
त्तेनेतिभावेलकाराभावःफलमित्यपिबोध्यम् करणत्वाच्चतृतीयेतिसमावेशफलम् द्वितीयेतीति अक्षान्दीव्यतीत्यत्राक्षपद
स्याक्षजेयेधनेलक्षणानचतदाकरणत्वम् अक्षैरित्यर्थे॥

१९ वदतोवामेनाक्ष्णापश्यतीत्युक्तेदक्षिणेननपश्यतीतियथागम्यतेतथा
यथोद्देशपक्षेनासिद्धिरितिगम्येततदसंगतम् यथोद्देशपक्षेपिप्रधानान्यात्मसंस्कारायसन्निधीयमानानिगुणभेदम्प्रयुञ्जतइतिक्रियतिचेतिसूत्रस्थकैय
टोक्तरीत्याकर्मणिद्वितीयेतिसूत्रस्यात्रागमनेनादिवइतिसूत्रस्यापिभेदस्यसत्वात् किञ्चकार्यकालपक्षेप्यपादानमुत्तराणिकारकाणिवाधन्तेगान्दोग्धिपयइ
त्यत्रपरत्वात्कर्मसंज्ञेतिभाष्ययोजनायसंज्ञाविधेययद्देशेसंज्ञाशास्त्रम्पठितन्तद्देशीयमेवपरत्वन्नियामकन्नतुयत्रोपस्थितिस्तद्देशीयमन्यथाकर्मसंज्ञाशा
स्त्रस्यकर्मणिद्वितीयेत्यत्रोपस्थितिरपादानसंज्ञयास्त्वपादानेपञ्चमीत्यत्रेतिपञ्चमीविधायकशास्त्रस्यद्वितीयाविधायकशास्त्रापेक्षयापरत्वाद्भाष्यासङ्गतिः ८९
स्यष्टैव अतएवापादिभ्यःपरैवप्रगृह्यसंज्ञेत्यदसोमादितिसूत्रभाष्येउक्तम् एतत्सर्वस्यापरिचिन्त्याक्षान्दीव्यतीतिप्रयोगोपपत्तिंस्वयमाह अक्षान्दीव्यतीत्यत्रे

अन्ये भाष्यतत्त्वविदः इदमुपलक्षणं यदाऽस्मेषु फलाश्रयत्वसमानाधिकरणकर्मत्त्वविवक्षा तदापि नादधाप्रयोगसिद्धिरितिवोध्यम् एकैवशक्तिः संज्ञाद्वयोपयोगिनीतिमूलेऽभिहितन्तच्चयथाश्रुतेऽसङ्गतम् सप्तमीपञ्चम्योकारकमध्यइतिसूत्रेकारकशब्दस्यकर्मत्वादिशक्तिपरत्वस्यसुप्रसिद्धतयाकर्मत्वस्यचतादृशस्यकरणत्वापेक्षयाभिन्नत्वेनैकशक्तेः संज्ञाद्वयोपयोगित्वंवक्तुमशक्यमतआह दिवधात्वर्थेति एवञ्चैकैवशक्तिरित्यत्र शक्तिपदन्धर्मपरन्द्रष्टव्यम् तथाच कर्मादिपदानांकर्मत्वादितत्तच्छक्तिरूपेण वोधकतयाद्वयोः शक्त्योर्भेदएवोचितः सर्वसाधारणकर्मव्यवहारस्तुकर्मत्वशक्तिमत्त्वेनोपपादनीयः एवंसकर्मकत्वमपितादृशशक्तिमदर्थान्वयित्वमेव अतएवाध्यासिताभूमयइत्यत्रकर्मणिक्तः सिध्यति सूत्रस्थचकारेणशक्तिद्वययोगोवोध्यतेनतुतयोः शक्त्योरभेदः नचैवंसतिनन्विस्यादिनामूलेनप्रतिपादिताशङ्कानवस्थैवेतिवाच्यम् अपादानमुत्तराणिकारकाणिवाधन्तेगान्दोग्धिपयइत्यत्रपरत्वात्कर्मसंज्ञेत्युक्तन्तत्रपञ्चमीवारणायद्रव्यगतानेकशक्तिमध्येएकस्याअभिहितत्वेपरस्याअपितद्रूपकाशाङ्गीकारेणाक्षतेः मूलन्तुप्राचामनुरोधेन सहयुक्ते

अक्षानितिनभवतीत्यन्ये एकैवह्यत्रशक्तिरिति दिवधात्वर्थनिरूपितसाधकतमत्वशक्तिरित्यर्थः सहयुक्ते अत्राप्राधान्यंनाम शाब्दगुणाद्यन्वयित्वाभावइत्याह पित्रेति ॥

((इतिसूत्रेनलौकिकंयत्प्राधान्यमुख्यत्वरूपन्तदभाववत्त्वरूपमप्राधान्यंविवक्षितम् राज्ञा सहसेनाआगच्छतीत्यत्रराज्ञोलौकिकप्राधान्यवत्त्वात्ततीयानापत्तेरित्यत्रत्याप्राधान्यम्पारिभाषिकमित्याशयेनाह अत्राप्राधान्यमिति गुणाद्यन्वयित्वाभिस्यत्रादिनाद्रव्यक्रिययोःसङ्ग्रहः नचैवंसतिद्रव्याद्यन्वयित्वाभावइत्येवद्रव्यपदार्थस्यप्रथमनन्त्रान्तेप्रतिपादनादुचितमितिवाच्यम् गुणसमुदायोद्रव्यमितिपतञ्जल्युक्त्यनुसारेणैवमभिधानात् गुणोदाहरणम्पुत्रेणस्थूलइति द्रव्योदाहरणम्पुत्रेणसहपितुर्धनमिति क्रियोदाहरणम्पुत्रेणसहागतःपितेत्यादिप्रसिद्धमेवएषुशाब्दङ्गुणान्वयित्वंपितर्येवेतिपुत्रस्याप्राधान्यम् आर्थिकगुणाद्यन्वयित्वन्तुतत्रापि अतएवपुत्रेणसहागमनम्पितुरित्यत्रपितरिशाब्दस्यकृत्प्रकृत्यर्थक्रियाकर्तृत्वस्यसत्त्वेनकर्तृकर्मणोरितिषष्ठीभवति शाब्दत्वन्तुइतरसम्बन्धंविनापिवाक्यजन्यशाब्दवोधेभासमानत्वमेव सहार्थः साहित्यन्तच्चस्वसमभिव्याहृतशब्दजन्योपस्थितिविषयगुणादिसमानाधिकरणगुणाद्यन्वयित्वमेव सामानाधिकरण्यमत्रकालिकप्रत्यासत्त्याक्वचित् पत्रक्षे

एतत्तृतीयार्थस्तु क्रियावाचकशब्दसत्त्वे प्रतीयमानतादृशक्रियान्वयित्वमेव यत्र तु गुणद्रव्ययोरुपस्थितिस्तत्र सहशब्दस्य प्रयोगबलात्प्रतीयमानतत्तत्पदार्थ॥
सम्बन्धित्वमेव एवञ्च पुत्रेण सह पितुर्धनमिति शब्दात्पुत्रस्वामित्वसमानकालिकपितृस्वामित्ववद्धनमिति बोधः पुत्रेण सह स्थूल इति शब्दात्तु पुत्रवृत्तिस्थौ
ल्यसमानकालिकस्थौल्यवान्पितेति बोधः पुत्रादेः सहार्थयोगस्तु तत्तद्द्वारक एवेति विभावनीयम् एतत्सर्वं हृदि निधायाह आर्थ इतीत्यादिना॥ः॥तस्यापि
पुत्रस्यापि तत्सम्बन्धबोधः गुणादिसम्बन्धबोधः अप्रधानत्वाभिमते यथा विशिष्टाभावस्य सत्तास्ति तथोपपादयति शाब्दत्वरूपेत्यादिना विवक्षानिब
न्धनत्वकथनेन न पित्रा सहागतः पुत्र इत्याद्यपि भवतीति सूचितम् विशेष्याभावकृत इति विशेष्याभावकृतोपीत्यर्थः अपिनोभयोरभावयोः समुच्चयः अ

आर्थ इति पुत्रसाहित्यवान्पिता आगत इति बोधे साहित्यस्य पुत्रेणागमनसंबंधासंभव इति पश्चात्तस्यापि मानसत्त्वसंबंधबोध इति भा
वः शाब्दत्वं च विवक्षानिबन्धनम् एवञ्चैषु शाब्दत्वरूपविशेषणाभावकृतो विशिष्टाभावः सहैव पुत्रैर्दशभिर्भारं वहतीत्यादौ वि
द्यमानतावाचिसहशब्दयोगे क्रियाद्यन्वयित्वरूपविशेष्याभावकृतो विशिष्टाभावो दशानां पुत्राणां विद्यमानत्वेपीत्यर्थ इत्यन्यत्र वि
स्तरः अन्तरंगत्वादिति प्राचीनैरन्तरंगमूलकतयोक्तात् उपपदविभक्तेरितिन्यायादित्यर्थः वस्तुतस्तद्वाचनिकमेवेत्यन्तरंगत्वं तन्मा
((योपलक्षणं बोध्यम्॥

न्यत्र शेखरादौ वक्ष्यमाणरीत्या यथाश्रुतन्मूलमसङ्गतमत आह प्राचीनैरिति सीरदेवादिभिरित्यर्थः क्रियाकारकयोः साक्षा
त्सम्बन्ध इति तन्निमित्ता विभक्तिरन्तरङ्गा उपपदपदार्थेन तु यत्किञ्चित्क्रियाद्वारकः सम्बन्ध इति तन्निमित्ता विभक्तिर्बहिरङ्गेति तेषामभावः परन्त्विदमयुक्तम् न
मस्यति देवानित्यत्र नमः शब्दार्थयोगसत्त्वाच्चतुर्थीप्राप्तिमाशङ्क्यानेन न्यायेन द्वितीयासाधनपराकरविरोधात् प्रकृते नमः पदार्थस्य क्रियात्वमस्तीत्युभयोरपि स
मत्वात् यथा मुण्डयतौ मुण्डस्य क्रियात्वं तद्वत् अत एवाह वस्तुत इति तदिति उपपदविभक्तेरिति वाक्यमित्यर्थः अत एव सत्त्व सप्तम्यपेक्षया अधिकरणसप्तम्याव
लवत्त्वं तत्र च दीयत इति सूत्रे भाष्यकृता ध्वनितं कैयटेन तु स्पष्टीकृतं तत्सङ्गच्छते एवं तर्हि मूलमसङ्गतमेव स्यादत आह अन्तरङ्गत्वमिति॥ ६ ॥

॥श्री॥

ननुप्रथमायाः कारकाधिकारेपाठाभावेनाकारकविभक्तित्वात्कथमनेनवचनेनप्रथमासाधनमतआह प्रथमायाश्चेति कारकविभक्तित्वंहिक्रियाजनकार्थकविभ-
क्तित्वंतच्चप्रथमायाअप्यस्तीतिसापिकारकविभक्तिरेव अभिहितेप्रथमेतिवार्त्तिककारोक्तेः अन्यत्र उद्योतादौ नन्वस्यवचनस्यापूर्वत्वकल्पनापेक्षयापूर्वो-
क्तरीत्याऽन्तरङ्गत्वमूलकत्वमेवास्त्वित्यतआह अन्तरङ्गत्वंत्विति प्रथमापवादत्वस्येति यदिप्रकृतसूत्रेऽप्रधानग्रहणन्नक्रियेततदासहार्थकशब्दयोगे
षष्ठ्याइवप्रथमाया अपिप्राप्ताबाध्यसामान्यचिन्तायामुभयापवादत्वापत्तिः अन्तरङ्गादप्यपवादस्यबलवत्त्वादितिभावः नन्वत्रबाध्यविशेषचिन्तैवत्तद्धे-
स्त्वित्यतआह अनन्तरस्येति षष्ठीविधायकसूत्रापेक्षयाप्रथमाविधायकसूत्रस्यपुरः स्फूर्तिकत्वेनतदपवादकत्वात्तदपवादत्वापत्तेरित्यर्थः एवञ्चषष्ठ्यव

प्रथमायाश्चकारकविभक्तित्वमनभिहितपादेभाष्येबहुशःस्पष्टम् अन्यत्रप्रपञ्चितञ्च अनन्तरंगत्वंतुनयुक्तम् षष्ठ्यपवादत्वमिव
प्रथमापवादत्वस्याप्युपपदविभक्तीनामापत्तेः अनंतरस्येतिन्यायेनप्रथमापवादत्वस्यैवापत्तेः उपपदविभक्तेरितिन्यायेनचवा-
चनिकेसर्वतोबलवत्त्वेकारकविभक्तेर्बोधितेऽर्थाच्छेषषष्ठ्यपवादत्वमुपपदविभक्तीनामवतिष्ठते किञ्च उपपदविभक्तेःपदा-
न्तरनिमित्तकत्ववत्कारकविभक्तेःक्रियानिमित्तकत्वात् तत्वंदुरुपपादम् नचसंबंधस्यक्रियाकारकभावमूलकत्वेनतत्त्वमयुक्तं।

स्यायाअसिध्याऽप्रधानग्रहणस्यावश्यकत्वेनतेनन्यायेनतत्खण्डनासङ्गतिः तस्यवचनस्यापूर्वत्वेतुतेनवचनेनेष्टस्यसिद्धा ((कार्यंबहिरंगम् ॥
तत्खण्डनमुचितमितिमनसिनिधायाह उपपदेत्यादि न्यायेनचेत्यत्रचस्त्वर्थे अर्थादिति परिशेषादित्यर्थः इदंसर्वमन्तरङ्गत्वाभ्युपगमेनवस्तुतस्तुतदेव
नास्तीत्याह किञ्चेतिपदान्तरेति तदर्थेत्यर्थः एवञ्चान्तरङ्गत्वमनैमित्तिकत्वरूपमल्पापेक्षत्वरूपंवाभवत्तावाच्यन्तदुभयमपिनसम्भवतिअन्यादृशन्तु त-
द्ग्रहमशक्यमितिभावः तत्त्वम् अन्तरङ्गत्वम् प्राचीनोक्तरीत्याऽन्तरङ्गत्वम् खण्डयति नचेति सम्बन्धस्येत्यस्यउपपदार्थेनसहेत्यादिः क्रियेत्यस्ययत्कि-
ञ्चिदित्यादिः तत्त्वमयुक्तमिति उपपदार्थसंबन्धप्रयुक्तमित्यर्थः कार्यम् विभक्तिरूपम् अस्यबहिरङ्गत्वोपपादनेनक्रियाकारकभावात्मकसम्बन्धस्यान्तर-

एवमभिधानेसमीहितासिद्धिरित्याह पुत्रेपीति अपिशब्दः पितृसमुच्चायकः तृतीयानापत्तेरिति सहयुक्तइतिसूत्रविहिततृतीयानापत्तेरित्यर्थः एतदुपपादयति ए केति यत्क्रियाकर्तृत्वम्पितुस्तत्क्रियाकर्तृत्वमेवपुत्रस्येत्युभयत्रोपपदार्थसंबन्धस्यसमतयापुत्रशब्दादप्यनन्तरङ्गत्वात्प्रथमास्यादितिभावः नचैवंसति सहयुक्त इतिसूत्रवैयर्थ्यमितिशङ्कनीयम् द्रव्यगुणयोगेचारितार्थ्यात् केचित्तुप्रधानीभूतायाक्रियायास्तत्सम्बन्धनिमित्तकत्वाद्यमन्तरङ्गमितितन्न्यायार्थः कारकविभक्तेःप्र धाननिमित्तकत्वेनप्राबल्यादित्याहुस्तन्मतङ्खण्डयति क्रियायाइत्यादिना यदिप्रधानक्रियायामेवकारकान्वयनियमःस्यात्तदाभवदुक्तेः सम्भवः स्यात्सएव तुनास्तीत्याशयेनाह अप्रधानक्रियायामपीति पुत्रेणसहपितुरागमनमित्यादौभावल्युडन्तप्रतिपाद्याक्रियायद्यपिप्रधानीभूतातथापिपुत्रेणसहागतइ त्यत्रकर्तरिक्तस्यस्यसत्वेनतदर्थस्यैवप्राधान्येनक्रियायास्तत्राप्राधान्येनभवदुक्तोनियमएवनास्तीतिभावः मूलेपुत्रेणसहागतइत्यत्रापितृशब्दादनन्तरङ्ग त्वात्प्रथमामुपपाद्यतद्भिन्नरीत्यापितुरागमनमित्यत्रकर्तृषष्ठ्याःकारकत्वमुक्तमितिप्रथमानकारकविभक्तिरितिकश्चिद्भ्राम्येतेतितद्भ्रमनिरासार्थमुक्तन्तदेवे

पुत्रेपितृतीयानापत्तेरेकक्रियाकर्तृत्वमूलकत्वात्साहित्यस्यक्रियायाःप्राधान्यात्तन्निमित्तिकाविभक्तिः प्रबलेत्यपिनयुक्तम् अप्रधान क्रियायामपिकारकान्वयदर्शनात् तदेवध्वनयन्नाह इत्यादौकारकविभक्तेरिति अत्रादिनापुत्रेणसहागतः पितेत्यस्यसंग्रहइत्यलम्

ति उक्तार्थरूपमेवेत्यर्थः अतएवाह अत्रादिनेति उक्तवाक्यइत्यर्थः नचैवंसतिप्राबल्याच्चेतिचकारासङ्गतिरितिवाच्यम् चकारस्यहेत्वर्थकत्वात् यत्तोवच नेनापूर्वेणकारकविभक्तेःप्राबल्यमुक्तमतोप्रधानग्रहणंशक्यमकर्तुमित्यन्वयः एतेनद्रव्यगुणयोगेतृतीयासिद्ध्यर्थमावश्यकंयत्सहयोगइतिसूत्रंतद्विशे षविहितत्वेनपरमपिकर्तृकर्मणोरितिसूत्रम्बाधित्वापितुरागमनमित्यत्रपितृशब्दात्तृतीयाविधायकंस्यादिति अप्रधानग्रहणमावश्यकमितिपरास्तम् वाच निकेनतेनन्यायेनकारकविभक्तेरेवैतादृशस्थलेप्रबलतायाः प्रवृत्तिबोधनेनविशेषविहितत्वस्याकिञ्चित्कारत्वात् किञ्चनमस्यतिदेवानित्यत्रनमः शब्द योगेनपरत्वात्प्राप्तामपिचतुर्थीम्बाधित्वाद्वितीयायथास्यादित्येतदर्थंवचनमावश्यकम् अतएवगाःस्वामीगच्छतीत्यत्रस्वामीश्वरेतिषष्ठींबाधित्वाधात्व र्थव्यापारजन्यफलाश्रयत्वेनगवांकर्मत्वाद्द्वितीयाभवतीत्याशयेनाह अलमिति॥

व्याख्यानादिति अङ्गग्रहणसामर्थ्यमूलकव्याख्यानादित्यर्थः अतएवाङ्गशब्दोयंसमुदायशब्दइतिभाष्येउक्तम् अन्यथा अजन्तत्वाभावे अङ्गशब्दस्यावयवेसु प्रसिद्धतयागुणवाचकस्यैवप्रत्यासत्त्योपस्थितिःस्यादिति येनगुणेनावयवस्यविकारोलक्ष्यतेतद्वाचकात्तृतीयेतिसूत्रार्थःस्यादित्याशयेनाह येनगुणेनेति लक्ष्यतइति तद्वाचकात्तृतीयेतिशेषः अक्ष्णाकाणइत्यादाविति आदिनापादेनखञ्जइत्यस्यसङ्ग्रहः यदितुसूत्रेऽङ्गशब्दस्थानेऽन्यगुणिशब्दएवोपादीयतेतदातुन दोषइत्यवधेयम् प्रकृतित्वस्याव्यावर्त्तकतयासंदेहनिवृत्तयेआह अर्शआद्यजिति यद्यप्यक्ष्येवकाणान्तथाप्यवयवधर्मस्यसमुदायेआरोपाद्याशरीरेप्रयोगस्तथाशरीरावच्छिन्नात्मन्यपिव्यवहारस्यदर्शनादाह शरीरस्येत्यवयव्युपेति विकारसम्भवस्यसूत्राप्रतिपाद्यत्वाद्विकारःसम्भवतीत्युक्त्यनुपपत्तिरतआ

अर्शआद्यजन्तइति व्याख्यानादितिभावः अन्यथायेनगुणेनकाणत्वादिनाऽवयवस्यविकारोलक्ष्यतेइत्यर्थोपत्त्यास्किाणमस्येत्या दौप्रथमांबाधित्वागुणवचनात्काणशब्दादेरेवस्यात् अक्ष्णाकाणइत्यादौतुषष्ठ्येवस्यादितिबोध्यम् प्रकृत्यर्थेति अर्शआद्यच्प्रकृतेरित्यर्थः शरीरस्येत्यवयव्युपलक्षणम् संभवतीति लक्ष्यःसम्भवतीत्यर्थः द्रव्यादीति आदिनागुणक्रिये एवंचत्रितयसाधारणहेतुत्वम् नियतक्रियमिति क्रियायानियतमित्यर्थः क्रियामात्रविषयमितियावत् हेतुकरणयोर्वैषम्यान्तरमप्याह ॥

ह लक्ष्यतइति त्रितयसाधारणमिति त्रितयनिरूपितमित्यर्थः एवंक्रियामात्र विषयमित्यत्रविषयशब्दोनिरूपितार्थकस्तस्यकरणत्वेऽन्वयः अथवाविषयशब्दोजनकार्थकः वैषम्यान्तरमिति एतेनयत्क्रियाजनकङ्करणन्तत्राप्यनेनैवतृतीयाभविष्यतीति कर्तृकरणयोरितिसूत्रेकरणशब्दोनोपादेयइतिपरास्तम् शाब्दबोधकृतवैलक्षण्यस्यस्फुटत्वात् एवञ्च व्यापारवदेवकरणमितिभेदञ्चेत्यर्थः एवञ्चकरणत्वशक्त्यपेक्षयाहेतुत्वशक्तिर्विलक्षणातृतीयार्थइतिभावः ननुतृतीयाविकल्प्यतइतिमूलमसङ्गतम् समानार्थत्वएवविकल्पव्यवहारात् अतएवतुल्यार्थास्तुविकल्पेरन्निति जैमिनिनाप्युक्तम् यथाव्रीहिभिर्यवैर्वायजेत उदितेऽनुदितेवाजुहोतीत्यत्र॥

अन्यथाहितीत्यादिभ्योपि विकल्पव्यवहारः स्यादत आह तदर्थत्वेनेति तादर्थ्येनेत्यर्थः एवञ्च विकल्प्यतइत्यस्य विवक्षाभेदेन भवतीत्यर्थः फलमपीहहेतु।
रितिपरसमूले उक्तम् तत्र यदि हेतितस्य इहसूत्रइत्यर्थः केषाञ्चिन्मते मतान्तरे तु इहेत्यस्य तत्सूत्रोदाहरणे इत्यर्थः आद्यमते तृतीयार्थः फलत्वेन फल।
तत्र प्रकृत्यर्थस्याभेदेन तस्य तु जनकतासम्बन्धेन वासादावन्वय इत्यस्याध्ययनाभिन्नफलजनको वास इति बोधः अन्यमते तु फलस्य स्वज्ञानद्वारा वासादि
हेतुत्वविवक्षायां तत्राध्ययनाय वसतीति प्रयोगादध्ययनस्य हेतुरूपतृतीयार्थेऽभेदेनान्वयः तृतीयार्थस्य तु जन्यतासम्बन्धेन वासेऽन्वय इत्यस्याध्ययना
भिन्नहेतुजन्यो वास इति बोधः तदेतदुपपादयति तच्च फलमित्यादिना हेतुत्वेनैवेत्येवकारेणास्य मतस्य मुख्यत्वं दर्शितम् यदा तु तादर्थ्ये चतुर्थी तदा।

अनाश्रितेति एवञ्च कारणत्वहेतुत्वविषयकशाब्दबोधाय सूत्रद्वयमित्यर्थः विकल्प्यतइति तदर्थत्वेन विवक्षायां चतुर्थ्या हेतुत्वेन वि
वक्षायां तृतीयायाश्च प्राप्तौ विवक्षाभेदेन विभक्तिद्वयमित्येतावता तयोर्विकल्पव्यवहार इति बोध्यम् फलेन सहेति तच्च फलं फलत्वेन तृ
तीयार्थ इत्येके हेतुत्वेनैवेत्यन्ये अध्ययनहेतुको वास इति बोधस्तृतीयायाम् चतुर्थ्यामध्ययनोपकारको वा स इति बोध इति मते इ
दम् अध्ययनोपकार्यको वास इति बोधश्चतुर्थ्यामिति मते तत्राप्यभेदभानमेवेति बोध्यम् गम्यमानेति॥ ११ पिमतभेदेन शाब्दबोधे

वैलक्षण्यमित्याह चतुर्थ्यामिति आद्यमते उपकारकत्वञ्च चतुर्थ्यर्थः तत्र प्रकृत्यर्थस्य स्वनिष्ठोपकार्यतानिरूपकत्वसम्बन्धेनान्वयः प्रत्ययार्थस्य।
त्वाश्रयतया वासेऽन्वयः द्वितीयमते उपकार्यश्चतुर्थ्यर्थः तत्र प्रकृत्यर्थस्याभेदेन तस्य तु स्वनिष्ठोपकार्यतानिरूपितोपकारकत्वेन वासेऽन्वय इति मतभे
द इति बोध्यम् नन्वलं श्रमेणेत्यत्र क्रियावाचकपदाप्रयोगात्कथं कारकविभक्तिः यदि तु तद्विनापि कारकविभक्तिस्तदर्थस्य यत्र क्वचिदन्वयस्तदा का
रकाणां क्रियामात्रान्वयित्वनियमभङ्ग इत्यत आह गम्यमानेतीति अत्र प्राञ्चः अलंशब्दो निषेधार्थः अलम्भोजनेनेत्यादौ तथादर्शनात् निषेधस्य प्रति।
योगिसाकाङ्क्षत्वात् प्रतियोगिवाचकस्यपदस्मर्यते तच्च योग्यत्वादिह साध्यमिति तदर्थान्वयित्वेन श्रमेणेति तृतीया न चाध्याह्रियमाणयत्साध्यमिति तस्य

नामत्वात्तदर्थो न क्रियेति कथन्तत्र तृतीयान्तार्थान्वय इति वाच्यम्॥ ॥ विशिष्टार्थस्याक्रियात्वेपि तद्घटकक्लृप्तस्यार्थस्य साध्यत्वेन प्रतीयमानस्य क्रियात्त्वा
त्तस्याङ्गकरणकारकान्वये बाधकाभावात् गम्यमानेत्यस्य स्मर्यमाणपदजन्यबोधविषये इत्यर्थ इति वस्तुतस्तदनुक्तम् साध्यमिति पदं स्मृतिविषयो मानसज्ञान
विषयो वा भवतु अयथापि तस्यानुच्चारितत्वात्स्वार्थं प्रत्यायकता बाधिता उच्चारितः शब्दः प्रत्यायको नानुच्चारित इति भाष्यकारोक्तेः तस्माद्यथा पदार्थे पदशक्तिग्रह
काले पदैकदेशस्यापि शक्तिग्रह इति पदैकदेशादपि तस्यार्थस्योपस्थितिः सत्या भामा भीमादिभ्यो यथा तथा वाक्यार्थे वाक्यैकदेशपदस्यापि शक्तिग्रह इति त
स्माद्वाक्यार्थस्योपस्थितिः एवञ्चाश्रमेण साध्यमिति वाक्यार्थे श्रमेणेत्यस्य शक्तिरिति श्रमेणेत्येतत्पदजन्यबोधविषयत्वमव्याहतमिति भावः॥ ॥
अस्य सिद्धान्तत्वसूचनायाह स्पष्टञ्चेदमिति इग्यणः सम्प्रसारणमिति सूत्रभाष्येपि तत्र वाक्यस्य सम्प्रसारणसंज्ञायां सम्प्रसारणाच्चेत्यादावनुवादप्रदेशे वा

श्रमेणेत्यादिपदजबोधविषये इत्यर्थः॥ स्पष्टं चेदं सहयुक्त इत्यत्र भाष्ये तदाह नत्वश्रूयमाणेति श्रूयमाणस्वमात्रवाचकपदजन्यबो।
धविषये इत्यर्थः ज्ञाप्यते इति चतुर्थ्यर्थविहिततृतीयायुक्ताद्दाणञात्मनेपदमिति तदर्थः सावेदियनेनतस्याः क्वाचित्कत्वं ज्ञाप्य।
ते तेनाशिष्टव्यवहार इत्यंशोपि सिद्ध इति भावः इति तृतीया॥ ९ क्यात्स्वरत्वानुपपत्तिप्रसक्त्यासम्प्रसारणाज्ज्ञानं सम्प्रसारणशब्देन गृह्यत इ
त्युक्तम् परममूलस्य तु स्ववाच्यक्रियां प्रति स्वस्य करणत्वमित्यर्थः नन्वेवं सति श्रूयमाणपदजन्यबोधविषयत्वमेवागतमिति न तु श्रूयमाणेत्यसङ्गत
मेवेत्यत आह श्रूयमाणस्वमात्रवाचकेति स्वमात्रवाचकस्य पदस्य प्राधान्येन क्रियाबोधकम् तेन चतुर्थ्यर्थे ज्ञापिततृतीयायाः क्वाचित्कत्वेन अशिष्टव्य
वहार इत्यंशोपि सिद्ध इति अभिधानस्वाभाव्यादयमंशः सिद्ध इति भावः अशिष्टानां सङ्कीर्णाचाराणां यो व्यवहारः क्रिया तद्बोधस्य प्रयोगे यत्स्वस्थेन व्यव
हारस्य सङ्कीर्णत्वन्निन्द्यत्वन्तद्द्योतकाच्चतुर्थ्यर्थे तृतीया भवतीति वार्त्तिकार्थः अत्र दाण्धात्वर्थो दानपूर्वक उपभोगः कामुककर्तृको दासी सम्प्रदानकदा
नपूर्वक उपभोग इति बोधः दास्यै दत्त्वा तामुपभुङ्क्ते इति फलितम् इति तृतीयाविवरणम्॥

ननु स्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलव्यापारो यदि दाण्धात्वर्थस्तदा कर्मणि स्वत्वनिवृत्तिः प्रधानव्यापारेण सम्पन्नेति पुनर्ग्रहणाप्रसक्त्या पुनर्ग्रह
णायेत्यस्य वैयर्थ्यमत आह इदञ्चेति अपुनर्ग्रहणायेत्यस्योपादानञ्चेत्यर्थः वाच्यता दाण्धातुवाच्यता भाक्तत्वे[illegible]णत्वं तच्च किञ्चिन्निरूपितमेवेति नि
रूपकाकाङ्क्षाशान्त्यर्थमाह अधीनीकरणरूप इति ननु स्वस्वत्वध्वंसविशिष्टपरस्वत्वोत्पत्त्यनुकूलव्यापार एव चेद्दानं तदा न शूद्राय मतिं दद्यादित्यत्रानु
पपत्तिः मतिशब्दार्थे व्यापारजन्यफलाश्रयत्वस्यासम्भवेन द्वितीयाया अनुपपत्तेरत आह न शूद्रायेति तज्जनकम् मतिजनकम् शास्त्रम् वेदादिरूपम् क्रिया
ग्रहणमिति कर्मणा यमभिप्रैतीति सूत्रे कर्मणेति परित्यज्य क्रिययेति वक्तव्यमित्यर्थः प्रत्याख्यातमिति क्रियापि कृत्रिमं कर्म कया क्रियया सन्दर्शनादि ॥

अपुनर्ग्रहणायेति इदं च स्वत्वनिवृत्तेर्वाच्यतास्वीकारफलप्रदर्शनं न तु धात्वर्थनिविष्टमिति बोध्यम् भाक्त इति अधीनीकरणरूपेऽर्थे
इत्यर्थः न शूद्राय मतिं दद्यादित्यत्र मतिं तज्जनकं शास्त्रं नोपदिशेदित्यर्थः आग्रह इति अत एव क्रियाग्रहणं कर्तव्यमिति वार्तिकं ॥

भाष्ये प्रत्याख्यातम् भाष्यान्तरमप्याह खण्डिकोपेत्यादि चपेटां ददातीत्यत्र संयोगोऽर्थः शेषित्वमुद्देश्यत्वम् शेषत्वमप्रधानरूप
क्रियया इत्यादिना प्रत्याख्यातम् पत्ये शेत इत्यस्मात्याति सम्प्रदानकम्पत्नीकर्तृकं शयनमिति शाब्दबोधः यदि वृत्तिकारमतार्थ एव भाष्यकारस्याप्य
भिप्रेतः स्यात्तदा सूत्रस्थकर्मशब्देन क्रियाया ग्रहणेऽपि मुख्यपदानुगतं सम्प्रदानत्वं तदत्र न सम्भवतीति पत्ये शेत इति प्रयोगोपपत्त्यसम्भवेन क्रिया
याः कृत्रिमकर्मत्वोपपादनमसङ्गतमेव स्यादिति भावः भाष्यान्तरं व्याचष्टे चपेटामिति चपेटाशब्दार्थः प्रसृतकरतलसंयोग इति कपोलप्रसृतकर
तलसंयोगानुकूलव्यापार इत्यर्थः शेषित्वमप्रधानत्वं तच्चोद्देश्यस्यैव सम्भवतीति फलितार्थमाह उद्देश्यत्वमिति अत एवाह शेषत्वमप्रधानत्वमिति
एवञ्च कर्मणा करणभूतेन यं स्वस्वामिभावादिनाभिसम्बन्धुमिच्छति तत्सम्प्रदानमिति तदर्थो दितिभावः॥ ॥ ॥ ॥ ॥ ॥

ग्रामसंस्कारश्चतदीयपुरीषसम्बन्धेनाधिकसस्यसम्पत्त्याग्रामस्यविलक्षणासुषमा वाधादिति सम्प्रदानसंज्ञायाइतिशेषः नदोषः नातिप्रसङ्गः सम्प्रदानत्व
प्रसक्तिमान् क्रियाकारकभावसम्बन्धश्चचतुर्थ्यर्थः आद्यस्यतद्धात्वर्थकर्मसम्बन्धित्वेनेच्छाविषयोयस्तस्मिन्विशेषणता एवञ्चसम्प्रदानविप्रसंवन्धि
गोकर्मकन्दानमितिशाब्दबोधः प्रीञ् धातोर्गणद्वयेपाठादाह क्र्यादेश्चुरादेर्वेति परन्त्विदम्बोध्यम् यदाचुरादेः क्रियतेतदाआधृषीयत्वात्णिजभावेइद
म् कश्चिदिति अत्रारुचिर्बीजन्तुतस्याकर्मकत्वेनकर्मणिल्लडसम्भवइति ननुहरिम्प्रीणयतीत्यनुपपन्नम्प्रीधातोरपिरुच्यर्थत्वेनसम्प्रदानसंज्ञायाः
प्राप्तेरतआह प्रीयमाणइतिनिर्देशेनेति अत्रकर्मणिप्रत्ययोदृश्यते यदिरुच्यर्थकत्वमात्रेणतदर्थयोगेसम्प्रदानसंज्ञास्यात्तदाकर्मणिशानच् प्रत्ययोनस्या
दित्याशयः इदम्प्रीधातोरपिरुच्यर्थत्वाभिमानेनज्ञापकप्रदर्शनम् वस्तुतस्तुनात्रज्ञापनोपयोगः प्रीधातोः कर्मार्थकप्रत्ययप्रकृतिभूतस्यरुच्यर्थत्वाभा।

शेषित्वंनास्तीति यद्यपिग्रामसंस्कारार्थमजानयनेतदपिग्रामस्याप्तितथाप्यजायाइवपरत्वात्कर्तुरीप्सिततमंकर्मसंज्ञयावाधान्नदोषइति
तत्त्वम् अस्मात्कर्मणीति क्र्यादेश्चुरादेर्वाइत्यर्थः प्रीङ् प्रीतावितिदैवादिकादित्यपिकश्चित् हरिंप्रीणयतीति प्रीयमाणइतिनि
र्देशेनप्रीधात्वर्थकर्मणः संप्रदानत्वाभावज्ञापनादत्रनसंप्रदानत्वमितिभावः॥ (१) वादेवप्रीयमाणइतिनिर्देशस्योपपत्तेः तथाहि हरये

रोचतेभक्तिरितिप्रयोगघटकोरुच्धातुरकर्मकइतिफलतावच्छेदकसम्बन्धेनफलसामानाधिकरण्यस्यव्यापारेउपपत्तयेविषयतासम्बन्धावच्छि।
न्नप्रीत्यनुकूलव्यापारोधातुवाच्यइतिवक्तव्यम् एवञ्चफलतावच्छेदकविषयतासम्बन्धेनप्रीतेर्भक्तिमात्रनिष्ठत्वेनव्यापारस्यफलसामानाधिकर
ण्यादकर्मकता सचव्यापारः स्वमात्रसाध्यकव्यापारप्रयोज्यतारूपएव हरिम्प्रीणयतीत्यत्रतुसमवायावच्छिन्नप्रीत्यनुकूलव्यापारोऽर्थइतिफलता।
वच्छेदकसमवायसम्बन्धेनप्रीत्याश्रयोहरिरितिफलवैयधिकरण्यस्यव्यापारेसत्त्वाद्धातोः सकर्मकत्वात्कर्मणिप्रत्ययस्सम्प्रीधातोः प्रकृतिभूतस्यरु
च्यर्थत्वाभावस्यचोपपत्तिरतएवाह इतिभावइति एतदेवपरममूलेऽन्यकर्तृकोऽभिलाषोरुचिरित्यनेनाभिहितम्॥ ॥ ॥ ॥ ॥

हरिप्रीणपतिभक्तिरितिशब्दाद्धरिनिष्ठायाप्रीतिस्तदनुकूलोभक्त्याश्रयकोव्यापारइतिबोधः एवञ्चोक्तप्रीधात्वर्थफलस्यफलतावच्छेदकसमवायसंबन्धे
नाश्रयोहरिरितितस्यप्रीयमाण पदबोध्यत्वमितिसम्प्रदानसंज्ञाहरेर्भवति एतत्सूत्राभावेहरयेरोचतेभक्तिरित्यादौशेषषष्ठीहरिशब्दात्स्यादितितत्सूत्रापवा
दत्वमस्य ननुप्रीयमाणपदाभावेपथः संप्रदानसंज्ञाप्राप्तियामूलेऽभिहितासामानसंगच्छते अधिकरणसंज्ञयात्रस्याबाधसम्भवादित्याशयकशङ्कान्नि
रस्यतिनचेत्यादिना एतदभावे प्रीयमाणपदाभावे शेषत्वविवक्षायाम् यत्रक्रियाजनकत्वमात्रस्यविवक्षाशक्त्यनतरस्यत्वविवक्षातत्र तयेति अधिक
रणसंज्ञयेत्यर्थः एवञ्चप्रत्युदाहरणासङ्गतिरितिभावः इत्यस्याप्याप्तेरिति विनिगमनाविरहाद्यथाऽधिकरणत्वविवक्षायामधिकरणसंज्ञयाशेष
त्वविवक्षायाञ्चरितार्थाया: सम्प्रदानसंज्ञायाबाधस्तथाकर्मत्वविवक्षायाङ्कर्मसंज्ञयाबाधापत्तावस्याप्याप्तेरितिभावः एतेनकारकपदसम्बन्धेनक्रि

अत्रपथ्यइति नचतदभावेसूत्रस्यशेषत्वविवक्षायांचारितार्थ्येनपरत्वात्तयाबाधसिद्धिरितिवाच्यम् देवदत्तंरोचतेइत्यस्याप्याप्तेः कृ
१ स्लंमोनीतिस्तुत्या·

याजनकस्यैतत्संज्ञाप्रवृत्त्याशेषत्वविवक्षायाञ्चारितार्थ्यप्रदर्शनमसङ्गतमितिपरास्तम् इत्यस्यापीत्यपिनादेवदत्तंरोचतेमोद
कः पथीत्यस्यसङ्ग्रहः एवञ्चकर्मसंज्ञापवादत्वमस्याः संज्ञायाः अन्यथोक्तरीत्याकर्माधिकरणसंज्ञाभ्यामेतद्विषयस्यव्याप्तत्वाद्दोषःस्यादितिमूलाशयः
श्लाघह्नुङ् अत्रज्ञापनवचनाज्ज्ञपेः सन्नन्तात्कर्मणिशानच् अत्रणिच्प्रकृतिणिजन्तोद्वावपिधातूसकर्मकावितिकस्मिन् कर्मणिशानजित्याकाङ्क्षायां
णिच्प्रकृत्यर्थेकर्मणिसन्नन्तार्थकर्मणिवाप्रत्ययइतिमतभेदः श्लाघृधात्वर्थोविशिष्टगुणवत्त्वप्रतिपत्त्यनुकूलशब्दप्रयोगएव एवञ्चयदास्तुतिमात्रस्य
धातुवाच्यत्वविवक्षातदाफलतावच्छेदकसमवायसम्बन्धेनतादृशप्रतिपत्तिरूपफलाश्रयत्वात्कृष्णस्यकर्मत्वमितिकृष्णंश्लाघतइतिभवत्येव यदातु
तादृशस्तुतिपूर्विकाबोधनाधात्वर्थस्तदाकृष्णायश्लाघतइतिप्रयोगस्यसिद्धयेसूत्रमित्याशयेनाह स्तुत्येति अत्रापिस्तुतिःकृष्णस्यैवस्मरादितिपञ्चमीहेतौ॥

परस्मै स्वसखीजनाय स्तुतिपूर्विकाबोधना स्तुतिपूर्वकबोधानुकूलव्यापारानुकूलव्यापारः प्रथमोपस्थितत्वाणिजन्तप्रकृत्यर्थकर्मण्येव शानजितिप्रथममतेनयद्विषयकज्ञा
नानुकूलव्यापारानुकूलव्यापारस्तस्य ज्ञीप्स्यमानत्वमितिप्रकृते कृष्णविषयकसखीजनसमवेतज्ञानानुकूलव्यापारानुकूलव्यापारस्य धात्वर्थत्वेन कृष्णस्य सम्प्रदानसं
ज्ञाभवति ननु यस्माद्धातोः कर्मणि प्रत्ययो भवति तद्धात्वर्थनिरूपितकर्मत्वं तत्र चेत्तदा तत्रैव तेन प्रत्ययेन भवितव्यम् प्रकृते तु भवताणिच्प्रकृत्यर्थकर्मणि प्रत्ययः कृ
तः स च सन्नन्तादिस्येवं कथमित्यत आह तस्यापीति णिजन्तप्रकृत्यर्थकर्मणोऽपीत्यर्थः ज्ञापनविषयेच्छेति विषयतासम्बन्धेन तादृशपदार्थविशिष्टं यज्ज्ञानं तद
नुकूलव्यापारानुकूलव्यापारविषयकेच्छाविषयत्वादित्यर्थः विशिष्टस्येच्छाविषयत्वे विशेषणव्यापितत्वमस्त्येव प्रयोज्यसखीजननिष्ठज्ञानानुकूलव्या
पारो मदिष्टसाधनमिति ज्ञानात्सखीजननिष्टज्ञानानुकूलव्यापारानुकूलव्यापारो जायतामित्याकारेच्छा गोप्या अस्तीति तादृशेच्छाविषयव्यापारप्रयोज्यत्वा

परस्मैकृष्णं कथयतीत्यर्थः ज्ञीप्स्यमानपदेन प्रथमोपस्थितत्वात्सिच्प्रकृत्यर्थकर्मैव ग्राह्यम् तस्यापि ज्ञापनविषयेच्छाविषयत्वाच्छा
नजुपपत्तिरिति भावः न्हुङादेरपि न्हुत्यादिना बोधनमर्थ इति बोध्यम् अन्येत्विति प्राधान्या ॥ ९ पारजन्यज्ञानविषयत्वस्य कृष्णे सत्त्वाज्ज्ञीप्स्य

मानपदेन — तस्य बोधनं सम्भवतीति भावः कृष्णस्य कर्मत्वप्राप्तावनेन सम्प्रदानसंज्ञा भवति श्लाघ्धातुयोगे विवरणवाक्ये परस्मै कथयतीत्यत्र कथधातो
रपि स्ववार्थ इति कर्मसंज्ञा गतिबुद्धीत्यनेन परशब्दार्थस्य सखीजनस्य तु न भवति तत्र ज्ञानसामान्यस्य बुद्धिपदेन ग्रहणादत्र कथधात्वर्थत्वेन चाक्षुषज्ञान
स्याविवक्षितत्वात् किन्तु कर्मणा कृष्णेन सखीजनमभिसम्बन्धुमिच्छतीति सम्प्रदानसंज्ञा तस्य भवति कृष्णेनाभिसम्बन्ध्यस्तु कृष्णविषयकचाक्षुषज्ञानाश्र
यत्वमेव अतएव परशब्दाच्चतुर्थी कृता ननु यदि णिजन्तप्रकृत्यर्थकर्मत्वमेव ज्ञीप्स्यमानपदस्य तत्र प्रवृत्तं यदि विवक्षितं चेत्तदा जिज्ञास्यमान इत्येवोच्यतां ना
वतापि सनर्थेच्छाविषयज्ञानविषयत्वस्य कृष्णे सत्त्वाज्जिज्ञास्यमानत्वस्य सत्त्वादिष्टसिद्धिर्भविष्यतीत्यत आह मूले अन्येत्विति एतत्पक्षे कृष्णस्य ज्ञान
कर्मत्वं न विवक्षितं किन्तु ज्ञानाश्रयत्वमिति णिजन्तार्थकर्मणि ज्ञीप्स्यमान इत्यत्र शानच् तदेवाह प्राधान्यादिति णिजर्थस्य प्रकृत्यर्थं प्रति प्राधान्यादित्यर्थः

ज्ञानकर्माकाङ्क्षानिवृत्तये आह आत्मानमयं वेति मूले नन्वस्मिन्पक्षे क्त्वस्य प्रकृत्यर्थकर्मणा आत्मना परेण वा अभिसम्बन्धेच्छासत्त्वात्सम्प्रदानसंज्ञाप्राप्तौ
स्ये वेति प्रकृतसूत्रस्य नोपयोग इत्यत आह कारकशेषत्वादिति नन्वेतन्नोपपद्यते सम्प्रदानत्वप्राप्ते र्जोगरूकत्वादत आह कर्मणेति अत्र पक्षे श्लाघादेर्धातोः
श्लाघ्यत्वगुणविशिष्टविषयकबोधने वृत्तिर्बोध्या नच श्लाघ्यत्वं स्वनिष्ठमन्यनिष्ठं वेत्यन्यदेतत् एवञ्च यदि गोपीकर्तृकस्वात्मपरान्यतरनिष्ठश्लाघ्यत्वगु
णविशिष्टविषयकबोधने न क्त्वो व्याप्रियते तदा सम्प्रदानत्वस्य कर्मणेति सूत्रेणास्त्येव प्राप्तिः यदि तस्या विवक्षा किन्तु सम्बन्धसामान्यस्य विवक्षा तदा षष्ठ्याम्प्राप्ता
यां सम्प्रदानत्वं विधीयते अत्रेदं बोध्यम् द्वितीयमते ज्ञाप्यमान इत्येव सिद्धे सन्प्रत्ययोपादानमनर्थकमिति णिच्सनोरुभयोरुपादानात्पाणिनेर्णिजर्थकत्यर्थकर्म
णो णिजन्तार्थकर्मणो वा ग्रहणम्यस्य भेदेनेष्टमिति मतद्वयमपि सप्रमाणमेवेति ननु ह्नुङ् धात्वर्थोऽत्र ह्नुतिपूर्वकबोधानुकूलव्यापारानुकूलव्यापार इति ह्नुवानेस

ज्ञीप्स्यमानपदेनाप्यर्थकर्मण एव ग्रहणमिति तदाशयस्तदेवाह क्त्वस्यापेति कारकशेषत्वादिति कर्मणा यमभिप्रैतीति संप्रदानत्वाविवक्षा

यां शेषत्वादित्यर्थः सपत्नीभ्य इति तत्र ह्नुवाने स्वं तमार्थिकार्थकथनम् स्वाभिप्रायं क्त्वस्य संबोधयतीत्यर्थः ॥ ११ स्यकथं तन्नाभ इत्यत आह तत्र

ह्नुवाने त्यन्तामिति अत्र ह्नुतिकर्त्राकाङ्क्षाशान्तये ह्नुवानेसु कृन्तु कर्तुरपि धात्वर्थकुक्षौ निवेश इति भावः मूले तमेवार्थमिति ह्नुतिरूपमेवार्थमित्यर्थः क्त्वस्यामि
त्यस्यान्यस्मै जनायेत्यादिः एवञ्च प्रथमपक्षाभिप्रायेणेदं व्याख्यानम् द्वितीयमते नाह यस्य कस्येति मूलकाराभिप्रेतार्थस्य स्पष्टप्रतिपत्तये आह स्वाभिप्रा
यमिति एवञ्चात्रोभयविषयकबोधनेच्छा सन्नर्थः तत्र प्रथमपक्षे स्वकर्तृकह्नुतिक्त्वस्योभयकर्मकत्वं ज्ञाने द्वितीयपक्षे तु यत्किञ्चित्कर्तृकाह्नुतिरात्मा चेत्यु
भयं ज्ञानकर्मत्वेन विवक्षितमिति भावः तिष्ठत इत्यत्र स्था धातुः स्थितिपूर्वकबोधानुकूलव्यापारानुकूलव्यापारार्थकः आद्यमते बोधे स्वकर्तृका स्थितिः क्त्वस्या
ख्यकर्म द्वितीयमते तु स्वकर्तृकास्थितिरात्मा च बोधे कर्म प्रथममते बोधे स्वोजननिष्ठत्वस्य विवक्षा द्वितीयमते तु बोधेता दृशे क्त्वस्यानिष्ठत्वस्य विवक्षेति बोध्या
म् शपत इत्यत्र शप् धात्वर्थस्तु स्वनिष्ठानुरागाज्ञानसूचकशब्दोच्चारणपूर्वकबोधानुकूलव्यापारानुकूलव्यापार एव ॥ ॥ ॥ ॥

तत्र हि उभयबाधकत्वोक्त्या ऽस्य सूत्रस्य निरवकाशत्वमभिप्रेतम् तच्च न युक्तम् यदा इच्छायाएव धातुवाच्यत्वविवक्षा धात्वबाच्यस्यैव फलस्य च विवक्षा तदा कर्मसंज्ञाया अप्राप्त्या शेषषष्ठीबाधकत्वेनास्य चारितार्थ्यादित्याह शेषत्वविवक्षायामित्यादिना अभिमान इति यथा मातुः शब्दार्थस्य कर्मत्वेपि तस्य सम्बन्धित्वेन विवक्षायाम्मातुः स्मरतीत्यत्र षष्ठी भवति तथास्य सूत्रस्य शेषषष्ठ्यपवादत्वेपि सम्प्रदानत्वाविवक्षायां शेषत्वविवक्षया तादृशप्रयोगस्य निर्वाहे सति विभक्तिविपरिणामकल्पनमन्याय्यमित्येतद्बीजम् क्रुधद्रुहेर्ष्या क्रोधादीनामेतत्सूत्रघटकधात्वर्थानां सर्वेषाङ्कोपप्रभवानामेव ग्रहणस्याभिप्रेतत्वेपि सामग्रीवैजात्याद्वैजात्यमतस्तेषां स्वरूपमाह मूले क्रोधो ऽमर्ष इत्यादिना प्ररूढकोपः आधिक्यम्प्राप्तः कोप इत्यर्थः अपकारः दुःखजनिका क्रिया गुणविषये ॥

शेषत्वविवक्षायां चारितार्थ्येन कर्मसंज्ञाबाधकत्वायोगो त्रारुचिः संप्रदाने इति बाहुल्यकादिति भावः व्याख्येयमिति षष्ठ्यपवादत्वाच्छेषत्वविवक्षाकर्तुमशक्येत्यभिमानः अमर्ष इति वाक्चक्षुरादिविकारानुमेयः रूढकोप इत्यर्थः अपकार इति अपकारविषयेच्छेत्यर्थः असहनम् उत्कर्षविरोधिधर्मारोपानुकूलो व्यापारः गुणेषु गुणविषये दोषारोपः दोषत्वारोपानुकूलो व्यापारः अकर्मकत्वादिति क्रोधजन्यफलस्य देवदत्तादौ सत्त्वेपि तस्य धात्ववाच्यत्वादिति भावः द्वितीयेति तत्प्रयोजिका कर्मसंज्ञेत्यर्थः प्राथमिकेति

गुणात्मकविशेष्ये दोषत्वारोपः दम्भादिकृतत्वारोपः फलस्य दुःखस्य तस्य फलस्य धातुवाच्यत्वे तु सकर्मकत्वं स्यादिति भावः मूले सकर्मकत्वादिति उत्कर्षविरोधिधर्मारोपस्य विशेष्यता सम्बन्धेन व्यापारवैयधिकरण्यादाद्यः सकर्मकः द्वितीयस्तु स्वीयविशेष्यताश्रयगुणवत्त्वसम्बन्धेन तादृशारोपात्मकफलव्यधिकरणव्यापारवाचकत्वात्सकर्मक इति भावः द्वितीयाप्राप्तेति मूले उक्तन्तच्चायुक्तन्द्वितीयारूपस्य फलस्य संज्ञया विरोधाभावादिति तत्पदन्तत्प्रयोजकसंज्ञोपलक्षणमित्याशयेनाह तत्प्रयोजिकेति सर्वेषाङ्कोपप्रभवाणामेवैतत्संज्ञानिमित्तत्वमतश्चेतनस्य यत्र कर्तृत्वन्तत्रैतस्य सूत्रस्य प्रवृत्तौ न काचित्क्षतिः यत्र त्वचेतने कर्तृत्वविवक्षा मित्राय द्रुह्यति प्रतापो पीत्यादौ यथा तत्र चेतनत्वारोपेण प्रयोगः ॥

यस्त्रातिकोपइत्यत्र तद्विशेषणस्य प्रयोजनमपरमसूत्रेऽभिहितं भार्यामीर्ष्यतीत्यादि तत्रान्यकर्तृकदर्शनासहनजन्यतद्दर्शनविरोधिभार्याकर्तृकात्तद्देशस्थित्यादिप्रयोजकज्ञानानुकूलव्यापार एवेर्ष्यधात्वर्थ इति तत्र फलतावच्छेदकविषयता सम्बन्धेन भार्यायास्तादृशज्ञानाश्रयत्वात्कर्मता द्विषूधातुस्तु नक्रुधादिसमानार्थकद्वितं तदर्थयोगेन सम्प्रदानसंज्ञा औषधन्द्वेष्टीत्यादौ यथा अत्र द्विषधात्वर्थो बलवद्दुःखसाधनताज्ञानजन्यो योविलक्षणोऽप्रीतिजनकश्चित्तवृत्तिविशेषः स एवेति नक्रुधादिसमानार्थकता तादृशवृत्तिविशेष एवानभिनन्दनशब्दार्थः अत एव योऽस्मान्द्वेष्टीत्यादौ नैतत्सूत्रस्य प्रवृत्तिः॥ ॥ राधीक्ष्योर्यस्य विप्रश्नः एतयोर्योगे यत्संबन्धी विविधः प्रश्नस्तस्य सम्प्रदानसंज्ञा भवति मूलेऽन्यमतोपपादनावसरे कर्मसंज्ञायाः प्राथमिकप्राप्तिः कथिता तस्या उपपत्तिमाह प्रश्नविषयेति प्रश्नविषयशुभाशुभपर्यालोचनमित्यर्थः पर्यालोचनन्तु अज्ञानविरोधिज्ञानानुकूलव्यापार एव प्राचीनोक्तकर्मत्वस्य प्राप्तिमुपपादयति प्रश्नविषयरूपफलेति तच्च फलं शुभाशुभरूपम् तस्य शुभाशुभरूपफलस्य कर्मसंज्ञा यादृशफलाश्रयत्वस्य कर्त्नेसत्त्वाद्भवन्मते प्राप्तातच्च फलन्नप्रधानीभूतव्यापारजन्यं

राधीक्ष्योः प्रश्नविषयपर्यालोचनमर्थः तत्र प्रश्नविषयरूपफलाश्रयत्वात् कर्मत्वप्राप्तिरिति भावः इत्यर्थाभ्युपगमेनेति तस्यप्रधानीभूतधात्वर्थाप्रयोज्यत्वेन तदप्राप्तिरिति भावः कर्मत्वप्राप्तइति शंसितुः शंसनविषयहर्षानुकूलव्यापारलक्षणं प्रोत्साहनं तयोरर्थः शंसितुः॥ ६ ॥

यच्च फलस्य पर्यालोचनाख्यप्रधानव्यापारप्रयोज्यत्वं तत्कर्मणोः शुभाशुभयोर्धात्वर्थेनोपसङ्ग्रहादेतावकर्मकाविति भावः अत एव शृणन् राधोऽकर्मकादेवेत्युक्तेः प्रत्याङ्भ्यांश्रुवः अत्र सोपसर्गश्रुधातोः प्रवर्तनाजन्योऽभ्युपगमोऽर्थः विप्राय गां प्रतिशृणोति आशृणोतीत्यादौ विप्रस्य प्रवर्तनान्वयित्वेन षष्ठीप्राप्तौ तां सम्प्रदानसंज्ञा बाधते विप्रसम्प्रदानकप्रवर्तनाजन्यगोकर्मकं श्रवणमिति बोधः अनुप्रतिगृणश्च अत्रानुप्रतिपूर्वकगृधातोः शंसनविषयकहर्षानुकूलव्यापारात्मकप्रोत्साहनमर्थः धात्वर्थशंसनाश्रयस्यानेन सम्प्रदानसंज्ञा विधीयते होतुः कर्मत्वस्य प्राप्तिमुपपादयति शंसितुरिति शंसनं सूक्तादिनाइन्द्रादिनिष्ठगुणाभिधानम् तद्विषयो योहर्षोऽन्तःकरणस्य वृत्तिविशेषस्तदनुकूलोऽध्वर्युनिष्ठो व्यापारः स एव प्रतीयते स च व्यापार ओथामोदइवेत्यादिशब्दप्रयोगरूपः शंसनविषयकहर्षरूपफलात्मकप्रोत्साहनन्तु शंसितर्यहोतरि वर्तते होत्रभेदस्तु शंसितरि कर्मणि वर्तत इति कर्मसामानाधिकरण्यमस्तीति बोध्यम्॥ ॥ ॥

एवञ्च मुख्यकर्मत्वस्यशंसितरिसत्वेच परिक्रयणेसम्प्रदानम् साधकतममित्यनुवर्तेते लोकेधनशब्दस्यरूपकादौरूढ्याप्रयोगस्यदर्शनादादिपदम्मू लेऽभिहितंतत्सङ्ग्राह्यमाह आदिनेति शतस्यदानात्मकव्यापारद्वाराक्रयणक्रियाजनकत्वम् यदुक्तम्मूलेउपकारकत्वञ्चानेकधेतितस्यानेकधात्वन्द। र्शयतिसाक्षादित्यादिना साक्षादुपकारकत्वस्योदाहरणंयूपायदार्विति परम्मूलेदर्शितमेवेतिपरम्परयेत्यस्योदाहरणमाह ब्राह्मणायेति तच्छब्दोब्राह्म णबोधकः एतेनयत्रप्रकृतिविकृतिभावस्तत्रानेनवार्त्तिकेनचतुर्थीतिवदन्तःपरास्तः॥ क्लृपीत्यर्थग्रहणम् उत्पत्तिश्च क्लृपेरर्थः क्लृप्यर्थकधातुयोगे उत्पद्यमानेऽर्थे वर्त्तमानाच्चतुर्थीतिवार्त्तिकार्थः॥ ॥ उत्पद्यमानार्थवाचकञ्चविकारवाचकमेवेतितद्वाचकाच्चतुर्थीसर्वत्रोदाहृता ननुज्ञानात्मशब्दोय

श्चेत्साहनेकर्मतयाऽन्वयः होतुश्चशंसितर्य्यभेदान्वयः एवंचकर्मसामानाधिकरण्यात्कर्मत्वप्राप्तिरितिभावः धनादीतिआदिनाबुभुक्षि तेऽन्नम् अनेकधेति साक्षात्परंपरयाचेत्यर्थः ब्राह्मणायदधीत्यादौतद्भोजनोपकारकत्वेनतदुपकारकत्वंबोध्यम् ज्ञानात्मनेति आत्म शब्दस्तहिधर्मपरोज्ञानत्वेनपरिणमतइत्यर्थः एवंचतस्यविकृतिवाचकत्वाभावान्नचतुर्थी किंतुप्रकृत्यादित्वात्तृतीया ज्ञान। त्वविशिष्टरूपान्तरप्राप्तिर्भक्तिकर्तृकेतियावत् रूपांतरप्राप्तिर्हिपरिणामइतिभावः प्रथमैवेति भक्त्युपादानकोज्ञानरूपःपरिणामइतित दाबोधः समासविधानादिति॥ ((दिज्ञानस्वरूपस्यबोधकस्तदाविग्रियमाणवाक्येज्ञानशब्दाच्चतुर्थीविवरणवाक्येज्ञानशब्दात्तृतीयेतिकथमत

आहआत्मशब्द इतितद्धृतीति ज्ञानत्वतीत्यर्थः एवञ्च आत्मन्शब्दस्यधर्मपरत्वेच तस्य आत्मन्शब्दस्य ज्ञानत्वेनेतितृतीयार्थोवैशिष्ट्यम्परिणामोरूपान्त रप्राप्तिः तथाचयादृशोवाक्यार्थबोधस्तमाह ज्ञानत्वविशिष्टेति मूलेपरत्वादिति चतुर्थ्यपेक्षयेत्यादिः भक्तिर्ज्ञानइत्यत्रत्यस्यभक्त्यभिन्नोज्ञानरूपः परिणा म इत्यर्थः भक्तिस्त्रमननजन्यन्निदिध्यासनम् एतस्यैवाविद्यानिवृत्तिरूपमुक्तिसाधनब्रह्मज्ञानसाधनत्वस्यश्रुतिप्रसिद्धत्वात् यत्तुदेवविशेष्यका राध्यत्वप्रकारकज्ञानरूपाभक्तिस्तस्याःसाक्षात्तत्त्वज्ञानसाधनत्वाद्धि तुपरम्परयैव मूलेशुभाशुभेति सुखदुःखेत्यर्थः भूतविकारः भूतानांविकारः॥८

यदि समासे विधानाज्ज्ञापकाद्धितशब्दयोग एव चतुर्थी तदा एवं सुखयोगेपीत्युक्तग्रन्थासङ्गतिरत आह चतुर्थी तदर्थेति हितशब्दार्थेत्रेष्टसाधनम् ब्राह्मणाय हितमध्ययनमित्यत्र चतुर्थ्यर्थः सम्बन्धस्तस्य हितपदार्थैकदेशेष्टेऽन्वयः यत्तु चतुर्थी चाशिषीति सूत्रेण विहिताया चतुर्थीतदन्तस्य समासविधायकत्वे न चतुर्थी तदर्थेति सूत्रस्य चरितार्थमिति न ज्ञापकत्वसम्भव इति तदेतत्खण्डयति वृत्ताविति हितयोग इत्यत्र हितशब्दः सुखशब्दस्याप्युपलक्षणम् आशीरर्थो प्रतीतिमुपपादयति आशीरर्थयोग इत्यादिना आशीरर्थकभूयादित्यादिपदयोग इत्यर्थः विषयस्य धनपुत्रादेः तदाश्रयस्य तत्सम्बन्धिनो देवदत्तादेः न चेति नहीत्यर्थः तथान्वयः उद्देश्यविधेयभावेनान्वयः उद्देश्यविधेयभावेनान्वये भेदनीयस्थितेः कारणत्वात् हरदत्त इति अत्रारुचिवीजन्तु क्वचित्सर्वत्रोद्देश्यविधेयभावेनानन्वय इति न नियमः लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यस्य सोष्णीषा ऋत्विज इति वाक्यबोधितोष्णीषानुवादेन लोहितविधायकतायाः प्रा

चतुर्थी तदर्थेति हितसुखयोगे समासविधानाज्ज्ञापकादित्यर्थः तदाह एवमिति वृत्तावाशीरर्थप्रतीतेर्न चतुर्थी चाशिषीति चतुर्थ्या हितयोगे निर्वाहः आशीरर्थयोगे ह्याशीर्विषयस्य विधेयत्वं तदाश्रयस्योद्देश्यत्वं च प्रतीयते तेन च हितेन तथान्वयो व्युत्पन्न इति हरदत्त इति दिक् न हि फलार्थेति यद्यपि ब्राह्मणाय दधीत्यादौ ब्राह्मणीयभोजनोपकारकमपि दधि तद्द्वारा ब्राह्मणोपकारकं तथापि फलेनाहरणद्वारा न कोपि यानक्रियोपकार॥ (( प्ताप्राप्तत्वादिपर्यालोचनेन सम्प्रदायसिद्धत्वात् न चैवं सति चतुर्थी तदर्थेति सूत्रस्य चतुर्थी चाशिषीति सूत्रविहितचतुर्थ्यन्तस्य समासविधायकत्वेन चरितार्थ्याज्ज्ञापकत्वोक्तिरसंगतैव स्यादिति वाच्यम् चतुर्थीविधायकस्य तस्य सूत्रस्य हि आशीर्विषयक्रियान्वय्यर्थकात्प्रातिपदिकात्क्रियाद्वारके आयुष्यादियोगे षष्ठी च चतुर्थी वेत्यर्थ इति उभयोरपि क्रियायामन्वय इति देवदत्ताय सुखं भूयादित्यत्र देवदत्ताये त्यनेन सह सुखमित्यस्य सामर्थ्याभावेन समासाप्राप्तेरिति नानेन यत्र चतुर्थी तत्र समासविधायकतातस्य सूत्रस्येति चतुर्थी तदर्थेति सूत्रस्य ज्ञापकत्वोक्तिर्युक्तैवेत्याशयात् मूले यत्तु

प्राञ्चेति प्रसादकृतेत्यर्थः पूर्वोक्तस्वग्रन्थविरोधशङ्कां परिहर्तुमाशङ्कते यद्यपीत्यादिना यानक्रियोपकारः यानक्रियाकृतोपकार इत्यर्थः ॥

इत्याशयइति अनेनारुचिर्ध्वनिता तद्वीजन्तु यानक्रियाक्षातउपकारः फलेविक्रयभक्षणादि कर्मत्वरूपः सम्भवत्येवेतिनचैवन्तादर्थ्येचतुर्थीत्यनेनैवचतुर्थी सिद्धेतिप्रकृतसूत्रस्यवैयर्थ्यमितिवाच्यम् फलानामाहरणकर्मत्वेनद्वितीयाप्राप्तेतितद्बाधनार्थमस्यारम्भात् ननुभाववचनघञादीनान्तादर्थ्यद्योतकत्वंसूत्रान्नल भ्यतइत्यतआह भाववचनेनेति तत्समानार्थत्वात् तुमुनसमानार्थत्वात् अत्रार्थशब्दोनाभिधेयवाची उभयोरपिभावाभिधायकत्वस्यसुप्रसिद्धत्वात् किन्तुप्रयोजनवाची एवञ्चतुमुनपवादत्वेनतुमुन् समानफलकत्वमस्येतिबोध्यम् नन्वेवंयत्रतुमुन् तत्रतुमुनैवतादर्थ्यन्द्योतितमितिद्विषांविघातायेति चतुर्थ्यनुपपत्तिरतआह द्विषामित्यादि एतेनेत्यस्यार्थमाह उक्तरीति विधानेषणयोरित्यर्थः तद्द्योतनेनेति तस्यद्योतनेपीत्यर्थः तुमुनन्तेनेतिशेषः पूर्वे

इत्याशयः तुमुनेवेति भाववचनघञादीनांतुमुनपवादतयातत्समानार्थत्वात् एवञ्चप्रथमापवादइदमितिभावः द्विषांविघाता यविधातुमिच्छतइत्यत्र विघातायेतितादर्थ्येचतुर्थी विघातार्थंयद्विधानंतदर्थेच्छावतइत्यर्थः एतेनात्रतुमुनातादर्थ्यस्योक्तत्वा त्कथंचतुर्थीत्यपास्तम् उत्तरक्रिययोस्तद्योतनेपिपूर्वक्रिययोस्तद्द्योतनात् कर्तुःप्राधान्यादिति एवञ्चतादर्थ्यचतुर्थ्यास्तत्रा प्राप्तेर्नियमासम्भवइतिभावः विभक्त्यर्थेति तादर्थ्यार्थइत्यर्थः इतिचतुर्थी प्रकृतेति कर्त्तर्यतिव्याप्तिवारणायसत्यन्तम् ॥ ९

तिहननविधानयोरित्यर्थः एवञ्चकर्तुःप्राधान्येचतत्रपाचकोव्रजतीत्यत्रविशेषणविशिष्टस्यविभक्त्यर्थान्वयेविशेषणस्याप्यन्वयोस्त्येवेत्याशङ्काकरणायोक्तम्मू लेगुणीभूतेति एतेनएकविशेषणत्वेनोपस्थितस्यान्यत्रविशेषणतयान्वयाकाङ्क्षैवनास्तीतिसूचितम् इतिचतुर्थीविवरणम् कर्त्तरीति प्रयागात्काशीङ्गच्छतीतिय त्रप्रयोगस्तत्रगन्तरिचैत्रादावतिव्याप्तिरित्यर्थः प्रकृतेतिधात्वर्थस्यविशेषणम् तच्चशब्दप्रयोगाधिकरणकालिकविवक्षाविषयत्वम् नतुतत्तद्धातुवाच्यत्वेनप्रसिद्धत्वम् यत्तुप्रकृतेतिधातोर्विशेषणमिति तन्न अपादानमुत्तराणिकारकाणिबाधन्तइतिभाष्यकारोक्तिविरोधापत्तेः तथाहिधनुषाविध्यतीत्यत्रयदानिःसरणपूर्वकव्यधने धातोर्वृत्तिस्तदाधनुषोनिःसरणावधित्वात्प्राप्तापादानसंज्ञाम्बाधित्वाव्यधनम्प्रतिकरणत्वेनविवक्षितत्वात्परत्वात्करणसंज्ञाभवतीतिभाष्योक्तिःसङ्गच्छतेयदिधा

धनुर्विध्यतीत्यत्रयादृशव्यापाराश्रयत्वेन तस्यकर्तृत्वम्भवति तादृशव्यापारस्यकार्तृत्वोपपत्तयेव्यधधातुवाच्यत्वमावश्यकन्तद्व्यापारद्वारैवकरणत्वस्य। वाच्यतयातदनाश्रयत्वस्यधनुष्यभावेनापादानत्वाप्रसक्त्याभाष्यासङ्गतिःस्पष्टैव ॥❀॥ नन्वेवङ्करणसंज्ञावत्कर्तृसंज्ञाप्यपादानसंज्ञायाबाधिकाभविष्य तीतिसत्यन्तविशेषणंव्यर्थमेवेत्यतआह अन्यथेति सत्यन्ताभावइत्यर्थः इयम् अपादानसंज्ञा अपवादइतिअपायेयत्कारकन्तद्रूपक्रियाजनकमित्य र्थापत्त्याविशेषविहितत्वेनेतिशेषः ननुकर्तृसंज्ञातर्हि निरवकाशास्यादतआह कर्तृसंज्ञात्विति कर्मणीति प्रयागात्काशीङ्गच्छतीतियत्रप्रयोगस्तत्रका। श्यामतिव्याप्तिरित्यर्थः तदुपात्तेति धावनाश्रयत्वेपिपतधात्वर्थानाश्रयत्वस्यतत्रसत्त्वादितिभावः तदनाश्रयत्वादितीति एकस्यमेषस्यापादानत्वेनविव क्षितस्यकर्तृत्वाभिप्रेतनिष्ठगत्यनाश्रयत्वस्यसत्त्वादित्यर्थः गतौतत्वंविशेषणन्देयमित्यत्रतात्पर्यम् नन्वेवमपि निष्ठतभेदस्यैवापसरणस्यसधातुनाप्र।

**अन्यथाकर्तृसंज्ञायाइयमपवादस्यात्कर्तृसंज्ञानुपपत्त्यादियोगेचरितार्था कर्मणिग्रामेऽतिव्याप्तिवारणायविशेष्यम् अवधित्वं नविरुध्यतइति तदुपात्तक्रियानाश्रयत्वादितिभावः नविरुध्यतइति तदनाश्रयत्वादितिभावः अतदावेशादिति तद्धातूपात्त ॥ १ ॥**

तिपादनात्तद्धातूपात्तगत्यनाविष्टत्वन्नसम्भवति नवैतिङन्तान्येकशेषारम्भंप्रयोजयन्तिक्रियायाएकत्वादितिभाष्यकारोक्तेः द्विवचनन्त्वाश्रयगतभेदारो पेणभवति एवञ्चप्रकृतेकथमपादानसंज्ञेतिचेन्न आत्मानमात्मनाविन्दतीत्यादावारोपितभेदेनकर्मत्वकर्तृत्ववत्परस्परशब्दोपात्तयोरपादानत्वङ्कर्तृत्वञ्चमेष शब्दोपात्तयोरितिशब्दभेदात्क्रियायाअपिभेदात् अतएवचैत्रमैत्रावन्योन्यमाश्लिष्यतइत्यत्रतयोः कर्मत्वस्यसिद्धिरन्यथापरत्वात्कर्तृसंज्ञैवस्यात् श ब्दालिङ्गितस्यैवहिसर्वत्रार्थस्यभानम् नसोस्तिप्रत्ययोलोकेयःशब्दानुगमादृतइतिहर्युक्तेः उक्तञ्चेत्यादिनाप्रतिपादितहर्युक्तेरप्यत्रैवतात्पर्यम् अतदावेशादि तिपाठेविभागस्यतच्छब्देनपरामर्शेऽसङ्गतिरतआह तद्धातूपात्तेति प्रकृतधातूपात्तेत्यर्थः गतिशब्दः स्वनिष्ठविभागानुकूलकर्तृनिष्ठक्रियायावोधकः क्वचि त्तुध्रुवमेवतदावेशादितिपाठस्तदातच्छब्देनयदिप्रकृतधातूपात्तगतिरेवपरामृश्यतेतदाकर्तरितस्यसत्त्वन्नध्रुवत्वस्यसम्यादकङ्कर्तुर्ध्रुवत्वस्यानिष्टत्वात्

यदि विभागस्तत्त्वार्थस्तदा तस्योभयवृत्तित्वादतिप्रसङ्गो न वारित इत्यत आह तन्मात्रेति तत्पदार्थमाह विभागमात्रेति मात्रपदेन गतेर्निरासः अचलस्य ग्रामा
देः क्रियानाविष्टत्वन्तु स्पष्टमेव अश्वात्पतितेत्यत्राश्वेयद्यपि क्रियाश्रयत्वन्तथापि पत धात्पात्तगत्याश्रयत्वन्नास्तीति ध्रुवत्वमक्षतमिति भावः अत्रेदमवधेयम् ॥
एवं व्याख्याने भाष्यसम्मतध्रुवपदार्थस्त्यक्त एव तथाहि तत्रत्रस्तादश्वात्पतितः धावतोऽश्वात्पतित इत्यादावश्वे ध्रुवत्वाभावमाशङ्क्य ध्रौव्यमविवक्षितमत्र यतः स
तोऽप्यविवक्षा भवति अलोमिका एडका अनुदरा कन्येति असतश्च विवक्षा भवति समुद्रः कुण्डिका विन्ध्यो वर्द्धितकमिति असतश्चेत्यादि निदर्शनार्थमुक्तन्त्वस्य
प्रकृते उपयोगः सतोऽप्यविवक्षेत्येव तु प्रकृतोपयोगि तत्र कैयटोक्तस्याध्रुवत्वस्याविवक्षा तदा भाष्यासङ्गतिः तेन हि त्रस्तादश्वात्पतित इत्यत्राव्याप्त्युपपादनावसरे
अचलत्वं ध्रुवमेकरूपञ्च परिस्पन्दे ध्रुवतानास्तीत्युक्तम् अनेकार्थत्वाद्धातूनाम् सपूर्वकपरिस्पन्देऽत्र सिर्वर्तत इति नाश्वस्य ध्रुवत्वमनवाऽध्रौव्यस्याविवक्षितत्व
दित्यादिना समाधानावसरे ध्रौव्यमपायविषयमाश्रीयते अपाययदनाविष्टन्तदपाये ध्रुवमुच्यते देवदत्तकर्तृकेपातेऽत्र त्रस्तस्याप्यश्वस्यापायावेशाभावाद्ध्रुवत्वम्

॥ गत्यनावेशादित्यर्थः तदावेशादिति पाठे तन्मात्रावेशादित्यर्थः ॥ ॐ ॥

एतत्कैयटप्रदर्शितरीत्या मूलेऽप्युक्तम् तत्र पत धात्वर्थव्यापाराश्रयत्वस्यात्रस्तेऽश्वे सत्त्वाद्ध्रुवत्वमिति यदि दूषितदाऽध्रौव्यमश्वेनास्त्येवेति सतोऽप्यविवक्षेत्यस्यासङ्ग
तिः स्पष्टैव किञ्च सिद्धान्तेऽपि त्वदुक्तन्ध्रुवत्वमेव वक्तव्यन्न चनोक्तमिति भाष्ये न्यूनतापत्तिः न स्यात्प्रकृतसूत्रे ध्रुवपदार्थोऽवधिभावोपगमाश्रयत्वे सति तदन्यस्यावधि
त्वोपयोगिव्यापारस्यानाश्रय इति अपायः विभागजन्यसंयोगानुकूलोऽवधिसाकाङ्क्षो गति विशेष एव अत एव गतिर्विनात्ववधिना नापाय इति कथ्यत इति ह
रिणाप्युक्तम् अवधिना विना गतिर्नापाय इति योजना अव ध्यन्वययोग्यविभागानुकूलत्वं विना गतिर्नापाय इति तदर्थः एवञ्चात्रास्यावधित्वोपयोगित्वाभिप्रा
येणात्र स्तादश्वात्पतित इत्यत्राव्याप्तिशङ्का सदपि त्रासस्योपयोगित्वन्न विवक्षितम् यतः प्रवीणस्त्वत्तादपि न पतत्यतोऽप्रावीण्यमेवावधित्वोपयोगिव्यापारपदेन वि
वक्षितम् हरिकारिकायामतदावेशादित्यस्य तदावेशाविवक्षणादित्यर्थः अपादानत्वशक्तिमानवध्यवधिमद्भावरूपसम्बन्धश्च पञ्चम्यर्थः इयञ्च शक्तिः प्रकृत
धात्वर्थविभागाश्रयत्वसमानाधिकरणा अतो यत्रापादानस्य सत्ता तत्र विभागोऽपि धात्वर्थः अन्यथायत्र वृक्षमजहत्पिपर्णं भूमिं स्पृशति तत्र वृक्षस्य पर्णस्यत

अमसवाह वस्तुतइति ननु वृक्षात्पर्णं पततीत्यत्राधोदेशसंयोगानुकूलविभागो धात्वर्थस्तत्र विशेषणीभूतसंयोगस्य वृक्षाद्वृत्तित्वादसम्भवइत्यत आह सोचे ति एवञ्च विभागानुकूलस्तत्समानाधिकरणो व्यापारो धात्वर्थः नन्वेवं विभागरूपफलाश्रयत्वाद्वृक्षस्य कर्मसंज्ञाप्राप्तिरित्यत आह कालिकेति नतदाश्रयस्य कर्मत्व मिति एवञ्चानुयोगित्वावच्छिन्नविभागानुकूलो व्यापारो धात्वर्थ इति भावः वस्तुतस्तु कर्मत्वस्य प्राप्तिरेव नास्तीत्याशयेनाह विभागजन्यसंयोगेति ए वञ्च पञ्चम्यर्थस्य विभागेन्वयः फलत्वञ्च संयोगस्य न तु विभागस्येति न कर्मत्वापत्तिरिति भावः ग्रामादायातीत्यादौ तु विभागजन्योत्तरदेशसंयोगानुकूलो व्यापारो धात्वर्थः वृक्षान्न्यजतीत्यत्र तु विभागानुकूलस्तदधिकरणो व्यापारो धात्वर्थः प्रतियोगिताफलतावच्छेदकसम्बन्धः ननु निवृत्तेर्यत्न विशेषतया। तन्मात्रे लक्षणायामपि नापायलाभ इत्यत आह विश्लेषइति वौद्धो विभाग इत्यर्थः तदुक्तम्भाष्ये अयंयोगः शक्योऽवक्तुम् कथं वृकेभ्यो बिभेति चौरेभ्य।

विशेषणमिति वस्तुतोऽवध्यवधिमद्भावरूपविभक्त्यर्थरूपसंबंधेनावधिक्रिययोरन्वय इत्यन्यत्र निरूपितम् साच क्रिया विभागरूपा कालिकसंबंधेन फलाश्रयेति प्रसंगवारणाय फलतावच्छेदकसंबंधस्य कर्मलक्षणे निवेशान्न तदाश्रयस्य कर्मत्वम् विभागजन्यसंयोगस्य धात्वर्थत्वादित्यन्यत्र विस्तरः निवृत्तीति विश्लेषेत्यर्थः इष्टापत्तिरिति शेषत्वविवक्षया कस्येति षष्ठीत्यन्ये सम्बन्धिनीति।

त्रायतइति इहतावद् वृकेभ्यो बिभेति य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति यदि मां वृकाः पश्यन्ति ध्रुवो मे मृत्युरिति बुध्या सम्प्राप्य निवर्त्तते तत्र ध्रुवमपायेऽपादानमित्येव सिद्धम् चौरेभ्यस्त्रायत इति य एष मनुष्यः प्रेक्षापूर्वकारी सुहृद्भवति स पश्यति यदीमं चोराः पश्यन्ति ध्रुवमस्य वधबन्धः एम॰ नादि परिक्लेशा इति स बुध्या सम्प्राप्य निवर्त्तयति तत्र ध्रुवमपायेऽपादानमित्येव सिद्धमिति एवञ्चेदृशे विषये विभेत्यादयो भयपूर्वकनिवृत्तिरूपार्थेलाक्ष णिका इत्यर्थादुक्तम्भवति कस्य संयुग इत्येव मन्वये भयहेतु विषयकत्वं जिज्ञासायाः स्वरूपतया न लभ्यत इति संयुगे कस्य बिभ्यतीत्येवमेवान्वयः षष्ठी तु क्रि याजनकत्वेनाविवक्षायां सम्बन्धित्वेन विवक्षायाञ्चेत्याशयेनाह शेषत्वेइति ॥ ❀ ॥ ९

अन्यइत्युपादानमरुचिबोधनाय तद्बीजन्तुभीत्रार्थानामितिसूत्रस्यवृद्धिकृतातायमाश्रित्यभाष्यकृताप्रत्याख्यानङ्क्तमितियत्रतस्यविवक्षातत्रपञ्चमीभवति पञ्चमीयत्रतुनद्दश्यतेतत्रबोद्धविश्लेषाविवक्षयाषष्ठीयुक्तैवेति तज्जन्येति अध्ययनजन्येत्यर्थः कारकाधिकारेऽस्यसूत्रस्यपाठेनजन्यजनकभावसंबन्धेनान्वय उचितएवेत्याशयःमूलन्तुप्राचामनुरोधेन वस्तुतस्तुपराजेरितिसूत्रस्यायएषमनुष्यःप्रेक्षापूर्वकारीभवतिसोऽध्ययनस्यदुःखत्वदुर्धरत्वबुद्ध्याततोनिवर्ततइ। तिप्रत्याख्यानैकवाक्यतयायोऽध्ययनार्थमप्रवृत्तस्तत्राध्ययनप्रयोगइष्टएवेतिपरापूर्वकजीधातोरनिष्टसाधनत्वप्रकारकज्ञानमर्थःअध्ययनपदस्याध्ययनज्ञानेल क्षणाएवञ्चाध्ययनज्ञानजन्यमध्ययनविशेष्यकमनिष्टसाधनत्वप्रकारकंज्ञानमितिफलितमततस्मान्निवर्त्ततइति जनिकर्त्तुरितिप्रयोगेउपधालोपप्रस ङ्गस्यप्रकारान्तरेणापिवारणंसम्भवतीत्याशयेनाह उपधालोपप्रसङ्गस्त्विति हलःश्नःशानजितिसूत्रेऽनुकार्यस्वरूपभङ्गेपिशास्त्रीयङ्कार्यङ्कृतमेवेत्याशयेना

तज्जन्येत्यर्थः अर्थासंगतिमिति नहिधातुंप्रतिकर्तृत्वम् किन्तुतद्वाच्यक्रियांप्रत्येवेत्यर्थः समासानुपपत्तिस्तु जकाभ्यामि ति निषेधात् उपधालोपप्रसंगस्तुगमेरिडित्यादाविवजनिघसिभ्यामित्यादाविवचानुकार्य्यस्वरूपभंगभियानकृतइत्यन्येसौ त्रत्वादितिपरे भाष्यकैयटेति इदमेवयुक्तम् प्रकृतिशब्दस्यतन्त्रैवप्रसिद्धेः प्रत्याख्यानपरभाष्यसंमतत्वाच्च किञ्च॥ ६ ॥

इसौत्रत्वादितीति मूलेभाष्यकैयटमतमिति तत्रभाष्येऽयमपियोगःशक्योऽवक्तुम् कथङ्गोमयाद्वृश्चिकोजायतेगोलोमाविलोमभ्योदूर्वाजायन्तेअपक्रामन्तिना सेभ्यइत्युक्तम् तत्रापक्रामन्तीतिप्रतीतिसुपादायलोकप्रसिद्ध्याश्रयेणैतदुच्यते लोकेहियद्यस्माज्जायतेततस्मान्निर्गच्छतीतिकैयटेनव्याख्यानम् यदिप्रकृति शब्दःकारणमात्रपरःस्यात्तदादण्डादिनिमित्तकारणवाचकादपिसूत्रसत्त्वेपञ्चमीस्यात्प्रत्याख्यानपक्षेतु

ततःकार्यस्यनिर्गमाभावात्प्रत्याख्यानविरोधःस्पष्टएवेतिसूत्रेप्रकृतिशब्दउपादानकारणमात्रपरइतिलभ्यते अतएवाहइदमेवेति इदमे वभाष्यकैयटमतमेव तत्रैव उपादानकारणएव अतएवमूलेतस्माद्ब्राह्मणइत्युदाहरणंवेदांतसिद्धान्तानुसार्येवोपात्तम् अतएवयतोवाइमानिभूतानिजायन्तइति

श्रुतौयतइतिपञ्चमीदृश्यतेइतिकारमतेतुवाक्यार्थानुपपत्तिरेव

यदविवक्षेवादिना॥

इतिवदिति व्यतिरेकविषयेदृष्टान्तोयम् ननुयदिप्रकृतिशब्दउपादानकारणमात्रपरस्तर्हि पुत्रात्प्रमोदइत्याद्युदाहरणानाङ्गगतिरितिचेत् पुत्रउपादानत्वारो पेणेतिगृहाणकारकाधिकारेऽस्यपाठकरणेनयथानसूत्रजन्यशाब्दबोधानुपपत्तिस्तथैवार्थकल्पनाउचितेतिभावः व्याख्यानादिति प्राचांव्याख्यानादित्यर्थः॥ ननुयदिकर्त्तरित्विपितदापूर्वसूत्रादेकदेशस्यकर्तृपदस्यानुवृत्तिर्नस्वीकर्त्तव्येतिलाघवमतआह जनिसाहचर्यादिति भावविहितप्रत्ययान्तजनिशब्दस्योपादा नम्पूर्वसूत्रेऽस्तीतितत्तुल्यत्वादित्यर्थः प्रथमप्रकाशइति हिमवतोगङ्गाप्रभवतीतिभाष्योदाहरणात् सूत्रेप्रशब्दोपादानाच्चहिमवदपादानकोगङ्गाकर्त्तृकः प्रथमप्रकाशइतिबोधः भाष्यरीत्यातुहिमवतोनिःसरमाणागङ्गाप्रकाशतइतिबोधः ल्यबन्तस्यगम्यमानार्थत्वादप्रयोगइत्युक्तानदयुक्तंउच्चारितस्यैव शब्दस्यप्रत्यायकताया भाष्यकारसम्मतत्वात् अतएवपदजन्यपदार्थोपस्थितिः शाब्दबोधम्प्रतिहेतुरितिनैयायिकानांव्यवहारोऽतआह तदन्तेति ल्य

इतिमतेकारकइत्यधिकृतस्यकारणसामान्यवाचिनोनिर्द्धारणसप्तम्यन्तस्यान्वयोऽसम्भवीनहिकारणानांमध्येउपादानका रणमितिवत्कारणानांमध्येकारणमितिसम्भवति भावेक्तिविति व्याख्यानाज्जनिसाहचर्याच्चेतिभावः प्रभवतीति प्रभवनमत्रप्रथमप्र काशः सूत्रेभवनमप्यैतदेव अप्रयोगइति तदन्तशब्दाज्ञानेपितदर्थज्ञानेइत्यर्थः॥ ९९॥ ल्यबन्तेत्यर्थः तदर्थज्ञानस्योपायमाह यथेति तथाप्र

ह्यतेपीति प्रासादात्प्रेक्षत इतिसमुदायस्यप्रासादकर्मकपूर्वकालावच्छिन्नारोहणकर्तृकर्तृकत्तदुत्तरकालिकम्प्रेक्षणमित्यर्थेशक्तिःएतच्छास्त्रमेवत त्रशक्तिग्राहकम् यत्रतुल्यबन्तस्यसाक्षात्प्रयोगस्तत्रतुनपञ्चमीलोपग्रहणात् एतत्पञ्चम्यर्थोल्यबन्तार्थक्रियायाःकर्म अधिकरणंवा आसनात्प्रेक्षतइ त्येतस्मादासनाधिकरणकपूर्वकालावच्छिन्नोपवेशनकर्तृकर्तृकत्तदुत्तरकालिकंवर्त्तमानम्प्रेक्षणमितिबोधः यत्रयत्रानेनपञ्चमीतत्रसर्वत्रफलेभ्यो यातीत्यत्रेवबोधप्रक्रियेतिसूचयितुमाह एवमिति तस्माद्वाक्यात्फलकर्मकाहरणफलकंयानमितिबोधः।तादृशार्थेफलेभ्योयातीत्यस्यशक्तिः। निर्मीयमाणाध्ववाचिनः शब्दस्यपञ्चम्यन्तेनार्थद्वारायोयोगस्तस्यस्वरूपमाह तदर्थेतिपरिच्छेद्यपरिच्छेदकभावएवसम्बन्धइतिभावः॥ ९॥

यथेतरशब्दस्य नीचार्थकस्य योगे पञ्चमीविभक्तेत्यनेन न सिद्धिस्तथान्यशब्दयोगेऽपि तेन सूत्रेण सिद्धौ प्रकृतसूत्रेऽन्यशब्दग्रहणमपि न कार्यमिति तु नेत्याशयेना
ह अन्यार्थयोगे त्विति अनभिधानात् अनुक्तेरित्यर्थः यस्मान्निर्द्धार्यते यश्च निर्द्धार्यते यश्च निर्द्धारणहेतुरित्येतत्त्रितयसन्निधाने एव निर्द्धारणस्य प्रतीत्या तत्रैव
तेन सूत्रेण पञ्चमी भवति एतेन यत्र नीचार्थकस्येतरशब्दस्य प्रयोगस्तत्रापि त्रितयप्रयोगो भवतीति ध्वनितम् चैत्रादितरो मैत्रो मौढ्येनेति यथा ननु
यथा नीचार्थकशब्दप्रयोगे निर्द्धारणस्योक्तिस्तथा भेदविशिष्टवाचकान्यशब्दस्य योगेऽपि कुतो न निर्धारणं भेदस्यैव निर्द्धारकत्वसंभवादत आह परस्परेति एते
न भेदस्य साधारणधर्मत्वं व्यञ्जितम् तद्वत् चैत्रः शूरः इतरः कातर इतिवत् अपिशब्देनान्यार्थकपरापरशब्दप्रयोगेऽपि बोध्यमिति ——— बोधितम् आरभ्येति।

यथा प्रविश पिण्डीमित्यादौ विग्यणडिति सूत्रभाष्योक्तरीत्या वाक्यैकदेशप्रयोगस्तस्यैव च पदस्य इत्यासंपूर्णवाक्यार्थबोधकता त
था प्रकृतेऽपीति बोध्यम् एवं फलेभ्यो यातीत्यादावपि अर्थद्वारा युक्तादिति तदर्थपरिच्छेद्यादित्यर्थः सिद्धत्वादिति अन्यार्थयोगे तु न तेन
न सिद्धिः निर्द्धारणप्रयोजकीभूतधर्मानभिधानात् परस्परप्रतियोगिकभेदस्य परस्परवृत्तित्वेन निर्द्धारकत्वात् तुल्यत्वादिति त
द्दन्यः कातर इत्यस्यापि वक्तुं शक्यत्वादिति भावः कैयट इति मेरुपृष्ठादारभ्येति पाठ उक्त भाष्यप्रयोगोऽपि बोध्यः आरभ्येति अवधि।
मादायेत्यर्थकं तत् आदिः प्रकारार्थः॥ मेरुपृष्ठादारभ्य ध्रुवपर्यन्तं ग्रहनक्षत्रतारागणचित्रितोऽन्तरिक्षलोक इति तत्र प्रयोगः कैयटोक्तेरनार्षत्वादि
व मुक्तिः ननु प्रभृतीत्यस्य ताद्दशव्याख्यानेऽपि कस्य शब्दस्य कोऽर्थ इति स्पष्टतया न प्रतीयत इत्यत आह अवधिमिति तत्प्रभृतिपदम् एवञ्च प्रभृतिपदस्यारभ्ये
त्यर्थकत्वे आरभ्येत्यस्य प्रभृत्यर्थकत्वञ्चानुचितमिति भावः ननु प्रभृत्यर्थकशब्दयोगे चेत्पञ्चमी तदा यत्र आद्यर्थकस्य प्रकारार्थकस्य वा तस्य प्रयोगस्तत्रापि
पञ्चमी स्यादत आह आदीति एवञ्च यत्रावधिमादायेत्यर्थकस्य प्रभृतिशब्दस्य प्रयोगस्तत्राव धाव भेदेन पञ्चम्यन्तार्थस्यान्वयः पञ्चमी तु साधुत्वार्था न चाव
धिमादायेत्यत्रावधेरादानकर्मत्वेन द्वितीयैवाचकादपि द्वितीयायुक्तैवेति वाच्यम् अपादाने पञ्चमीति सूत्रे यतश्चाध्वकालनिर्माणमिति वार्तिकप्रत्याख्यानाय व

इमन्त्रप्रयोगाभ्यसन्त्रप्रयुज्यन्ते॥

कार्त्तिक्याः प्रभृत्याग्रहायणी मास इति भाष्येण प्रभृतिशब्दाभावेपि तदर्थसत्तामात्रेण पञ्चमी भवतीति वचनस्य बोधनात् अन्यथा तादृशस्थले तत्पदाभावे पञ्चम्यर्थवचनारम्भस्यावश्यकत्वेन प्रत्याख्यानासङ्गतिः स्यादेव यत्र तु न तदर्थस्य सत्ता तत्र तु न पञ्चमीत्याशयेनादीत्याद्युक्तमिति भावः प्रकारः सादृश्यम् आर भ्येत्यस्य गृहीत्वेति यत्रार्थस्तत्र तु ग्रहणकर्मवाचकाद्द्वितीयैव भवति आङ्पूर्वकाद्रमधातोः सादृशो ग्रहणं प्रतीयत इति क्रियायां योगसत्वात् यत्र तु प्रभृति शब्दस्यैव प्रयोगस्तत्र तु न द्वितीया क्रियायोगाभावात्‌॥ अन्यत्र शेखरादौ कुत्र विशेषणांश इत्यपेक्षायामाह तेन विनेति तद्राहित्य तत्साहित्यस्य विशेष णांशत्वमित्यर्थः॥ ॥ प्राचामुक्तिं खण्डयति यत्त्विति आदिना प्रतिदानपरिग्रहः प्रद्युम्नः कृष्णात्प्रति अत्र प्रतिशब्दः प्रतिनिध्यर्थकः तत्र प्रतिनिपूर्वक

प्रभृतिशब्दयोगे तु न पञ्चमी मानाभावादित्यस्य न विस्तरः विशेषणांशस्तु नेति तेन विनेति मर्यादां तेन सहेत्यमिविधिरिति दृष्टोक्ता विति भावः अस्मादेव निर्देशादिति यत्वनेन सूत्रेणैवेति तन्न एतद्घटकीभूतप्रत्योःप्रतिनिध्याद्यर्थकत्वाभावेन कर्मप्रवचनी यत्वाभावात् उपादीयत इति अस्ययइत्यादिः दत्तस्य तत्तुल्यमूल्यादेः प्रतिनिर्यातनं पराहृत्यादानम् तृतीयेति हेतुतृतीयेत्यर्थः॥ हरदत्तग्रन्थे इति भाष्ये तु न दृश्यते इह अगुणेत्त्वि यांचेत्यत्र सन्निहितैवेति उभयोः समुच्चयस्तु व्याख्यानादिति बोध्यम्॥ ६ ॥

धातोः कर्मणि किप्रत्ययः प्रतिदानशब्दे च भावे ल्युट् एवञ्च यत्सम्बधिनी एतेन न तद्युक्तात्पञ्चमीति सूत्रार्थः उपादीयत इति साकाङ्क्षमत आह यद् ति यद्दत्तं तस्यैव प्रतिदानं स्वाधितत्तस्य विनष्टत्वादत आह तत्तुल्येति मूल्यादेरित्यादिना तत्सदृशवस्त्वन्तरपरिग्रहः कर्तृकरणयोरिति सूत्रविहिततृती यापवादत्वं न सम्भवतीत्याशयेनाह हेतुतृतीयेति हरदत्तइत्यनेन सूचितामरुचिम्प्रकटयति भाष्ये त्विति इहेत्यस्य स्त्रियामित्येवार्थ इति भ्रमवारणायाह अगुण इत्यादि॥ एवञ्च तादृशवार्तिकनिर्देशात्सूत्रेपि दृशेषणद्वयमाधिकमिति कल्पनीयमिति भावः ननु सन्निहितत्वाद्द्वितीयायाएव समुच्चयः स्यादत आह उभयोरिति व्याख्यानादिति अन्यतरस्याङ्ग्रहणसामर्थ्यात्पञ्चमी भविष्यतीति भाष्योक्तिरूपादित्यर्थः॥ ॥

अधिकरणेविभक्तिचतुष्टयस्यवक्ष्यमाणत्वादाह प्रातिपदिकार्थइति विशेषणत्वमिति अभेदेनेतिशेषः एतच्चसत्वन्तद्वाचकत्वंयत्रास्तितत्रसत्व
वचनत्वव्यवहारः उदाहरणेइति ग्रामस्यदूरन्दूराद्दूरेणवेत्यत्रदूरादीनामस्यादिक्रियान्वयित्वेनासत्ववचनत्वमस्तीतिभावः नन्वेवंसतिसप्तम्य
धिकरणेचेतिसूत्रेतस्यानुवृत्तावपिदूरादावसथादित्यत्रदूरशब्दस्यदेशविशेषप्रतिपादकतयासत्ववचनत्वात्पञ्चमीनस्यादतआह सप्तम्यधीति
अनुवृत्तेतु अनुवृत्तेदूरान्तिकार्थेभ्यइत्यस्मिन् अस्य असत्ववचनेत्यस्यव्याख्यानादिति आकरोक्तात्वादृशोदाहरणप्रदर्शनमूलकव्याख्यानादि
त्यर्थः क्रियायाद्रव्यत्वाभावेपिकथंतद्रूपस्योपपत्तिरत आह एवञ्चेति क्रियायाअद्रव्यत्वेच क्रियायांपदभेदेन विशेषणमत्यत्वावच्छिन्नतद्वाच

सप्तम्यपीति प्रातिपदिकार्थमात्रेइतिशेषः तद्विशेषकत्वमिति सत्ववचनप्रातिपदिकार्थविशेषणत्वमित्यर्थः दूरान्तिकार्थेभ्यइ
त्यस्योदाहरणेक्रियाविशेषणत्वेनासत्ववाचिनावोध्या सप्तम्यधिकरणेचेत्यत्रानुवृत्तेतुनास्यसंबंधोव्याख्यानादितिवोध्यम् क्रि
यानद्रव्यमिति एवंचतत्समानाधिकरणविशेषणत्वादत्रस्तोकशब्दस्याद्रव्यवाचित्वमितिभावः तमनूद्येति प्राचांग्रंथमनूद्येत्य
र्थः तदनुपपत्तिः असत्वानुपपत्तिः कृदभिहितभाववदिति वैधर्म्येदृष्टांतः यद्वा पक्त्वापक्तुमित्यादिकृदभिहितभावेत्यर्थः ॥ ९ ॥

कस्यस्तोकादिशब्दस्यासत्ववचनत्वमस्तीतिभावः तमनूद्येत्यस्यव्याख्यानत्वविशिष्टमनूद्येत्यर्थइतिभ्रमवारणायाह प्राचामिति असत्वानुपपत्ति
रिति विशेष्यन्द्रव्यमितिलक्षणस्यकरणादितिभावः ननुकृदभिहितोभावः पाकइत्यादावस्तितत्रलिङ्गसङ्ख्यायोगित्वमेवास्ति अतस्तत्रकथ
मसत्ववचनत्वमितिदृष्टान्तासंगतिरतआह वैधर्म्येदृष्टान्तइति एवंचपाकइत्यत्रभावोघञ्प्रतिपाद्योयथाद्रव्यवत्प्रकाशतेनतथाप्रकृतेनेत्यर्थः
कार्यः साधर्म्येपिदृष्टान्तत्वस्यसम्भवेवैधर्म्यपर्यन्तस्यानुचितत्वमित्याशयेनाह यद्वेति अव्ययकृतोभावइतिसिद्धान्तात्यक्त्वादिशब्दप्रतिपाद्य
क्रियायायथाऽद्रव्यत्वन्तथाधातूपस्थाप्यफलस्यापितथात्वमस्तीतिदृष्टान्तत्वंसाधर्म्येद्रष्टव्यम् ॥ ९ ॥ ९ ॥

इत्यादावित्यादिना उक्तामिकाआस्यन्त इत्यस्य परिग्रहः प्रसिद्धस्थलं विहायाप्रसिद्धस्य प्रदर्शनमनुचितमित्याशयेनाह इदमुपेति सङ्ख्यामिति द्वित्वादिरूपामि
त्यादिः एकत्वन्त्वनारोपितमस्त्येव एका क्रियेति भूवादिसूत्रस्थभाष्यात् तत्रैव क्रियायामेव तदन्वयस्येति प्रत्ययार्थद्वित्वादीनामन्वयस्येत्यर्थः ङ्याप्सूत्र इति तत्र हि
प्रातिपदिकाधिकारस्य प्रयोजनकथनावसरे धातोः स्वाद्युत्पत्तिशंकायामपवादैस्तव्यदादिभिर्बाधप्रतिपादनेन निवारणे कृते तिङन्तात् र्हि माभूवन्निति परे णो
क्ते एकत्वादिष्वर्थेषु स्वादयो विधीयन्ते नेचात्र तिङोक्ताः एकत्वादय इति कृत्वा उक्तार्थत्वान्न भविष्यन्ति टावादयस्तर्हि तिङन्तान्माभूवन्निति स्त्रियां टावादयो विधीयन्ते।
नच तिङन्तस्य स्त्रीत्वेन योगोऽस्तीति भाष्ये उक्तम् तत्र टावादयस्तर्हीति प्रतीकमुपादाय कैयटेनोक्तं यथा साधनाश्रयसङ्ख्याभिधायित्वं तिङन्तस्य तथा कृत लिङ्गाभिधायित्व
मपि स्यादिति भावः नच तिङन्तस्येति क्रियाप्रधानत्वादाख्यातस्य क्रियायाश्चासत्त्वभूतत्वात्सत्त्वधर्मेण लिङ्गेनायोगः नच द्रव्यधर्मलिङ्गग्रहणयोग्यत्वन्नियतत्वाच्छब्दश
क्तीनामिति भाव इति अत्र भाष्यकृता तिङन्तात् टावादिशङ्कायाः स्त्रीत्वेन योगाभावेन यथा वारणं न तथा तिङन्तात् स्वाद्युत्पत्तिरपि सङ्ख्यायोगाभावेन न वारिता किन्तु तिङोक्त

इत्यादाविति इदमुपलक्षणम् पचतीत्यादावपि कारकगतसंख्यां क्रियायामारोप्य तत्रैव तदन्वयस्य ङ्याप्सूत्रे भाष्ये उक्तत्वात् पचतीत्यादाविति प
श्य मृगो धावतीत्यादिशब्दार्थः॥ ((त्वादिति रीत्या वारितां तेन साधनाश्रयसंख्यासम्बन्धयोग्यता तिङन्तवाच्यक्रियायामस्तीति ध्वनितम् तदुक्तं हरिणा एकत्वेपि क्रि
याख्याते साधनाश्रयसङ्ख्यया भिद्यते न तु लिङ्गाख्यो भेदस्तत्र तदाश्रय इति भाष्यप्रदीपोद्द्योतेप्युक्तम् अत्रैतत्त्वरसात् साधनगतसंख्यायाः क्रियायामारोपेण तिङर्थसंख्या
याः प्रकृत्यर्थ एवान्वयः आरोपमूलतया च कर्तुरप्येकत्वप्रतीतिः शब्दशक्तिस्वभावाच्च स्वप्रकृतिकप्रत्ययवाच्यसाधनगतायाएव तस्यास्तत्रारोपः तेन भावेन द्विवचना
पत्तिः यदा तु तत्र प्रकारान्तरेण सङ्ख्यावगमस्तदाभावेपि बहुवचनं भवत्येव हंतशायिकाः शय्यन्त इति यथा अत्र हि उपमानबहुत्वाद्धात्वर्थे बहुत्वावगतिः।
नचैवं पचतः कल्पमित्यत्र द्विवचनापत्तिः संख्यायास्तिङोक्तत्वात् एकवचनन्तु साधुत्वार्थमिति न दोषः तदपि प्रथमायाएव नान्यासामनभिधानात् यदि सं।
ख्यायाः स्वप्रकृत्यर्थकर्त्रादावन्वयस्तदा स्त्रीत्वस्यापि तत्रैव स्यादिति वैषम्यं दुरुपपादम् एतच्च भाष्यकृता सङ्ख्याया अभावादिति नोक्तं किन्तूक्तार्थत्वादित्यभिहितं तत्तत:
कल्प्यत इति॥ एतेन प्रत्ययार्थसङ्ख्यायाः प्रत्ययार्थकर्त्रादावन्वयस्वीकारेप्यत्र॥ ॥ ॥

यानाम्प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तिविरोध इत्यपि निरस्तम् तिङन्तार्थक्रियायाः कर्मत्वान्वयस्योदाहरणमाह पश्य मृगो धावतीत्यादीति अ
त्र धावनक्रियायाः दर्शिक्रियाकर्मत्वमस्ति एतच्च प्राक् प्रतिपादितम्॥८६॥ तन्निरूपितेति लिङ्गनिरूपितेत्यर्थः वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते द्रव्यमित्यु
च्यते सोऽर्थो भेद्यत्वेन विवक्षित इत्यत्र भेद्यत्वेनेति यदुक्तं तद्विरोधसमाधानायैवमुक्तम् भेद्यत्वेनेत्यस्य विशेष्यत्वेनेत्यर्थात् एवकारेण लिङ्गनिरूपि
तविशेष्यताशून्यत्वमेवासत्त्वरूपत्वमित्युक्तम् क्रियाशब्दस्य व्यापारमात्रे प्रसिद्धेर्व्यापारानाधारकारकं कर्मकारकमपि तदनन्वयित्वं वक्तुमशक्यमस्य
मृगो धावतीत्यत्र कर्मत्वान्वयस्य स्वीकारादत आह धात्वर्थेति कारकपदमत्र कारकशक्तिपरम् तत्फलितार्थमाह करणेति नन्वेवमपि ज्योतिष्टोमेन स्वर्गका

लिङ्गस्येति तन्निरूपितविशेष्यतायामेव द्रव्यत्वमिति भावः क्रियानाधारेति धात्वर्थानाधारेत्यर्थः करणत्वादिभिरिति यावत्स्वातिरिक्त
पदान्तरवाच्यक्रियानिरूपितकरणत्वादिभिर्न युज्यत इत्यर्थः इयमेव लिंगकरणत्वादिभिरसंबंधरूपैव असत्त्वरूपतेत्येतद
पेक्ष्य स्त्रीलिंगनिर्देशः इति पञ्चमी प्रत्ययार्थस्य संबन्धस्य प्रकृत्यर्थम्॥ राजार्थम् प्राधान्यादिति संसर्गविशेष्योभयनिरूपित
त्वस्य प्रकारतायां स्वीकारादिति भावः तदर्थस्य प्रकृत्यर्थस्य विशेषणं॥ ९९ सोयजेतेत्यादौ आख्यातोपात्तभावनायां यज्धात्वर्थस्य यागस्य

करणत्वेनान्वयोपि दुष्ट इति दोष इत्यत आह स्वातिरिक्तेति अत्र स्वपदं करणत्वाश्रयबोधकपदपरम् पदान्तरेत्यनेन स्वस्यापि पदव्यवहार्यत्वं ध्वनित
म् एवं च लिङ्गं च क्रियानाक्षेपिका रकाणि च यत्तैः क्रिया न युज्यत इति यदियमेवासत्त्वरूपतेति कारिकार्थः एतत्कारिकायां यदियमेवेत्युक्तं तत्कथमिदं शब्दस्य युज
धात्वर्थस्यारोपितत्वविशिष्टस्य परामर्शेन तस्यासत्त्वरूपत्वेन नपुंसकत्वस्य प्राप्तेरत आह लिङ्गेत्यादि स्त्रीलिङ्गनिर्देश इति सर्वनाम्नामुद्देश्यविधेयान्यतर
लिङ्गत्वस्य सुप्रसिद्धत्वादिति तात्पर्यम् इति पञ्चमीविवरणम् राज्ञः पुरुष इत्यत्र षष्ठी शेष इति सूत्रेण षष्ठी राजन् शब्दादेव भवति न तु पुरुषशब्दादत्र प्रमा
णाकाङ्क्षायामाह मूले प्रत्ययार्थस्येत्यादि प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानमिति न्यायस्तिङन्ते व्यभिचरितोऽत आह संसर्गेत्यादि॥ ९

प्रत्ययार्थः स्वस्वामिभावरूपः संसर्गः विशेष्यः पुरुषः एतद्द्वयनिष्ठाया विषयतासंसर्गतारूपा विषयता विशेष्यतारूपा विषयता च एतद्द्वयनिरूपितत्वस्य राजपदार्थनिष्ठप्रकारतायां स्वीकारादिति भावः विशेषणतायाः सम्बन्धावच्छिन्नत्वनियमादाह षष्ठ्यर्थसम्बन्धेनेति यतो राजपदार्थनिष्ठप्रकारतायामुभयनिरूपितत्वमतः सम्बन्धनिष्ठविषयतापि प्रकारतानिरूपितेति गौणस्तत्र प्रकृत्यर्थम्प्रति प्राधान्यव्यवहारः भाष्यादीति समर्थसूत्रस्थभाष्यादीत्यर्थः षष्ठी शेष इति सूत्रे वा षष्ठी विशेषणत्वेन विवक्षिता देवनतु विशेष्यत्वेनाभिहितादिति प्रतिपादयति मूले प्रधानादिति प्रधानत्वेन विवक्षितवाचकात् पुरुषशब्दादित्यर्थः उक्तन्यायेति प्रकृतिप्रत्ययौ सहार्थम्ब्रूतस्तयोः प्रत्ययार्थः प्रधानमिति न्यायेनेत्यर्थः अयन्न्यायस्तिङन्ते व्यभिचरितोऽतो भावार्थमाह प्रकृत्यर्थस्यैवेति अयम्भावः यदा राजा स्वामित्वेन पुरुषस्तु स्वत्वत्वेन विवक्षितस्तदा राजसम्बन्धी पुरुष इति बोधो भवति यदि षष्ठी पुरुषशब्दे

षष्ठ्यर्थसम्बंधेनेति भावः यत्तु तदर्थशब्देन प्रत्ययार्थः संबंध इति तन्न तस्य संसर्गविधयैव भानस्य भाष्यादिसम्मतत्वात् उक्तन्यायेति प्रकृत्यर्थस्यैव प्रत्ययार्थं प्रति प्राधान्यापत्तेरित्यर्थः राजसंबंधी पुरुष इत्येवं बोधादिति भावः शेषत्वाभावमुपपादयति पुरुषशब्द इति ॥ ९ ॥

क्रियेत न तदा प्रकृत्यर्थस्य पुरुषशब्दार्थस्य प्रत्ययार्थनिरूपितप्रधान्यापत्तिरिति इदञ्च समाधानं षष्ठ्यर्थसम्बन्धस्य प्रकारतया भानमभ्युपेत्य यदि तु षष्ठ्यर्थस्य संसर्गतयैव भानम्भाष्यसम्मतमिति तथैव स्वीक्रियते न्त्र तदा च षष्ठी शेषे इति सूत्रभाष्ये राज्ञः पुरुष इत्यत्र राजा विशेषणम्पुरुषो विशेष्य इत्युक्तमन्यथा सम्बन्धं विशेष्यतया विशेषणतया वा ब्रूयादित्युच्यते न तदाप्याह मूले शेषत्वाभावाच्चेति पुरुषपदार्थस्य शेषत्वाभावादित्यर्थः प्रातिपदिकार्थमात्रवृत्तिरिति स्वार्थस्य प्राधान्यविवक्षायाम्प्रातिपदिकार्थमात्रवृत्तिः क्रियाविशेषणत्वविवक्षायाङ्कारकार्थकः एवञ्च प्रथमादिभिर्वाधान्न तस्मादनेन षष्ठी इति भावः नैवमिति उक्तद्वैविध्यरहितः षष्ठी भवत्येवेति राज्ञः पुरुषस्य धनमित्यादौ यथा विशेषणादिति प्रकृतशब्दे इत्यर्थः प्रकृतित्वेन विवक्षिते इति शेषः प्राधान्ये चरितार्थत्वादिति एवञ्च प्रधाने घट इत्यत्र चरितार्थायाः प्रथमाया राज्ञः पुरुष इत्यत्र राज्ञ इति भागे चरितार्थाया षष्ठ्या विशेषण

षष्ठीवाच्यः सम्बन्धः स्वस्वामिभावादिः सचस्वस्वामित्वसमूहरूपएव नतुस्वत्वमात्रम् स्वामित्वमात्रंवा तस्यैकव्यक्तिमात्रवृत्तितया सम्बन्धत्वायोगात् सम्ब
न्धोहिसम्बन्धिभ्याम्भिन्नः उभयसम्बन्धीभवति नचोक्तान्यतरस्यषष्ठीवाच्यत्वेपितत्राश्रयत्वनिरूपकत्वान्यतरसम्बन्धेनोभयसम्बन्धिवृत्तित्वमस्तीतिवाच्य
म् निरूपकतासम्बन्धस्यवृत्त्यनियामकतयोभयत्रसम्बन्धवत्त्वप्रतीत्यसम्भवात् उक्तसमूहस्यवाच्यत्वेतुतस्यसम्बन्ध्यभिन्नतयाराज्ञिस्वामित्वस्यसत्व
म्पुरुषेस्वत्वस्यसत्वमाश्रयतयैववर्त्ततइतिसम्बन्धिद्वयवृत्तित्वनिर्वाहः समूहस्यैववाच्यत्वेयस्मादधिकंयस्यचेश्वरवचनन्तत्रसप्तमीतिसूत्रभाष्यमपिसाध
कन्तत्रहिअधिब्रह्मदत्तेपञ्चालाइत्यत्रानेनसूत्रेणब्रह्मदत्तशब्दात्सप्तम्याम्पञ्चालशब्दात्कर्मप्रवचनीययुक्तेद्वितीयेतिद्वितीयाप्राप्नोति अधियोगस्यब्रह्म
दत्तनिष्ठसम्बन्धस्यसप्तम्योक्तत्वेपितद्योगस्यपञ्चालनिष्ठसम्बन्धस्यतयाऽसम्प्रत्ययादित्युक्तम् उपपदविभक्तेरितिन्यायेनसमाहितमितित्वन्यत्॥
अतएवस्वस्वामिभावोऽवयवावयविभावआधाराधेयभावः प्रतियोग्यनुयोगिभावोविशेष्यविशेषणभावादिः सम्बन्धइतिप्रामाणिकानांव्यवहारः सङ्गच्छते।
हरिकारिकयाप्येतत्स्फुटम् तेनहिद्विष्ठोप्यसौपरार्थत्वाद्गुणेषुव्यतिरिच्यते तत्राभिधीयमानश्चप्रधानेप्युपयुज्यतइत्युक्तम् अत्रद्विष्ठत्वकथनेनवृत्तिनिया
मकसम्बन्धेनसम्बन्धस्योभयवृत्तित्वमावश्यकमितिस्पष्टमेव असौसम्बन्धःपरंविशेषणत्वमर्थः प्रयोजनंयस्यतत्त्वाद्विशेषणतानियामकत्वाद्गुणेषुविशे।
षणतयाविवक्षितेषुराजप्रभृतिषुव्यतिरिच्यतेउद्भूततयाप्रतीयते भेदेसतिविशेषणतयायोविवक्षितस्तस्यसम्बन्धंविनाविशेषणत्वासम्भवेनसम्बन्धाका
ङ्क्षायाःसत्वात्तत्रैवोद्भूततयाप्रतीयते विशेष्येतुपदान्तरासमभिव्याहारेस्वप्रवृत्तिनिमित्तनिरूपितविशेष्यतयाप्रतीयमानस्यनबहिर्भूतसम्बन्धाकाङ्क्षेतिन।
सम्बन्धस्यविशेष्यतानियामकत्वव्यवहारइत्याह तत्राभिधीयमानेत्यादिना प्रधानेउपकारश्चपदान्तरसमभिव्याहारेसतितत्सम्बन्धावच्छिन्नविशेषणतानिरूपि
तविशेष्यतयाभासमानत्वरूपएव सम्बन्धस्यद्विष्ठस्वभावत्वादितिभावः एतेनराज्ञःपुरुषइत्यादौराज्ञइतिपदान्तरसमभिव्याहारेसत्येवपुरुषेस्वत्वम्प्रतीयतेनात्व
न्यथाराजइत्यादेस्तुपदान्तरसमभिव्याहारंविनाप्यध्याहृतसम्बन्धिसामान्यनिरूपितविशेषणत्वस्यप्रतीतिरितिराजनिताहृशसम्बन्धैकदेशःस्वामित्वमवगम्यमा
नमन्यथानुपपत्त्यापुरुषेस्वत्वमवगमयत्यतस्तस्यताहृशसम्बन्धाश्रयत्वम्बहिरङ्गमितिपुरुषात्प्रथमैवभवतीत्यवधेयम् ॥ ॥९

पुरुषादिपदाप्रयोगे किन्न दितिजिज्ञासा भवति सा पुरुष इत्युक्ते निवर्त्तत इति ॥ ❁ ॥ परसमूले षष्ठ्येवेत्युक्तं तत्र न्यासषष्ठीयदीदमपरा सूत्र्यते तदा।
द्वयमपीत्युचितं तन्निदम पीयतो व्याचष्टे इदमपीत्यादिना नापूर्ववचनमित्यत्र हेतुः स्पष्टतया नोपन्यस्त इति हेत्वाकाङ्क्षानुत्पत्तये आह शेषषष्ठी
ति ननु परसमूले सर्पिषो जानीते मातुः स्मरति एधोदकस्योपस्कुरुत इत्युदाहरणानि षष्ठी शेष इत्यस्यैवोक्तानि इदमनुपपन्नम् षष्ठी शेष इति
सूत्राव्यवधानेन ज्ञो विदर्थस्येत्यादि सप्तसूत्र्या अष्टाध्याय्यां पाठात् तत्र ज्ञाधात्वादीनां विशिष्य पाठात्तदुदाहरणत्वस्यैव युक्तत्वात् किं चाव्यवहित
सूत्राण्युपेक्ष्य व्यवहितपूर्वस्य षष्ठी हेतुप्रयोग इत्यादिसूत्रस्य धारणमप्यनुपपन्नम् षष्ठी शेष इति सूत्रस्य व्याख्यानेन तरं ज्ञो विदर्थस्येत्यादिसूत्रव्या

॥ इदमपि कर्मादीनां संबंधसामान्येनान्वयविवक्षणमपि नापूर्वमिति षष्ठी शेष इति सूत्रेण सिद्धत्वादिति भावः अष्टसूत्रीति
कृत्वोर्थे इति सूत्रं वृत्तिरीत्याधृतम् वस्तुतस्तत्र शेषग्रहणं नानुवर्त्तते मध्ये विच्छेदादित्यन्ये तेषां सप्तसूत्रीति बोध्यम् अनुवर्त्तत
इति अत एवाधीगर्थे इति सूत्रे शेष इति वर्त्तत इति भाष्ये उक्तम् ननु तद्बलात् लुगभावोस्तु समासाभावः कुत इत्यत आह ॥
तथा चेति प्रतिपदविधाना षष्ठी न समस्यत इति वार्त्तिकवलात् तथा कल्पनेति भावः ॥ १ ॥ व्याख्यानस्योचितत्वादित्याकाङ्क्षायामाह॥

मूले ज्ञो विदर्थस्येत्यादि इहेति सर्पिषो जानीते इत्याद्युदाहरणावसर इत्यर्थः यथाश्रुतमूलासंगतिपरिहारार्थमाह कृत्वोर्थे इति मूलासङ्गतिमे।
वाह वस्तुत इति तत्र कृत्वोर्थ इति सूत्रे मध्ये दिवस्तदर्थस्येत्यादिसूत्रेषु अन्ये भाष्यकृतः तेषामिति मत इति शेषः अत एव ज्ञो विदर्थस्येत्यादिसू
त्रेषु शेष इत्यस्यानुवृत्तिसत्वादेव तद्बलात् षष्ठी शेषसूत्रसिद्धषष्ठ्याः पुनर्विधानबलात् कुत इति यदि समासबाधस्यापि कल्पनात् तदा लक्षण।
द्वयबाधः स्यात् मन्मते त्वेकस्यैव बाध इति लाघवमिति भावः तथा चेतीति इदं च तथा च वार्त्तिकमित्यत्र यस्तथा च शब्दस्तस्य प्रतीकधारणम्।

करणकर्मकारकैर्व्यपदिष्टे अ
वार्तिकबलादिति कथनेन तस्य वार्तिकस्यापूर्वत्वमिति प्रतीयते एतच्च न युक्तमित्याशयेनाह वस्तुत इति मूले कारकैरिति करणकर्मकारकैर्व्यपदिष्टे अ अधीगर्थेत्यादि सू।
त्र्यपदिष्टद्वयत्र भूते क्तप्रत्ययः एतेन यदा शेषत्वेन विवक्षा तदा तादृशापदेशस्य निवृत्तिरिति ध्वनितम् अश्रूयमाणक्रिये बहुव्रीहिसमासोऽयम् अधीगर्थेत्यादि सू।
त्रमन्यपदार्थः प्रतिपदम् पदमुच्चार्य या विहिता सा समासस्य निवृत्त्यर्थमित्यर्थः करणे ल्युडिति समस्ते समस्ते चेति शेषः अत एव कृद्योगलक्षण
षष्ठ्यासमासस्येष्टत्वादेव न केवलं निषेधप्रकरणे एषां पाठः निष्फलमेव किन्तु गौरवमपीत्याह दिवस्तदर्थेति अत्रैषां पाठे तु अधीगर्थेति सूत्रात् कर्मणीत्य
स्य सम्बन्धस्तत्रेति भावः न च षष्ठीशेषे उभयप्राप्तौ कर्मणि दिवस्तदर्थस्य विभाषोपसर्गे द्वितीया ब्राह्मणे इत्यादि तत्त्वोर्थेत्यत्र पठित्वा तस्य चेत्या।

वस्तुतो निषेधवार्तिके नुवादे येमानि सूत्राणीति बोध्यम् स्मरणमिति करणे ल्युट् कृद्योगषष्ठ्येति अत एव समासनिषेधप्रकरणे
एतानि नोक्तानि तथा सति कर्माद्यर्थषष्ठ्यामपि समासनिषेधापत्तेः दिवस्तदर्थस्येत्यत्र कर्मणीत्यस्य कर्तव्यतापत्तेश्च ननु शेषत्वा
विवक्षायां कृद्योगषष्ठ्यामपि वैकल्पिकसमासाङ्गीकारे अधीगर्थेत्यादीनां वैयर्थ्यमेवेत्यत आह तत्र चेति करणल्युडन्तस्मरणादिशब्दैः।
कृद्योगषष्ठ्यासमासेऽन्तोभावकर्मवचन इत्यस्याप्राप्तिरिति भावः॥मातुः स्मृतमिति॥ दिपठनीयं तथा च दिव इति सूत्रे कर्मणीत्यस्यानुवृ

त्तिर्लाभो भविष्यतीति वाच्यम् एवमपि तदर्थपदेन षष्ठ्यर्थस्य लाभानापत्तेः यथास्थितपाठेऽपि विशेषं वक्तुं शङ्कते नन्विति वैकल्पिकेति स्वरूपकीर्तनं तु
तु एवञ्च अनेन विशेषप्रयोजनसूचनम् मूले तत्र चेति हरिस्मरणमित्यादौ कृद्योगषष्ठ्यासमासाङ्गीकारे च कृदुत्तरेति गतिकारकोपपदादित्यनेनेत्यादिः।
ननु नायं विशेषः कृद्योगषष्ठ्यासमासेऽपि कृदुत्तरपदप्रकृतिस्वरस्याधित्वात् अन्तोभावेत्यस्य प्रवृत्त्या अन्तोदात्तत्वमेव भविष्यतीति शङ्कामपाकरोति करणल्युडन्तेति
अप्राप्तिरिति कारकात्परत्वात् भावकर्मवचनमन्तोदात्तमिति तस्य सूत्रस्यार्थादिति शेषः ननु कर्मण एव शेषत्वविवक्षेति शेषषष्ठ्या समासेऽपि कृदुत्तरपद।
प्रकृतिस्वरस्य प्राप्त्या विशेषाभाव इति चेन्न स्वरविधायके कारकशब्दस्य कर्तृत्वादिशक्तिप्रकारकबोधजनकपरत्वात् शेषत्वविवक्षायां हर्यादिशब्दानां तथात्वात्

ननु मातुः स्मृतमित्यादावधीगर्थेत्यादिसूत्राणामप्रवृत्तिर्नसम्भवति स्मृधातोः सकर्मकतया भावेक्तप्रत्ययासम्भवेन कर्मणिक्तो वाच्यः तेन च कर्मणउ। क्तत्वादनभिहितत्वाभावादत आह आदिकर्मणीति आदिभूतव्यापारस्यातीतत्वेपि भूतार्थकस्य क्तस्य साधनायारब्धं यदादिकर्मणि क्तः कर्तरीति तेन कर्तरिक्त प्रत्यय इत्यर्थः एवञ्च कर्मणोऽनभिधानादस्यैवाधीगर्थेतिसूत्रस्य प्राप्तिरिति भावः नन्वादिक्रियाया अतीतत्वद्योतक प्रशब्दाभावात्कथन्तस्य प्राप्तिरत आह प्रशब्दमिति अनुदत्तादाविति अनुपूर्वाद्दाधातोरादिकर्मणि क्तः आदिना विदत्तादिसङ्ग्रहः एषु प्रशब्दाभावेपि अवदत्तं विदत्तञ्च प्रदत्तञ्चादिकर्मणि सुदत्तमनुदत्तञ्च निदत्तमिति चेष्यत इति भाष्यकारोक्तेरिति भावः प्रकारान्तरेणाप्यधीगर्थेतिसूत्रस्य प्राप्तिमाह कर्मण इति एतेन भाष्यप्रामाण्यादनुदत्ताद

आदिकर्मणि कर्त्तर्य्येव क्तः प्रशब्दं विनापि अनुदत्तादौ आदिकर्मबोधवदत्रापि प्रकरणादिना तद्बोधसम्भवः एतेनात्र कर्मणि क्ते कर्मण उक्तत्वादधीगर्थेत्यस्य विषय एव नाभावे तु क्तो दुर्लभः सकर्मकत्वात् गत्याद्यर्थत्वाभावात् कर्त्तरि स दुर्लभ इत्यपास्तम् कर्मणः शेषत्वेन विवक्षायामविवक्षितकर्मत्वेनाकर्मकत्वेन भावे क्तस्य सुलभत्वाच्च षष्ठी चेति चस्त्वर्थे एवं च तत्र समासाभावो विफलमिति भावः दुर्लभमिति अर्थशब्दस्य द्वितीयान्तत्वे तु कमर्थमित्युचितम् प्रथमान्तत्वेऽर्थशब्दस्य पुंस्त्वान्नपुंसकत्वं दुर्लभमिति भावः

वस्त्वादिकर्मणि क्तः प्रकृते तु क्तस्य तथात्वे मानाभाव इति परास्तम् उक्तरीत्या भावे क्तस्य सत्वेनादोषात् एवञ्च तत्र कर्मषष्ठी "कथं चिदिति ॥८ निषेधेच ननु किंशब्दस्य त्रिलिङ्गत्वेन किमः क्लीबत्वं दुर्लभमित्यसङ्गतमत स्तदाशयम्प्रकटयति अर्थशब्दस्येति अयम्भावः प्रकृतोदाहरणेऽर्थशब्दसमानाधिकरणः किंशब्दः एवञ्चार्थशब्दस्य द्वितीयान्तत्वम्प्रथमान्तत्वं वा वाच्यमुभयथाऽस्य प्रयोगस्यानुपपत्तिरिहास्तीति अर्थशब्दस्य द्वितीयान्तत्वे तत्समानाधिकरणः किंशब्दोपि द्वितीयान्त एव वाच्यः एवञ्च किमः क इति सूत्रेण कादेशे कमर्थमिति स्यात् अर्थशब्दस्य प्रथमान्तत्वे तस्य नपुंसकत्वानुपपत्त्या तत्समानाधिकरण किंशब्दस्यापि नपुंसकत्वानुपपत्तिः अर्थशब्दस्य द्वितीयान्तत्वमेव यदि तदाऽर्थमित्यस्योपपत्तावपि किमित्यस्योपपत्तिर्न संभवतीति ॥८

आद्यङ्क्लिष्टमिति सामान्येनपुंसकत्वमगतिकगतिकम् किन्त्वशब्दप्रयोगस्यस्वायत्तत्वादेवमप्रयोगोनयुक्तः कमर्थमित्यस्यवक्तुंशक्यत्वादितिभावः
अन्त्येसमासपक्षेलक्षणाभावइति अत्रसमासपदम्बहुव्रीहिसमासपरमुतचतुर्थीसमासपरम् आद्येलक्षणाभावइत्यस्यनिमित्तपर्यायप्रयोगइतिल
क्षणस्यप्रवृत्तियोग्यत्वाभावइत्यर्थः समासेपूर्वपदार्थस्यपृथगुपस्थित्यभावेनतत्रसङ्ख्यायाभानाभावादितिभावः नान्त्यः तस्यप्रकृतिविकृति
भावएवप्रवृत्तेरिष्टतयातत्प्रवृत्तिसम्पादकलक्षणाभावइत्यर्थः बहुव्रीहिसमासपक्षएवदूषणान्तरमाह अर्थासङ्गतिरिति हरौशब्दायमानेहरिस्तत्र
गतस्तन्दृष्ट्वाहरिर्हरौगतस्तदनन्तरंहरिरुदासीनः सम्पन्नइत्यत्रकस्यहरिशब्दस्यकोऽर्थइत्यत्रनानार्थगतनच्छब्दबुबोधयिषाभिप्रायेणायम्प्रयो।

आद्यंक्लिष्टम् अन्तेलक्षणाभावोऽर्थासंगतिश्च कोर्थः किमर्थमिति समासेसामान्येनपुंसकत्वाश्रयणंचेतिभावः तेनेति यत्तुसर्व
नामसूत्रशेषेभाष्यंभवतः सर्वनामत्वेतृतीयाप्रयोजनंसर्वनाम्नस्तृतीयाचेति तत्तुयथाश्रुतसूत्रमते अतएवसूत्रोपन्यासः नतुन
हलादिंसर्वनामविषयंकैयटादिविरोधात् हेतौविभक्त्यत्रोपन्यासस्यनिर्बीजत्वापत्तेश्चेतिबोध्यम् पंचम्यपीति अत्रसार्वविभक्तिकः
षष्ठ्यंतानसि रित्यन्ये चिन्त्यप्रयोजनमिति ॥ (( गः बहुव्रीहिसमासेतुअन्यपदार्थस्यप्राधान्येनविवक्षितार्थलाभासङ्गतिरितिभावः ननुस
मासपदन्नचतुर्थीसमासबहुव्रीह्यन्यतरपरम् किन्तुकर्मधारयपरमतआह कोऽर्थः किमर्थमितीति विग्रहवाक्यसमासयोः समानार्थकत्वस्यन्यायसिद्धतया
विग्रहेपुंस्त्वस्यसत्त्वमर्थपदार्थेसमासेतुयद्यप्युत्तरपदार्थस्यप्राधान्यन्तथापिलिङ्गविशेषविवक्षाराहित्यमित्ययङ्क्लीबइतिभावः चकारेणपूर्वपदार्थेपृथक्
सङ्ख्याप्रतीत्यभावेनवार्तिकोदाहरणत्वासङ्गतिरपीत्यस्यसङ्ग्रहः भाष्यकृत्ताहेतौविभक्त्यत्रेदस्यठितमितियत्रसर्वनाम्नोऽप्रयोगस्तत्रापिचेद्वार्तिकस्यप्रवृत्ति
स्तदासर्वनामसंज्ञासूत्रस्थभाष्यविरोधः प्राप्नोतीत्याशङ्काम्परिहरति यत्त्विति यथाश्रुतसूत्रमते वार्तिकाभावविशिष्टसूत्रमते अतएवयथाश्रुतसूत्राभिप्रा
यकत्वादेवसूत्रोपन्यासः सर्वनाम्नइतिसूत्रोपन्यासः ततः पञ्चादितिभाष्यप्रयोगस्यान्यथाप्युपपत्तिरित्याह अत्रसार्वविभक्तिकइतिमूलेप्रत्ययग्रहणाच्चिन्त्यप्रयो

९॥५॥१८

ननुप्रत्ययस्यातत्सर्थकस्ययत्रश्रवणन्तत्रयथास्यादित्यस्तलाभार्थम्प्रत्ययग्रहणमस्तुप्रत्ययशब्दस्यसामर्थ्याच्छ्रूयमाणत्वविशिष्टप्रत्ययलाक्षणिकत्वा।
दितिचेन्न प्राक्प्रत्यग्वाग्रामादित्यत्रषष्ठीव्यावृत्तिःप्रत्ययग्रहणस्यफलमितिभवतावक्तव्यन्तच्चान्यथासिद्धम् अन्याराादितिसूत्रेदिक्शब्दग्रहणेनैवसिद्धेःउत्तू।
त्तरपदग्रहणमतत्सर्थप्रत्ययान्तस्यदिक्शब्दस्ययोगेयाषष्ठीविहितातस्याः प्रवृत्त्यर्थमितिपूर्वसूत्रेणपञ्चम्यैवसिद्धेः नचपूर्वसूत्रएवाञ्चुत्तरपदग्र।
हणमदिक्छब्दस्याञ्चूत्तरपदस्यग्रहणार्थमितिकस्मान्नभवति सध्र्यङ्देवदत्तेनेत्यत्रदेवदत्तशब्दात्पञ्चमीसिद्धिस्तत्प्रयोजनम्भविष्यतीतिवाच्यम् दिक्
शब्दसाहचर्यात्पूर्वसूत्रेऽञ्चूत्तरपदस्यदिक्शब्दस्यैवग्रहणन्तत्वन्यस्येत्यस्यान्यस्यप्रयोजनस्यसत्त्वात् अतएवाह इदमत्रैवसूत्रेभाष्येस्पष्टमिति तत्र
हि अथप्रत्ययग्रहणङ्किमर्थम् इहमाभूत् प्राक्प्रत्यग्वाग्रामात् अञ्चूत्तरपदग्रहणस्याप्येतत्प्रयोजनमुक्तन्तत्रान्यतरच्छक्यमवक्तुमितिकथितम् एत

इदमत्रैवसूत्रेभाष्येस्पष्टम् समानाधिकरणंबोध्यमिति स्त्र्यधिकारात्परेणवासरूपविधिर्नेत्यत्रपरेणेतितृतीयाततःपरेण
शास्त्रेणवासरूपसंबन्धीनेत्यर्थः ततःपरेणनायमनुवर्त्ततइत्यत्रसार्वविभक्तिकःषष्ठ्यन्तात्तसिरितिबोध्यम् समुच्चीयतेइतिअ
तःषष्ठीपंचम्योरेवात्रविधानमित्यर्थः ननुषष्ठीति विधीयंतइतिशेषः॥ ((वत्तेनयोगेयाद्वितीयातस्याग्रहादुत्तरेणास्मदीयमित्यत्रोत्तरेणे।

त्यस्यतृतीयान्तत्वस्यचनेनवारणवदन्यत्राप्यतिप्रसङ्गः मात्रक्तद्वारणम्पूलक्षातानक्षमितिन्यूनतामकटयन्नन्यत्राप्यतिप्रसङ्गंवारयति स्त्र्यधिकारात्परे।
णेत्यादिना।परेणशास्त्रेणेति संहितिशेषः विनापितद्योगन्तृतीयाद्द्योपूतेतिवत् ततःपरेणनायमनुवर्त्ततइत्यत्रतुपरेणेति यद्यप्येनवन्तन्तथापिनासङ्गतिरि
त्याशयेनाह ततइति षष्ठ्यन्तादिति परममूलप्रदर्शितेनएनपेति विभक्तसूत्रेणषष्ठ्यन्तादित्यर्थः वस्तुतस्त्वेनपेतिसूत्रेयोगविभागोभाष्येनदृश्य।
ते ततःपरेणेत्यत्रनषष्ठ्यन्तात्तसिःकिन्तुपञ्चम्यन्तादेव पृथग्विनेतिसूत्रभाष्येसम्बन्धानुवृत्तिप्रदर्शनावसरेषष्ठ्यतसर्थप्रत्ययेनान्याराादिभिर्योगेपञ्च
मी एनपाद्वितीया अन्याराादिभिर्योगेपञ्चमीतिप्रदर्शितन्तेनेनवन्तवेपिपञ्चम्याः प्रवृत्तेः अतःसमुच्चयार्थकान्यतरस्याङ्ग्रहणात्पञ्चम्याएवसमुच्चयात्।

मूलेऽव्याख्यानादिति लक्ष्यदर्शनमूलकादित्यादिः विप्रकृष्टाऽपि पञ्चमी समुच्चीयते न तु षष्ठी द्वितीया तृतीया इति पाठः तथा च षष्ठ्या अप्यत्र समुच्चयो निषेध्य इति प्रतीयते
एतदयुक्तम् षष्ठीपदस्य सूत्रे एव सत्त्वादित्याशङ्कापरिहाराय शेषम्पूरयति विधीयन्त इति शेष इति॥ ॥ स्पष्टप्रतिपत्त्यै तदर्थमाह षष्ठी द्वितीयेत्यादिना तत्र विशेषमाह।
तत्राद्योपात्तेति आद्या षष्ठी नन्वेवमपि निषेधप्रतियोगिविधानकर्मत्वं षष्ठ्या अपि प्रतीयते तत्त्वायुक्तम् दूरान्तिकेति सूत्रेण षष्ठीविधानस्य सत्त्वादत आह समुदायेति ए
कसत्त्वेऽपि द्वयोरसत्त्वेन त्रित्वावच्छिन्नाभावस्य सत्त्वादिति भावः मूलाशयं स्फुटयति अयम्भाव इत्यादिना एवञ्च पक्षभेदेनोत्तरसूत्रद्वयस्य वैयर्थ्यमिति भावः अत्र दिवस्तद
र्थस्येत्यत्र नाद्य इति विभाषोपसर्ग इत्यत्र शेष इति सम्बध्यते इति पक्षो न युक्त इत्यर्थः समासाभावस्य तस्मिन् सूत्रे शेषपदसम्बन्धेनैव समासाभावस्य न नु तस्य सूत्रस्यैव

षष्ठी द्वितीया तृतीया अत्र न विधीयन्त इत्यर्थः तत्राद्योपात्ता अन्त्ये समुच्चेये इति बोध्यम् समुदायविधानाभावे तात्पर्यम् उत्तरसूत्रद्वयेति अयम्भावः अ
त्र शेष इत्यस्य संबंधे विभाषोपसर्ग इत्यत्र शेष इति सम्बध्यते अत न नाद्यः दिवस्तदर्थस्येत्यनेनैव समासाभावस्य सिद्धत्वेन सूत्रवैयर्थ्यापत्तेः न च
पक्षे षष्ठीशेष इत्यस्य प्रवृत्त्या पक्षे समासप्रवृत्तिः फलम् नोपसर्ग इति न्यासेन दिव इत्यस्य निषेधे शेषषष्ठ्यां समासविकल्पेन रूपद्वयस्य सिद्धे।
तया विभाषाग्रहणस्य तथापि वैयर्थ्यात् नान्त्यः वेदेपि॥ ॥ कल्पितकत्वेन यदा न तस्य प्रवृत्तिस्तदा षष्ठी शेष इति सूत्रस्य प्रवृत्तिरिति तदा षष्ठीसमासप्रवृत्तिरिति फ
लमस्त्येवेत्याशङ्कां निराचष्टे न चेति पक्षे विभाषोपसर्ग इति सूत्रप्रवृत्त्यभावपक्षे पूर्वशङ्कानिरसनोपायमाह नोपसर्ग इत्यादिना विभाषापदोच्चारणेन निषेधवि
कल्पयोरुपस्थितिः कल्पनापेक्षया निषेधमात्रोपस्थापकोऽनकारो विभाषापदमनुच्चार्य तत्र पठनीय इति भावः न चैवं सति सोपसर्गदिवधात्वर्थकर्मणि शेषत्वेन विव
क्षिते षष्ठीनेत्यर्थस्याभिव्यक्त्या षष्ठीप्रवृत्तिरेव न स्यादिति वाच्यम् अनन्तरस्येति न्यायेन निषेधो दिव इति सूत्रविहितषष्ठ्या एव स्यादित्याशयात् तथापि नोपसर्ग इति
न्यासकरणेऽपि न च पदलाघवाभावः मात्रालाघवस्य सत्त्वात् न चैवं कल्पनायामपि सूत्रद्वयमस्त्येवेत्युत्तरसूत्रद्वयारम्भादिति मूलस्य कागतिरिति वाच्यम् पाणि
निपठितानुपूर्वीकोत्तरसूत्रद्वयारम्भादित्यर्थात् नान्त्य इति विभाषेति सूत्रे शेष इति न सम्बध्यत इति पक्षो न युक्त इत्यर्थः॥ वेदेपीति अपिना ब्राह्मण इत्यस्य समुच्चयः॥

द्वितीयाब्राह्मण इति सूत्रस्य यत्फलं ब्राह्मणे द्वितीयायाः सिद्धिरेवेति तदपि विभाषोपसर्ग इति सूत्रेणैव सिध्यतीति ध्वनयितुमपिशब्दः॥ ः॥ द्वितीयायाः सिद्धत्वादिति क
र्तृकर्मणोरिति सूत्रविहितषष्ठीबाधिकेत्यादिः विभाषापदबोध्यनिषेधः षष्ठ्याः सा चाधुना कर्तृकर्मणोरितिसूत्रेणैव न तु दिव इति सूत्रेण द्वितीयाब्राह्मण इति सूत्रसाध्यद्विती
यायाः प्रवृत्तिः कर्मणः कर्मत्व शक्तिमत्त्वेन विवक्षायां तु चतदादिव स्तदर्थस्येत्यस्य प्राप्तिस्तत्र शेष इत्यस्य सम्बन्धादिति भावः तत् द्वितीयाब्राह्मण इति सूत्रम् उपसर्गानुच्चा
रणे विभाषोपसर्ग इति सूत्राप्राप्त्या कर्तृकर्मणोरित्यस्य बाधनार्थं तस्य सूत्रस्यावश्यकत्वात् अप्रवृत्येति तत्र शेष इत्यस्यासम्बन्धेनाप्रवृत्येत्यर्थात् वैयर्थ्यस्य द्वितीयाब्राह्म
ण इति सूत्रे इत्यादिः न च कर्तृकर्मणोरिति सूत्रस्य बाधनार्थमेवास्त्विति वाच्यम् वक्ष्यमाणप्रकारेण तिङन्त एवास्य सूत्रस्य प्रवृत्या तत्र लादेशयोगेन लोकेति निषेधे न कर्तृक

विभाषोपसर्ग इति सूत्रेण कर्मणि द्वितीयायाः सिद्धत्वादायाद्यस्यस्यतत्राभावाच्च द्वितीयाब्राह्मण इत्यस्य वैयर्थ्यापत्तेः न च तन्निरुपसर्गे द्वितीयार्थ
मिति वाच्यम् कर्मत्वविवक्षायां दिव इत्यस्याप्रवृत्त्या कर्मणि द्वितीयेत्येव सिद्धत्वेन वैयर्थ्यस्य तदवस्थत्वात् न च द्वितीयाब्राह्मण इति सूत्रे शेष इत्य
नुवर्त्तते तेन कर्मत्वाविवक्षायां द्वितीयार्थमिति वाच्यम् विच्छिन्नत्वेनानुवृत्तेरयुक्तत्वात् वक्ष्यमाणोदाहरणे कर्मत्वस्यैव प्रतीतेश्चह्नेति विदं न प्रव
र्तत इति पुनर्विधानं समासाभावायेत्यपि न वाच्यम् अत एव द्वितीयाब्राह्मण इति सूत्रे भाष्ये किमुदाहरणं गां प्रतिदीव्यतीति पूर्वेणाप्येतत्सिद्धं इदं त
र्हि गामस्य तदहः सभायां दीव्येयुरिति॥ ‹‹र्मणोरित्यस्याप्रवृत्तेः ननु द्वितीयाब्राह्मण इति सूत्रे शेष इत्यस्य सम्बन्धेन दिव इति सूत्रबाधनार्थमेव तदस्त्वित्याशङ्का
न्निराचष्टे न च द्वितीयेति द्वितीयार्थमिति शेषत्वेन विवक्षायामिति शेषः विच्छिन्नत्वेन विभाषोपसर्ग इति सूत्रेणेत्यादिः ननु मण्डूकप्लुत्या तत्र शेष इत्यस्य सम्बन्धो भविष्य
तीत्यत आह वक्ष्यमाण इति ननु कृदन्तेन योगे समासाभावार्थं तत्सूत्रमस्त्वित्याशङ्कां परिहरति हीति विदमिति तादृशलक्ष्याभावादिति शेषः अत्र हेतुमप्रदर्शयन् स्वो
क्तार्थे भाष्यकारसम्मतिमाह अत एवेति कृत्यप्रवर्त्तनादेव भाष्यमिति दृश्यत इति शेषः पूर्वेण विभाषोपसर्ग इत्यनेन अत्र लादेशयोगस्य सत्त्वेन न लोकेति निषे
धस्य प्रवृत्त्या कर्तृकर्मणोरित्यस्याप्राप्त्या दिव इति सूत्रस्य बाधनार्थमेव द्वितीयाब्राह्मण इति सूत्रमारब्धम् भवन्मते दिव इति सूत्रे शेषपदसम्बन्धेन तस्याप्राप्त्या कर्म

येत्यनेन द्वितीयायाः सिद्धा द्वितीया ब्राह्मण इति सूत्रस्य भवन्मते वैयर्थ्यमिति भावः ॥ ॥ भाष्यमात्रन्न प्रमाणं किन्तु कैयटोप्युक्तार्थे प्रमाणमित्याशये
नाह दिव इति कैयटश्चेति प्रमाणमिति शेषः मूलेऽन्तरा वेद त्रिसूत्र्यामित्युक्तन्तदनुपपन्नन्तृतीयसूत्रस्येहानुपन्यासादित्यत आह तृतीयस्येति एवञ्चेहत्य
नेन बुद्धिस्था सम्पूर्णा कौमुदी परामृश्यते तस्या आरब्धा यात्र समाप्तत्वादुदाहरती तिलन्देनानुपपत्तिरिति भावः ननु किन्तु नेन समासस्याप्रसक्तत्वेपि तिङ
न्तप्रकृतिक कल्पप्रत्ययान्तेन समासस्य प्रसङ्गोऽस्त्येवेत्यत आह कल्पबाद्यन्तस्येति न प्रयोग इति अनभिधानादिति शेषः प्रकृतसूत्रे शेषग्रहणासम्बा
न्धे भाष्यमपि प्रमाणम् तत्र हि हविषोऽप्रस्थितस्य हविषः प्रस्थितं नेति वक्तव्यम् यदाप्रस्थितत्वेन हविर्विशेष्यन्तदा षष्ठी न भवतीत्यर्थः प्रस्थितत्वेन
विशेषितं यद्ध विस्तद्वाचकात्प्रातिपदिकान्न षष्ठीति फलितम् इन्द्राग्निभ्यां छागं हविर्वपां मेधः प्रस्थितम्प्रेष्येत्येतदस्योदाहरणम्भाष्ये अत्र छागमि

दिवस्तदर्थस्येति नित्यं षष्ठी प्राप्नोतीति कैयटश्चेति त्रिसूत्र्यामिति तृतीयस्यैवेदिक्यामुपन्यासो द्रष्टव्यः अप्रसक्तत्वादिति क
ल्पाद्यन्तस्यतु न प्रैषप्रयोग इति भावः उभयथा षष्ठीतदभावौ इदं चाकथितसूत्रे भाष्ये स्पष्टम् अविवक्षितेति तद्धितवृत्तेः पूर्वम
विवक्षितेत्यर्थः पश्चात्तु कर्मयोगो भवत्येवेति बोध्यम् ॥११ त्यादौ द्वितीयादृश्यते यदि प्रेष्यन्नुव इति सूत्रस्य शेषत्वविवक्षायामेव प्रवृत्तिस्तदाऽ
नेन वार्तिकेनैतत्सूत्राप्रवृत्तिसम्पादनेपि षष्ठी शेष इति सूत्रेण षष्ठ्या दुर्वारत्वेनोदाहरणासङ्गतिः स्पष्टैव न च वार्तिकारम्भसामर्थ्यात्तस्याप्यय न्निषेध
इति वाच्यम् सामर्थ्यकल्पनापेक्षया शेषग्रहणासम्बन्ध एव लाघवमित्यत्र तात्पर्यात् उभयथा शब्दस्येह भावाभावबोधकत्वन्न तु द्वाभ्याम्प्रकाराभ्यामित्य
र्थ इति सूचयन्नाह षष्ठीतदभावाविति ननु परसमूले गुणकर्मणि वेत्यत इत्युक्तत्वादीदृशीदृष्टिः कर्तृकर्मणोरिति सूत्रेन दृश्यत इत्यत आह इदञ्चेति
तत्र हि अथेह कथम्भवितव्यन्नेताश्वस्य स्त्रुघ्नमित्याहो स्विन्नेताश्वस्य स्त्रुघ्नस्येति उभयथा गोणिकापुत्र इत्युक्तम् ननु कर्मणो यद्यविवक्षा तदा कटमित्यस्या
कथम्प्रयोग इत्यत आह तद्धित इत्तेरिति पश्चात् इन्प्रत्ययोत्पत्त्यनन्तरम् कर्मयोगः॥ ॥ ॥

कटादिकर्मयोगः नन्विह कटस्य क्तान्तक्तेति क्तधात्वर्थोत्पत्त्यनुकूलव्यापारप्रयोज्यफलाश्रयत्वमस्त्येवेति कथं षष्ठी कटशब्दान्न भवति क्तग्रहणेन तद्धितेमाभू
दित्यस्य च कथं लाभ इति चेदित्थम् प्रकृतसूत्रभाष्ये धातोर्द्वये प्रत्यया विधीयन्ते तिङः कृतश्च तत्र क्तप्रयोगे दृश्यते तिङ् प्रयोगे प्रतिषिध्यते इत्यनेन कर्मत्व
स्य धात्वर्थनिरूपितत्वया परिशेषात्कृदन्तयोग एव षष्ठी भविष्यतीति क्तग्रहणानर्थकस्मृतिपाद्य कृतीये कर्तृकर्मणीतत्र यथा स्यात्तद्धितस्यये कर्तृकर्मणीतत्र
माभूदिति क्तपूर्वीकटम् भुक्तपूर्वीओदनमित्युक्तान्तेन विवक्षितोऽर्थोऽलभ्यते अयम्भावः एतद्वृत्तिविषय एव सकर्मकस्यापि कृधातोर्भुज्धातोश्चकर्मणोऽ
विवक्षयाऽकर्मकत्वं सम्पाद्य ताभ्यां भावे प्रत्यये सति ततः समासतद्धितवृत्त्योः प्रवृत्त्यनन्तरं कर्मत्वशक्त्यवच्छिन्नान्वयविवक्षास्तीति कटस्य तद्धितान्तशक्ति
ग्रहप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्मत्वमेवास्ति न तु कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्मत्वमिति नात्र षष्ठी किन्तु द्वि

अयं च प्रकार एतद्वृत्तिविषय एव तेन घटं क्रियते इत्यादि न नपुंसके भावे क्तोऽप्यकर्मकेभ्य एव भ्रान्तं देशमित्यादि तु गत्यर्थाक
र्मकेति क्तेन निर्बाधम् तत्सूत्रोपात्तधातुभ्यश्चेन तस्य भावेऽपि विधानादित्यन्यत्र विस्तरः॥१९॥ तीया क्तग्रहणसामर्थ्येन कृदन्तशक्तिग्रहप्रयोज्यो
पस्थितिविषयकर्तृकर्मणोर्ग्रहणात् तण्डुलानाम्पाचकतरइत्यत्र तद्धिताधिक्यसत्त्वेऽपि पाचकादेः पृथक् प्रयोगेण तच्छक्तिग्रहस्यापि सत्त्वेन तच्छक्तिग्रहप्रयो
ज्योपस्थितिविषयत्वात् क्रियायाः अस्तीति षष्ठी भवत्येव न चात्र न लोकेति निषेधः शङ्क्यः तस्य प्रत्यासत्त्या निष्ठान्तशक्ति[illegible]प्य क्रियानिरूपितकार्तृकर्मणि नि
षेधविधायकत्वात् एतद्वृत्तिविषये दृश्यमानप्रयोगसम्बन्धिवृत्तिविषये ननु नपुंसके भावे क्त इति [illegible] लोकेन भावार्थकप्रत्ययोपपाद
नम्फलमत आह नपुंसक इति अकर्मकेभ्य एवेति सकर्मकस्याविवक्षितकर्मकत्वेनाकर्मकत्वं संसाध्य भावे [illegible] पादनपरभाष्यप्रामाण्यादेवङ्
त्यनात् नन्वेवं सति भ्रान्तं देशमनेकं दुर्गविषममित्यस्य का गतिरत आह भ्रान्तमिति भ्रम्धातोर्गत्यर्थत्वात् तस्य सूत्रस्य भावेऽपि प्रत्ययविधायकत्वं यथमत आ
ह तत्सूत्रोपात्तेति चेन तत्सूत्रोपात्तत्वेन अन्यथा तस्य निष्प्रयोजनत्वापत्तिः अपिशब्दः कर्तृकर्मणोः समुच्चायकः अत एवाजर्यं सङ्गतमिति सौत्रनिर्देशः सङ्

ननु नपुंसके भावे क्तस्य योगे षष्ठ्युपसङ्ख्यानमिति वार्तिके नगतन्निरश्चीन मनूरुसारथेरित्यत्र कर्तरि षष्ठीवन्नान्तं देशमित्यत्रापि कर्मणि देशशब्दात् षष्ठी स्यात्॥ यदि तु शेषत्वविवक्षया षष्ठी साधने न नतस्य वार्तिकस्य प्रत्याख्यानपक्षस्तदाऽनूरुसारथिशब्दादिव भ्रान्तं देशमित्यत्रैव शशब्दादपि शेषत्वविवक्षया षष्ठ्या आप तिरिति चेन्न प्रकृतसूत्रस्य भाष्यप्रामाण्येन नपुंसकत्वविशिष्टे भावे क्तप्रत्यये ऽकर्मकेभ्य एवेति सामान्यतो नियम [illegible] कर्मकेभ्य एवेति नियम्यते गतन्निरश्चीनमित्यत्राविवक्षितकर्मकत्वेनाकर्मकात्वमधातोर्नपुंसके भावे क्त इत्यनेनैव क्तः अत [illegible] शब्दात् षष्ठी नपुंसके भावे क्तस्य योगे षष्ठ्या उपसङ्ख्यानमिति वार्तिके प्रतिपदोक्तत्वान्नपुंसके भाव इति विहितक्तस्यैव ग्रहणमिति सर्वसामञ्जस्यात् [illegible] गतन्निरश्चीनमिति वदत्रापि नपुंसके भावे क्तो दुर्वार इति चेन्न क्तान्तपूर्वी कटमुक्तपूर्वी ओदनमित्येन इति विषयएवायमागकर्मकः पश्चात्तस्य कर्मसम्बन्धेनेन [illegible] यकर्मसंज्ञका र्थानन्वयर्थ

धायैरामोदमुत्तममिति दधातेर्ददातिदधात्यो र्विभाषेति णः आतो युगिति युगिति जयमंगला धयै रिति ह्रस्वपाठो लेखकप्रमादात्
उत्तमं पुष्पादि मं वं ध्यामो दं धारयद्भिरित्यर्थाभिमानेन प्रश्नः यदि त्वामोदं गृहीत्वामाद्दृशां दुःखस्य पोषके रित्यर्थो जयमंगलाव्याख्यातरी
(त्याखीक्रियते॥

कत्वस्याकर्मकत्वाभावेन तस्यात्रा प्राप्तेः इति णइति तस्य विकल्पेन शप्रत्ययं विधायक तया तदभावे स्याद्ध धेति सूत्रेणाकारान्तत्वस्य णोण इत्यर्थः प्रमादादिति नच याघ्राध्माधेडि तिशप्रत्यये न थाभविष्यती निवाच्यम् तस्मिन्कर्तरि शपितस्य जुहोत्यादिभ्य इति श्लो द्वित्वे धैरिति स्यादिति भावः पचादि त्वेनाचि धाभिरिति धैरिति स्यात् अत्रामोदशब्दात्कर्तृकर्मणोरिति षष्ठी कुतो नेति प्रश्नः आमोदस्य गुणत्वाद्व्याकाङ्क्षा शान्तये आह पुष्पादीनामिति अभिमा नपदोपादानस्य चितासत्त्व प्रकटयति यदित्वामोदमिति जयसङ्गत्ता व्याख्यानरीत्येति ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम् लिम्पे र्वितनोतीते श्चेतयः स्याज्ज्वलो न कद् इति पद्यम् इदन्त्वनन्तरैवं व्याख्यातम् मादृग्भ्यो दुःखं ददद्भिरुत्तमामोदं पुष्पादीनां गृहीत्वामाद्दृशां दत्तस्य दुःखस्य पोषकैर्मादृशां शरीरं लिम्पद्भिरि वबाते: कौमादृग् विरहाग्निव्याप्तश्चेतयः चेतयन् ज्वलः ज्वलन्निव नस्यादिति दाधात्तोः योषणार्थाद्दानश्च ददाति दधात्यो र्विभाषेति शणो लिम्पेः शः ज्वलेर्णः।

नकाप्यनुपपत्तिरिति अध्याह्रियमाणस्य गृहीत्वेत्यस्यामोदपदार्थः कर्मेतिन लोकेति षष्ठीनिषेधात्कर्मणि द्वितीया भवति एतेनामोदमागृ
ह्याघ्रायेरित्यर्थविवक्षायामासादात्प्रेक्षत इत्यत्रेव ल्यब्लोप इति वचनेनामोदशब्दात्पञ्चम्यापत्तिरिति कस्यचिदुक्तिः प्रत्युक्ता गृहीत्वाशब्दस्यै
वात्राध्याहारात् ल्यब्लोपे कर्मण्यधिकरणे इति पञ्चमी तु ल्यबन्तं विना न दर्थावगतिर्यत्र न हि विषयम् प्रक्षते तु ल्यबन्तं विनाप्यामोदस्य धात्वर्थ
कर्मत्वस्य मदिति प्रतीतिरिति न तेन पञ्चमीप्राप्तिः अतएवाजघ्ने विषमविलोचनस्य वक्ष इत्यत्र वक्षस् शब्दान्न पञ्चमी तदर्हमिति निर्देशस्य वक्ष्य
माणरीत्योपपत्तेरनित्यत्वज्ञापकत्वं नेत्याशङ्कां वारयति अयम्भाव इत्यादिना तत्रैव सप्तम्यन्तादिवार्थे वतिः तस्य षष्ठ्यन्तादिवार्थे वतिः अर्हमत

॥ तदानकाप्यनुपपत्तिः निर्देशादिति अयम्भावः तत्रैव तस्य अर्हमिति सूत्रत्रयं कार्यमर्हमित्यत्र योग्यतावत्त्वात्कर्मणि
षष्ठी तस्य भाव इत्यत्र च तस्येति न वाच्यम् एवं सिद्धे तदिति निर्देशोऽसमस्तद्वितीयान्तत्वबोधनार्थः एतेन सूत्रे कर्मोपप
दाण् प्रत्यये उपपदसमासोऽजन्तस्य कर्मषष्ठ्या वा समास इति निरस्तम् अतएव द्वितीयासमर्थादिति व्याख्यायते राजान
मर्हतीति च विगृह्यते तत्फलं त्वनित्यत्वबोधनमेवेति भाष्ये तु नैतद्दृश्यत इति बोध्यम्॥ ११ सेत्यनुवर्तते शब्दाधिकारोऽत्र एव
च्छेदं कर्मषष्ठ्यन्तमिति तत्कर्मकार्हणकर्तरि वतिरित्यर्थः एवं योगविभागगौरवपरिहारायाह तस्य [illegible] ति चस्त्वर्थे असमस्तनिर्देशाद्द्वि
तीयान्तत्वस्य स्फोरणाय यदुक्तं प्राग्वक्ष्यमाणरीत्येति तन्नाह एतेनेति निरस्तमित्यत्रान्वयः तदिति [illegible] मिति चाद्यजन्तम न च तद
र्हमिति निर्देशस्य सौत्रत्वेनोपपत्तिरस्त्विति वाच्यम् सौत्रत्वकल्पनापेक्षयाऽनेकप्रयोगसाधकानित्यत्वकल्प[illegible] दिति भावः अतएव तदि
त्यस्य द्वितीयान्तत्वादेव षष्ठ्यन्तत्वे तु षष्ठीसमर्थादिति स्यात् अतएव विधिमर्हतीति विग्रहः तत्फलन्तु असमस्तद्वितीयान्तत्वफलन्तु सूत्रेऽत्राहुरित्युपादा
नमकृत्वि बोधनाय तामकठ्यति भाष्ये त्विति एतत् अनित्यत्वमनेनेति भट्टिप्रयोगस्योक्तरीत्योपपत्तिः॥

तदर्हमितितुकर्मोपपदाण्प्रत्ययान्तम् किन्त्वोक्तरीत्यायोगविभागेनव्याख्यानेयद्यपिपुनस्तस्येत्यस्यानुपादानेशब्दलाघवन्तथापितस्येत्यत्रस्वरितत्वस्यनिर्हेतुका।
शब्दाधिकारस्यचाश्रयणमितिज्ञानजनकमनोव्यापारस्यगौरवमस्त्येवेति मूलेलक्ष्येतिपृथक्कृत्वाविग्रहघटकत्वेनप्रदर्शितम् लक्ष्यउक्ष्यउकक्ष्येतितुनोक्तम् कृण।
ङि शीनामितिन्यायेनरूपासिद्धिप्रसङ्गादतएवाह ऊकौञ्चेतीति अव्ययपदमुक्तद्वन्द्वघटकमितिभ्रमवारणायाह अव्य[illegible]कारेण तदन्तविधिस्तदाह
रिंदिदृक्षुरित्यत्रनस्यादतआह व्यपदेशिवद्भावेनेति मूलेएतेनेति सर्वोपकारकषष्ठ्याः प्रतिषेधइतिकथन[illegible]रापशब्दस्यखलप्र
त्ययान्ततयाषष्ठीनस्यादितिभावः इक्ष्वाकूणान्दुरापइत्यादीनांशेषत्वविवक्षयासाधनन्दुर्लभमितिसूचय[illegible]न्विनिवार्तिकादिति षष्ठीतिनिषेधस्य
बाधकादितिशेषः तत्प्रत्याख्यानइति शेषत्वविवक्षयेत्यादिःसानेति शेषत्वविवक्षानेत्यर्थः आरम्भप्रत्याख्यानयोःफलैक्यायेवमेवकल्पनादितिभावःतत्रा

ऊकौञ्चेति अव्ययंचेत्यादेरुपलक्षणमिदम् तदंतविधिरिति व्यपदेशिवद्भावेनतस्यापीतिबोध्यम् ननुनपुंसकेभावेक्तस्येतिभाष्येवा
र्तिकात्कारकषष्ठीनिषेधविषयेशेषत्वविवक्षानतत्प्रत्याख्यानेत्वनभिधानात्क्तातिरिक्तविषयेसान अतएव पूरणगुणेतिसूत्रेभाष्येध्व
नितमिदमित्यरुचेराह यद्वेति सहयुक्तेइति स्फुटोपममित्यत्रोपमाशब्दोभावसाधनः इतिषष्ठी॥ ॥ र्थेप्रमाणान्तरमाह पूरणेत्यादिध्वनितमि।
ति तत्रहिसतिकिमुदाहरणम् ब्राह्मणस्यकुर्वन् नैतदस्तिकारकषष्ठ्यानिषेधात् शेषषष्ठ्यातुब्राह्मणस्यकटमित्यर्थेनासामर्थ्यात्सतीतिव्यर्थमित्युक्तम् य
दिकारकषष्ठीविषयेपिशेषत्वविवक्षास्यात्तदाकुर्वन्नित्येतद्योगेपिशेषत्वविवक्षासम्भवतीतिकटादियोगेनासामर्थ्यप्रदर्शनमसङ्गतंस्यात्तेनेदन्ध्वनित
मित्यर्थः यदिस्फुटोपममित्यत्रोपमाशब्दःकर्मणिङन्तस्तदाभूतिमित्तेनशम्भुनेतिकरणतृतीयैवयुक्ताकारकविभक्तेर्बलवत्वादतआह स्फुटोपमेतिभा
वसाधनइति भावेऽभिधेयेप्रत्ययइतिभावःसाधनत्वेनव्यपदिश्यते एवञ्चभावेयोऽङ्प्रत्ययस्तत्प्रकृत्यर्थोपमानक्रियायान्नारदस्यशाब्दोऽन्वयःशम्भोश्चा
र्थःतुल्यार्थैरतुलोपमाभ्यामित्यत्रतुतुलोपमाशब्दौकर्मसाधनाङन्तौसादृश्यानुयोगिवाचकौसादृश्यमेतयोः प्रवृत्तिनिमित्तमितिबोध्यमइतिषष्ठीविवरणम्।

ननुचकाराद्दूरान्तिकार्थेभ्योऽधिकरणे सप्तमी विधानेपि कथंविभक्तिचतुष्टयमतआह सप्तम्यधीति सिद्धत्वादिति एतेन नतत्र नचकारेण सप्तमीवि।
धानं किन्तुप्रथमोपस्थितिकत्वेन प्रातिपदिकार्थस्यान्तरङ्गत्वात्तत्र सप्तमी विधीयते सा चकस्मादित्याकाङ्क्षायाम्पूर्वसूत्रेण दूरान्तिकार्थेभ्य इत्यस्योप
स्थानात्तेभ्यः सप्तमीत्यस्य लाभः अतएवाह प्रागुक्ता इति ननु प्रातिपदिकार्थेति सूत्रस्य परत्वात्तेन परत्वाद्बाधिका प्रथमैव स्यादिति कथञ्चतस्रो
विभक्तयइत्यतआह इयञ्चेति अपीति तेनान्तरङ्गायाः समुच्चयः एतेभ्योऽधिक रणकारकेपि सप्तमीभवति प्रथमायास्तत्र मात्रपदेनव्यावृत्तेः
मूलेत्रैविध्यमाधारस्य दर्शितन्तत्र सम्मतिरुक्ता संहितायामितीति ननु प्रवृत्तिनिमित्तमधिकरणशब्दस्याधिकरणत्वमेव तच्चैकमिति कथमा
धारस्यत्रैविध्यमितिचेन्न आधारतायाः सम्बन्धावच्छिन्नत्वनियमेनोपकारकसम्बन्धभेदादधिकरणं त्रिविधमित्युच्यते यत्राधारत्वाभिमत।

प्रातिपदिकार्थमात्र इति सप्तम्यधिकरणेचेति सूत्रेणाधिकरणे सप्तम्याः सिद्धत्वाच्चकारेणान्तरङ्ग प्रातिपदिकार्थमात्रे स
प्तमी विधीयते प्रागुक्ताश्चतिस्रः इयंच सप्तमी निरवकाशत्वात्परया अपि प्रथमायाबाधिकेति भावः इतिभूमिपरत्वेतिः

पदार्थीययत्किञ्चिदवयवावच्छेदेन संयोगे सति कर्तृकर्मसमवेतक्रियानिरूपिताधारत्वविवक्षास्ति सः यत्र वा उपसमीपे श्लेष इति व्युत्पत्त्या
व्यवहितसामीप्यसम्बन्धावच्छिन्नाधेयतानिरूपितकर्तृकर्मसमवेतक्रियानिरूपिताधारत्वस्य विवक्षास्ति स औपश्लेषिकाधार इत्युच्यते अत
एवभृत्येभ्यो यन्मासिकन्दीयते तत्र मासे दीयते मासिकमिति व्युत्पत्तिस्तत्र च दीपत इति सूत्रसम्मतावस्थिता [illegible] स्य दिवसपरिच्छिन्न।
मासस्य दाधात्वर्थफलविशिष्टाधारकालस्य चोपश्लेषोस्तीति मासस्यौपश्लेषिकमधिकरणम् मासेऽति [illegible] त दीयते उत्तरकाले दीयते इत्यर्थः।
स्पष्टप्रतिपत्तये क्रियते फलितार्थसूचनाय। ननु संयोगसमवायान्यतरसम्बन्धेनयः कर्तृकर्मव्यवहितक्रियाधारस्तत्र रूढिसत्त्वाद्योगार्थमा
दायसामीप्यमादाय व्यवहितस्य कथङ्ग्रहणमितिचेन्न ॥ ६ ॥

गङ्गायां गावः कूपे गर्गकुलमिति भाष्यकारीयव्यवहारबलेन तस्यापि ग्रहणात् अत एवेकोयणचीत्यादिसूत्राणामञ्जुपश्लिष्टस्येकइत्यर्थविवरणं सुष्ठु सङ्गच्छते अत एव च शब्दस्य शब्देन कोन्योऽभिसम्बन्धो भवितुमर्हतीत्यन्यदत्तः उपश्लेषादिति भाष्योक्तिरप्युपपद्यते साक्षात्क्रियाधारस्य कर्तृकर्मसंज्ञाऽधिकरणसंज्ञाया बाधिका भवतीति परम्परया क्रियाधारस्य सा भवति सा च परम्परा क्वचित्संयोगघटिता क्वचित्समवायघटिता क्वचित्तदन्यतरानि[illegible] विशेषणतासम्बन्धघटिता आद्या कटे शेते स्थाल्यां तण्डुलं पचतीत्यादौ पटे शौक्ल्यं चन्द्र्यादिषु जातिरित्यादौ द्वितीया तृतीया तु घटाभावे पटाभाव इत्यादौ तदुक्तं [illegible] व्यवहितामसाक्षाद्वारयक्रियाम् उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतमिति अनव्यवहितामित्युक्तेऽप्यसाक्षादित्युक्तिः परम्परयैवान्वयसूचनाय अत एवाश्रेर[illegible] इति विग्रहे सप्तमीशौण्डैरिति समासः वैषयिकाधारस्तु मोक्षे इच्छास्तीत्यादौ यत्र सर्वावयवावच्छेदेन सम्बन्धोऽस्ति स एवाभिव्यापकाधार इत्युच्यते तिलेषु तैलं दधि सर्पिरित्यादौ यथा अत्रायं विशेषः इच्छा इत्यादौ धात्वर्थेच्छाविषयतायदा मोक्षस्य विवक्षिता तदा मोक्षमिच्छतीत्येवान्तरङ्गत्वेन कर्मसंज्ञया भवति यदा तु प्रत्ययार्थसिद्धावस्थापन्नार्थविषयता मोक्षस्य विवक्षिता तदा

यत्क्तान्तनिरूपितपरार्थाभिधायकत्वाश्रय इन्नन्तः शब्द इत्यर्थः अत्रेनो विषयस्येनः प्रकृतेः क्तान्तस्येति षष्ठी तत्पुरुषोपि वक्तुं शक्यः॥

मोक्षे इच्छास्तीति भवति अत्रापि प्रकृत्यर्थसाध्येच्छाविषयत्वविवक्षायां कर्मणि षष्ठी भवति अधिकमन्यत्र द्रष्टव्यम्॥ ९॥ क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानमित्यत्र विषयशब्दो वृत्तिभूमिपरत्वेन मूले व्याख्यातस्तदर्थं दूषयितुमाह यत्क्तान्तेति यत्क्तान्तार्थेत्यर्थः वार्तिकोक्तशब्दः क्तान्तपरः एवमिन्शब्दोपि तदन्तपरः विषयशब्दो वृत्ति भूमिपरः एतदर्थः परार्थाभिधायकत्वाश्रयः एवञ्चेन्नन्तः शब्दः परार्थाभिधायकत्वाश्रयो यस्य क्तान्तार्थस्येत्यर्थः फलितः यस्येत्यत्र षष्ठ्यर्थो निरूप्यनिरूपकभावः यत्क्तान्तार्थनिरूपिताभिन्नपरार्थाभिधायकत्वाश्रय इन्नन्तः शब्दस्तस्य क्तान्तस्य कर्मणि सप्तमी भवतीत्यर्थः सिद्धः एवम्बहुव्रीहिपर्यन्तधावने फलाभावाद्विषयशब्दस्य देशवाचकत्वेन प्रसिद्धत्वात्प्रकृतेरवदेशपरत्वेन गृह्यत इत्याशयेन व्याचष्टे इनो विषयेति एवञ्च बहुव्रीह्यपेक्षया षष्ठी तत्पुरुषे लाघवमिति भावः अधीती व्याकरणे इति शब्दाद्भूतकालिकव्याकरणकर्मकाध्ययनकर्तेति बोधः इन्विषयस्य कर्मणीत्यत्र कर्मशब्दः कालादिभिन्नकर्मबोधकः तेन मासमधीती व्याकरण इत्यस्योपपत्तिः॥ ९

निमित्तमि

निमित्तात्कर्मयोगे अत्रनिमित्तपदङ्क्रियाजनकप्रवृत्तिकारणज्ञानविषयत्वलाक्षणिकम् फलज्ञानस्यचप्रवृत्तिहेतुत्वम्प्रसिद्धमेवेत्यभिप्रायेणपरममूले निमित्तमि हफलमित्युक्तम् कर्मयोगइत्यस्यक्रियाकर्मणायोगःसम्बन्धस्तस्मिन्नित्यर्थः सतीतिशेषः फलञ्चर्मणिद्वीपिनमित्यादौसप्तम्यर्थःतस्यफलत्वन्तुहननक्रियायास्त ल्लाभेच्छाधीनत्वाद्बोध्यम् एवञ्चचर्मणिद्वीपिनंहन्तीतिशब्दाच्चर्महेतुकंयद्द्वीपिकर्मकंहननन्तद्विशेष्यकः कर्तृप्रकारकः शाब्दबोधः अत्रपरममूलेहेतुवतीयेत्य भिधानंहेताविति सूत्रेफलस्यापिहेतुपदेनग्रहणमित्यभिप्रायेण एवञ्चफलार्थकत्वमपिहननस्यसम्भवतीत्याशयेनाह मूलेनादर्थ्यचतुर्थ्यपीति एतदेवप्रकटय त्ति फलस्येति चर्मणिद्वीपिनंहन्तीत्यत्रसीम्निपुष्कलकोहतइत्यत्रपुष्कलकशब्दस्याण्डकोशार्थकत्वेकर्मणायोगः समवायः दन्तयोर्हन्तिकुञ्जरमित्यत्रकेशेषुच मरींहन्तीत्यत्रपुष्कलशब्दस्यशंकुपरत्वेसीमशब्दस्यपरिच्छिन्नदेशपरत्वेचसंयोगात्मकःकर्मयोगोबोध्यः यस्यचभावेनभावलक्षणमित्यत्रभावशब्दः क्रियायां

तादर्थ्यइतिफलस्यहेतुत्वेन विवक्षणात्फलार्थत्वाच्चकारणमस्येतिभावः ननुज्ञाप्यज्ञापकभावरूपलक्ष्यलक्षणभावोभूयोभूयोदर्शनाश्रयो दृष्टस्तनश्चोदितेत्रादित्येतनमानसिमित्यादावेवस्यान्नतुप्रकृतेकदाचिद्धिगोषुदुह्यमानासुसौगतइत्यतआह निर्ज्ञानकालेति कालोदे शस्याप्युपलक्षणम् तदुदाहरणम् ॥ ९८ धकः एवञ्चयत्सम्बन्धिक्रिययायस्यक्रियालक्ष्यतेनततः सप्तमीत्यर्थः नन्वस्यसूत्रस्ययत्रक्रिययोर्ज्ञाप्यज्ञा

पकभावरूपलक्ष्यलक्षणभावस्तत्रैवचेत्प्रवृत्तिस्तदाह्यत्रज्ञापकत्वोपयादिकाभूयोदर्शनादिघटितासामग्रीसम्भवतीतिप्रवृत्तिःस्यान्नत्वन्यत्रेत्याशयेनशङ्कते नन्विति भूयोदर्शनाश्रयः साध्यसाधनयोःसामानाधिकरण्यस्यभूयांसियानिदर्शनानितत्प्रयोज्यः यथावह्निधूमयो[illegible]भूयोदर्शनाश्रयत्वङ्कुत्रच्छिन्नमत आह नतश्चेति तदङ्गीकारेचेत्यर्थः प्रकृते गोषुदुह्यमानासुगतइत्यादौ इदंवाक्यङ्कृहिणम्पतिआगन्तुकपुरुषकर्तृकप्रश्नविषयोयत्यधिकरणकालज्ञानेच्छ यात्रागन्तुकः कदागतइतियःप्रश्नस्तस्योत्तरभूतम् एवञ्चात्रननिरुक्तभूयोदर्शनसम्भवइत्याह कदाचिद्धीति मूलेनिर्ज्ञानकालेनिवहुव्रीहिः क्रियात्रन्यप दार्थः एवञ्चनिर्ज्ञानकालायांदोहनक्रियासात्रनिर्ज्ञानकालायागमनक्रियातस्यालक्षणम्भवति मूलस्यन्यूनतास्यविहर्तुमाह कालोदेशस्येति एवञ्चनिर्ज्ञातदेशा ॥ क्रियात्रनिर्ज्ञातदेशायालक्षणमितिबोध्यम् ॥ ॥

एवञ्चतत्तच्छब्दबोध्यत्वेनविवक्षितंयज्ज्ञापकत्वन्तदेतच्छास्त्रप्रवृत्तिप्रयोजकन्तत्त्वत्रभूयोदर्शनापेक्षेतितात्पर्यम् सतिगुणइति अत्रगुणसत्त्वक्रियाधिक
रणदेशः पृथिव्यादिर्ज्ञातइतिगुणसत्त्वक्रियाद्रव्यत्वसत्त्वक्रियायालक्षणम् यत्सम्बन्धिक्रियेत्यत्रयत्पदबोध्यः क्वचित्कर्मक्वचित्कर्त्ता अतएवोक्तम्सू
त्रेतदाश्रययोः कर्तृकर्मणोरिति कर्तुः कर्मणश्चयदुदाहरणन्तत्रतयोः हृदन्तबोध्यत्वात्प्राधान्यङ्क्रियायास्तुविशे[illegible]मितिप्रधानयोरेवलक्षणत्वप्रती
तिरित्याशयेनोक्तमिहेति कर्तृकर्मबोधकप्रत्ययान्तघटितोदाहरणद्वये प्रतीयमानमिति उभयत्रसप्तम्यर्थ[illegible]ज्ञाप्यभावः दोहनादिक्रियाधिकर
णकालसम्बन्धश्च तस्यप्रकारत्वमतेगोधित्यादिवाक्याद्वर्त्तमानकालावच्छिन्नव्यापारजन्यदोहनाश्रयगोर्[illegible]ज्ञापकतानिरूपितज्ञाप्यताविशिष्टादो
हनाधिकरणकालसम्बन्धविशिष्टव्यापारजन्यगमनाश्रयश्चैत्रइत्यादिक्रमेणबोध्यः सप्तम्यर्थस्यसंसर्गत्वमतेचोक्तोभयसम्बन्धेनतादृशगवीविशि

सतिगुणोद्रव्यत्वमस्तीति तदाश्रययोरिति क्रियाश्रययोरित्यर्थः विशेषणीभूतयोरिति शिखीध्वस्तइत्यादौशिखायांध्वंसप्रा
तियोगित्वविश्रांतिवत् विशिष्टवैषेणैवतस्यलक्षकत्वात् ॥ ९९

गमनकर्त्रभिन्नश्चैत्रइत्यादिक्रमेणबोध्यः नद्रव्ययोरेवज्ञापकज्ञाप्यभा
वः किन्तुक्रियाविशिष्टयोरेव अन्यथागोषुचैत्रइतिशब्दादपिगोज्ञाप्यश्चैत्रइतिबोधः स्यात् एवञ्चयद्धर्मविशिष्टयोस्तथात्वसम्भवस्तद्धर्मयोरेवज्ञाप
कज्ञाप्यभावोमानसज्ञानविषयः व्यञ्जनायात्रापिवृत्तित्वमतेशाब्दबोध विषयोवेत्याशयेनोक्तं विशेषणीभूतयोरित्यादि अतएवोक्तंसूत्रकृतायस्यचभा
वेनेति तद्विवरणेनिर्ज्ञातकालेति सकालोयदिप्राणः समयरूपस्तदातस्यैवपक्षत्वं कालिकसम्बन्धेनगमनक्रियाविशिष्टस्यसाध्यता कालिकसम्ब
न्धेनैवदोहनकर्माभिन्नगवीनांहेतुताबोध्या विशेषणांशेपर्यवसानविषयेदृष्टान्तमाह शिखीध्वस्तइत्यादाविति इदम्पर्यवसानंयदाशिखाविशिष्ट
स्यपुरुषस्यजीवननिश्चयस्तस्मिन्समयेभवति ननुक्रियायाएवलक्षकत्वंसूत्रकृतोक्तमितितत्रपर्यवसानोक्तिरयुक्तेत्यतआह विशिष्टवैषेणेति अभेदसम्ब
न्धेनगमनादिक्रियाविशिष्टगवादिनिष्ठतादृशगोत्वादिनित्यर्थः ॥ ॥९

धातूपस्थाप्यक्रियायाः साक्षादेवज्ञापकात्वंवक्तुमशक्यम् असत्वभूतत्वात् किन्त्वाश्रयद्वारैवातएवतदाश्रयद्वारेणेतिमूलेऽभिहितम् एतेनक्रिययोःसा
क्षात्तदाश्रययोस्तद्द्वारेतिकस्यचिदुक्तिर्निरस्ता इदंञ्चसूत्रंयत्रमानान्तरसिद्धस्यार्थस्यकालदेशान्यतरघटितसम्बन्धेनफलविशेषणसम्बन्धस्यप्रतिपादना
यप्रयोगस्तत्रैवप्रवर्त्तते अत्रेदम्बोध्यम् काचित्क्रियास्वाधारकालावच्छिन्नामन्यांक्रियांलक्षयति यथागोषुदुह्यमानासुगत इत्यादौ काचित्स्वाधारकाला
व्यवहितपूर्वकालावच्छिन्नामन्यांलक्षयति यथागोषुधोक्ष्यमाणास्वागतश्चैत्रइत्यादौ काचित्तुस्वाधारकालानन्तरकालावच्छिन्नामन्यांक्रियांलक्षयति॥
यथागोषुदुग्धासुगतइत्यादौ लक्षकक्रियाश्रयवाचकत्वन्द्वयोरपिगोशब्ददुह्यमानशब्दयोरित्युभाभ्यांसप्तमी ननुयत्रक्रियावाचकस्यदन्नप्रयुज्यतेविवा
हेनान्दीमुखंकुर्यादित्यादौतत्रकथंसप्तमीतिचेदित्थम् अत्रविवाहपदस्यविवाहप्राक्काललाक्षणिकत्वात् सप्तम्यधिकरणेचेतिसप्तमी राहूपरागेस्नाया
दित्यादौराहूपरागपदस्यराहूपरागकालेलक्षणा तस्यसप्तम्यर्थाधारतायामन्वयस्तस्यास्तुस्वनिरूपिताधेयतासम्बन्धेनस्नाधात्वर्थेऽन्वयेसिद्धसाध्यसमभि
व्याहारन्यायेनराहूपरागस्नानयोर्निमित्तनिमित्तिभावेपर्यवसानम् अङ्गवङ्गकलिङ्गेषुसौराष्ट्रमगधेषुच तीर्थयात्रांविनागत्वापुनःसंस्कारमर्हति अत्राङ्गा
दिपदमङ्गादिदेशपरम् अधिकरणएवसप्तमी तस्यगमनेऽन्वयः तस्यञ्चसमानकर्तृकत्वस्योत्तरकालिकत्वोभयसम्बन्धेनपुनःसंस्कारयोग्यतायामन्वयो
ऽवच्छेदकावच्छेदेनेति तत्तद्देशगमनस्यपुनःसंस्कारनिमित्तत्वम्फलति भिद्यतेहृदयग्रन्थिश्छिद्यन्तेसर्वसंशयाः क्षीयन्तेचास्यकर्माणितस्मिन्दृष्टेपराव
रे परंहिरण्यगर्भादिअवरंयस्मात्तस्मिन् ब्रह्मणिदृष्टेतद्विषयकदर्शनेअहम्ब्रह्मास्मीत्याकारकापरोक्षज्ञानेदर्शनानन्तरकालेऽस्यद्रष्टुः पुरुषस्यहृद
यग्रन्थिर्मिथ्याज्ञानजन्यसंस्कारोभिद्यते सर्वसंशयास्तादृशसंस्कारप्रभवसंशयाश्छिद्यन्ते जातानश्यन्तिपुनरुत्पन्नाश्चनभवन्तिसामग्र्यभावात्॥ अ
नएवसर्वपदम् अस्यकर्माणिसञ्चितान्यदृष्टानिक्षीयन्तेनश्यन्तिप्रारब्धानान्तुभोगान्निवृत्तिर्भवतीत्यर्थः दृष्टपदन्तादृशदर्शनोत्तरकाललाक्षणिकमौप
श्लेषिकाधारएवसप्तमीमासिकादौयथातथैवबोध्या एवंहृदयग्रन्थिशब्देनसंगभयद्वेषमोहशोकादियद्यत्तत्सर्वंग्राह्यम् अविद्यायानाशेनत्कार्या
णान्नाशात् भिद्य नइत्यत्रकर्मकर्तरिलट् मूलेदृष्टेनकापिसंयोग इत्यत्र स्थलपदात्सप्तम्यौपश्लेषिकाधारे अवच्छेदकतासम्बन्धश्च॥ ॐ ९ ॐ

प्याधारतानियामकत्वात् अतएवशिरसिवेदनापादेमेसुखमितिव्यवहारः एवमेवयथाययमवधातव्यम् अत्रेदम्बोध्यम् उक्तत्रिविधाधिकरणेषुमु
ख्यमधिकरणमभिव्याप्तिकंसर्वावयवावच्छेदेनयत्राधेयस्यसम्बन्धस्तदेव अतएवस्वरितेनाधिकारइतिसूत्रभाष्येआचार्यः किमधिकरणंन्याय्यम्मु
ख्यमधिकरणंसप्तमीतुसर्वस्मिन्
न्नेतेयत्रक्वान्त्र आधारात्माव्याप्तदूत्युक्तम् अस्यन्याय्यत्वन्तुप्रकृत्यर्थतावच्छेदकविशिष्टेनज्ञानाद्भवति अन्यदधिकरणंगौणम् सप्तमीतुसर्वस्मिन्
धिकरणेसप्तम्यधिकरणेचेत्यत्राधिकरणपदेस्वरितत्वप्रतिज्ञानाद्भवति अतएवगङ्गायाङ्गावः कूपेगर्गकुलमित्यत्रगौणाधारेसप्तम्युदाहृताभा
स्वमीविभक्ते यतश्चनिर्द्धारणमित्यनुवर्त्तते अत्रविभक्तशब्दार्थोभेदः एवञ्चयतोनिर्द्धारणम्भेदश्चततः पञ्चमीत्यर्थः यत्रनिर्द्धारणन्तत्रभेदस्यसप
त्रसत्वाद्विभक्तग्रहणसामर्थ्याद्भेदएवेतिनियमलाभः भेदएवेत्यस्यभिन्नधर्मप्रकारकप्रतीतिविशेष्यत्वमेव एवकारेणाभेदस्यव्यवच्छेदः सत्वनि

नत्विति गवांकृष्णेत्यादौगोत्वाद्याक्रान्तता यथेतिभावः तदाह नह्य
त्रेति वार्त्तिकादिति साधुर्भृत्योराज्ञइति तुराज्ञोभृत्येनान्वयेसाधुः॥

र्द्धार्यमाणस्यक्वापिनास्तीतिनियमप्रदर्शनवैयर्थ्यमाप्नोतीत्याकाङ्क्षायामाह मूलेनतुशब्दान्तरेति तदुदाहरणंस्वयप्रतिपत्तयेआह गवामिति
र्द्धार्यमाणस्यक्वापिनास्तीतिनियमप्रदर्शनवैयर्थ्यम् यत्रसामान्यविशेषभावस्तत्रविशेषस्यसामान्यधर्मावच्छिन्नत्वमस्त्येवप्र
उक्तस्यविभक्तपदार्थस्यसत्वमुदाहरणेप्रदर्शितम्मूलेनह्यत्रेत्यादिना यत्रसामान्यविशेषभावस्तत्रविशेषस्यसामान्यधर्मावच्छिन्नत्वमस्त्येवप्र
कृतेतुनिर्द्धार्यमाणेषुमाथुरेषुपाटलिपुत्रकत्वन्नास्तीतिभेदस्यैवसत्वमावश्यकमितिभावः अत्रपञ्चम्यर्थोनिर्द्धारणविषयत्वम् पाटलिपुत्रकाव
धिकनिर्द्धारणविषयामाथुराआढ्यतराइतिबोधः साधुनिपुणाभ्यामितिसूत्रस्यस्याचार्यामित्यस्यव्यावर्त्यप्रदर्शनसमयेसाधुशब्दस्यरित्यज्यनिपुण
शब्दएवोक्तस्तद्बीजमाह वार्त्तिकादितीति नन्वेवंसाधुर्भृत्योराज्ञइत्यस्यइतिप्रदर्शितप्रयोगस्यकथमुपपत्तिरतआह साधुर्भृत्यइति॥ ९६५ ॥

नन्वेवमन्यविषयकमपि साधुत्वं गम्येतेत्यत आह प्रत्यासत्त्येति एवञ्च यद्विषयकसाधुत्वं शब्देनोच्यते तद्वाचकादेव वार्त्तिकेन सप्तमीति भावः अत एव तत्र वार्त्तिके प्रकृष्टयोगात्मकप्रयोगग्रहणम् ननु यदि साधुशब्दार्थस्यार्थिको योगो राजनि गम्यत इति भवत्तस्मात्तन्नदाहृतिप्रदर्शितमत्र यस्योपस्थितं साधुर्भृत्यो राज्ञ इति प्रत्युदाहरणमपि सम्यगेव प्रकृतसूत्रेऽर्चायामित्यस्याभावे साधुनिपुणाभ्यामिति तृतीयया योगमात्राक्षेपादिति तत्त्यागानौचित्यमेवेत्यत आह अर्चायामप्रतियोग इति साधुर्मातरम्प्रति पर्यनु इत्यत्र यदाऽर्चा विवक्षिता न तदा मातृशब्दात्सप्तमी प्राप्ताऽपि तु प्रतियोगसत्त्वान्न भवति एतेन प्रकृतसूत्रे साधुग्रहणमनर्थकम् साधुशब्दप्रयोगे साध्वसाधुप्रयोग इति वार्त्तिकेन सप्तम्या दुर्वारत्वादिति कस्यचिदुक्तिः प्रत्युक्ता प्रकृतसूत्रे पुनः साधुशब्दोपादानसामर्थ्यात्प्रत्यादिभिर्योगे साधुशब्दे प्रकृतसूत्रेण वार्त्तिकेन वा प्राप्ता सप्तमी न भवतीति भावः अप्रतेरिति शब्दे समस्तः प्रतिशब्दो लक्षणेत्थम्भूतेति कर्मप्रवचनी-

**प्रत्यासत्त्या च राजविषयमेव साधुत्वं गम्यते न तु शब्देन तत्स्पृश्यते अर्चायां प्रतियोगे निषेधार्थं त्वत्र साधुग्रहणमिति तत्त्वम् तत्परे**

यसंज्ञाघटकप्रत्यादिर्लाक्षणिक इत्याशयेन वार्त्तिकोक्तोऽसम्प्रत्यादिभिरिति नन्वेवं सति प्रकृतसूत्र एव साधुशब्दोपादानमस्तु प्र- ((इति रूढत्वा।
त्यादियोगाभावे प्रकृतसूत्रेणैव साधुशब्दप्रयोगे सप्तम्याः सिद्धौ वार्त्तिके साधुग्रहणमनर्थकमिति चेन्न साधुः कृष्णो मातरीत्यत्र तत्त्वकथनेऽर्चायामभावेऽपि सप्तमीसिद्ध्यर्थन्तस्य सत्त्वात् एवञ्च प्रकृतसूत्रेऽर्चाग्रहणं निपुणार्थमेवेति ध्वनयन्नाह तत्त्वमिति अत एव सप्तम्यधिकरणे चेति सूत्रस्थसाधुप्रयोग इति वार्त्तिकव्याख्यानावसरे साधुनिपुणाभ्यां सप्तम्यां सिद्धायामनर्चार्थमत्र साधुग्रहणं तेन तत्त्वकथने साधुशब्दयोगे सप्तमी भवति ग्रहणन्तु तत्र निपुणविशेषणार्थमेवेति कैयटः सङ्गच्छते मूले प्रसितोत्सुकाभ्याम् एतद्व्याख्यानावसरे तत्परे प्रसितासक्ताविन्यमरप्रदर्शनं रूढस्य सितशब्दस्य ग्रहणान्न तु यौगिकस्येति प्रदर्शनायेत्याशयेनाह रूढत्वादिति प्रसिद्धत्वादित्यर्थः रूढिर्योगमपहरतीति न्यायस्यापि प्रसिद्धत्वमेव तात्पर्यम्

एतदर्थस्य एतदर्थकस्य सितशब्दो गौरवाची इत्यर्थे इति सतीति शेषः परममूलं यस्मादधिकं यस्य चेश्वरवचनमिति हन्तस्य व्याख्यानम् मङ्गलाय म
ङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते इति भाष्यात् तत्र यस्य चेश्वरवचनमिति शब्दस्य यस्य स्वस्य ईश्वरः कथ्यते तदा चकादि यर्थे
स्ववाचकात्सप्तमी यदा त्वीश्वरशब्दो भावप्रधानः निर्देशेन ईश्वरत्ववचनस्तदा स्वामिवाचकात्सा भवति अधिभुवि रामः अधिरामे भूरित्यन्वयः ॥
इति सप्तमी विवरणम् जानकीजानिकृपया याव्याख्याकल्पिता मया यथामति तया पुष्टिर्विदुषा ज्ञायतान्ध्रुवम् ॥ १ ॥ वाणा ष्टसिद्धीन्दु मिते शाके

॥ एतदर्थस्यैव ग्रहणन्तेन प्रकर्षेण सितइत्यर्थेन ॥ ॥ इति सप्तमी ॥ ॥ इतिश्री ॥
महीक्षितभट्टोजिपौत्रदीक्षितहरिविरचिते प्रौढमनोरमाव्याख्याने लघुशब्दरत्ने कारक
प्रकरणम् ॥ ८ ॥

रवेष्वपि चन्द्रके विकारिनामके वर्षे मासे माधव संज्ञके ॥ २ ॥ पक्षे सिते नरेऽष्टम्यां वारे कुमुदबान्धवे भवदेवात्मजेनेयम्भैरवेण कृता शिवा शि
वयोः प्रीतये ऽस्त्वन्तया तुष्यताद्वै हरिः ॥ ३ ॥ ॥ इतिश्रीमत्समस्तसद्गुणमणिमण्डनपदवाक्यप्रमाणपरिशीलनावाप्तसत्कीर्तिसुधाकरधव
लितदिगन्तशिष्योपशिष्यजेगीयमानयशोवृन्दसान्नाढ्यागस्त्यकुलवंशावतंसशङ्खधारश्रीमद्वन्दि मिश्रात्मजलक्ष्मणमिश्रतनयश्रीमद्भव
देवमिश्रसूनुभैरवमिश्रकृतायां रत्नप्रकाशिकायाङ्कारकान्तविवरणं समाप्तम् ॥ सम्वत् ॥ १८३५ मीः कार्तिकशुक्ल ६ शुक्रवार ॥ ॥

॥ इतिभैरवीसहितंकारकान्तंशब्दरत्नंसमाप्तम् ॥ ॐ ॥